DHVANYALOKOJJIVANI is a critical edition of Anandavardhana's monumental work on Alankarasastra based on most of the available manuscripts in India and printed editions adorned with an original commentary. The learned and appealing commentary has been very appropriately named Ujjivani, in that it aims at bringing out the ideas of the author as discernible in the work itself without being led by the views of the earlier commentators-which sometimes cause confusion more than giving clarification. Ujjivani gives satisfactory explanations to obscure passages and helps to remove apparent contradictions noticed in the work. This commentary is a valuable contribution to the field of Sanskrit literary criticism:

Dr. S. Venkitasubrahmonia Iyer

# ध्वन्यालोकोज्जीवनी

श्रीमदानन्दवर्धनाचार्यप्रणीतस्य

**ध्वन्यालोकस्य**

व्याख्या

व्याख्याता

पण्डितराज महोपाध्याय

**सु. नीलकण्ठशास्त्री**

प्रकाशनविभागः

केरलविश्वविद्यालयः

तिरुवनन्तपुरम्

[Sanskrit]

# DHVANYĀLOKOJJIVANĪ

An original commentary on Dhvanyāloka

*Commentator*

**S. NEELAKANTA SASTRY**

*Printed at*
The Rashtravani Mudranalaya
Trivandrum

*First Published 1981*

**Price : Rs. 35.00**

*Published by*
**Chemmanam Chacko**
Director
Department of Publications
For the University of Kerala

# विषयानुक्रमणी

## आमुखम्



## प्रथम उद्द्योतः

## द्वितीय उद्द्योतः ।

## तृतीय उद्द्योतः ।

## चतुर्थ उद्द्योतः ।

॥ श्री ॥

# आमुखम्

## १. श्रीमदानन्दवर्धनाभिमतं कवित्वम्

शब्दोऽर्थश्चेति द्विविधः पदार्थः। कण्ठताल्वाद्यभिघातजन्यः श्रवणदेशं प्राप्य प्रत्यक्षविषयो भवति यः, स शब्दः। यथा आत्मनो भोगायतने शरीरे आत्मनः समावेशेन चैत्रमैत्रादिव्यवहारो जायते, तथा वर्णसमुदायात्मके शरीरे अर्थस्यानुप्रवेशे सत्येव तस्य शब्दशब्देन व्यवहारः। किमु शब्दोऽप्यर्थो भवितुमर्हति इति प्रश्नस्य नैवेत्युत्तरम्। शब्दः शब्द एव, अर्थोऽर्थ एव। अग्निरिति शब्द उच्चार्यमाणो न जिह्वां दहति। अग्निरूपोऽर्थस्तु स्पृष्टो दहत्येव। एवं च शब्दस्य शरीरस्थानीयो वर्णसमुदायः। अर्थस्यापि आत्मस्थानीयस्य शब्दरूपशरीरावच्छेदेनैव प्रमातृज्ञानविषयत्वम्। बाह्यप्रत्यक्षाविषयस्य आत्मनो यथा शरीरावच्छेदेन 'अहं' प्रत्ययविषयत्वं, तथा श्रावणप्रत्यक्षविषयस्य शब्दस्य श्रवणे, शक्तिज्ञानसहकारेण प्रमातुरात्मनि संस्काररूपेणावस्थितस्योपस्थित्या बाधविषयो यः सोऽर्थः। तस्य च ज्ञानं शब्दजन्यत्वाच्छाब्दबोधात्मकमेव। अतः शाब्दज्ञानहेतुभूतं पदज्ञानं श्रावणम्। अर्थज्ञानं तु मानसम् इति भेदः।

"यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः। अर्थसम्प्रत्ययाच्च व्यवहारः। नामधेयशब्देन व्यपदिश्यमानं सच्छाब्दं भवति।" (न्यायसूत्रवात्स्यायन भाष्यम्।) यावन्तोऽर्था यावदर्थं "यावदवधारणे" (पा० सू० २. १. ८) इति अव्ययीभावः। यथा — यावन्तः श्लोकाः (तावन्तोऽच्युतप्रणामाः) यावच्छ्लोकम्। प्रतिश्लोकम् अच्युतप्रणामाः कर्तव्या इत्यर्थः। तथा यावन्तोऽर्थाः (पदार्थाः) तावन्तो नामधेयशब्दा अपि विहिता इति वेदितव्यम्। तत्तन्नामधेयशब्दैस्ते तेऽर्थाः प्रत्याय्यन्ते। ततो व्यवहारो भवति। नामधेयशब्देन

व्यपदिश्यमानं ज्ञानं शाब्दज्ञानं च भवति । एतेन अर्थबोधकाः शब्दा एव शब्द शब्दाभिधेया इति ज्ञायते ।

'शास्त्रे शब्दस्तु वाचकः' (अमरसिंहः) । शास्त्रे व्याकरणादौ यो वाचकः साधुः स एव शब्दः । स एव निरुपपदेन शब्दशब्देन व्यवह्रियते । (भानुजी - दीक्षितः) । अनेनापि अर्थवानेव शब्दः 'शब्द'शब्देनाभिधीयत इति ज्ञातुं शक्यते

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (पा० सू० १. २. ४५.) । अर्थोऽस्यास्तीत्यर्थवत् । प्रतिपदं भवं प्रातिपदिकम् । सुप्तिङन्तं पदम् । पदे प्रकृतिः प्रत्ययश्च वर्तते । प्रकृत्यात्मकम् अर्थवच्छब्दस्वरूपमेव प्रातिपदिकमित्युच्यते । तस्मादेव स्वादयः प्रत्यया भवन्ति । अर्थवन्ति च शब्दस्वरूपाणि स्वादीनामायोजनेन पदानि भवन्ति । अत एव चार्थवानेव शब्दः शब्दशब्देन व्यवह्रियत इत्युक्तं भवति ।

ईश्वरः पदार्थान् सृष्ट्वा तेषां नामधेयान्यकल्पयत् । अस्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतं चाकरोत् । शब्दस्यार्थस्य च सम्बन्धः शक्तिः सङ्केतापरपर्याया । शक्यार्थप्रतिपादकः शब्दः शक्तः । शक्तेन (पदेन) शक्त्या (अभिधया) प्रतिपाद्यमानोऽर्थश्च शक्यः । आत्मनो भोगायतनं शरीरम् । शरीरावच्छिन्नात्मनि भोगो जायते । यथा चैत्रात्मनो भोगायतनं तच्छरीरं, तदवच्छेदेन च 'अहं सुखी'-त्यादिकं ज्ञानं तस्य भवति, तथा अर्थस्य स्वनामधेयशब्दमाश्रित्य प्रमातृज्ञान-विषयत्वं, शब्दस्य स्वशक्यार्थायतनत्वं च विद्यत इति शरीरस्थानीयत्वं शब्दस्य, आत्मस्थानीयत्वमर्थस्य च युक्तम् । ज्ञानाधिकरणत्वमात्मनो लक्षणम् । 'अहं सुखी'त्यादिज्ञानविषयत्वमपि तस्यास्ति । तद्भिन्नस्य सर्वस्यापि पदार्थस्य (शब्दस्यार्थस्य वा) ज्ञानाधिकरणत्वरूपं मुख्यमात्मत्वं न सम्भवति, किंतु ज्ञानविषयत्वमेवेति वेदितव्यम् । शब्दज्ञाने (श्रवणे) गृहीतशक्तिकस्यार्थस्य स्मृतिस्ततः शाब्दबोधश्च जायते । एवं च श्रूयमाणशब्दाज्जायमानमर्थज्ञानं शाब्दज्ञानमेव । तदुक्तं—

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।**

**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ इति ।**

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । प्रमा च प्रत्यक्षानुमित्युपमितिशाब्द-भेदाच्चतुर्विधा । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम् । अनुमित्युपमितिशाब्दानां

व्याप्तिज्ञान, सादृश्यज्ञान, पदज्ञानानि करणानि। अतो ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्यपि वक्तुं शक्यम्। तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो-दृष्टं चेत्यनेन प्रत्यक्षपूर्वकत्वमनुमानस्य प्रदर्शितम्। अतः शब्दश्रवणतदर्थोप-स्थितिपूर्वकं यज्ज्ञानं तच्छाब्दबोधात्मकमेव न त्वनुमितिरूपम्। तथा च 'तदुदितः स हि यो यदनन्तरः' इति युक्त्या शब्दज्ञानानन्तरभावि अर्थज्ञानं शाब्दबोधात्मकं, तत्करणं च पदज्ञानम् इति सिद्धयति।

तत्तत्पदजन्यबोधविषयत्वप्रकारकत्वविशिष्टेच्छया प्रयुक्तानां तत्तत्पदानां तत्तदर्थे सङ्केतितत्वात् पृथगवस्थितानि तत्तत्पदानि तं तमर्थं बोधयन्तीति वाचक-त्वमेव पदानामिति ज्ञायते। पदान्तरसमवधाने च यत्र मुख्यार्थस्य समभिव्याहृतप-दान्तरार्थेन साकमन्वयस्य तात्पर्यस्य वानुपपत्तौ, विवेचकत्वादिना, सामीप्यादिना वा सम्बन्धेन, रूढितः, प्रयोजनाद्वा, मुख्यार्थसम्बद्धस्यार्थान्तरस्य बोधो लक्षणया भवति। कर्मणि कुशल इत्यादौ दर्भग्रहणादिरूपस्य वाच्यार्थस्य बाधे, विवेच-कत्वादिसम्बन्धेन, रूढितः (प्रसिद्धेः) समर्थ इत्यर्थस्य प्रतीतिर्लक्षणया भवति। सेयं निरूढलक्षणेत्युच्यते। अनादितात्पर्यविषयीभूता लक्षणा निरूढलक्षणा। गङ्गायां घोष इत्यादौ च गङ्गाशब्दमुख्यार्थस्य प्रवाहस्य घोषपदार्थेन साकमन्व-यस्य बाधितत्वात् सामीप्येन सम्बन्धेन तीररूपार्थस्य लक्षणया बोधो जायते। प्रयोजनस्य शैत्यपावनत्वादेः प्रतीतिस्तु व्यञ्जनया च भवतीत्यालङ्कारिकसमयः। एवं शब्दस्यैव वाचकत्वं, लक्षकत्वं, व्यञ्जकत्वं च स्थलभेदेन सम्पद्यते।

वाक्यं तु पदसमूहः। "तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता" इत्यमरः। तात्पर्यविषयीभूतस्य वस्तुनः परप्रतिपत्तावभीप्सितायां तत्तदर्थावबोध-कानि पदानि प्रयुज्यन्ते। तानि च वृत्त्या तत्तदर्थोपस्थापनद्वारा तत्तदर्थान् बोध-यन्ति। ततश्चाकाङ्क्षायोग्यतासन्निध्यादिवशाद् विशिष्टवैशिष्ट्यावगाहिवाक्या-र्थज्ञानं जायते। तत्र च वाक्यं वाचकं, तात्पर्यं व्यापारः, वाक्यार्थबोधः फलं च भवति। एवं च वाक्यस्थितानि पदान्येव वाचकानि। वाक्ये तु विशिष्टे न शक्तिः। अत एव न लक्षणापि। अत एवोक्तम्—अभिहितानां स्वस्ववृत्त्या (शक्त्या लक्षणया वा) पदैरुपस्थितानामर्थानाम् आकाङ्क्षादिभिः परस्परमन्वय-मभिहितान्वयवादिनो वदन्तीति। गदाधरभट्टाचार्येणाप्युक्तं—"शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते" इति।

सहृदयश्लाघ्यार्थप्रतिपादकशब्दः काव्यम् । अत्रत्यशब्दशब्दो वाक्यपरः । "शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ" इति हैमः । तस्यैव काव्यत्वात् । वाक्यस्थितानि पदानि पृथक् पृथक् स्वं स्वमर्थं बोधयित्वा संसर्गमर्यादया विशिष्टमर्थं बोधयन्ति । अतो वाक्यं वाचकत्वव्यापारेण वाच्यं तद्घटक शब्दशक्त्यानतिरिक्तं सहृदयश्लाघ्यमर्थं बोधयति । क्वचिच्च वाक्यं उक्तरीत्या वाक्यार्थबोधजननद्वारा अङ्गनासु निखिलाववयवव्यतिरेकि लावण्यमिव, वाक्यघटकेनैकेनापि पदेनानभिधेयं प्रतीयमानं वस्तु प्रकाशकत्वव्यापारेण प्रत्याययति । तदुक्तं ध्वनिकृता—

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ इति ।**

एतेन सहृदयश्लाघ्यवाच्यप्रतीयमानान्यतरार्थविषयकबोधजनकशब्दत्वं काव्यसामान्यलक्षणं ध्वनिकाराभिमतमिति ज्ञायते । तदनुकूलैव वृत्तिरपि—"काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ" इति । शरीरस्यात्मेव शरीरस्येव काव्यरूपशब्दसन्दर्भस्य, सारभूतोऽर्थ इति स्फुटतया व्याख्यानात् । योऽर्थः सारभूत इत्यनेन यस्य काव्यस्य काव्यव्यपदेशो यदर्थनिबन्धनः स तत्र सारभूत इत्यर्थः । यथा—"कमलमिव मुखं मनोज्ञमेतद्" इत्यत्र उपमावाचकेन इव शब्देन बोध्यस्य सादृश्याख्यस्योपमालङ्कारस्य वाच्यत्वेन तस्य काव्यव्यपदेशो वाच्योपमालङ्काराधीन इति स एव सारभूतः । स च वाच्योऽलङ्कारवर्गः ध्वन्यालोके सप्रपञ्चं कुतो न निरूपित इति ध्वनिकार एवाह—

**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।**
**बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ॥**
**भट्टोद्भटप्रभृतिभिस्ततो नेह प्रतन्यते ॥ इति ।**

ततः—

**एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥**

इत्यत्र लीलाकमलपत्रगणनस्यानुभावस्य वाच्यत्वेन तद्द्वारा अवहित्थाख्यः सञ्चारिभावः प्रकाशते । अत्र अवहित्थात्मकभावस्य प्रतीयमानस्य सार-भूतत्वेन तन्निबन्धनो भावध्वनिव्यपदेशः काव्यस्य इति व्यवस्थितिः । एवमनया कारिकया काव्यसामान्यलक्षणम् अभिहितं वेदितव्यम् ।

तत्र सहृदयश्लाघ्यः काव्यस्य सारभूतो यो वाच्योऽर्थः स वस्तुरूपोऽलङ्कार-रूपश्च भवति । वस्तुरूपो यथा—

"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साथ वयः प्रपेदे ॥"

कुमारसम्भवे पार्वत्याः कौमारावस्थाविर्भावरूपं वस्तु काव्यस्यास्य सार-भूतोऽर्थः ।

अलङ्काररूपो यथा—

सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥

अत्र एकस्थसौन्दर्यदिदृक्षाया अहेतोर्हेतुभावेन सम्भावनया हेतूत्प्रेक्षारूपः सहृदयश्लाघ्यो वाच्योऽलङ्कारः सारभूतोऽर्थः ।

तथा प्रतीयमानश्च सारभूतः काव्यार्थो वस्त्वलङ्काररसात्मना त्रिविधः । वस्तुरूपो यथा—

राज्ञो मत्प्रतिकूलान्मे महद् भयमुपस्थितम् ।
बाले वारय पान्थस्य वासदानविधानतः ॥

अत्र उपभोगं देहि इति वस्तु व्यज्यते । यद्यप्ययमर्थ उपभोगं देहीति शब्द समुदायेनाप्यभिधातुं शक्यते, तथापि नृपतिचन्द्ररूपोभयार्थशक्तेन राजशब्देन द्वितीयया शक्त्याभिहितेन चन्द्ररूपार्थेनोपश्लिष्टाद् वाक्यार्थात् प्रतीयमानस्य तस्यार्थस्य सारभूतत्वादस्य वस्तुध्वनिव्यपदेशः । तस्य च व्यङ्ग्यस्य वस्तुनः "उपभोगं देही"ति शब्देनाप्यभिधानं भवतीति तस्य वाच्यत्वमपि सम्भवति ।

अलङ्काररूपो यथा—

> करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।
> धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥

इत्यत्र नानार्थस्य सार्वभौमशब्दस्य श्रवणे (पदज्ञाने) तद्वाच्यस्यानेकार्थस्य उपस्थितौ सत्यां प्रकरणादिना, प्रकरणादिजन्यतात्पर्यज्ञानेन वा चक्रवर्तिरूपस्य प्रकृतार्थस्य बोधानन्तरं कर, दान, धनदादिशब्दसमवधानेन स्मृतिविषयस्य दिग्गजरूपस्य द्वितीयस्याप्यर्थस्य तत्पदसङ्केतितत्वात् तस्यापि शाब्दबोधो जायते । ततश्च सम्राजो दिग्गजसादृश्यरूप उपमालङ्कारो व्यज्यत इत्यालङ्कारिकसमयः । स च सादृश्यवाचकशब्दाभावाद् अनेकार्थशब्दप्रयोगरूपस्य कविव्यापारस्य महिम्ना प्रतीयत इत्यभ्युपगम्यते । सोऽपि प्रतीयमानार्थप्रकाशकत्वरूपो व्यापारः शब्दनिष्ठ एव । किंच दिग्गज इव सम्राड् जयतितरामिति शब्दसन्दर्भेणापि सादृश्यमभिधातुं शक्यमिति उपमादीनामलङ्काराणां वाच्यत्वमपि सम्भवति । रसादीनां तु स्वप्नेऽपि न वाच्यत्वम् ।

एवं शब्दार्थस्य वाच्यत्वं, लक्ष्यत्वं, व्यङ्ग्यत्वं च वर्तते । काव्यार्थभूतस्य वाक्यार्थस्य तु समुदायार्थभूतस्य तस्य वाक्यघटकपदाधिष्ठितत्वेन अभिधेयत्वं सम्भवति । तथापि काव्ये प्रकाशमानस्यार्थान्तरस्य तद्घटकशब्दानभिधेयत्वेन तन्निष्ठमर्थत्वं वस्तुत्वरूपमेव भवति । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । अतो ध्वन्यालोके "काव्यस्यात्मा" इत्यादिषु श्रूयमाणस्यात्मशब्दस्य ज्ञानाधिकरणत्वलक्षणलक्षितः मुख्य आत्मरूपोऽर्थः नैवाभिधेयः । शरीरस्येवात्मा सारभूतोऽर्थ इति ध्वनिकृता स्वयं व्याख्यानेन च वाच्यव्यङ्ग्ययोरुभयोरपि काव्यार्थयोर्मुख्यमात्मत्वं नास्तीति च स्फुटमवगम्यते ।

एवं स्थितो योऽर्थः सहृदयश्लाघ्य इति कारिकाया व्याख्यानावसरे लोचनकारेण यदुक्तं— "तुल्येऽर्थरूपत्वे किमिति कस्मैचिदेव सहृदयाः श्लाघन्ते, तद् भवितव्यं तत्र केनचिद् विशेषेण । यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वाद् आत्मेति व्यवस्थाप्यते । वाच्यसंवलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते चार्वाकैरिवात्मपृथ-

रभावे । अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधाय अपोद्धारदशा तस्य द्वौ भेदावंशौ इत्युक्तम् । न तु द्वावप्यात्मानौ काव्यस्येति । इति तत् कथमुपपद्यत इति सुधीभिर्विभावनीयम् ।

प्रतीयमानस्यार्थस्य उक्तयुक्त्या अभिधेयत्वाभावेन वस्तुरूपत्वं, तस्य शब्दनिष्ठत्वमेव च सम्भवतीति मनसि कृत्वाह ध्वनिकारः--

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।। इति ।**

समुचितेनाङ्गानां सन्निवेशेन अङ्गनासु प्रसिद्धकरचरणाद्यवयवेभ्योऽतिरिक्त लावण्यं यथा प्रतीयते, तथा रसाद्यनुगुणवर्णरचनादिना महाकवीनां वाणीषु माधुर्यादयो गुणाः प्रतीयन्ते । आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणमित्यनेन यथा अङ्गनासु लावण्यं, तथा काव्यरूपे वाक्ये माधुर्यं प्रकाशते । तच्च सहृदयात्मनि आह्लादं जनयति । सहृदयात्मनि भावनारूपेणावस्थितस्य स्थाय्यादेरास्वाद एव रसादिरिति, तस्य काव्यशोभाकरत्वादलङ्कारत्वमिति च प्राचां मतम् ।

किंच, प्रतीयमानं पुनरन्यदेव वाच्याद् वस्त्वस्ति इत्यनेन अङ्गनासु लावण्यमिव महाकविवाणीषु प्रतीयमानं माधुर्यादिकं (आह्लादकत्वादिकं) वस्तु वाच्यादन्यदस्ति इत्यनेनापि द्वयोरपि काव्यार्थत्वमभिमतमित्यवगम्यते । एवं च प्रतीयमानस्यार्थस्य वस्त्वात्मकत्वं द्योतयितुं नपुंसकनिर्देशोऽप्युचित एव ।

"काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व" इत्यत्रापि आत्मशब्दस्य सारभूतोऽर्थ इत्येवार्थः । योऽर्थः सहृदयश्लाघ्य इत्यनेन काव्यसामान्यलक्षणं, सहृदयश्लाघ्यस्य साररूपस्य वाच्यस्य प्रतीयमानस्यापि काव्यार्थत्वं च ध्वनिकृदभिमतम् । तत्र वाच्यस्यार्थस्य निरूपणं पूर्वैः कृतमतो नोच्यते । अन्यश्च सहृदयश्लाघ्योऽर्थः प्रतीयमानोऽपि चमत्कृतिमादधानोऽनुभूयते काव्येभ्यः । स चाविद्यमानत्वभाक्तत्वानिर्वचनीयत्वादिवादैः विप्रतिपद्यते कैश्चित् । अतस्तन्निरूपणम् आवश्यकम् । तन्मया क्रियते—इत्येव पन्था ध्वनिकारेणादृतः । एवं काव्यस्यार्थद्वये सिद्धे, यदि प्रतीयमानस्यार्थस्य आत्मत्वं

तर्हि वाच्यस्यापि तत्त्वमङ्गीकरणीयम् । एवं सति यत्र काव्ये वाच्यो व्यङ्ग्यश्चार्थः सहृदयश्लाघ्यः सारभूतश्च विद्येते, तस्य किंकृतो व्यपदेश इति निर्णये कर्तव्यतयोपस्थिते, यस्याधिकचमत्कृतिजनकत्वं मुख्यवाक्यार्थत्वेन, तत्कृतो व्यपदेश इत्येव वक्तव्यम्। सत्यपि व्यङ्ग्येऽर्थे यत्र वाच्यस्य सारभूतत्वं तस्य गुणीभूतव्यङ्ग्यव्यपदेशः, व्यङ्ग्यस्य सारभूतत्वे ध्वनिव्यपदेशः इत्यत्र कस्यापि न विप्रतिपत्तिः। एतेन उभयोरप्यर्थयोः मुख्यात्मत्वस्याभावात्, कथं द्वावात्मानौ काव्यस्येति लोचनकृतो भीतेरपि नावकाशः। एवं—

**काव्यस्यात्मा स एवार्थस्तथाचादिकवेः पुरा ।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।**

इत्यत्रापि आत्मशब्दस्य सारभूतोऽर्थ इत्येवार्थः। यथा च काव्यशब्दादभिधेयोऽर्थोऽस्ति कश्चित् सारभूतः, न च सोऽर्थो विप्रतिपन्नः। तदन्यः प्रतीयमानश्च कश्चिदर्थोऽस्ति यो विप्रतिपत्तिविषयः । तस्य च समर्थनाय ध्वन्यालोकाख्यो ग्रन्थः प्रवृत्त इति निरूपितं पूर्वम् । तथाच काव्यस्यैवात्मा अर्थः क्रौञ्चद्वन्द्ववियोगोत्थः स शोकः, पुरा आदिकवेः श्लोकत्वमागत इत्यन्वयः। क्रौञ्चं व्याधेन निहतं दृष्ट्वा क्रौञ्च्याः शोकः समभवत् । काव्यस्यैव आत्मा सारभूतोऽर्थः, यस्य समावेशेन शब्दसन्दर्भस्य काव्यत्वं सिद्ध्यति सः (शोकरूपोऽर्थः) आदिकविकर्तृकश्लोकरूपतां प्रापद् इत्यर्थः।

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥**
**बिभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥**

इति वचनाल्लौकिकानि कार्यकारणसहकारीणि नाट्यकाव्ययोः अलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यानि भवन्ति । वस्तुतो यः परेण पीड्यते, तस्य शोको लौकिकः । अत्र क्रौञ्चः शोकस्याश्रयः, तस्य कारणं व्याधशरानुवेधः । तद्दर्शनेन जातं क्रौञ्च्या आक्रन्दनं कार्यम् । व्याधशरानुविद्धस्य क्रौञ्चस्य दर्शनेन, क्रौञ्च्या आक्रन्दनस्य श्रवणेन च क्रौञ्चगतः शोकः महर्षिणा साक्षात्कृतः।

वस्तुत: शोकस्य साक्षादाश्रया इदानीं न सन्ति। काव्यश्रवणेन, नाट्यदर्शनेन वा सहृदयानां मनसि वासनारूपेणावस्थित: स्थायी आस्वाद्यमानो रसो भवति। स एवालौकिक:। महर्षे: क्रौञ्चवधाख्यानात्मककाव्यस्य श्रवणं, तादृशनाट्यदर्शनं वा न सञ्जातमिति तस्यालौकिक: शोको नास्ति। क्रौञ्चवधादे: प्रत्यक्षदर्शनेऽपि पीडामनुभवन्नैव लौकिक-शोकस्याश्रय इत्यतो लौकिकोऽपि शोको महर्षेर्न विद्यते। किंतु क्रौञ्च्या: शोकस्तस्यां करुणया, व्याधे क्रोधेन च महर्षेरास्यात् श्लोकस्योद्भवे हेतुर्जात:। तदभिव्यञ्जकविभावानुभावादीनां वाचकशब्दसमुदायात्मकं काव्यरूपमाश्रय-मधिगत्य श्लोकत्वं प्राप्त:। तस्य च—

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥**

इत्येवंरूपस्य श्लोकात्मकस्य काव्यस्यैव सारभूतोऽर्थ: शोकात्मकं प्रतीयमानं वस्तु इति तात्पर्यम्। अत्र च व्याधशरानुविद्ध: क्रौञ्च आलम्बनम्। क्रौञ्च्या आक्रन्दनम् उद्दीपनम्। तेन सहृदयानां हृदये भावनारूपेण स्थित: शोकाख्य: स्थायी उद्बुद्धसंस्कार: सहृदयैरास्वाद्यते। स एव करुणरसतां प्रतिपद्यते।

अर्थ: सहृदयश्लाघ्य इत्यनेन **काव्यसामान्यलक्षण**मभिहितम्।

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥**

इत्यनेन प्रतीयमानार्थव्यञ्जकोपसर्जनीभूतार्थबोधकशब्दत्वं, प्रतीयमानार्थ-व्यञ्जकोपसर्जनीकृतार्थबोधकशब्दत्वान्यतरत्वं (अविवक्षितवाच्य–विवक्षिता-न्यपरवाच्यत्वान्यतरत्वपर्यवसन्नं) **काव्यविशेषलक्षणं** च प्रदर्शितम्।

प्रतीयमानार्थस्य प्राधान्ये ध्वनिरिति, प्रतीयमानापेक्षया वाच्यस्य प्राधान्ये (प्रतीयमानस्याप्राधान्ये) गुणीभूतव्यङ्ग्यमिति च काव्यस्य द्वौ भेदा-वपि प्रदर्शितौ।

उक्तं च ध्वनिकृता तृतीयोद्द्योतान्ते—

**इत्युक्तलक्षणो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः ।**
**सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तः ॥ इति ।**

ततश्च चतुर्थोद्द्योते—

**ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः ।**
**अनेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥**
**अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।**
**वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि ॥**

इत्यनेन पुरातनकविप्रतिपादितार्थसंस्पर्शवत्यपि कविवाणी ध्वनेरन्यतमस्यापि प्रकारस्य प्राधान्येनाप्राधान्येन वा आयोजनेनापि नवतां याति । तेन कवीनां प्रतिभागुणोऽप्यभिवृद्धिमायाति । तथा—

**"अवस्थादेशकालादिविशेषैरपि जायते ।**
**आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः ॥**

शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्य स्वभावत: आनन्त्यमेव जायते । स्वभावो ह्ययं वाच्यानां चेतनाचेतनानां यद् अवस्थाभेदाद् देशभेदात् कालभेदात् स्वालक्षण्य (स्वरूप) भेदाच्च अनन्तता भवति । तैश्च तथावस्थितैः सद्भिः प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्यापि तावदुपनिबध्यमानैः (वाच्यार्थैः) निरवधिः काव्यार्थः सम्पद्यते" इत्यनेन वाच्यस्याप्यर्थस्य देशकालादिविशेषैरानन्त्यम् । तेन वाण्या नवत्वं च प्रतिपादितम् ।

इत्थं च वाच्यव्यङ्ग्योरुभयोरपि काव्यार्थत्वं, पूर्वार्थान्वयवत्यपि कविवाणो ध्वनिना गुणीभूतव्यङ्ग्येन वा विभूषिता अनवद्यैवेति च स्वाभिमतमर्थं सुनिपुणमुपवर्णितवान् श्रीमदानन्दवर्धनाचार्यः ।

यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्
स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते ।
अनुमतमपि पूर्वच्छायया वस्तु तादृक्
सुकविरुपनिबध्नन् निन्द्यतां नैव याति ॥

प्रतायन्तां वाचो निमितविविधार्थामृतरसा
न वादः कर्तव्यः कविभिरनवद्ये स्वविषये ।
परस्वादानेच्छाविरतमनसो वस्तु सुकवेः
सरस्वत्यैवैषा घटयति यथेष्टं भगवती ॥

इत्याशीर्वचनेनोपसंहृतवांश्च ॥

आचार्याणामयमाशयः— काव्यस्य कारणं प्रतिभा । सा च व्युत्पत्त्यभ्यासाभ्यां जायते । क्वचिच्च देवतामहापुरुषप्रसादादिजन्याददृष्टाद् भवति । ध्वन्यालोकग्रन्थेऽस्मिन् निरूपितस्य ध्वनेस्तत्त्वज्ञानेन प्रतिभां नवनवोन्मेषशालिनीं सम्प्राप्य नवनवार्थनिर्वर्णननिपुणः कविः सम्पद्यत एव । किंतु अदृष्टविशेषेण समुपजातप्रतिभानां महतां कवीनां सहृदयश्लाघ्यं तदर्थवस्तु निःष्यन्दमाना सरस्वती परिस्फुरन्तमलोकसामान्यं प्रतिभाविशेषम् अभिव्यनक्ति। तादृशाश्च महाकवयः कालिदासप्रभृतयः पञ्चषा एव विद्यन्ते। सुकृतिनां कवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्रवृत्तिः । तेषां परोपरचितार्थनिःस्पृहाणां स्वव्यापारो न क्वचिदुपयुज्यते । सैव भगवती सरस्वती स्वयमभिमतमर्थमाविर्भावयति । एतदेव हि महाकवीनां महाकवित्वम् ।

वाल्मीकिस्तु आदिकविः। यतस्तदर्थवस्तु श्लोकरूपेण परिणतम्। इतरेण कवीनां शब्दादर्थोऽवगम्यते । वाल्मीकेस्तु अर्थः शब्दमनुगतः। तथा चोक्तं—

लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥

इत्योम् ॥

## २. अलङ्कारशास्त्रग्रन्थेभ्यः ध्वन्यालोकस्य वैशिष्ट्यम् ।

ध्वनेरालोको ध्वन्यालोक इति व्युत्पत्तिः । रूपिद्रव्यचाक्षुषप्रमायामालोकस्याश्रयो दीप इव वाच्यार्थेन वा वाचकशब्देन वा प्रकाशमानस्य ध्वनेः कारणीभूतस्य व्यञ्जकत्वस्य (प्रकाशकत्वस्य) आश्रयः शब्दसन्दर्भात्मकः काव्यविशेषो व्यङ्ग्यमर्थं प्रकाशयति । "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इति कोशेन नादात्मकः शब्दो ध्वनिपर्यायत्वेन निर्दिष्टः । तदाहुर्नैयायिकाः—"श्रोत्रग्राह्यो गुणः शब्दः । स द्विविधः ध्वन्यात्मको वर्णात्मकश्चेति ।' "प्रतीतपदार्थको लोके ध्वनिः शब्दः" इति महाभाष्येण अर्थवान् वर्णात्मकः शब्दो ध्वनिरिति व्यपदिष्टः । स च कण्ठताल्वाद्यभिघातजन्येन वर्णात्मकेन शब्देनाभिव्यङ्ग्यस्य स्फोटरूपप्रधानशब्दस्याभिव्यञ्जक इति च तन्मतम् । तदनुसारेण काव्यात्मकशब्दात् प्रतीयमानस्यार्थस्याभिव्यञ्जकः शब्दो ध्वनिरिति संज्ञापितः आनन्दवर्धनेन । ततश्च व्युत्पत्तिभेदेन व्यञ्जकः शब्दः, व्यञ्जकोऽर्थः, व्यञ्जनाव्यापारः, व्यङ्ग्योऽर्थः, व्यङ्ग्यार्थप्रधानं काव्यं च ध्वनिसंज्ञया संज्ञातानि । ग्रन्थकृदपि ध्वनिकार इति प्रसिद्धिमुपगतः ।

"संयोगाद् विभागाच्च शब्दाच्च शब्दनिष्पत्तिः" (कणादसूत्रम् ।) घण्टायां ताड्यमानायां घण्टादण्डसंयोगेन शब्द उत्पद्यते । स च वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण श्रवणदेशं प्राप्य श्रावणप्रत्यक्षविषयो भवति । तत्र प्रथमशब्दस्य घण्टादण्डसंयोगः कारणम् । द्वितीयादिशब्दस्य तु पूर्वपूर्वः शब्दः । अयमेवानुरणनध्वनिरिति प्रसिद्धः । सुकविप्रयुक्तो नानार्थः शब्दः श्रूयमाणः प्रथमं प्रकृतमर्थं बोधयन्ननुस्वानसादृश्येनार्थान्तरं, तथा शब्दबोध्योऽर्थश्च तत्प्रकाश्यानन्यानर्थांश्च ध्वनयतीति शब्दस्यार्थस्यापि व्यञ्जकत्वरूपं ध्वनित्वम् अनुगतार्थम् ।

काव्यप्रकाशादिषु "शक्तिर्निपुणता"त्यादिना काव्यस्य कारणं, "काव्यं यशसे"त्यादिना प्रयोजनं, "तददोषौ सगुणावित्यादिना काव्यस्वरूपं,

काव्यदोषपरिहारोपयुक्तदोषज्ञानविषयान् दोषान्, काव्यशोभाकरान् गुणान् अलङ्कारांश्च निरूपयता मम्मटभट्टेन काव्यप्रकाशाख्यस्य स्वग्रन्थस्य विरचनेन तदधीयानानां किं प्रयोजनं? को वा विषय:? प्रतिपाद्यप्रतिपादकयो: कः सम्बन्धः? को वाधिकारी? इत्यादिकं कण्ठतो नोक्तम्।

ध्वन्यालोके तु सर्वं यथावदुक्तम्। ध्वनिरूपोऽर्थः प्रतिपाद्यः। तस्य अविद्यमानत्वभाक्तत्वानिर्वचनीयत्वादिवादनिराकरणपुरःसरं सहृदयहृदयाह्लादजनकत्वं प्रयोजन, ध्वनितत्त्वजिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभाव सम्बन्धश्च सम्यक् प्रतिपादितः।

> काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
> स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
> केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
> तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्॥

इति पद्येन ध्वनिस्वरूपनिरूपणस्य सहृदयमनःप्रीतिः प्रयोजनम्।

> इत्युक्तलक्षणो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः।
> सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः॥

इति ध्वनेस्तत्त्वज्ञानात् सत्कवित्वं, सत्काव्यास्वादकत्वं वा प्रयोजनम्।

पुनश्चतुर्थोद्योते

> ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः।
> अनेनानन्त्यमायाति कवीनां प्रतिभागुणः॥

इत्यनेन प्रतिभानन्त्यरूपं प्रयोजनान्तरमपि प्रदर्श्यते।

अस्मिन् ग्रन्थे ध्वनेः (व्यङ्ग्यस्यार्थस्य) स्थापनं मुख्यं चिकीर्षितम्। तच्च भङ्ग्या निर्व्यूढम्। व्यङ्ग्योऽर्थो नास्तीति च कैश्चिदपि पूर्वैरालङ्कारिकैर्नोक्तम्। किंतु तेषां काव्यशोभाकराणां काव्यालङ्कारत्वेन तैः परिगणना कृता। अत्र तु

ध्वनिं प्रसाध्य, तस्य भेदप्रभेदान् प्रदर्श्य, यत्र स वाच्यापेक्षया चारुः तत्र तस्यालङ्कार्यत्वेन प्राधान्यं, तस्य काव्याश्रितत्वेनैव स्वरूपलाभ इति काव्यस्यैवोदाहरणतया परिग्रहेण सिद्धान्तितम्। तथाविधस्य व्यङ्ग्यस्य चारुत्वे ध्वनित्वं, व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वे तस्य गुणीभूतव्यङ्ग्यत्वं च ।

निरूपणीयत्वेनाभिमतो ध्वनिः किमाश्रय इत्याशङ्क्य सहृदयश्लाघ्यार्थप्रतिपादकशब्दात्मकं काव्यमेव तदाश्रय इति, सहृदयश्लाघ्योऽर्थश्च वाच्यप्रतीयमानभेदेन द्विविध इति, वाच्यो भट्टोद्भटप्रभृतिभिर्बहुधा व्याकृतत्वादत्र नोच्यत इति च वदता, अन्यच्च प्रतीयमानं माधुर्यादिकं महाकवीनां वाणीषु अस्तीति च बोध्यते। एवं च प्रतीयमानं वस्तु निष्यन्दमाना महतां कवीनां वाणी तेषु परिस्फुरन्तं प्रतिभाविशेषमभिव्यनक्ति। किं च सत्यामेव प्रतिभायां काव्यं प्रादुर्भवति ।

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।**
**यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥**

इति वाल्मीकेर्वदनादुद्भूतः श्लोकः, तस्य पुराकृतसुकृतपरिपाकवशात् सञ्जातां प्रतिभां व्यनक्ति इति च ग्रन्थकृदाशयः। अत्र क्रौञ्च आलम्बनविभावः क्रौञ्चाक्रन्दनमुद्दीपनविभावः। सहृदयानां हृदये वासनारूपेणावस्थितः स्थायी शोकः करुणरसतां प्रतिपन्नः। क्रौञ्चस्य निहननं निशाम्य, क्रौञ्च्या आक्रन्दनं निशम्य च तत्र मुनेः कारुण्यं, व्याधे क्रोधश्च सञ्जायेते। ततश्च क्रौञ्च्याः शोकः तदाश्रयं मा निषादेत्यादि श्लोकं व्यङ्ग्यत्वेनानुप्राविशदिति च दृष्टान्तप्रदर्शनपूर्वकं ध्वनिर्निरूपितः। स च ध्वनिर्यत्र प्रधानवाक्यार्थो भवति तद् ध्वनिकाव्यमिति तल्लक्षणमपि प्रत्यपादयत् ।

"तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिश्चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्, अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानाम् आनन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते।" इति वचनेन अदृष्टविशेषप्रादुर्भूतप्रतिभानां वाल्मीकिव्यासप्रभृतीनां श्लोकेषु ध्वनिः स्फुटं प्रकाशत इति स्वाभिप्रायस्य प्रामाणिकत्वमपि प्रदर्शितं ध्वनिकृता ।

तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्—

इत्युपक्रम्य,

सत्काव्यतत्त्वविषयं सुचिरप्रसुप्तकल्पं
मनःसु परिपक्वधियां यदासीद् ।
तद् व्याकरोत् सहृदयोदयलाभहेतो-
रानन्दवर्धन इति प्रथिताभिधानः ॥

इत्यन्तेन ग्रन्थेन सहृदयानन्दो ध्वनिशास्त्रस्य परमं प्रयोजनमिति चोपसंहृत-मानन्दवर्धनेन ।

अयमत्र निष्कर्षः । यद्यपि ध्वनिशब्दो वैयाकरणैः शब्दपर एव प्रयुक्तस्तथापि आनन्दवर्धनेनानुगृहीतः स व्युत्पत्तिभेदेन बह्वर्थपरोऽपि अर्थ-परत्वेनैव प्राधान्येनाभिमत इति ज्ञातुं शक्यम् । ध्वन्यालोक इति ग्रन्थनाम्नि च ध्वनिशब्दोऽर्थपर एव । ध्वनिरूपोऽर्थ एवात्र प्राधान्येन प्रतिपाद्यः । स एव च सहृदयमनःप्रीतये तत्स्वरूपं निरूप्यत इत्यत्र तच्छब्देन निर्दिश्यते । तस्य चार्थस्य आश्रयः कः ? अर्थो नाम कः ? स कतिविधः ? इत्यादिकं ज्ञापयितुं

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥**

इत्यनेन अर्थस्यैव च प्रधानतया विभागः प्रदर्श्यते वाच्यः, प्रतीयमानश्चेति । वाच्यः सादृश्यादिः (उपमादिरलङ्कारः) व्यङ्ग्यश्च माधुर्यादिः (ध्वनिः) । वाच्यप्रतीयमानयोरर्थयोर्मध्ये प्रतीयमानस्य प्रधानवाक्यार्थतायां ध्वनि-व्यपदेशः । वाच्यस्य प्रधानवाक्यार्थत्वे व्यङ्ग्यस्य गुणीभूतत्वव्यपदेशश्च अर्थस्यैव । यद्यपि सर्वस्याप्यर्थस्य आश्रयः काव्यरूपः शब्दसन्दर्भः, काव्यशो-भाकरत्वं च समानं, तथापि न तन्निबन्धनो ध्वनिगुणीभूतव्यङ्ग्यव्यपदेशो ध्वनिकृदभिमतः । अत एव वस्त्वलङ्काररसादीनां सर्वेषामप्यर्थानां काव्यशोभाकरत्वेनालङ्कारसामान्यलक्षणाक्रान्तानां मुख्यवाक्यार्थत्वं पुरस्कृत्यैव

व्यपदेशः प्रदर्शितः। एवं प्रतीयमानस्य मुख्यवाक्यार्थत्वे तस्य ध्वनिव्यपदेशः। रत्यादेः प्रतीयमानस्य चारुत्वेऽपि स यत्रान्यवाक्यार्थे प्रधाने अङ्गं भवति तदानीमेव रसादिरलङ्कारः। तदेवोक्तं—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥ इति।

अलङ्काराणामलङ्कारत्वं च रसादिनात्मर्थमाश्रित्य विनिवेशितानामेवेति च व्यवस्था कृता। रसवदादीनामुपमादीनां चालङ्काराणां गुणीभूतव्यङ्ग्यत्वं, रसादीनां प्रधानवाक्यार्थत्वे ध्वनित्वं चार्थस्यैव। अत एव ध्वनिः अविवक्षित-वाच्यो विवक्षितान्यपरवाच्यश्चेति, तस्य भेदाः प्रभेदाश्चानन्ता भवन्तीति च प्रतिपादितम्। एकस्मिन् काव्ये (पद्ये) यद्यनेके ध्वनिभेदाः सम्भवन्ति, तथापि तत् काव्यमेकमेव। तत्रार्थानां भेदेऽपि प्रधानमर्थमाश्रित्य व्यपदेशः। अतः अर्थे निरूपिते तदाश्रयस्य काव्यस्य निरूपणं क्रमित्यवधारयितुं शक्यते।

ध्वनेरर्थस्य निरूपणं प्रतिज्ञातम्। तथा निरूपितश्च ध्वनिरूपोऽर्थः। व्यङ्ग्यस्य प्राधान्ये काव्यं ध्वनिः, गुणीभावे गुणीभूतव्यङ्ग्यम्, अस्फुटत्वे चित्रं चेति त्रिविधं काव्यमिति च व्यवस्थापितं ध्वनिकारेण। तस्य व्यङ्ग्यस्य तत्त्वमवगत्य तत्प्रधानतया तद्गुणभावेन वा काव्यमुपनिबध्नतः कवेः पूर्वार्थान्वियत्यपि वाणी नवत्वमायाति। एवं ध्वनितत्त्वज्ञानेन, तदुचितेन प्रयोगेण च सर्वे सत्कवयः सहृदयाश्च भूयासुः—इत्याशीर्वचनेन उपसंहृतवांश्च ध्वनिकारः।

---

३. ध्वन्यालोकपाठे लोचनकृत्कृतः क्वाचित्कोऽर्थभेदस्तेन सञ्जातो-ऽनर्थश्च।

"काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः......"

बुधैः काव्यतत्त्वविद्भिः, काव्यस्यात्मा ध्वनिरिति संज्ञितः परम्परया यः समाम्नातपूर्वः सम्यगासमन्तान्म्नातः प्रकटितः" इति ध्वन्यालोकपाठः । अत्र लोचनकारः—"काव्यस्यात्मा ध्वनिरिति" इत्यत्र "इति शब्दः स्वरूपपरत्वं ध्वनिशब्दस्याचष्टे । तदर्थस्य विवादास्पदीभूततया निश्चयाभावेनार्थत्वायोगात् ।" इति विवरणमकृत ।

सारभूतार्थबोधकेनात्मशब्देन साकं सामानाधिकरण्येन निर्दिष्टस्य ध्वनिशब्दस्य ध्वनिरिति शब्दस्वरूपपरत्वं मन्यते लोचनकारः । ध्वनिरित्यर्थपरत्वाभावे च तस्य सारभूतस्य व्यङ्ग्यार्थस्य विवादास्पदत्वं हेतुं मन्यते । यदि तस्य विवादास्पदत्वं नास्ति तर्हि "ध्वनिरिति" इत्यत्रेतिशब्दः स्वकीयं शब्दपरताबोधनस्वभावं परित्यज्यार्थपरतां बोधयितुं किमु समर्थो भवति । किञ्च, "ध्वनिरिति" इत्यत्र इतिकरणयुक्तस्य लौकिकस्य ध्वनिशब्दस्य ध्वनिरिति शब्दोऽर्थ इति ज्ञायमाने काव्यस्यात्मा ध्वनिरिति शब्दस्वरूपम् इति खलूक्तं स्याद् वृत्तौ । किंतु काव्यस्यात्मा ध्वनिसंज्ञितः इति खलु वृत्तिः । ध्वनिसंज्ञितोऽर्थ इति च युक्तरूपम् । इतिशब्देन युक्तस्य ध्वनिशब्दस्य सिद्ध्यतो ध्वनिस्वरूपस्य कथमिदं संज्ञित इति व्याख्यानं विवरणात्मकं भवतीति तु सुधीभिर्विभावनीयम् ।

उपलोचने तु एवं दृश्यते—"काव्यस्यात्मा ध्वनिरिति बुधैः" इति कारिकायाम् । अत्रेतिशब्दस्य शब्दस्वरूपपरतया व्याख्यानमनादृत्य क्रमभेदेन वाक्यार्थपरामर्शकतया व्याचक्षाणानां लोचनकाराणामयमभिसन्धिः । "यदि इतिशब्दः शब्दपरोऽभविष्यद् ध्वनिसंज्ञितोऽर्थ इति वृत्तावाचार्यो नावक्ष्यद्, ध्वनिशब्दः काव्यस्यात्मा इत्येवावक्ष्यद्" इति । अनेन ग्रन्थेन, ध्वनिशब्दः काव्यस्यात्मा इत्यवचनेन, ध्वनिसंज्ञितोऽर्थः काव्यस्यात्मा इति वचनेन च अत्रेतिशब्दो ध्वनिशब्दस्य शब्दपरत्वं नाचष्ट इत्यर्थपर्यवसानादत्रेतिशब्दोत्तरो ध्वनिशब्दः शब्दपरो न भवतीति क्रियातिपत्तिद्योतकेन लृङा ज्ञाप्यते । अयमेवार्थो लोचनकाराणामभिमत इति च कथयन्त्युपलोचनकाराः ।

किन्तु लोचनकाराः "काव्यस्यात्मा ध्वनिरिति" इति कारिकाविभागं, "बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिसंज्ञितः" इति वृत्तिभागं च व्याख्याय तत्रानुपपत्तिप्रदर्शनपूर्वकम् "एवं तु युक्ततरम्—इति शब्दो भिन्नक्रमो

वाक्यार्थपरामर्शकः, ध्वनिलक्षणोऽर्थः काव्यस्यात्मेति यः समाम्नात" इति। एवमर्थं प्रदर्श्य "शब्दपदार्थकत्वे हि ध्वनिसंज्ञितोऽर्थ इति का सङ्गतिः" इत्यनुयुञ्जाना ध्वनिशब्दाव्यवहितोत्तरस्येतिशब्दस्य तत्रैवावस्थाने ध्वनिशब्दः शब्दपर एव स्यादित्यभिसन्दधानाः खलु दृश्यन्ते। अत एव क्रमभेदश्च तैः स्वीकृतः। पदार्थविपर्यासकत्वेनाभिमतस्य इतिशब्दस्य ध्वनिशब्दोत्तरं प्रयोगे ध्वनिशब्दस्य शब्दपरतापत्तौ तस्य वाक्योत्तरसमायोजनेन वाक्यरूप-शब्दसमुदायपरत्वं कथं निवार्यत इत्यपि चिन्तनीयमास्ते।

वस्तुतस्तु संज्ञाशब्दोऽयम्। ध्वनिरिति, ध्वनिसंज्ञितः काव्यस्य सहृदय-हृदयाह्लादजनकस्य शब्दसन्दर्भस्य आत्मा सारभूतोऽर्थ इति सामानाधिकरण्येन निर्देशाद् ध्वनिसंज्ञितो व्यङ्ग्योऽर्थः इत्यर्थः सम्पद्यते। इत्थं च व्यञ्जकः शब्दः व्यञ्जकोऽर्थः व्यञ्जनाव्यापारः व्यङ्ग्योऽर्थः व्यङ्ग्यार्थप्रधानं काव्यम् इत्येवं-रूपाणां यावतामर्थानाम् इतिकरणयुक्तेन संज्ञाशब्देन निर्देशो भवतीति ज्ञेयम्। एतदभिप्रायकत्वमेव काव्यस्यात्मा ध्वनिरित्युक्तवतः काव्यस्यात्मा ध्वनिसंज्ञि-तोऽर्थ इति स्वयं व्याख्यातवतश्च ध्वन्यालोककर्तुरिति शक्यं वक्तुम्। एवं "काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः" इति काव्यविशेषलक्षणपरे पद्ये ध्वनिरिति काव्यविशेषः इति सामानाधिकरण्येन निर्देशाद् ध्वनिसंज्ञा काव्य-विशेषात्मकशब्दसन्दर्भस्येति च प्रदर्शितं ग्रन्थकारेण।

एवम् इतिशब्दस्य पदार्थविपर्यासकत्वविचारेण कोऽनर्थः सञ्जात इति चेदुच्यते—रन्ध्रान्वेषी ध्वनिविरोधी महिमभट्टः सभां प्रविष्टः। महिमा ब्रूते—"काव्यस्यात्मा ध्वनिरिति इत्यत्र इतिशब्दस्य तावत् प्रक्रमभेदः, स हि काव्यात्मपदानन्तरं प्रयोक्तव्यः काव्यस्यात्मेति" इति। "अन्यथा ध्वनिनैवास्य सम्बन्धे विज्ञायमाने, तस्य सर्वनामपरामर्शाभावे, अभावो, भाक्तत्वं, वाग-विषयत्वं च न प्रतीयेत, तस्याभिधानात्मन इतिना व्यवच्छेदाद् अन्यस्य ध्वनेरनु-पादानाद्" इति च। एतेन काव्यस्यात्मा ध्वनिरित्यादिपद्ये प्रक्रमभेदरूप-काव्यदोषमारोपयति महिमा।

इदं तु तत्त्वं—यो ध्वनिशब्दोत्तरमितिशब्दः प्रयुक्तो ध्वनिकारेण स न पदार्थविपर्यासकः। वक्तृतात्पर्यविषयीभूतस्यार्थस्य स्फुटप्रतीतिश्चोपजायते। अत इतिशब्दस्यान्यत्रोपनयनापेक्षैव न प्रसजति इति प्रक्रमभेदाविष्करणं

नैव शङ्क्यते । यदि तु इतिशब्दस्यान्यत्रायोजने विवक्षितार्थान्वयबोधः सुसम्प्रतिपन्नः स्यात्, तदापि वाक्येषु तात्पर्यसत्त्वे योजनयान्वयबोधस्य शास्त्रकारसम्मतत्वात् काव्यस्यात्मेति पद्ये ध्वनिकारेण इतिशब्दो यत्र प्रयुक्तस्तत्रैवावतिष्ठतां, का नो हानिः ?

अपि च लोचनकारस्य वचनेऽपि महिमा दोषमाविष्करोति । वाक्योत्तरमितिशब्द आयोजनीय इति लोचनकारमतम् । तस्यायमाशयः—"काव्यस्यात्मा ध्वनिरित्येकं वाक्यम् । तदुत्तरमितिशब्दः प्रयुक्तः । तत्र काव्यात्मन उद्देश्यत्वं ध्वनेर्विधेयत्वं च । एवं च समुदायोत्तरमितिशब्दस्य प्रयोगाद् ध्वनिशब्दोऽयम् अर्थप्रधानः । अतस्तस्य ध्वनिरूपस्यार्थस्य सर्वनामपरामर्शयोग्यस्याशावादिसम्बन्धोऽपि घटते" इति ।

तद् दूषयन्नाह महिमा—एवं हि वाक्यार्थविच्छेदः प्रतीयते । ततश्च तत्परामर्शिनः सर्वनामपदादेः नपुंसकलिङ्गनिर्देशप्रसङ्गः"—इति । वाक्योत्तरमितिशब्दस्य योजने पदार्थविपयासकत्वस्वाभाव्यात् तस्य वाक्यरूपशब्दसमुदायपरत्वमेव स्याद् इति तदाशयः । वस्तुत इतिशब्दस्य पदार्थविपर्यासकत्वस्वाभाव्याभावाद् वाक्योत्तरमितिशब्दयोजने वाक्यार्थविच्छेदकत्वापादानम् अप्यनुचितमेव । सर्वनामपदादेः नपुंसकलिङ्गनिर्देशप्रसङ्ग इति यदुक्तं महिम्ना स दोषो न प्रसरत्येव । यतः समाम्नानक्रियाकर्मत्वं ध्वनेरेव न तु वाक्यार्थस्य ।

एतेन ध्वन्यालोके महिम्नोद्भावितो दोषोऽसङ्गतः । लोचनोपरि उद्भावितो वाक्यार्थविच्छेदकत्वरूपः नपुंसकलिङ्गनिर्देशप्रसङ्गरूपश्च दोषो यद्यपि परिहृतो भवति, तथापि वस्तुस्थित्यनुरोधेन वाक्योत्तरमितिशब्दयोजनचिन्तापि नोत्थातुमर्हति । वाक्यार्थस्य समाम्नानक्रियाकर्मत्वेन तात्पर्यविषयत्वासम्भवान्नपुसकलिङ्गनिर्देशप्रसङ्गरूपो दोषो निर्दिश्यत इति यत् तदेतदविचारिताभिधानम् ।

सर्वोऽप्ययमनर्थ इतिशब्दार्थविचारेणैव सञ्जात इत्यत्र कस्य वा विप्रतिपत्तेरवकाशः । वस्तुतोऽसतः कस्यचित् स्वभावस्येतिशब्दशिरसि समायोजनेन महान् कोलाहलः क्रियमाणोऽप्यनुचित एव ।

इदं तु बोध्यं—व्याकरणशास्त्रे शब्दस्य शब्दोऽर्थः। इतिशब्दयोगे तु सोऽर्थपरः। तथा लौकिकस्य शब्दस्य अर्थपरत्वम्। इतिशब्दयोगे तु स शब्दपरः। इदमेवेतिशब्दस्य पदार्थविपर्यासकत्वम् इति केचिदाहुः। यथा—"न वेति विभाषा" इति पाणिनीयं सूत्रम्। नकारवाकारौ शब्दपरौ। इतिशब्दायोजने 'नेति', 'वेति' निषेधविकल्परूपार्थपरतया निषेधविकल्पयोर्विभाषासंज्ञा स्यादिति सूत्रार्थः सम्पद्यत इति ते मन्यन्ते।

तदपि न विचारसहम्। इतिकरणयुक्ताः शब्दा यत्सामानाधिकरण्येन प्रयुज्यन्ते, तमेवार्थं बोधयन्तीति वस्तुस्थितिरिति पूर्वं प्रतिपादितम्। नहि तत्रेतिशब्देन किमपि क्रियते। किंतु, 'न' इति शब्दमुच्चार्य यो निषेधो विधीयते, 'वा' इति शब्दमुच्चार्य यो विकल्पो विधीयते तयोर्निषेधविकल्पयोर्विभाषासंज्ञा स्यादिति सूत्रार्थः। "नेति शब्दः" इति शब्दस्य विशेष्यत्वे नकारः शब्दपरः। "नेत्यर्थः" इत्यर्थस्य विशेष्यत्वे नकारोऽर्थपरः। "नाभ्यस्ताच्छतुः"—अभ्यस्तात् परस्य शतृप्रत्ययस्य नुम् न स्यादित्यर्थः। "दधद्"—अत्र नकारमुच्चार्य नुम् निषिध्यते। तथा 'विदो लटो वा'—विदधातोर्लटोऽपि णलादय आदेशा विकल्पेन भवन्ति इति सूत्रार्थः। अत्रापि वाकारमुच्चार्य णलादयो विकल्प्यन्ते। तथा "इको गुणवृद्धी" इत्यत्रापि इयमेव गतिः। गुण इति यो गुणः, वृद्धिरिति या वृद्धिः (गुण इति शब्दम् उच्चार्य यो गुणः, वृद्धिरिति शब्दमुच्चार्य या वृद्धिश्च) इति गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठत इति सूत्रार्थः। यथा—"आद् गुणः" अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। गुण इति शब्दमुच्चार्य यो गुणः इत्यत्र प्रथमगुणशब्दः शब्दमुच्चार्येति शब्देन सह सामानाधिकरण्येन निर्देशाच्छब्दपरः, द्वितीयस्तु अदेङ्रूपसंज्ञिपर इति विद्वदङ्गीकृतोऽयं पन्थाः।

२. "योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥

काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ" इति ध्वन्यालोकपाठः।

ललितेन उचितेन च सन्निवेशेन चारुणः काव्यस्य रमणीयार्थप्रतिपादक-शब्दसन्दर्भस्य शरीरस्थानीयस्य, शरीरस्यात्मेव साररूपतया चमत्कृत्याधायकत्वेन काव्यत्वसम्पादकः सहृदयश्लाघ्यो योऽर्थः, तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ । एतेन सहृदयश्लाघ्यवाच्यप्रतीयमानान्यतरार्थबोधकशब्दत्वं काव्यसामान्यलक्षणं ध्वनिकृद्विवक्षितमिति स्पष्टं भासते । तदनुरोधेनैव यत्र (काव्ये) प्रतीयमानोऽर्थः वाच्यापेक्षयातिशयितचमत्कृतिजनकत्वेन सहृदय-श्लाघामर्हति तत् काव्यं ध्वनिरिति—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥**

इत्यनेन, यत्र तु वाच्योऽर्थः प्रतीयमानापेक्षयाधिकचमत्कृत्याधायकत्वेन सहृदयश्लाघ्यो भवति तत् काव्यं गुणीभूतव्यङ्ग्यमिति—

**प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।**
**यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ॥**

इत्यनेन, व्यङ्ग्यस्याविवक्षितत्वेनास्फुटतया वाच्यचारुत्वमात्रतात्पर्ये तत् काव्यं चित्रमिति—

**प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।**
**काव्ये उभे ततोऽन्यद् यत् तच्चित्रमभिधीयते ॥**
**चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।**
**तच्च किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥**

इत्यनेन च वाच्यव्यङ्ग्ययोरुभयोरप्यर्थयोः सहृदयश्लाघ्यत्वं काव्यचारुत्वहेतुत्वं चास्तीति काव्यं—ध्वनिः, गुणीभूतव्यङ्ग्यं चित्रं चेति त्रिविधमिति च श्रीमदानन्दवर्धनाचार्याभिमतमित्यपि स्फुटमवगम्यते ।

एवं स्थिते योऽर्थः सहृदयश्लाघ्य इति पद्यस्य स्वकपोलकल्पितमर्थमुक्त्वा सहृदयश्लाघ्यत्वं व्यङ्ग्यार्थमात्रस्येति, तस्यैकस्यैव काव्यार्थत्वमिति च महता

प्रयासेन साधयितुमुपक्रम्य, काव्यस्यात्मा स एवार्थ इत्यस्य स्वाभिमतार्थानुकूलतया व्याख्यां कृतवतो लोचनकृतो वचनेन सञ्जातप्रत्ययो महिमा वदति—काव्यविशेषः स ध्वनिरिति सूरिभिः कथित इति काव्यविशेष (ध्वनिकाव्य) लक्षणपरपद्ये काव्यविशेष इति काव्यस्य विशिष्टत्वं यद् ध्वनिकारेणोक्तं तदनुपपन्नं, काव्यमात्रस्य ध्वनिव्यपदेशविषयत्वेनेष्टत्वाद्—इति । एवं व्याख्याभेदस्य दिक् प्रदर्शिता । अन्यत् सर्वं विपश्चिद्भिः सूक्ष्मेक्षिकया निरीक्षणीयमित्यतो विरम्यते ।

## ४. कारिकावृत्त्योर्भिन्नकर्तृकत्वभ्रमनिरासः ।

ध्वन्यालोके पद्यभागः कारिकारूपः, गद्यभागो वृत्तिरूपश्च वर्तते । कारिकाया वृत्तेश्च विभागः सर्वेष्वपि पुस्तकेषु नैकरूपतया दृश्यते । ध्वनिसञ्ज्ञोपज्ञाता ध्वनिकार इत्यपि प्रसिद्धिमुपगतश्च श्रीमदानन्दवर्धनाचार्यः । केचित् कारिकावृत्त्योर्भिन्नकर्तृकत्वमभिमन्यन्ते । तस्य सर्वस्यापि निदानं लोचनकृदेव । काव्यस्यात्मा ध्वनिरिति पद्यं कारिकाकारस्यादिममिति कथ्यते। तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपमिति ध्वनिस्वरूपनिरूपणं प्रतिज्ञातं च दृश्यते। कारिकाकारस्यान्यत्वे कथमिदं सङ्गच्छताम् । किञ्च कारिकाकारोऽन्य इति च कथयन्ति । स किमभिधान इत्यनुयुज्यमाना न पारयन्ति नाम्ना कमपि निर्देष्टुम् । अत आनन्दवर्धन एव कारिकाभिर्वृत्तिवाक्यैः सङ्ग्रहश्लोकैश्च ध्वनिरूपं पदार्थं सम्यङ् निरूपितवानिति युक्तं वक्तुम् ।

हरिदाससंस्कृतग्रन्थमालातः प्रकाशिते बालप्रियादिव्याख्यासमुपेते ध्वन्यालोके पण्डितश्रीपट्टाभिरामशास्त्रिमहाशयैरित्थमुक्तम्—लोचने श्रीमदभिनवगुप्तपादाः कारिकाकारं वृत्तिकारं च भेदेन व्यपदिशन्ति । बहुषु स्थलेषु 'कारिकाकारस्तु' 'वृत्तिकारेण तु' इत्येवं व्यवहरन्तः उभयोर्भेदमेवाभिप्रयन्ति—इति । लोचनकारेण प्रकारान्तरेणाप्युक्तं दृश्यते । द्वितीयोद्द्योतस्य सप्तमकारिकाया वृत्तौ 'कारिकार्थं वृत्त्याह" इति, तस्यैवाष्टमकारिकाविवरणे "वृत्त्यार्थमाह—विप्रलम्भेति" इति, तस्यैवाष्टाविंशकारिकाविवरणे "वृत्तौ व्याचष्टे" इत्येवमादिकमपि लोचनकारेणैवाभिहितं दृश्यते । इदमपि पर्यालोचनीयं वर्तते ।

यदप्युक्तं—प्रथमोद्योते एकोनविंशकारिकाव्याख्यानावसरे, द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान् । तदाशयानुसारेण वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचद् । इति, एवं द्वितीयोद्द्योते प्रथमकारिकाव्याख्यानावसरे—तत्र प्रथमोद्द्योते वृत्तिकारेण प्रकाशितः..... भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतम् इति च तेन लोचनव्याख्यानेन इदमुक्तं भवति, यद्—अस्ति ध्वनिः इति ध्वनिं प्रसाध्य स द्विविधोऽविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति वृत्तावुक्तं, न कारिकायाम् । ततो द्वितीयोद्द्योते प्रथमकारिकया अविवक्षितवाच्यरूपस्य ध्वनिविशेषस्य लक्षणमुक्तम् । अतः कारिकया ध्वनेर्विभागस्याकरणात् (सामान्यलक्षणस्याकथनात्) वृत्त्युक्तविभागानुवादेन कारिकायां विशेषलक्षण-कथनमनुचितम् । अत एवं प्रतिपादनेन कारिकावृत्त्योर्भिन्नकर्तृकत्वम् इति । वस्तुतो विचार्यमाणे इदमेककर्तृकत्वसाधकमेवेति सिद्धसाधनं दोषः । भिन्नकर्तृ-कत्वसाधनाय प्रयुक्तो हेतुः समानकर्तृकत्वमेव साधयतीति भिन्नकर्तृकत्वस्या-साधनादर्थान्तरं च । प्रथमोद्द्योते "उक्तया नीत्या इत्यारभ्य द्वितीयोद्द्योते प्रथमकारिकाव्याख्यानान्तध्वन्यालोकभागस्य यथावदर्थाधिगमेऽयं संशय एव पदं न विदधीत । ध्वन्यलोकवाक्यस्यार्थावबोधो यत्र दुष्करो वर्तते, तत्र तदर्थावगमाय व्याख्यानमन्वेष्टव्यमिति युक्तम् । किन्तु ध्वन्यालोके स्पष्टप्रतीति-जनकस्य वाक्यस्य तद्विपरीतव्याख्यामन्येन कृतामन्विष्य तदनुरोधेन मूलग्रन्थेऽ नुपपत्तिश्चिन्त्यत इति यत् तदद्भुतमेव ।

इदं तु तत्त्वम्—"उक्तया नीत्या वक्ष्यमाणया च नीत्या ध्वनेः सामान्य-विशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं, तत् सर्वेषामेव वस्तूनां तत् प्रसक्तम् ।" इति ध्वन्यालोकः । अस्य ग्रन्थकर्तृतात्पर्यविषयीभूतोऽयमर्थः—"उक्तया नीत्या—"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः" इत्यन्तेन कारिकांशेन ध्वनेः सामान्यलक्षणं", वक्ष्यमाणया नीत्या —"अर्थान्तरे सङ्क्रमि-तमत्यन्तं वा तिरस्कृतम् । अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् "॥ इत्यनेन ध्वनेरविवक्षितवाच्यात्मकविशेषस्य लक्षणं" च प्रतिपादितं भवति । तथाहि शब्दबोध्योपसर्जनीभूतार्थव्यङ्ग्यशब्दबोध्योपसर्जनीकृतार्थव्यङ्ग्यान्यत-रत्वम्–अविवक्षितवाच्यविवक्षितान्यपरवाच्यान्यतरत्वेन पर्यवसन्नं ध्वनेः सामान्यलक्षणं विभागोपस्कृतं प्रतिपादितम् । ततो द्वितीयोद्द्योतारम्भे

अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यान्यतरत्वम् अविवक्षितवाच्यात्मकध्वनिविशेषलक्षणम् । अस्मिन् ग्रन्थे लक्षणानि तत्तद्विभागपुरःसरमेव प्रदर्श्यन्ते, यथा न्यायशास्त्रादौ पदार्थत्वं द्रव्यादिसप्तान्यतमत्वं, द्रव्यत्वं पृथिव्याद्यन्यतमत्वम् इति । अवक्षितवाच्यस्य लक्षणमप्येवमेव कथितम् । तत्र द्विधा मतमिति कण्ठत उक्तम् । यत्रार्थः शब्दो वेत्यत्र तु द्विधा इति यद्यपि नोक्तं, तथापि उक्तरीत्या विभागपुरःसरमेव लक्षणकथनाद् वाकारघटितेन शब्दसमुदायेन अन्यतरत्वात्मकं ध्वनिसामान्यलक्षणं विभागपुरःसरमेवोक्तं ग्रन्थकारेण। एवं स्फुटतया प्रतीयमानं विभागवचनं लोचनकारो यदि नाभ्युपैति, तर्हि अनेन ग्रन्थेन ध्वनेः सामान्यलक्षणमपि नोक्तं भवति । उक्तया नीत्येत्यस्य लोचनकृतं यत्रार्थः शब्दो वा इत्यत्र व्याख्यानमपि व्याहतं स्यात् । कारिका तु सामग्र्येण अविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वरूपविभागघटितसामान्यलक्षणाक्रान्तो ध्वनिः (अर्थः) यत्र (काव्ये) प्रधानवाक्यार्थो भवति स काव्यविशेषः ध्वनिः (उत्तमकाव्यम्) इति काव्यविशेषलक्षणमेवानया कारिकयाख्यायते । काव्यसामान्यलक्षणं तु—योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः । वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ इत्यनेन सहृदयश्लाघ्यवाच्यप्रतीयमानान्यतरार्थबोधजनकशब्दत्वात्मकं पूर्वमेवोक्तम् । एवं च व्यङ्ग्यस्य प्राधान्ये ध्वनिः, गुणभावे गुणीभूतव्यङ्ग्यम्, अस्फुटत्वे चित्रं चेति काव्यस्य त्रैविध्यं भवतीति च ध्वनिकारस्य सुचिन्तितो दृढतरश्चाभिप्रायः । अतो ध्वनेर्विभागो वृत्तिकारेणैव कथितः न कारिकया इति लोचनवचनस्योपादेयता सुधीभिर्विभावनीया । उपपत्तिरहितमेतादृशं लोचनकारवचनमेव परमं प्रमाणं मन्वाना अतिपरिस्फुटार्थबोधके ध्वन्यालोकवाक्येऽश्रद्दधानाश्च कारिकावृत्त्योर्भिन्नकर्तृकत्वमुद्घोषयन्तीत्यहो विवेकान्धता तेषाम् ।

एवं च द्वितीयोद्द्योतारम्भवाक्यस्यापि समुचितो ध्वनिकृद्विवक्षितश्चार्थः स्पष्टतरप्रतीतिविषयो भवति । एवं पूर्वोक्तप्रकारेण । अविवक्षितवाच्य विवक्षितान्यपरवाच्यत्वेन ध्वनिः द्विप्रकारः द्विविधः प्रकाशितः "यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः" इत्यन्तेन कारिकांशेन, तदनुवादरूपेण अस्ति ध्वनिः—स द्विविधः अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति वृत्तिभागेन च । तत्र तयोरुभयोर्भेदयोर्मध्ये अविवक्षितवाच्यस्य ध्वनेः प्रथमभेदस्य प्रभेदप्रतिपादनाय अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यत्वरूपावान्तरभेदं

प्रतिपादयितुम् इदमुच्यते इत्यर्थः । एतेन त्रिभागपुरःसरं लक्षणमप्युक्तं भवति ।

किञ्च, यत् तयोर्भिन्नकर्तृकत्वे प्रधानं प्रमाणं मन्यन्ते, तदधिकृत्येदानीं विचार्यते—

वस्तुतस्तु —कारिकाकार आह वृत्तिकार आहेत्यादि लोचनवचनं सहृदयान मनसि तयोर्भेदो वा अभेदो वा लोचनकृदभिमत इति संशयमेव जनयति। द्वितीयोद्द्योतारम्भे "प्रकाशित" इत्यस्य व्याख्यानावसरे मया "वृत्तिकारेण सतेति भावः" इति वचनेन प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेवाभिहितं कारिकया, न तु विभागः, स तु वृत्तिकारेणैव कृत इति निश्चिन्वानो लोचनकृत् तयोर्भेदमेव मन्यत इति केचन मन्यन्ते । यत्रार्थः शब्दो वेति कारिकायां येनांशेन ध्वनिसामान्यलक्षणमुच्यते तत्र विभागोऽप्यन्तर्गत एव । कारिकया विभागो नोक्त इति येनांशेन मन्यते लोचनकारस्तत् काव्यविशेषस्यैव लक्षणम् । न तु ध्वनेः (अर्थस्य) सामान्यलक्षणम् । उक्तरीत्या विभागस्यापि कारिकाकारेण स्पष्टमभिधानाद् भिन्नकर्तृकत्वभ्रमहेतुरपि निरस्तः ।

---

## ५. मतभेदेन व्यञ्जनाविचारः

ध्वनिसंज्ञितस्य व्यङ्ग्यार्थस्याधिगमो व्यञ्जनावृत्त्यधीन इति व्यञ्जनाव्यापारो विचार्यते—

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥**

शक्तिश्च अस्मात् पदादयमर्थो बोद्धव्य इत्याकारकेच्छारूपा । तद्ग्रहश्च व्याकरणादिभ्यो भवति । तथाचोक्तम्—

**शक्तिग्रहं व्याकरणोपमान-**
**कोशाप्तवाक्याद् व्यवहारतश्च ।**

वाक्यस्य शेषाद् विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ इति

एतादृशस्य शक्तिग्रहस्य सहकारेण शब्दश्रवणात्मके पदज्ञाने तदभिधेयस्यार्थस्योपस्थितिः, तद्द्वारा शाब्दबोधश्च सञ्जायते । प्रकृतिप्रत्ययादीनां पृथक् सङ्केतो गृह्यते । आकाङ्क्षादीनां साहाय्येन अभिहितानां पदार्थानां परस्परमन्वये सति वक्तृतात्पर्यविषयीभूतस्य वाक्यार्थस्य ज्ञानं सम्पद्यते । केचित्तु प्रवृत्तिनिवृत्त्यनुकूलत्वाद् वाक्यम् एव वाचकं मन्वते ।

शब्दस्य स्वरूपं वर्णसमुदायः । अर्थस्य च परप्रतिपत्तावभीप्सितायां शब्दप्रयोगादृते नान्यमुपायं पश्यामः । तदुक्तं वाक्यपदीये (1.15) "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति । घटशब्दस्य घटोऽर्थ इति कम्बुग्रीवादिमत् किमपि वस्तु अर्थ इति वा वचनेनेदं सुस्पष्टं भवति ।

अयमिह शास्त्रकाराणां समयः—शब्द्यते (बोध्यतेऽर्थो) ऽनेनेति व्युत्पत्त्या अर्थबोधकशब्द एव शब्दशब्देन व्यवह्रियते । व्याकरणोपमानादिभ्यो गृहीतः सङ्केत एकोऽपि शब्दो वाचकत्वलक्षकत्वव्यञ्जकत्वरूपैस्त्रिभिरुपाधिभिः वाचकलक्षकव्यञ्जकात्मना त्रैविध्यं भजते । अभिधालक्षणाव्यञ्जनारूपैस्त्रिभिर्व्यापारैर्वाच्य-लक्ष्य-व्यङ्ग्यरूपांस्त्रीनर्थान् प्रतिपादयति। तथाहि—शब्दो गृहीतसङ्केतः श्रावणप्रत्यक्षविषयीभूतोऽभिधया स्वसङ्केतितमर्थं बोधयति स शब्दो वाचकः स व्यापारोऽभिधा, सोऽर्थश्च वाच्यः । 'गङ्गायां घोष' इति श्रूयमाणे घोषः पदार्थस्याभीरगृहस्य गङ्गाशब्दमुख्यार्थेन प्रवाहेण सम्बन्धो बाधित इति मुख्यार्थस्य पदार्थान्तरेणान्वयस्य तात्पर्यस्य वानुपपत्तौ सत्यां तत्सम्बद्धस्य तीररूपस्यार्थस्य बोधो लक्षणया भववि । तत्र गङ्गाशब्द एव लक्षकः, लक्षणा व्यापारः, तीररूपोऽर्थश्च लक्ष्यः ।

'गङ्गातीरे घोष' इति शब्दप्रयोगे स्वायत्ते 'गङ्गायां घोषः' इति कवेः प्रयोगः किन्निबन्धन इति विचार्यमाणे इदमस्माभिरवधारयितुं शक्यम् । 'चन्द्र इव मुखं' इत्यत्रोपमालङ्कारः, चन्द्रसदृशं मुखमिति शाब्दबोधः । 'मुखं चन्द्र' इत्यत्र रूपकमलङ्कारः । तत्र समानविभक्तिकपदोपस्थापितयोरप्यर्थयो-

रभेदान्वयबोधो न भवति भेदबुद्ध्या तत्प्रतिबन्धादिति स्थिते चन्द्रशब्दस्य चन्द्रसदृशे लक्षणामङ्गीकृत्य चन्द्रसदृशस्य लक्ष्यार्थस्याभेदेन मुखपदार्थेऽन्वयो बोध्यते। तथा च चन्द्रसदृशाभिन्नं मुखमिति शाब्दबोधो भवति। सत्येवं को नाम भेद उपमारूपकयोरिति चेदुपमायां सादृश्यमिवशब्देनोच्यते। रूपके तु तत् चन्द्रशब्देन लक्ष्यते। लक्षणायाः फलं तु अभेदस्ताद्रूप्यं वा; स चार्थो व्यञ्जना-व्यापारगम्यः। अतो व्यङ्ग्यार्थप्रतिपादनेच्छया लाक्षणिकशब्दप्रयोगे कवीनां नैर्भर्यम्। तथा चोक्तं काव्यप्रकाशे (P. 43.1) 'गङ्गातटे घोषः' इत्यादेः प्रतिपादनात् येषां न तथा प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथाप्रतिपाद-नात्मनः प्रयोजनाच्च मुख्येनामुख्यार्थो लक्ष्यते'—इति। एवं च 'गङ्गायां घोषः' इत्यत्र शैत्यपावनत्वादिप्रतीतिर्व्यञ्जनयोपस्थाप्यत इति स एव गङ्गाशब्दो व्यञ्जकत्वमापन्नो व्यञ्जनाव्यापारेण शैत्यपावनत्वादिरूपं व्यङ्ग्यमर्थं बोधयति।

यथा शरीरावच्छिन्नात्मनि भोगः चक्षुरादिद्वारा शरीरगतानां रूपादिगुणानाँ, मनसा चेन्द्रियेण शौर्यादीनामात्मगुणानां चानुभवो भवति, तथा शब्दरूपशरीरावच्छेदेन इवादिशब्देन साक्षादभिधीयमानस्य सादृश्यादेर्वाच्यार्थ-गतस्य माधुर्यादेर्व्यङ्ग्यार्थगतस्य च प्रतिपत्तिर्जायते। अयमत्र विशेषः— शरीरावच्छिन्न आत्मनि रूपादीनां शरीरगुणानां 'अहं गौर' इत्यादिकं, शौर्यादीनां आत्मगुणानां 'अहं शूर' इत्यादिकं च ज्ञानं स्वस्य भवति। तथा सादृश्यादीनां वाच्यार्थगतानां, माधुर्यादीनां प्रतीयमानार्थगतानां, तथा अनुप्रासादीनां शब्दार्थगतानां च धर्माणामनुभवः न काव्यात्मनः किंतु काव्यस्थितानामेव तेषां सानुप्रासं, सादृश्यवत्, रसवदित्याद्याकारकः काव्यशब्दगतस्य काव्यार्थगतस्य च धर्मस्य प्रकाशः सहृदयस्यैव भवति। अत एवार्थः शब्दस्यात्मस्थानीय इति शब्दश्च शरीरस्थानीय इति च ज्ञायते।

तत्र वाच्यस्तावदर्थः, शब्दादभिधया वृत्त्या प्रतिपाद्यमानोऽदोषत्वविशेषितो रसाद्यनुगतवर्णविन्यासादिरूपैः शब्दालङ्कारैः शब्दद्वारा सञ्जातसमुल्लासः अर्थालङ्कारैरुपमादिभिः स्वयं परिपुष्टः, गुणकृतां चमत्कृतिमादधानः, क्वचिद् व्यङ्ग्यैश्च वस्त्वलङ्काररसादिभिः गुणीभूतैरुपस्कृतः सहृदयहृदयमावर्जयति।

व्यङ्ग्यार्थोऽपि पदपदैकदेशवर्णरचनादिभिः प्रायशः सर्वैरपि वाच्यलक्ष्य-व्यङ्ग्यैरर्थैरभिव्यक्तः प्राधान्येन प्रतीयमानो वाच्यातिशायिनीं चमत्कृतिमादधत् सहृदयैरास्वाद्यते॥

एवं वाच्यव्यङ्ग्ययोरर्थयोः प्रधानेतरभावमाश्रित्य काव्यं, ध्वनिः, गुणीभूतव्यङ्ग्यं, चित्रं चेति त्रैविध्यं प्राप्नोति ।

तत्र वाक्यार्थोपस्कारकत्वमलङ्कारलक्षणम् । वाक्यार्थो नाम वाक्यतात्पर्यविषयीभूतोऽर्थः । स च वस्त्वलङ्काररूपो वाच्यार्थः, वस्त्वलङ्काररसादिरूपो व्यङ्ग्यार्थश्च भवति ।

सर्वेषामप्येतेषामर्थानां साक्षात् परम्परया वोपस्कारकाः सर्वेऽप्यलङ्कारसञ्ज्ञां लभन्ते । शरीरस्य हारादय इव काव्यस्य शोभाधायका अप्यलङ्कारा आत्मानं शरीरद्वारा भूषयन्ति । ये चात्मसमवेतास्तदुत्कर्षका गुणास्तेषामपि शौर्यादीनां शरीरावच्छेदेनैव "शूर" इत्यादिव्यवहारविषयत्वमुपपद्यते । अत एव माधुर्यस्यार्थगुणत्वेऽपि मधुरो वर्ण इत्यादयः प्रयोगा दृश्यन्ते । तत्र मधुरो रस इति मुख्यः प्रयोगः, मधुरो वर्ण इत्यादयश्चौपचारिकाः ॥

वस्तुतस्तु माधुर्यादिकं द्रुत्यादिचित्तवृत्तिप्रयोजकत्वं प्रयोजकतासम्बन्धेन द्रुत्यादिमत्त्वं वा । एवं च सर्व एव प्रयोगो मुख्य एव भवितुमर्हति । मधुरो वर्ण इति मधुरो रस इति च प्रतीत्योर्भेदेऽपि द्रुतिप्रयोजकत्वरूपं माधुर्यं तयोरविशिष्टम् ॥

यथा शरीर उपस्कृतेऽप्यात्मन एवोपकारः । आत्मन्युपस्कृतेऽपि तत्तच्छरीरावच्छेदेनैवानुभवश्च सङ्गच्छते तथा यत्र विद्यमानमपि नागरिकाङ्गनालावण्यं ग्रामीणालङ्कारा न भूषयन्ति, तथा विद्यमानं रसं तद्विपरीतवर्णरचनादयो नोपकुर्वन्ति । किं च स्वाभाविकमेव सौन्दर्यं गुणादिविशिष्टं चमत्कारकम् । तत्तु विनाऽप्यलङ्कारं सर्वान् प्रीणयति । तथा माधुर्यादिगुणविशिष्टा रसादयो व्यङ्ग्यार्थाः स्वयं शोभन्ते । तदनुकूला अलङ्काराश्च यदि सन्ति तर्हि हेम्नः परमामोदः । अतो व्यङ्ग्यरहितं काव्यं न हृद्यम् । 'अव्यङ्ग्यं त्ववरं स्मृतम्' इत्यत्राव्यङ्ग्यशब्दप्रयोगस्तु 'अनुदरा कन्या' इत्यादिवदीषदर्थे नञोपपादनीयः । स्फुटप्रतीयमानार्थरहितमिति यावत् ।

अभिधालक्षणाख्ये उभे शब्दवृत्ती पदार्थं प्रतिपादयत इति सर्वैरपि शास्त्रकारैरभ्युपगम्यते । अभिधा नाम सङ्केतितमर्थमव्यवधानेन बोधयन्

शब्दस्यार्थगतोऽर्थस्य शब्दगतो वा शक्त्याख्यः सम्बन्धः । इदं पदमिममर्थं बोधयतु, अयमर्थ एतत्पदबोध्यो भवतु इति च पदपदार्थान्यतरविशेष्यकत्वमीश्वरेच्छात्मकस्य सङ्केतस्येति शक्तिवादे गदाधरभट्टाचार्यैरभ्यधायि । सङ्केतितश्चार्थो जातिगुणक्रियाद्रव्यभेदेन चतुर्विधः । गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारवचनमत्र प्रमाणम् । तथा च सङ्केतितार्थगोचरः शब्दव्यापारोऽभिधा ।

> **तपोविशेषैः प्रथितैः प्रजानां**
> **शुभैश्चरित्रैर्जगतीमहिष्याः ।**
> **भाग्यैः प्रभूतैर्भुवनस्य चास्य**
> **बिभर्ति राज्यं वरवीररुद्रः ॥**

सर्वाण्यत्र पदान्यभिधाव्यापारेण स्वं स्वमर्थं प्रकाशयन्ति । ततश्चाकाङ्क्षायोग्यतासन्निधिवशात् पदार्थानां परस्परमन्वयेन तात्पर्यविषयीभूतमर्थं भङ्ग्या प्रतिपादयत् काव्यमिदं सहृदयहृदयमानन्दयति ॥

अभिधेयस्यार्थस्य पदार्थान्तरान्वये तात्पर्ये वानुपपद्यमाने वाच्यार्थव्यवहितं तत्सम्बद्धं चार्थं बोधयति लक्षणाव्यापारः । यथा—

> **"पत्युः काकतिनाथस्य पादपीठीमनारतम् ।**
> **स्फुरद्रत्नप्रभाजालैरलङ्कुर्वन्ति मौलयः ॥"**

अत्र 'मौलि' शब्दस्तदाश्रयभूतान् राज्ञो लक्षयति । इत्थं चाभिधालक्षणाभ्यां प्रतिपाद्यमानस्यार्थस्य चमत्कृतिजनकत्वात् तत्प्रतिपादकस्य शब्दस्य काव्यत्वं सूपपादम् ।

अथ—

> **"करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।**
> **धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥"**

इत्यत्र "सार्वभौम" शब्दः सम्राजं कौबेरदिशागजं च अभिधत्ते । शब्दस्या-स्यानेकार्थबोधनसामर्थ्ये सत्यपि 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायेन प्राकरणिकार्थबोधानन्तरं द्वितीयस्यार्थस्य प्रत्यायने कथं नामाभिधा प्रगल्भताम् । तथा तथाविधैरेव करदानधनदशब्दैः सहृदयहृदयसंवादभा-जोऽपरस्यार्थस्य प्रतीतौ को नाम व्यापारो भवितुमर्हति । न चात्र लक्षणा प्रभवति, मुख्यार्थबाधादेरभावात् । न खलु व्यापारमन्तरेण शब्दादर्थोऽवबुध्यत इति चेद्—

अत्र मीमाँसकैकदेशिन आहुः—'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त' इति । अर्थप्रतीतिर्नैमितिकी । निमित्तं च शब्दार्थस्यानन्यलभ्यतया शब्द एव कल्प्यते । अतः शब्दश्रवणे यावानर्थः प्रतीयते तस्य सर्वस्याप्यर्थस्य स एव शब्दो निमित्तमिति, तावदर्थबोधनाय तस्य पुनः पुनरनुसन्धानं कर्त्तव्यमिति अभिधाव्यापारेणैव सर्वेषामप्यर्थानां प्रत्यायनं सम्भवतीति च तेषामाशयः ।

आलङ्कारिकास्त्वत्र प्रत्यवतिष्ठन्ते—यत् तावदुच्यते मीमांसकैकदेशिभिः "यावदर्थप्रत्यायनाय शब्दस्यावृत्तिः कर्तव्येति, अभिधयैव यावदर्थ प्रतीति"रिति च तन्न सङ्गच्छते, शब्दगतत्वेनाभिमतं निमित्तत्वं नाम कारकत्वं व ज्ञापकत्वं वा । नाद्यः पक्षः, यतो दण्डेन घटो जायते, ततो दण्डस्य घटकारणत्वं घटते, न तथा शब्दोऽर्थमर्थान् वा जनयति । नापि द्वितीयः, यथा पर्वते वह्निं ज्ञापयन् धूमो ज्ञापकत्वं प्रपद्यते, न तथा शब्दस्य ज्ञापकत्वमपि युज्यते । नहि शब्दः स्वरूपेणावस्थितः पदार्थं ज्ञापयति, परन्तु ज्ञानविषयः सन् अर्थबोधनाय प्रकल्पते । अङ्गीकुर्वते च शास्त्रकारा, अनुमित्युपमिति-शाब्दप्रमाकरणानां लिङ्गसादृश्यशब्दानां ज्ञानविषयाणां, लिङ्गसादृश्यशब्द-ज्ञानानां वा तत्तत्प्रमाकरणत्वम् । प्रत्यक्षप्रमाकरणस्य तु चक्षुरादेः सन्निकर्षवशात् प्रत्यक्षज्ञानजनकत्वमभ्युपगच्छन्ति । शब्दस्य ज्ञानविषयता सङ्केतेनैव सिद्ध्यति । सङ्केतं चान्वितमात्रे मन्यन्ते मीमांसकाः । अन्वितविशेषे च तस्मिन् गृह्यमाणे शक्त्यानन्त्यम् । एवं निमित्तस्य तत्त्वेऽनियमात् नैमित्तिकस्य प्रतीतिरेव न भवितुमर्हति ।

भट्टलोल्लटप्रभृतयस्तु—'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति 'यत्परः शब्दः स शब्दार्थः' इति चाहुः । यथा धनुष्मता केनचित् प्रयुक्ता

कश्चित् बाण: एकेनैव व्यापारेण शत्रोर्दर्मं छिनत्ति, मर्माणि भिनत्ति, प्राणांश्च हरति, तथा सुकविप्रयुक्तः शब्दोऽपि, अभिधयैकेनैव व्यापारेण पदार्थोपस्थितिम्, अन्वयबोधम् अर्थान्तरप्रतीतिं च समापादयति । विवक्षितं (तात्पर्यविषयं) सर्वमप्यर्थं बोधयित्वैव स शब्दो विरतव्यापारो भवति। किं च द्वितीयोऽप्यर्थ: प्रतीपिपादयिषितो वा न वा। आद्ये तमपीष्टमर्थं स एव शब्दो बोधयितुं समर्थः। द्वितीये तु व्यापारान्तरापेक्षैव न स्फुरति। अतो यत्तात्पर्येण शब्द: प्रयुज्यते स सर्वोऽपि तस्यैवार्थ:। तस्य सर्वस्याप्यर्थस्य स एक एव शब्दो वाचकश्च' इति व्याचक्षते च। अत्र द्वितीयाद्यर्थबोधनाय पुनः पुनः शब्दस्यानुसन्धानं नापेक्ष्यत इति पूर्वस्मान्मतादस्य भेद:।

इदमपि न विचारसहम्। तथाहि—यत्पर: शब्द: स शब्दार्थ: इति तात्पर्यवाचोयुक्तेः तात्पर्यमजानन्तस्ते तदर्थमन्यथाकथयन्। वस्तुतस्तु तस्यायमर्थ:—सर्वाण्यपि वाक्यानि विधेयार्थबोधनपराणि प्रयुज्यन्ते। अतस्तत्रैव वाक्यानां तात्पर्यम्। यत्र (विधेये) तात्पर्यं स एव शब्दार्थ:। यथा—सोमेन यजेते'त्यादिश्रुतेर्यागविधाने तात्पर्यमितीदं श्रुतिवाक्यं यजत्यर्थविधानाय प्रवृत्तमिति ज्ञायते।

ननु अनधिगतार्थबोधकत्वं प्रमाणसामान्यलक्षणम्। वाक्ये च साध्यपराणीव सिद्धपराण्यपि पदानि श्रूयन्ते। विधेयत्वं नाम विधिविषयत्वम्। विधिश्च क्रियाया एवेति 'सोमेन यजेते'त्यादिषु यागक्रियाया विधिविषयत्वं निर्बाधम्। 'दध्ना जुहोतो'त्यादौ तु धात्वर्थस्य होमस्य 'अग्निहोत्रं जुहोती'ति प्रमाणान्तरावगतत्वेनास्य वाक्यस्य द्रव्यविधाने तात्पर्यम् अभ्युपगतं कथं नाम सङ्गच्छतामिति चेदुच्यते—दध्यादिनिष्ठक्रियाणामपि प्रधानीभूतहोमक्रियानिर्वर्तकत्वेन स्वक्रियासम्बन्धात् साध्यायमानतासम्भवेन दध्यादिद्रव्यविधायकत्वं युज्यते। न च तत्र जुहोतिश्रुत्या होमोऽपि विधीयतामिति वाच्यम्। यथा तृणराशिप्रविष्टो दहनोऽदग्धमेव तृणं दहति, न भस्मीभूतं, तथा पदान्यप्यप्राप्तमेवार्थं बोधयन्ति, अतश्च प्रकृते प्रमाणान्तरबोधितस्यार्थस्य तद्वाक्यतात्पर्यविषयतायां प्रयोजनाभावात्, अनधिगतार्थबोधकत्वादेव च तेषां प्रामाण्यं शास्त्रकारैरङ्गीकृतमुपपद्यते।

यदि च शब्दश्रुतेरनन्तरं यावानर्थः प्रतीयते, तत्र सर्वत्राभिधैव व्यापार इत्युच्यते तर्हि 'चैत्र पुत्रस्ते जातः,' 'कन्या ते गर्भिणी'ति वाक्याभ्यां हर्षशोकावप्यभिधयैव भवताम् । किञ्च "गङ्गायां घोषः" इत्यदितः तीरादीनां प्रतीतिरभिधयैव भवतीत्यस्यापि सुवचतया लक्षणोच्छेदापत्तिश्च ।।

इत्थं च नानार्थस्थलेऽप्राकरणिकार्थबोधनायाभिधालक्षणातिरिक्तस्य तृतीयस्य कस्यचिद् व्यापारस्यानभ्युपगमे लक्ष्यत्वेनाभिमन्यमानस्याप्यर्थजातस्य तुल्ययुक्त्याभिधेयत्वसम्भवात् लक्षणाङ्गीकारोऽप्यसङ्गतः स्यादिति सिद्धम् ।

अथ कोऽसौ व्यापारो येनानेकार्थस्थले द्वितीयोऽर्थः प्रत्याय्यत इति चेदाहु:—अभिधालक्षणाभ्यां विलक्षणेन व्यञ्जनाख्येन व्यापारेणार्थान्तरमवगम्यत इति ।

अत्र मञ्जूषाकाराः—'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको, मुख्यार्थसम्बद्धार्थसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना' इति वदन्ति ।

उक्तं च साहित्यदर्पणे—(P 53 and 54)

> "विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ।
> सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ।।"

'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेनाभिधालक्षणातात्पर्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वोपक्षीणासु ययान्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम" । शब्दास्तावदभिधया मुख्यमर्थं बोधयन्ति । सति तस्य बाधे लक्षणया लक्ष्योऽर्थः प्रतिपाद्यते । ततस्तात्पर्येण पदार्थानां परस्परसमन्वयात्मकस्य वाक्यार्थस्य बोधो जायते । वृत्तिष्वेतासु तिसृष्वपि विरतासु वक्तृ-बोद्धव्यादिवैशिष्ट्यवशात् पदाद् वाक्यात् प्रकृतिप्रत्ययादिभ्यो वा प्रतीयमानस्यापरस्यार्थस्य प्रतिपादनक्षमो व्यापारो व्यञ्जनेति व्यपदिश्यत इत्यर्थः ।

अर्थावबोधकारणं प्रत्ययविध्यवधिरूपः शब्दविशेषः प्रकृतिरित्युच्यते । प्रत्ययस्तु प्रकृतिमवधीकृत्य प्रवर्त्तमानः स्वार्थप्रतिपादकः शब्दविशेषः ।

यदाह भगवान् भाष्यकारः—"तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या" इति। उक्तंच भर्तृहरिणा—

"यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने।
यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः॥" इति।

प्रसङ्गात् तात्पर्यार्थो निरूप्यते—

तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्वम्। अत एवोक्तं विश्वनाथपञ्चाननेन—

'वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम्' इति।

व्यापारेणानेन तात्पर्याख्यानेन वाक्यार्थबोधो भवतीत्यभिहितान्वयवादिनामाशयः। तथाहि—'गामानये'त्यत्र गोशब्दस्य गौरर्थः। अम् प्रत्ययस्य कर्मत्वम्। प्रत्ययार्थस्य प्रकृत्यर्थे आधेयतयान्वयः। गोनिष्ठं कर्मत्वमिति शाब्दबोधो जायते। अत्राधेयताया उपस्थापकं पदं न श्रूयते। आकाङ्क्षावशादेव तस्या उपस्थितिः। आकाङ्क्षा चात्र समभिव्याहारः। उक्तं च कारिकावल्याम्—'यत्पदेन विना यस्याननुभावकता भवेत्, आकाङ्क्षा' इति। सा च गोनिष्ठं कर्मत्वमिति शाब्दबोधं प्रति गोपदाव्यवहितोत्तरवृ'त्यम्' प्रत्ययसमभिव्याहारज्ञानं कारणमिति कार्यकारणभावे पर्यवस्यति। तेन गौः कर्मत्वमित्यतः स्वशब्दोपस्थापिते कर्मत्वे गोरन्वये आकाङ्क्षाविरहात् शाब्दबोधो न भवति। एवमाङुपसृष्टस्य नयतेरानयनमर्थः। आख्यातस्य कृतिरर्थः। धात्वर्थस्य तत्रानुकूलतयान्वयः। द्वितीयान्तार्थस्य गोनिष्ठकर्मत्वस्य निरूपितत्वसम्बन्धेन धात्वर्थेऽन्वयः। एवं च गोनिष्ठकर्मतानिरूपितानयनानुकूलकृत्याश्रय इत्याकारकशाब्दबोधो भवति। ततश्च सिद्धत्याकाङ्क्षायोग्यतावशात् अन्वयबोधो जायत इति पदार्थस्य पदानि बोधकानि। वाक्यार्थस्य तु वाक्यम्। आकाङ्क्षादिमत् पदकदम्बकमिति यावत्। उक्तं च—'आसत्तियोग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते, कारणम्' इति, वाक्यार्थबोध इति शेषः। तत्र तात्पर्यज्ञानमपि वाक्यार्थबोधे कारणत्वेनाभिमतम्। गोनिष्ठकर्मतानिरूपितानयनानुकूलकृत्याश्रय इत्याकारक शाब्दबोधो जायतामितीच्छया प्रयुक्तात् गामानयेति वाक्यात् तादृशबोधो

भवति । इत्थं च वाक्यार्थबोधकं तात्पर्यं व्यापारः । फलं च तात्पर्यार्थात्मकम् इति सिद्धम् । इमां तात्पर्याख्यां वृत्तिमन्विताभिधानवादिनो नाभ्युपगच्छन्ति । विद्यानाथादयस्तु तात्पर्यार्थोऽपि व्यङ्ग्यार्थ एव न पुनः पृथग्भूत इति वदन्तो व्यञ्जनाव्यापारेऽस्यान्तर्भावमाहुः ।

एवमभिधालक्षणातात्पर्यात्मकव्यापारत्रयप्रतिपाद्यार्थविलक्षणस्यार्थान्तरस्य प्रत्यायनाय सकलालङ्कारिकाभ्युपगतस्यास्य व्यञ्जनाव्यापारस्याभिधामूलत्वं लक्षणामूलत्वं च सम्भवति । तत्राभिधामूलव्यञ्जना प्रथमं निरूप्यते । यदाहुः—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृत् व्यापृतिरञ्जनम्' । इति ।

अत्र प्राञ्चः पद्यमिदं इत्थं व्याचक्षते—

प्रथमं तावत् पदानां व्याकरणोपमानकोशादिभ्यः शक्तौ गृहीतायां, सति पदज्ञाने (पदश्रवणे) वृत्त्या पदार्थोपस्थितिः निष्पद्यते । ततः शाब्दबोध इत्यस्ति क्रमः । अनेकार्थशब्दश्रवणे तु तत्सङ्केतिताः सर्वेऽप्यर्था उपतिष्ठन्ति । न हि सकृदुच्चरितः स शब्दस्तं सर्वमप्यर्थं युगपद् बोधयितुं प्रभवति । एवं सत्सु शब्दस्यास्य बहुष्वभिधेयेषु कस्मिन्नर्थे प्रयोक्तुस्तात्पर्यमिति संशये संयोगादयः तात्पर्यनिर्णयार्थमपेक्ष्यन्ते । संयोगादयश्च वाक्यपदीये भर्तृहरिणा निरूपिताः । तथा हि—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति ।

तात्पर्यज्ञानाच्च प्रकृतार्थमात्रविषया पदार्थोपस्थितिः तच्छाब्दबोधश्च जायते ।

ननु नानार्थस्थले पदस्यानेकस्मिन्नर्थे शक्तिग्रहस्य तुल्यतया विनिगमनाविरहेण कस्याप्यर्थस्य बोधो न भवितुमर्हतीत्यतः, सत्यपि पदज्ञानेऽर्थो

नावगम्यते । येन च प्रकृतार्थविषयकोपस्थितिरङ्गीक्रियते । न च तत् पदज्ञानम्, एवमन्वयव्यतिरेकाभ्यां व्यभिचारात् पदज्ञानस्य शाब्दबोधकरणत्वमुक्तं कथं घटत इति चेदत्राहुः—'प्रकृते तात्पर्यज्ञानमेव पदज्ञानं; तेन च वृत्त्या (अभिधया) प्रकृतार्थोपस्थितिद्वारा तदर्थविषयकशाब्दबोधो भवति । अनन्तरं च सङ्केतितस्यार्थान्तरस्य प्रतीतिर्व्यञ्जनयेति ब्रूमः । प्रकृतार्थबोधनेन क्षीणशक्तिरभिधा तु द्वितीयमप्रकृतमर्थं बोधयितुं न प्रभवति । अत एवोक्तं 'वाचकत्वे नियन्त्रित' इति । वाचकत्वमभिधेत्यर्थः । नियन्त्रणा चापरार्थोपस्थापनप्रतिबन्धः । स च संयोगाद्यैर्निरुह्यते । अतः संयोगादीनामेव तात्पर्यनिर्णयजननद्वारा प्राकरणिकार्थोपस्थापकत्वमप्राकरणिकार्थोपस्थितिप्रतिबन्धकत्वं च सिध्यति । व्यञ्जनयार्थोपस्थितौ तु संयोगादीनां (ज्ञानविषयाणां) प्रतिबन्धकत्वं नाङ्गीकुर्मः । सकलसहृदयहृदयाह्लादकस्यार्थान्तरस्याभिधादिव्यापारान्तरजन्यप्रतिपत्त्यविषयस्य प्रत्यायनार्थमेव व्यञ्जनाया अङ्गीकारात् । अथवा शब्दे तावदर्थबोधनशक्तिरप्रतिहता । अनेकार्थस्थले संयोगादयोऽप्राकरणिकार्थोपस्थितिप्रतिबन्धकाः । प्रतिबन्धकसमवधानकालेऽपि कार्योत्पत्तिप्रयोजकतयानुमितिप्रतिबन्धकसिद्धिसमवधानदशायां सिषसाधयिषाया इव तस्या(व्यञ्जनायाः) उत्तेजकत्वं सम्प्रतिपद्यते ।

करतलनिर्गलदित्यादिपद्ये "सार्वभौमस्तु दिङ्नागे सर्वपृथ्वीपतावपि" इति कोशाद् द्वयोरर्थयोः सङ्केतो गृह्यते । तथा च 'सार्वभौम'शब्दश्रवणे द्वयोरपि तत्सङ्केतितयोरर्थयोः पृथगुपस्थितौ प्रकरणेन चक्रवर्तिनि अर्थे तात्पर्यनिर्णयः सञ्जायते । तदात्मकेन (तात्पर्यनिर्णयात्मकेन) पदज्ञानेन सम्राज उपस्थितिरभिधया तस्य शाब्दबोधश्च भवति । ततः करदानधनदशब्दमहिम्ना दिङ्नागरूपोऽपरोऽप्यर्थः प्रतीतिविषयो भवति । एवं सति 'चक्रवर्ती जयति' 'दिङ्नागो जयति' इति वाक्यद्वयं सिध्यति । वाक्ययोरनयोः अनन्वितार्थाभिधायकत्वं मा प्रपाङ्क्षीदिति चक्रवर्त्तिदिङ्नागयोरुपमानोपमेयभावः कल्प्यते । दिङ्नागसदृशश्चक्रवर्त्ती जयतीत्येकवाक्यतयान्वयबोधश्च सुष्ठूपपद्यते इति दिङ्नागरूपस्यापरस्यार्थस्य तदुपमायाश्च प्रतिपादने व्यञ्जनाहते व्यापारान्तरं न प्रभवतीत्याहुः ।

एतादृशस्थलेषु सहृदयहृदयाह्लादकस्य सादृश्यस्य उपमाया व्यञ्जनाव्यापारबोध्यतायां न कश्चिदप्यालङ्कारिको विप्रतिपद्यते । दिङ्नागरूपस्यार्थान्तरस्य प्रतीतेस्तु तन्निवेद्यतायां विवदन्ते निष्कर्षानुसारिणः ।

अपरे तु—नानार्थशब्दजन्यशाब्दबुद्धौ तात्पर्यनिर्णयस्य हेतुत्वमवश्यमेषितव्यम्। अन्यथा विवक्षितार्थबोधो व्याहन्येत। संयोगादयश्च तात्पर्यनिर्णयसहायकतयाङ्गीक्रियन्ते। तैश्च यत्रार्थे तात्पर्यं निर्णीयते तस्यार्थस्य प्रथमेनैव पदज्ञानेनोपस्थितिः। तद्द्वारा शाब्दबोधश्च स्वीक्रियते। एकार्थमात्रविषयायाः पदार्थोपस्थितेस्तदनुकूलतात्पर्यनिर्णयस्य पदज्ञानत्वं च न वयमभ्युपगच्छामः। न खलु पदज्ञानं प्रथमतो जायमानं व्यापारसहकृतमर्थमप्रत्याय्य विरमति। संस्कारोद्बोधकयोः सतोः स्मृतेः सकलानुभववेद्यत्वात्। तथा च तात्पर्यनिर्णयहेतुभिः संयोगादिभिरुत्पादितस्य तस्य सङ्केतग्रहस्यैव सहकारितया पदार्थस्मारकत्वं शाब्दबोधप्रयोजकत्वं च सम्पद्यते। तस्यापरार्थोपस्थापनप्रतिबन्धकत्वमपि न विचारसहम्। अन्यथा तात्पर्यविषयीभूतार्थबोधनानन्तरं तस्मादेव शब्दाद् अतात्पर्यविषयस्याप्यर्थस्य प्रतीतिरनुभूयमाना कथं नाम सङ्गच्छताम्। तस्य च द्वितीयस्याप्यर्थस्याभिधाने तु क्षीणशक्तिरभिधा न प्रवर्तते। अतस्तदर्थं व्यञ्जनैव शरणीकरणीया। तथा चानेकार्थस्येति पद्ये संयोगाद्यैर्वाचकत्वे नियन्त्रित इत्यंशस्यायमर्थः—'संयोगादिभिरेकार्थमात्रविषयकं तात्पर्यं निश्चीयते। ततस्तदर्थस्मृतिरुत्पद्यते। तस्यैवार्थस्य शाब्दबोधश्च घटते। इत्थं च (वाचकत्वे) अभिधायां एकार्थमात्रविषयकशाब्दबोधानुकूलायां जातायामिति, अन्यत् सर्वं समानम्। शक्तिजन्यशाब्दबोधे तात्पर्यनिर्णयहेतुत्वं नियतम्। व्यक्त्यधीनबोधे तु न तथेत्याहुः।

एतन्मतानुसारेणापि 'जयतितरां सार्वभौमोऽय'मित्यत्र प्रथमं तात्पर्यनिर्णयाधीनचक्रवर्तिमात्रोपस्थितिद्वारा चक्रवर्तिनो बोधे जाते, ततो दिङ्नागस्य विशेषणवशात् प्रतीतिः व्यञ्जनयैव सिध्यति। पूर्वोक्तरीत्या सादृश्यं च व्यज्यते।

व्यङ्ग्यत्वेनोपस्थितस्य चास्य दिङ्नागसादृश्यस्यालङ्कार्यत्वेनाभिमन्यमानस्यापि वर्णनीयचक्रवर्त्युत्कर्षाधायकत्वेन वाक्यार्थोपस्कारकत्वादलङ्कारत्वम्। व्यञ्जनागम्यत्वाद् वाच्यातिशायित्वाच्च प्राधान्यमपि निर्विवादम्।

किन्तु स एव व्यङ्ग्योऽलङ्कारो न प्राधान्यमर्हति, यं विना वाच्योऽर्थः सर्वथा नोपपद्यते। प्रकृते च स्वयं विजयमानस्य चक्रवर्तिनो दिङ्नागसादृश्यं

उत्कर्षातिशयमेव पुष्णाति । न खल्वनुपपद्यमानं किमप्युपपादयति । अत एव दिङ्नागसादृश्यप्रत्यायकस्य सार्वभौमशब्दस्य प्रयोगे कविसंरम्भोपि चरितार्थो भवति ।

किं च करतलेत्यादिपद्ये चक्रवर्तिवर्णने प्रस्तुते सार्वभौमशब्देन प्रथमं चक्रवर्तिरूपस्यार्थस्योपस्थितिः शाब्दबोधश्च जायते । अनन्तरं विशेषणमहिम्ना नानार्थस्य सार्वभौमशब्दस्य दिङ्नागरूपार्थान्तरबोधनसामर्थ्येन तदर्थविषयकः शाब्दबोधश्च सकलसहृदयसम्मत एव । एवमुभयविधार्थप्रतिपादनपरयोः 'चक्रवर्ती जयति', 'दिङ्नागो जयति', इति वाक्ययोरसम्बद्धार्थाभिधायकत्वापत्तिपरिहाराय चक्रवर्तिदिङ्नागयोरुपमानोपमेयभावः कल्प्यत इति प्राक् प्रतिपादितम् ।

अथ कोऽसौ व्यापारः, यः दिङ्नागरूपं द्वितीयमर्थं सादृश्यं च बोधयतीति पर्यालोचनायां व्यञ्जनात्मकमेव व्यापारं तद्बोधौपयिकं केचिन्मन्यन्ते । तथा हि—पदज्ञानवतः पुरुषस्य पदार्थोपस्थितौ सत्यां शाब्दबोधो जायते । नानार्थस्य तु शब्दस्य श्रवणे तत्सङ्केतितानां सर्वेषामप्यर्थानां युगपदुपस्थित्या प्रयोक्तुः शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्देहो भवति । ततः संयोगादिभिस्तात्पर्यनिर्णये जाते, तेनैव पदज्ञानतां गतेन प्राकरणिकार्थमात्रविषयिण्युपस्थितिः, तन्मात्रविषयकः शाब्दबोधश्च जायते । एवं प्राकरणिकार्थबोधनोपक्षीणाभिधा, द्वितीयमप्राकरणिकमर्थं बोधयितुं न प्रभवति । तदर्थं व्यञ्जनाश्रयणीयेति ।

अपरे तु—नानार्थशब्दजन्यशाब्दबुद्धौ तात्पर्यज्ञानस्य हेतुत्वमवश्यमभ्युपेयम् । अतो नानार्थशब्दस्य सकलार्थबोधजनकत्वयोग्यतायां सत्यामपि यत्रार्थे प्रयोक्तुस्तात्पर्यं निर्णीयते प्राथमिकेन पदज्ञानेनैव तस्यार्थस्योपस्थितिः शाब्दबोधश्च सम्पद्यते । तात्पर्यविषयस्यार्थान्तरस्य बोधने पूर्वोक्तरीत्या अभिधायाः सामर्थ्याभावेन तदर्थं व्यञ्जना स्वीक्रियत इत्याहुः ।

पक्षयोरुभयोरप्यनयो, नानार्थशब्दजन्यशाब्दबोधे तात्पर्यज्ञानस्य हेतुत्वं समानम् । इयांस्तु विशेषः—यत् प्रथमे तात्पर्यनिश्चयस्य प्राकरणिकार्थोपस्थापकत्वमिव अप्राकरणिकार्थोपस्थितिप्रतिबन्धकत्वमपि अभ्युपगम्यते । तेषामयमाशयः—प्रकरणादीनामप्रकृतार्थप्रतिबन्धकत्वानभ्युपगमे तात्पर्यनिश्च-

यानन्तरमपि प्रकृतार्थस्यैव इतरेषामप्यर्थानां बोधे बाधकाभावात् पुनश्च सर्वेषामुपस्थितिरापद्येत। अतः संयोगाद्यैस्तात्पर्यनिश्चये सति सङ्केतितार्थबोधिकाया अभिधायाः प्रकृतार्थमात्रे नियन्त्रणमावश्यकम् ॥

द्वितीये तु— तात्पर्यज्ञानस्येतरार्थोपस्थापनप्रतिबन्धो नाभ्युपेयते। अभिमतार्थस्य बोधने तात्पर्यज्ञानं सहकारि भवति। एवं च संयोगादिभिः प्रकृतार्थस्य बोधनेन विरतायामभिधायां, तात्पर्याविषयस्यापि द्वितीयस्यार्थस्य बोधः व्यञ्जनया सम्पादनीय इति वदन्ति।"

नचैवं तात्पर्यनिश्चयस्यार्थान्तरोपस्थितिप्रतिबन्धकत्वानङ्गीकारे तात्पर्यनिश्चयानन्तरमपि सङ्केतितानां सर्वेषामप्यर्थानां उपस्थितिः स्यादिति वाच्यम्। नानार्थशब्दश्रवणे कम् अर्थमभिधातुमयं शब्दः प्रयुक्त इति खलु सन्देहो भवति। ततस्तन्निर्णायकसामग्रीसम्पादितेन तेनाभिधित्सितस्यैवार्थस्य प्रतीतेर्जननात्, तत्रैव तात्पर्यस्य विश्रान्तेः। पदज्ञानेन सर्वेषु तदर्थेषूपस्थितेषु तात्पर्यविषयस्यैवार्थस्याभिधया बोधसम्भवे, तदनन्तरमन्यस्याप्यर्थस्य प्रकृतोपयोगिनः सम्भवौचित्यात्। तात्पर्यज्ञानस्यार्थान्तरोपस्थापनप्रतिबन्धकत्वाङ्गीकर्तृमते तु प्रतिबद्धस्यार्थान्तरस्य नियतमनवस्थानात्।

तदेवं मतद्वयेऽपि द्वितीयस्याप्राकरणिकार्थस्य व्यञ्जनाव्यापारसाध्यत्वं सुनिरूपितं सम्पन्नम्।

तदिदमुभयमपि मतं न विचारसहम्। तत्र तावन्नानार्थस्थले सर्वत्र व्यञ्जना समुल्लसतीत्यभ्युपगमे प्राकरणिकस्याप्राकरणिकस्याप्यर्थस्य सर्वत्र भानमङ्गीकृतं भवति। अतः तात्पर्यनिर्णयस्य हेतुत्वं निष्फलं सम्पद्यते। यदि तु शक्तिजन्यशाब्दबोधं प्रति तात्पर्यज्ञानं कारणं, व्यक्तिजन्यशाब्दबोधस्तु तात्पर्यज्ञानं विनापि सम्भवतीति व्यवस्थितिसंरक्षणार्थं तात्पर्यज्ञानस्य कारणत्वमङ्गीकरणीयमित्युच्यते तर्हि, तात्पर्याविषयस्याप्यर्थस्य सर्वत्र प्रतीतिसम्भवे, तस्यापि शक्तिजन्यत्वमेवास्ताम्। का नो हानिः? यदि च प्रकरणादिना यत्र तात्पर्यं निश्चीयते तस्यार्थस्य प्रथमं बोधः, अनन्तरं तात्पर्याविषयस्य द्वितीयस्याप्यर्थस्य बोध इति तयोः पौर्वापर्यसंरक्षणाय (द्वयोरप्यर्थयोर्युगपद्बोधविषयत्वापत्तिपरिहाराय) तात्पर्यज्ञानस्य कारणत्वमङ्गीक्रियते, तदपि न

सङ्गच्छते। प्रकृताप्रकृतयोः अर्थयोः श्लेषकाव्य इव, अत्रापि बोधे बाधकाभावात्। तात्पर्यज्ञानस्य कारणत्वमेव यतो नाङ्गीक्रियते ततो युगपदर्थद्वयबोधानुपपत्तिरापादयितुं न युक्ता। तस्मात् नानार्थस्थलेऽपि शक्त्यैवोभयोरर्थयोर्बोधसम्भवात् तत्र व्यञ्जना नाङ्गीकरणीया। किञ्च नानार्थस्थले क्वचिदेव व्यञ्जना समुल्लसतीत्यपि वक्तुं न युक्तम्। व्यञ्जनासमुल्लासे हेतोरनुपलब्धेः। तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वाङ्गीकर्तृनयेऽपि न तस्य व्यञ्जानिकबोधहेतुत्वम्। एवं यत्राश्लीलं दोषः, तत्राप्रकृतार्थस्य सर्वानुभवविषयत्वेऽपि कवितात्पर्यज्ञानरूपहेतोरभावात् व्यतिरेकव्यभिचारश्च। यदि च श्रोतुः शक्तिविशेषो व्यक्तेरुल्लासं जनयति सा चानुभवविरोधात् चमत्कार्यर्थविशेषविषयैव, इति व्यक्त्युल्लासस्य कादाचित्कत्वमङ्गीक्रियत इति नाभ्युपगन्तुं शक्यम्। नियन्त्रितायाः शक्तेः उल्लासक एव स चमत्कार्यर्थविशेषविषयकः श्रोतुः शक्तिविशेषो भवतीत्युपगमेऽपि बाधकाभावात् नानार्थस्थले क्वापि व्यक्तिकल्पना नोपपद्यते॥

अन्ये तु—यथा व्यङ्ग्येषु नानाधर्मा अर्थान्तरसङ्क्रमितवाच्यत्वादिरूपविशेषव्यपदेशविषयत्व,शब्दार्थाधीनत्व,प्रकरणादिसापेक्षत्वादयो दृश्यन्ते, तथा लक्ष्येष्वप्यर्थेषु।

तथाहि—

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव॥**

इत्यत्र रामः सकलदुःखभाजनत्वेन लक्ष्यत इति अर्थान्तरसङ्क्रमितवाच्यलक्ष्यत्वरूपव्यपदेशविषयत्व रामपदलक्ष्यार्थस्य सकलदुःखभाजनत्वेन प्रतीतिविषयत्वात्मकम्।

एवं—

**प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।**

व्यर्थं सम्प्रति बिभ्रता धनुरिदं तद्व्यापदां साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम् ॥

इत्यत्र रामशब्दो निष्करुणत्वेन लक्षणाजन्यप्रतीतिविषयतां भजते ॥

तथा—

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तां प्रसिद्धिं पराम्
अस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद् यस्यैव बाणाहति—
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

इत्यत्र रामशब्दः खरदूषणादिनिहन्तृरूपमर्थं लक्षणया बोधयतीति लक्षणीयोऽप्यर्थो नानात्वं भजते। अतो लक्ष्यस्याप्यर्थस्य नानात्वसम्भवात् तस्य च नैयायिकादिसकलशास्त्रकारसम्मतत्वाच्च व्यङ्ग्यस्यार्थस्यातिरिक्तस्यानपेक्षितत्वेन व्यञ्जनाख्यं व्यापारान्तरं नाङ्गीकर्तव्यमित्याहुः।

तन्न—उक्तरीत्या लक्षणीयस्यार्थस्य नानात्वेऽपि यथा नानार्थशब्दास्तदभिधेयत्वेन नियतमेवार्थं बोधयन्ति, तथा लाक्षणिकशब्दा अपि नियतमेवार्थं प्रतिपादयन्ति ; मुख्येनार्थेनानियतसम्बन्धस्तु सर्वथा न लक्षयितुं शक्यते। व्यङ्ग्योऽर्थस्तु नियतसम्बन्धः, अनियतसम्बन्धः, सम्बद्धसम्बन्धश्च प्रतीयते।

किञ्च लक्षणायामपि यत्प्रतिपादनेच्छया लक्षणा समुपास्यते, तस्य प्रयोजनरूपस्यार्थस्य प्रतिपादने व्यञ्जनां विना नान्यो व्यापारः प्रभवति।

यथा चाभिधाव्यापारः सङ्केतमपेक्ष्य प्रवर्तते तथा लक्षणापि मुख्यार्थबाधादित्रयं सङ्केतं चापेक्ष्यत इति अभिधापुच्छभूतैव सेति शास्त्रकाराणामभिमतम्।

काव्यप्रकाशे रसनिरूपणप्रकरणे 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्ति'रिति भरतसूत्रव्याख्यानावसरे इदमुच्यते—स च (रसो) न कार्यः,

विभावादिनाशानन्तरमपि तस्य सम्भवप्रसङ्गात् । नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवादिति । संयोगादिति पञ्चमी हेत्वर्थे वर्तते । हेतुत्वं कारकत्वं ज्ञापकत्वं चेति द्विविधम् । दण्डो घटस्य कारको हेतुः । धूमोऽग्नेर्ज्ञापको हेतुः । एवं स्थिते पुनश्च मम्मटभट्टेनोच्यते । कारकत्वज्ञापकत्वाभ्यामन्यत् क्व दृष्टमिति चेन्न क्वचिदित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणमिति । तेषामयमाशयः प्रतिभाति । यथा समवायिकारणनाशे कार्यनाशस्तथा निमित्तकारणनाशे कार्यनाशो नापेक्ष्यते । एवं च रसं प्रति विभावादीनां निमित्तत्वात् तन्नाशे रसनाशो नावश्यकः । तथा च तन्नाशानन्तरं रसस्य सम्भवप्रसङ्गः आपाद्यते । दण्डसत्त्वे घट इत्यन्वयेन दण्डाभावे घटाभाव इति व्यतिरेकेण च दण्डघटयोः कार्यकारणभावोऽवधार्यते । घटोत्पत्त्यनन्तरं दण्डो यदि नश्यति तदा घटो नश्यति वेति विचारः तयोः कार्यकारणभावोपपत्तौ किमु पदं धत्ते । तथापि प्रकृते नायिकादयो लौकिकाः, रसश्चालौकिकः । नायिकानायकादयश्चेदानीं न सन्ति । नटश्च भावानामाश्रयो न भवति । रसस्तु तृतीयस्य सामाजिकस्य । एवं व्यधिकरणानां तेषां कार्यकारणभाव एव विप्रतिपन्न इत्याशङ्क्य चर्वणानिष्पत्त्या तन्निष्पत्तिरुपचरितेति कार्योऽप्युच्यतामिति अङ्गीकुर्वते । तथा च विभावानुभावादिचर्वणया आस्वादेन रत्यादेः सामाजिकनिष्ठस्यास्वादः समानाधिकरण एव सञ्जायत इत्यपि वदन्ति ।

एवं च कारकत्वज्ञापकत्वाभ्यामन्यद् व्यञ्जकत्वं व्यञ्जनाव्यापारात्मकमस्तीति प्रतिपादितम् । अलौकिकस्य रसादेः प्रतिपत्तावलौकिको व्यापार इति यावत् ।

महिमभट्टस्त्वाह—सर्व एव हि शाब्दो व्यवहारः साध्यसाधनभावगर्भतया प्रायेणानुमानरूपोऽभ्युपगन्तव्यः इति ।

अमुमर्थं मम्मटभट्टोऽनूद्य दूषयति—ननु वाच्यादसम्बद्धं तावन्न प्रतीयते । यतः कुतश्चित् शब्दाद् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवं च सम्बन्धाद्, व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन, नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्यवस्यति । तथाहि—

**भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ देण ।**
**गोलाणईकच्छकुडंगवासिणा दरिअसीहेण ॥**

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं, गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति। यद्यद् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धिपूर्वकं, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः।

अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेणान्येन चैवम्भूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि, गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात्। न च वचनस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धादित्यसिद्धश्च, तत् कथमेवंविधाद्धेतोः साध्यसिद्धिः, तथा निश्शेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति। अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्। एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तददूषणम् इति।

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्युदयनादयः। प्रमाकरणं प्रमाणम्। व्यापारवदसाधारणं कारणं करणम्। तच्च तत्तदुचितव्यापारमाश्रित्य फलं जनयतीति यावत्। (१) घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि। संयोगादयः (सन्निकर्षाः) व्यापाराः। घ्राणजरासनचाक्षुषस्पार्शनश्रौत्राणि प्रत्यक्षज्ञानानि। (२) अनुमानम्—व्याप्तिज्ञानं करणम्। हेतुसाध्ययोः साहचर्यनियमो व्याप्तिः भूयोदर्शनेन सिध्यति। व्याप्तिविशिष्टस्य हेतोः पक्षवृत्तित्वज्ञानं पक्षधर्मताज्ञानं (परामर्शः) व्यापारः। अनुमितिः फलम्। (३) सादृश्यज्ञानं करणम्; अतिदेशवाक्यार्थस्मरणं व्यापारः। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः फलम्। (४) पदज्ञानं करणम्। पदजन्यपदार्थस्मरणं व्यापारः। शाब्दबोधः फलमिति स्थितिः।

अनुमानं द्विविधं—स्वार्थं, परार्थं चेति। स्वार्थं स्वानुमितिहेतुः। यत् तु धूमाग्न्योः साहचर्यं पश्यन् यत्र धूमस्तत्राग्निरिति व्याप्तिं गृह्णाति। ततः पर्वतसमीपं गतः तत्र धूमं पश्यन् तद्गते चाग्नौ सन्दिहानो व्याप्तिं स्मरति। व्याप्तिस्मरणेन व्याप्यस्य पक्षे दर्शनेन च व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपः

परामर्शस्तदनन्तरं 'पर्वतो वह्निमा'नित्यनुमितिश्च जायते । तत् स्वार्थानुमानम् । तच्च प्रत्यक्षपूर्वकम् । धूमस्य दर्शनेन तत्सहचरितस्य वह्नेर्ज्ञानं यत् तदनुमितिरूपम् । काव्यात्मकशब्दात् प्रतीयमानस्यार्थस्य ज्ञानं तु नैतादृशानुमित्यात्मकं भवति ।

परस्यार्थोऽनुमितिरूपं प्रयोजनं यस्मात् तत् परार्थानुमानम् । तच्च न्यायसाध्यम् । न्यायश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयववाक्यात्मकः । यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तदेतत् परार्थानुमानम् । तेन च वाक्यपञ्चकेन विशिष्टवैशिष्ट्यावगाहिशाब्दज्ञानं जायते । ततः परामर्शः, ततोऽनुमितिः इत्यस्ति क्रमः । पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वात्मकपञ्चरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः । तेन परस्याप्यनुमितिर्भवति ।

काव्यात्मकशब्दाच्च प्रतीयमानस्यार्थस्यावगमो नैतादृशानुमितिरूपतां प्रतिपद्यते । किन्तु शब्दश्रवणे प्रथमं सङ्केतितार्थस्य बोधस्ततः प्रकरणादिवशात् स एव शब्दोऽर्थद्वारा प्रतीयमानान् विचित्रानर्थान् प्रतिपादयितुं प्रभवतीति सोऽर्थः शाब्दबोधात्मक एव भवितुमर्हति । यद्यपि यस्मात् कस्माच्चिदपि शब्दाद् यस्य कस्यचिदप्यर्थस्य प्रतीतेरापत्तिपरिहाराय वाच्यादसम्बद्धस्यार्थस्य प्रतीतिर्नाङ्गीक्रियत इति वाच्यव्यङ्ग्ययोः सम्बन्ध आवश्यकः । स च व्यङ्ग्यव्यञ्जकभावो (व्यञ्जकत्वं) नियतसम्बन्धेऽसति न सम्भवतीति व्याप्तत्वं सिध्यति । तेनान्वयव्यतिरेकव्याप्तिभ्यां सपक्षसत्त्वविपक्षासत्त्वयोः पक्षवृत्तित्वस्य चाधिगमेन त्रिरूपाल्लिङ्गात् यत् लिङ्गिज्ञानमनुमानं तद्रूपः पर्यवस्यति । व्यञ्जकत्वमनुमानरूपमित्यर्थः । 'भम धम्मिअ' इत्यत्र गृहे श्वनिवृत्त्या भ्रमणं विधीयमानं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति । तथाचानुमानम्—'गोदावरीतीरं, भीरुभ्रमणाभाववत् सिंहवत्त्वाद्' इति । यद्यद् भीरुभ्रमणाभाववन्न भवति तत्तन्न सिंहवद्' (यद् यद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकं) यथा गृहमिति व्यतिरेकव्याप्त्या गोदावरीतीरस्य भीरुभ्रमणायोग्यत्वं साध्यते ।

तथापि अत्र नैके हेत्वाभासाः सम्भवन्ति । (१) अत्र साध्यः भीरुभ्रमणाभावः । तदभावो भीरुभ्रमणं, तच्च भीरोरपि कस्यचिद् प्रभोर्गुरोर्वा

निदेशेन, प्रियानुरागेण, निधिलाभादिना वा हेतुना सिंहवति (भयकारणे सत्यपि) भ्रमणं दृश्यत इत्यनैकान्तिकोऽयं हेतुः। (२) शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति साध्याभावव्याप्तो हेतुः विरुद्धोऽपि। किं च गोदावरीतीरस्य सिंहवत्त्वं च प्रत्यक्षेणानुमानेन वा न निश्चीयते। वचनस्य चास्यानाप्तोक्तत्वादप्रामाण्यम्। अतो हेतुनैवंविधतां प्राप्तेन साध्यसिद्धिः कुत्रापि न सम्भवति।

'निश्शेषच्युतचन्दने'त्यादावपि 'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिक' मित्यनेन वाक्यार्थेन तदन्तिकमेव रन्तुं गतासीति ध्वनेरपि अनुमानात्मकत्वं न सङ्गच्छते। रतिकार्यत्वेनोपात्तानि चन्दनच्यवनादीनि च स्नानकार्याण्यपि भवन्तीति कण्ठत एवोक्तानि। अत एवमादिस्थले सर्वत्र व्यभिचारादिदोषदूषितत्वेन हेतुत्वेनाभिमन्यमानानां प्रतीयमानार्थव्यञ्जकत्वं दुरुपपादमिति काव्यात्मकशब्दात् प्रकरणादिसव्यपेक्षाद् प्रतीयमानोऽर्थः सर्वोऽपि शाब्दबोधात्मक एव भवितुमर्हति। प्रतीयमानस्यार्थस्य व्यापारो व्यञ्जनैवेति सिद्धम् ॥

---

## ५. ध्वनिमण्डनम्

धूमाग्न्योः सहचरितत्वज्ञानसहकारेण पर्वते धूमं पश्यतः, तत्सहचरितस्य वह्नेः एकसम्बन्धिज्ञानविधया स्मृतिपूर्वकं व्याप्तिस्मरणं, व्याप्यस्य तस्य पक्षवृत्तित्वज्ञानरूपेण परामर्शेन पर्वते वह्निमत्ताज्ञानरूपा अनुमितिश्च जायते।

तथा शब्दार्थयोः शक्तिज्ञानसहकारेण शब्दं शृण्वतः, तच्छक्यस्यार्थस्य स्मृतिद्वारा शाब्दबोधो भवति।

| सहकारिकारणं | करणं | व्यापारः | फलम् (कार्यम्) |
|---|---|---|---|
| व्याप्तिज्ञानं | धूमदर्शनं | व्याप्तिविशिष्टपक्षधर्मताज्ञानं | अनुमितिः। |
| शक्तिज्ञानं | शब्दश्रवणं | पदजन्यपदार्थोपस्थितिः | शाब्दबोधः। |

यथा गृहीतव्याप्तिकस्यैव पुंसः पर्वते धूमदर्शने परामर्शद्वारा अनुमितिर्जायते, तथा गृहीतशक्तिकस्य शब्दश्रवणे अर्थोपस्थितिद्वारा शाब्दबोधो भवतीति वस्तुतत्त्वम्।

नानार्थशब्दश्रवणे तत्सङ्केतितानां नानार्थानामुपस्थितौ संयोगादितः प्रकृतार्थस्य शक्त्या बोधानन्तरं द्वितीयया शक्त्यान्यार्थबोधो यत्र जायते तत्र तस्मिन्नप्यर्थे तस्य शब्दस्य संकेतितत्वात् तदर्थबोधार्थं व्यापारान्तरं नान्वेष्टव्यम् । तदनन्तरभाविनस्तु प्रतीयमानस्यार्थस्य लाभाय करणे सत्यपि व्यापारमन्तरा फलानुत्पत्तेर्व्यापारान्तरमवश्यमङ्गीकरणीयम् । तथा लाक्षणिकशब्दश्रवणे शक्यार्थबाधेनोपस्थितस्य लक्ष्यार्थस्य बोधानन्तरं शैत्यपावनत्वादिरूपं यत् प्रतीयते तस्यापि व्यापारान्तरमावश्यकम् । स व्यापारो व्यञ्जनात्मक इत्यालङ्कारिकाः । अत एव व्यञ्जना अभिधामूला लक्षणामूला चेति द्विविधा । अभिधालक्षणाव्यञ्जनाख्यास्त्रयोऽपि शब्दव्यापारा एव । धूमदर्शने व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यां धूमसहचरितस्य अग्निरूपस्य पदार्थान्तरस्य बोधोऽनुमित्यात्मकः । धूमशब्दश्रवणे तु अभिधालक्षणाव्यञ्जनाभ्यो धूमस्य वाच्यार्थस्य तत्सम्बन्धिनां धर्मान्तराणामेव बोधो जायमानः शाब्दबोधात्मको भवति ।

एवं सति—

> "अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।
> व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥"

इति महिमभट्टोक्तं कथं सङ्गच्छते । ध्वनेः व्यञ्जनाव्यापारस्य । सर्वस्यापि अभिधामूलस्य लक्षणामूलस्यापि । अनुमाने व्याप्तिज्ञाने । "अन्तर्भावो वस्तुतोऽस्त्येव मया तु प्रकाश्यते" इति तेन कथ्यते च । पदार्थात् पदार्थान्तरस्य बोधो व्याप्तिज्ञानजन्यः, पदात् तस्यैव सम्बन्धिनामर्थानां तु बोधः शब्दव्यापारेणैव भवितुमर्हतीति ध्वनेरनुमानेऽन्तर्भावो न सम्भवत्येव । एतेन स्वार्थानुमाने ध्वनेरन्तर्भावो न युज्यत इति सिद्धम् ।

परार्थानुमानेऽपि ध्वनेरन्तर्भावो वक्तुं न शक्यते । तथाहि—परार्थानुमानं न्यायः । स्वार्थानुमानेन पर्वतेऽग्निमनुमाय परप्रतिपत्त्यर्थं प्रयुक्तं पञ्चावयववाक्यं परार्थानुमानं न्याय इत्युच्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते । तेन विशिष्टवैशिष्ट्यावगाहिमानान्तरमुत्थाप्यते । तेन चरमः परामर्शः । तदनन्तरमनुमितिः परस्यापि पर्वतो वह्निमानिति । प्रतिज्ञादिवाक्यैरपि तत्तद्वाक्यार्थबोधानन्तरं

व्याप्तिज्ञानद्वारा परामर्शः तद्द्वारा च अनुमितिः परस्यापि जायते। काव्य-वाक्यैस्तु तद्घटकपदार्थैः आकाङ्क्षायोग्यतादिवशाद् वाक्यार्थबोधानन्तरं—

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ॥
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥"

इति वचनेन वक्त्रादिवैशिष्ट्याद् व्यञ्जनया, प्रतीयमानस्य वाच्यार्थसम्बन्धिनोऽर्थस्य ज्ञानं भवति। तच्च शाब्दज्ञानमेव। इत्यनुमितिशाब्दबोधयोर्भेदाद् परार्थानुमानेऽपि व्यञ्जना नान्तर्भावमर्हति। किञ्च, वाक्यश्रवणे प्रतीयमानार्थ-व्यञ्जकविभावानुभावादिरूपवाच्यार्थस्य बोधानन्तरं, तत्र काव्ये तद्घटकेनैकेनापि पदेनानभिधेयम्, अङ्गनासु निखिलावयवव्यतिरेकि लावण्यमिव माधुर्यादिको गुणः प्रतीयते। तस्य च प्रतीयमानस्याश्रयः काव्यरूपः शब्दसन्दर्भ एव। एवं च सहृदयानां हृदये भावनारूपेण स्थितस्य रत्यादेः स्थायिभावस्योद्बोधकं काव्यार्थगतमाह्लादकत्वादिरूपं माधुर्यादिकं काव्यशब्दश्रवणादेवात्रगम्यत इति प्रतीयमानस्याप्यर्थस्य परम्परया शब्दव्यापारजन्यत्वाद् व्यञ्जनाया एकस्या अपि अनुमानेऽन्तर्भावो न सम्भवति।

अत्रेदमवधेयम्—अनुमानं द्विविधं, स्वार्थं परार्थं चेति। स्वस्य अर्थः (अनुमितिरूपं प्रयोजनं) यस्मात् तत् स्वार्थम्। परस्य अर्थः (अनुमितिरूपं प्रयोजनं) यस्मात् तत् परार्थमिति च व्युत्पत्तिः। स्वार्थं स्वानुमितिहेतुः। धूमाग्न्योर्व्याप्यत्वं सम्बन्धः। तदेकसम्बन्धिनो धूमस्य दर्शनेन अपरसम्बन्धिनोऽग्नेः स्मरणम्। स्वयमेव धूमाग्न्योः साहचर्यं ज्ञात्वा सामान्यलक्षणाप्रत्त्यासत्त्या यत्र यत्र धूमस्तत्र तत्राग्निरिति व्याप्तिं गृहीतवतः परामर्शद्वारा व्याप्यत्वसम्बन्ध सम्बन्धिन एवाग्नेरनुमितिर्भवति। नतु ततोऽन्यस्य। तथाच व्याप्तिज्ञानं सम्पाद-यितुं प्रवृत्तस्य स्वस्यैवानुमितिर्भवति। न्यायवाक्यश्रवणसमनन्तरजायमानशाब्द-बोधानन्तरभाविव्याप्तिज्ञानेन तु परामर्शद्वारा परस्याप्यनुमितिर्भवतीति स्थितिः। तथा शब्दार्थयोः शक्तिः सम्बन्धः। तदेकसम्बन्धिनः शब्दस्य श्रवणे अपरसम्बन्धिनस्तत्पदशक्यार्थस्य स्मृतिद्वारा शाब्दबोधो भवति। स च वाच्य इत्येव महिम्नोऽपि मतम्। गङ्गायां घोष इत्यत्र गङ्गाशब्दः शक्त्या प्रवाहरूपमेवार्थं

बोधयितुं समर्थो नान्यस्य। तस्य चार्थस्य घोषान्वये बाधिते सति, लक्षणया तीररूपोऽर्थः, ततस्तत्प्रयोजनत्वेन शैत्यपावनत्वादिरपि प्रतीयते। न च तस्य शब्दस्य शैत्यपावनत्वादौ सङ्केतः कृत इति शक्तिस्तमर्थं बोधयितुं न समर्था। अतः शब्दः स्वशक्यमेवार्थं बोधयति। शैत्यपावनत्वादिरूपस्यार्थस्य बोधने तु न शक्तिः प्रभवति। नापि व्याप्तिज्ञानम्। तच्च व्याप्यसहचरितमेव पदार्थं बोधयति नार्थान्तरम्। अत एव तादृशस्यार्थान्तरस्य बोधनाय व्यञ्जना-व्यापारः स्वीकृतः।

परार्थानुमानं न्यायवाक्यम्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। पर्वतो वह्निमान्—प्रतिज्ञा। धूमात्–हेतुः। यो यो धूमवान् स स वह्निमान् यथा महानसम्—उदाहरणम्। तथाचायम्—उपनयः,। तस्मात् तथा—निगमनम्। एतद्वाक्यश्रवणसमनन्तरं जायमानो वाक्यार्थबोधोऽनुमेय इति परेणापि नानुज्ञायते। अयं शाब्दबोध एव। प्रथमं वाक्यार्थबोधः। ततो व्याप्तिज्ञानेन पक्षधर्मताज्ञानेन च परस्यापि अनुमितिर्भवतीति पूर्वस्माद् भेदः। अनुमेयस्तु व्याप्यत्वसम्बन्धसम्बन्धी अग्निरेव। न तु एतद्वाक्यघटके-नैकेनापि पदेनासम्बद्धः अन्यः कश्चन पदार्थः। काव्यात्मकवाक्यश्रवणे तु वाक्यार्थबोधो भवति। स च तद्वाक्यघटकपदैः संसर्गमर्यादया बोध्यमानोऽर्थः। स च वाच्यादनतिरिक्तः। ध्वनिकाव्यात्मकशब्दसमुदाये तु एतस्माद् वाच्चा-दतिरिक्तः वाक्यघटकेनैकेनापि पदेनानभिधेयः अङ्गनासु निखिलावयवव्यतिरेकि लावण्यमिव, शृङ्गारादिरसानुगुणवर्णरचनया माधुर्यादिरूपमर्थान्तरमेवावग-म्यते। तत्प्रतीतिर्न शक्त्या भवति। नापि परार्थानुमानेन। व्याप्यसहचरित एवार्थे परार्थानुमानस्यानुमापकत्वात्। एवमर्थान्तरे परार्थानुमानस्याप्रभविष्णु-त्वात् प्रतीयमानार्थो नानुमेयः। एकस्मिन् पदार्थे (पर्वते) दृश्यमानेन एकेन पदार्थेन (धूमेन) अन्यस्य पदार्थस्य (अग्नेः) बोधोऽनुमितिरूपः। काव्यात्मके शब्दे तु श्रूयमाणेन शब्देन कस्यचिदर्थस्य बोधे सति तत्प्रतिपाद्यस्यान्यस्या-प्यर्थस्य बोधः शाब्दबोधात्मकः इति विवेकः। एवं च स्वार्थानुमानेन परार्थानु-मानेनापि माधुर्यादिरूपाणां ध्वनि (रसादि) धर्माणामनुमितिविषयत्वं नैव सम्भवति। तद्बोधनाय व्यञ्जनाव्यापार एव शरणीकरणीयः। इत्थं व्याप्ति-व्यञ्जनयोः अनुमितिशाब्दबोधयोश्च स्वरूपभेदं यथावदधिगतवान् कश्चिदपि व्यञ्जनाया व्याप्तिज्ञानेऽन्तर्भावकथनं महिम्नो मन्ये नानुमन्येतैवेति।

ध्वनति ध्वनयति वा ध्वनिः (व्यञ्जकः शब्दः अर्थश्च), ध्वन्यतेऽनेनेति ध्वनिः (व्यञ्जनाव्यापारः) ध्वन्यत इति ध्वनिः (व्यङ्ग्योऽर्थः) ध्वन्यतेऽस्मिन्निति ध्वनिः (व्यङ्ग्यार्थप्रधानं काव्यम्) इति व्युत्पत्तिभेदात् पञ्चस्वर्थेषु ध्वनिशब्दो निष्पन्नः। अनुमानेऽन्तर्भावं ध्वनेः प्रचिकाशयिषोर्महिम्नो व्यक्तिविवेकग्रन्थस्यादि पद्यस्थितो ध्वनिशब्दो व्यञ्जनाव्यापारपरोऽभिमत इति ज्ञायते। इष्टदेवतानमस्कारात्मकं मङ्गलं विधाय स्वग्रन्थमारभमाणश्च स प्रथमतो ध्वनेः (व्यञ्जनायाः) लक्षणं वक्तुमुपक्रममाणो ध्वनिकारोक्तं ध्वनिकाव्यलक्षणमनुवदन्नाह —तत्र ध्वनेरेव तावल्लक्षणं वक्तव्यं, कोऽयं ध्वनिर्नामेति। तच्च ध्वनिकारेणैवोक्तम्—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥** इति

यस्य ध्वनेरनुमानेऽन्तर्भावो विवक्षितस्तस्य लक्षणे कथनीये ध्वनिकारेणोक्तं तदन्यस्य ध्वनिकाव्यस्य (काव्यविशेषस्य) लक्षणमुद्धरतीत्यहो मोहविजृम्भितं महिम्नः। तच्च लक्षणवाक्यं बहुधा दूषयति च। दूषिते ध्वनिकाव्यलक्षणे किमु ध्वनिव्यापारः स्वयमेव गत्वानुमानेऽन्तर्भवति। वाक्यघटकपदानभिधेयानामनन्तानां काव्यार्थानां बोधने प्रभवन्त्या व्यञ्जनाया व्याप्यसहचरितस्य वह्नेरेव केवलं बोधजनके व्याप्तिज्ञानेऽन्तर्भावचिन्तापि नोत्थातुमर्हति।

आनन्दवर्धनाचार्यस्तु—"प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते। तद् यथा—शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवकः इति ध्वनिं कुर्वन्नेवमुच्यते। तस्माद् ध्वनिः शब्दः" (पातञ्जलमहाभाष्यम् I, i, i,) इति अर्थप्रतीतिजनकस्य शब्दस्य वैयाकरणाभिमतां ध्वनिसंज्ञां प्रतीयमानार्थव्यञ्जक शब्दात्मकस्य काव्यस्य कृतवान्। अत एव ध्वनिसंज्ञोपज्ञाता स ध्वनिकार इति प्रसिद्धिमुपगतो विद्वत्परिषत्सु। तस्य च ध्वनिशब्दस्य व्युत्पत्तिभेदात् पञ्चस्वर्थेषु वृत्तिश्च प्रसिद्धाभूत्। ध्वन्यात्मकप्रतीयमानार्थनिरूपणपरस्य स्वग्रन्थस्य ध्वन्यालोक इति च नाम चक्रे। तदिदमत्यन्तमुचितमेवेति सकलसहृदयसम्मतम्।

तत्र,

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥**

इति कारिकया सहृदयश्लाघ्यवाच्यप्रतीयमानान्यतरार्थविषयकशाब्दज्ञानजनक-वाक्यत्वं काव्यसामान्यलक्षणमुक्तम्। वाच्यश्च उपमादिभिः प्रकारैः प्रसिद्ध एव। अन्यश्च प्रतीयमानः। स च विप्रतिपत्तिग्रस्त इति विप्रतिपत्तीर्निराकृत्य ध्वनिरूपोऽर्थः प्रसाधितः। ततश्च सोऽर्थो यत्र वाच्यातिशायिचमत्कृतिजनकः स काव्यविशेषो ध्वनिरिति च तदभिमतम्। स च ध्वनिसंज्ञितोऽर्थः ध्वनिसंज्ञितेन व्यञ्जनाव्यापारेण प्रतीयत इति च सिद्धान्तितम्। तस्य व्यञ्जनाव्यापारस्यानुमानेऽन्तर्भावमिच्छता महिम्ना, ध्वनेर्लक्षणं वक्तव्यं, को नाम ध्वनिरित्युपक्रममाणेन ध्वनिकारेणाङ्गीकृताया व्यञ्जनायाः स्वरूपं, तस्यार्थान्तरप्रतीतिजनकत्वं कथं ध्वनिकृता प्रदर्शितमिति च ज्ञात्वा तत्रानुपपत्तौ सत्यामन्यो मार्गोऽन्वेष्टव्य इति तु न्याय्यः पन्थाः। तं विहाय ध्वनिकारोक्तं काव्यविशेषस्वरूपमनूद्य तस्य शतशः खण्डनाय खलु प्रवर्तते सः। कथमिदं घटते ?

ध्वनिकृदभिमतं ध्वनिलक्षणं "यत्रार्थः शब्दो वे"त्यादिकारिकानिष्पन्नं तु प्रतीयमानार्थव्यञ्जकोपसर्जनीभूतार्थबोधकशब्दत्वम् एकम् (ध्वनिलक्षणम्)। प्रतीयमानार्थव्यञ्जकोपसर्जनीकृतार्थबोधकशब्दत्वं च द्वितीयम् (ध्वनिलक्षणम्)- "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इति वचनेन यत्र काव्ये शब्दबोध्यो वाच्योऽर्थः स्वयमुपसर्जनीभूय अन्यमर्थं बोधयति स वाच्योऽर्थो व्यञ्जकः। यथा—

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥**

शूरकृतविद्यसेवकाः सुवर्णपुष्पां पृथिवीं चिन्वन्तीति वाच्योऽर्थः। शूरकृतविद्यसेवकानां सर्वत्र सुलभा विभूतय इति व्यङ्ग्योऽर्थः। अत्र वाच्यस्याविवक्षितत्वेन गुणीभूतत्वाद् व्यङ्ग्यार्थस्य प्राधान्येन ध्वनिव्यपदेशोऽस्य काव्यस्य।

अर्थस्य गुणीभूतत्वविशेषणानुपादाने गुणीभूतव्यङ्ग्येऽतिव्याप्तिः। यथा—

**उपोढरागेण विलोलतारकं**
**तथा गृहीतं शशिना निशामुखम्।**

**यथा समस्तं तिमिरांशुकं तया**
**पुरोऽपि रागाद् गलितं न लक्षितम् ॥**

अत्र वाच्य: समासोक्त्यलङ्कार:। स च गुणीभूत: अप्रकृतनायिकावृत्तान्तं व्यञ्जयति। अत्राप्रकृतवृत्तान्तो व्यज्यमानो वाच्ये प्रकृतव्यवहारे अभिन्नतया आरोप्यमाणो वाच्योत्कर्षमेवाधत्त इति अङ्गत्वेनैवास्ते, न तु प्रधानतयेति न ध्वनिव्यवहार:। किंतु अपराङ्गव्यङ्ग्यभूतगुणीभूतव्यङ्ग्यव्यवहार एव। समारोपितनायिकाव्यवहाराया निशाया: समारोपितनायकव्यवहारस्य शशिनश्च वाक्यार्थत्वाद् वाच्यस्यैव प्राधान्यम्।

अत्रेदमवधेयम्—व्यञ्जनाव्यापारस्य लक्षणे कथनीयतयोपस्थिते महिमा ध्वनिकारोक्तं ध्वनिकाव्यस्वरूपविवरणपरवाक्यमनूद्य तत्र लक्षणदोषान् वक्तुमुपक्रममाण आह—"अर्थस्य तावदुपसर्जनीकृतात्मत्वमनुपादेयमेव। तस्यार्थान्तरप्रतीत्यर्थमुपात्तस्य तदव्यभिचाराभावाद्" इति। तस्यायमाशयो व्याख्यात्रा प्रकाशित:। सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति नयबलादुभयसत्तायामेव विशेषणविशेष्यभाव: सञ्जाघटीति, न केवलायां सम्भवसत्तायामुष्णोऽग्नि: इतिवद्, न वा केवलायां व्यभिचारसत्तायां, शीतोऽग्नि: इतिवद्, उभयसत्तायां यथा नीलोत्पलादिषु विशेषणीभूतस्य नीलस्य उत्पलादिषु सम्भवाद् रक्तोत्पलादिषु तस्य व्यभिचाराच्च सञ्जाघटीत्येव विशेषणविशेष्यभाव:। एवं यथा अर्थस्य द्वितीयार्थप्रकाशनदशायामुपसर्जनीकृतात्मत्वं सम्भवति, तथैव यदि तस्य तद्दशायां तत्त्वं व्यभिचरेदपि तदा उपसर्जनीकृतात्मत्वस्य अर्थविशेषणत्वं सङ्गतिमत् स्यात्। किंतु नात्र अर्थे तद्व्यभिचार: इत्यनायत्या सिद्धं भवति यद् न तद् अर्थस्य विशेषण भवितुमर्हति" इति। वाच्योऽर्थस्तावत् स्वयं गुणीभूय अर्थान्तरं प्रकाशयति। द्वयोरप्यर्थयोस्तयोश्चारुत्वतारतम्यपर्यालोचनायां, यस्य चारुत्वातिशयकृतं प्राधान्यं तत्कृत: काव्यस्य व्यपदेश:। व्यङ्ग्यार्थस्य चारुत्वातिशयकृते प्राधान्ये ध्वनिव्यवहार:। तत्र वाच्यस्य गुणीभूतत्वसम्भव:। यत्र तु गुणीभूतस्य वाच्यस्य, व्यङ्ग्यस्य च बोधानन्तरं वाच्यस्यैव चारुत्वातिशयकृतं प्राधान्यं तस्य गुणीभूतव्यङ्ग्यव्यपदेश:। अत्र व्यङ्ग्यस्य गुणीभूतत्वेन वाच्यस्यैव प्राधान्याद्

गुणीभूतत्वस्य व्यभिचारः। तद्रीत्यैव सम्भवव्यभिचाराभ्यामर्थदेव गुणीभूतत्व (उपसर्जनीभूतत्व) विशेषणम् । एतेन तत्र वाच्यस्य प्राकरणिकत्वापेक्षया प्राधान्यं यदुक्तं तदनुचितमेव । अन्ततो गत्वा व्यभिचारसम्भवेऽपि वैफल्यादनुपादेयमेव तत्। गुणीभूतव्यङ्ग्येऽपि काव्ये तस्य चारुत्वप्रकर्षदर्शनादित्यप्याह महिमा ! तत्र तस्य व्यङ्ग्यस्य चारुत्वप्रकर्षकृतं प्राधान्यं यद्यङ्गीक्रियते तर्हि तस्य काव्यस्य गुणीभूतव्यङ्ग्यत्वव्यपदेश एव न स्यात् । सर्वत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यस्य चारुत्वप्रकर्षो यदि, तर्हि गुणीभूतव्यङ्ग्यविलोपप्रसङ्गः ! किञ्च, व्यभिचारेऽपि वा इत्यनिच्छयापि व्यभिचारं मन्यमानेन कुत्र वान्यत्र व्यभिचारो द्रष्टुं शक्यते ।

एवं प्रतीयमानार्थव्यञ्जकोपसर्जनीभूतार्थबोधकशब्दत्वरूपे काव्यविशेषलक्षणे अर्थस्य उपसर्जनीभूतत्वविशेषणानुपादाने गुणीभूतव्यङ्ग्ये काव्येऽतिव्याप्तिस्तद्वारणाय तद् विशेषणं सप्रयोजनम् अत उपादेयमेव । इदमविवक्षितवाच्यध्वनेर्लक्षणम् ।

विवक्षितान्यपरवाच्यस्तु शब्दशक्तिमूलध्वनिः । तस्य प्रतीयमानार्थव्यञ्जकोपसर्जनीकृतार्थबोधकशब्दत्वं लक्षणम् । यत्र नानार्थशब्दः स्वशक्यमर्थं बोधयंस्तमर्थमुपसर्जनीकुर्वंश्च अन्यमर्थं व्यनक्ति सोऽपि काव्यविशेषो ध्वनिव्यपदेशं भजते । ध्वनिं प्रसाध्य स द्विविधः अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति यद् वृत्तौ प्रदर्शितं तत् कारिकार्थानुसृतमेवेति वेदितव्यम् ।

शब्दशक्तिमूलध्वनिर्यथा—

**करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः ।**
**धनदाग्रमाहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥**

अत्र नानार्थात् सार्वभौमशब्दात् प्रकरणवशात् सम्राज उपस्थितिः । ततश्च करदानधनदादिविशेषणैः तच्छब्दशक्यस्य दिग्गजस्याप्युपस्थितिः । एवं सम्राड् जयति दिग्गजो जयतीत्युभयार्थप्रतिपादकवाक्ययोरसम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति सार्वभौमशब्दवाच्यमर्थद्वयमपि उपसर्जनीकृत्य तयोः सादृश्यात्मकमुपमालङ्कारं स शब्दो व्यञ्जयति । अत्र ध्वनेः प्राधान्यम् ।

स्ववाच्यादन्यस्यार्थस्य प्रदिपादको यः शब्दस्तस्यापि उपसर्जनीकृतार्थत्वं विशेषणमावश्यकम् । अन्यथा श्लेषकाव्ये (गुणीभूतव्यङ्ग्ये) अतिव्याप्तिः । तथाच—

सर्वदो माधवः पायात् स योगङ्गामदीधरत् ।

अत्र माधवो (विष्णुः) रक्षतु इति वाच्यार्थबोधानन्तरम्, उमाधवः (शिवः) पायादित्यर्थान्तरबोधजननद्वारा उभयोरपि स्तोतव्यत्वप्रतीतिर्भवति । उभाभ्यामपि स्तोतुः रक्षणीयत्वप्रार्थनाया एव चमत्कृतिजनकत्वाद् वाच्यस्यैवार्थद्वयस्य प्राधान्यम् । तस्यच न गुणीकृतत्वम् । व्यङ्ग्यस्य तु गुणीभूतत्वम् । एवं वाच्यस्यार्थद्वयस्यापि उपसर्जनीकृतत्वाभावान्नातिव्याप्तिः । एवं च उपसर्जनीभूतात्मत्वोपसर्जनीकृतार्थत्वरूपोभयार्थपरम् उपसर्जनीकृतस्वार्थौ इति पदमावश्यकमेव । अर्थशब्दयोरुभयोरपि तादृशविशेषणमावश्यकमिति सूचनायैव द्विवचनान्तं तद् विशेषणमुपात्तम् । तदनुसारेण च व्यङ्क्त इति द्विवचनान्तप्रयोगोऽप्युपपद्यते । वस्तुतस्तु काव्यस्य अनुमितेर्वा स्वरूपविवरणात्मके वाक्ये तद्घटकदलानामतिव्याप्त्यादिवारकतया व्यभिचारादिवारकतया वा सार्थक्यं चिन्तयितुं नोद्युञ्जते शास्त्रकाराः ।

पुनरप्याह महिमा—"शब्दः पुनरनुपादेय एव" इति तदप्यसमञ्जसम् । विशेष्यनिर्देशाभावात् । अत्रेदं विचार्यते । व्यञ्जनाव्यापारस्यानुमानेऽन्तर्भावो विवक्षितो महिम्ना । तस्य लक्षणं वक्तव्यत्वेनोपस्थितमिति वदन् ध्वनिकारोक्तं काव्यविशेषस्वरूपवर्णनपरं वाक्यं ब्रूते । ततश्च अन्ते तदेवं लक्षणदोषदुष्टपदव्युदासेन परिशुद्धो ध्वनिलक्षणवाक्यस्यायमर्थोऽवतिष्ठते इति वदन्नाह—

वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।
सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥ इति

काव्यानुमितिरित्यस्य काव्यादनुमीयमानः (अनुमितिविषयः) अर्थ इत्यर्थः । अनुमानेऽन्तर्भावमित्यत्र ध्वनिशब्दो व्यञ्जनाव्यापारपरः । यत्रार्थः शब्दो वेत्यत्र ध्वनिशब्दो ध्वनिकाव्यपरः । वाच्यस्तदनुमितो वेत्यत्र काव्यानुमितत्वेनाभिमन्यमानो ध्वनिशब्दो व्यङ्ग्यार्थपरः । आह च—"एतच्च विविच्यमानमनुमानस्यैव

सङ्गच्छते" इति, "एतच्चानुमानस्यैव लक्षणं नान्यस्य" 'यदुक्तं—त्रिरूपलिङ्गाख्यानं परार्थानुमानम्" इति च । किं केन सङ्गच्छते ।

प्रतीयमानार्थबोधको, व्यापार: व्याञ्जनाव्यापार:, प्रतीयमानार्थबोधकशब्द: ध्वनिसंज्ञित: काव्यविशेष: प्रतीयमान: अर्थ: ध्वनि: इति च तत्तल्लक्षणे विशेष्यनिर्देश: कर्तव्य: । रूपस्य किं लक्षणमिति प्रश्ने चक्षुर्मात्रग्राह्यो गुणो रूपमिति वक्तव्यम् । अत्र गुण शब्दोऽनुपादेय इति वचनतुल्यमेव यत्रार्थ: शब्दोवेत्यत्र शब्दोऽनुपादेय एवेति कथनम् । तथापि यथा यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यत इति रूपलक्षणे गुणत्वस्यानुपादाने रूपत्वे रूपाभावे चातिव्याप्तिस्तद्वारणाय गुणपदमावश्यकं, तथा ध्वनिकाव्यलक्षणे शब्दशाब्दाभावे अभिनयादेरपि प्रतीयमानार्थबोधकत्वात् तस्यापि काव्यत्वापत्ति: । तद्वारणाय शब्दशब्द उपादेय: । यदप्याह–तस्य स्वार्थाभिधानमन्तरेण व्यापारान्तरानुपपत्तेरुपपादयिष्यमाणत्वादिति, तदप्ययुक्तम् । शब्दस्यैव व्यञ्जनाव्यापारेण प्रतीयमानार्थबोधकत्वस्य, तदभिमतेन व्याप्तिज्ञानेन प्रतीयमानार्थबोधकत्वस्य चोपपादितप्रायत्वात् ।

पृथगवस्थितस्य शब्दस्य स्वार्थाभिधानं (स्वसङ्केतितार्थाभिधानं) विना व्यापारान्तरं नास्तीति यद्युच्यते, तद् युक्तमेव । उपसर्जनीकृतस्वार्थत्वं तु काव्यविशेषात्मकवाक्यघटकशब्दस्यैव विशेषणम् । वाक्यघटकशब्दश्च गङ्गायां घोष इत्यादौ, लक्षणया तीरं, व्यञ्जनया शैत्यपावनत्वादिकं च बोधयतीति सकलानुभवसिद्धम् । अत: 'शब्द: पुनरनुपादेय एव । तस्य स्वार्थाभिधानमन्तरेण व्यापारान्तरानुपपत्तेरुपपादयिष्यमाणत्वादिति" महिमोक्तिर्न विचारसहा । वाक्ये तु न शक्ति: । तथापि वाक्यघटकशब्दैरुपस्थितानामर्थानां संसर्गमर्यादया तात्पर्यविषयीभूतस्य ज्ञानं तात्पर्याख्येन व्यापारेणैव भवति । तस्मादर्थान्तरप्रतीतिस्तु व्यञ्जनाव्यापारेणैव सिद्ध्यति । व्यापारान्तरानुपपत्तेरिति वदतापि महिम्ना व्यापारान्तरं नोपपद्यत इति न वक्ष्यते । किन्तु—ध्वनिकृदभ्युपगतस्य व्यञ्जनाव्यापारस्यानुमानेऽन्तर्भावं वक्तुमेवोद्युङ्क्ते । तत: शब्दस्योपसर्जनीकृतस्वार्थत्वं नास्तीत्याह । काव्यविशेषलक्षणे तस्यावश्यकत्वं पूर्वमेवोपपादितम् । महिम्ना तु तस्यानुकरणव्यतिरेकेणोपसर्जनीकृतार्थत्वं न सम्भवतीत्युच्यते ।

तं कर्णमूलमागत्य पलितच्छद्मना जरा ।
कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति ॥

इत्यत्र तस्येतिना व्यवच्छिन्नस्य वाक्यस्य स्वरूपमात्रेऽवस्थानं हेतुत्वेनोच्यते च। तदपि न समञ्जसम्। लौकिकेन पदेन वाक्येन वा समवहितस्य इति शब्दस्य पदार्थव्यवच्छेदकत्वं नास्त्येव । अर्था हि सर्वदा सर्वथा सर्वत्र नामधेयेनान्विताः । नास्ति सोऽर्थो यः कश्चिन्नामधेयेन वियुज्यते । अर्था हि प्रतीयमाना नामधेयरूपेतास्तत्सामानाधिकरण्येनावगम्यन्ते । गौरित्यर्थः अश्व इत्यर्थः इति । तथा दार्थानां नामधेयात्मकत्वात् तद्गोचरम् आलोचनमपि नामगोचरमिति अर्थवन्नामधेयेन व्यपदिश्यमानं शाब्दं भवति ।

गृहीतसङ्केतोऽपि पुरुषस्तमर्थं दृष्ट्वा उद्बुद्धसंस्कारः संज्ञां स्मरति । ततः परं बोधाय तया संज्ञया ज्ञानमुल्लिखति, मम रूपमिति ज्ञानं जातमित्यादि । नैतावतोल्लेखेन शब्दार्थयोरभेदः । संज्ञाशब्दो हि त्रयाणां भवति—स्वस्य स्वार्थस्य, स्वार्थज्ञानस्य च । घट इति शब्दः, घट इत्यर्थः, घट इति ज्ञानम् इति । तथा चागृहीतसङ्केतस्य संज्ञास्मरणाभावात् स नोल्लिखति ।

एवम् इतिकरणयुक्तः शब्दः यत्सामानाधिकरण्येन प्रयुक्तस्तमर्थं बोधयति । यथा—"काव्यस्यात्मा ध्वनिरिति" इत्यत्र काव्यस्यात्मा ध्वनिरिति सारभूतोऽर्थ इति अर्थस्य विशेष्यत्वेन निर्देशाद् ध्वनिरित्यर्थ इत्यर्थः। यथा च—"ध्वनिरिति काव्यविशेषः" इत्यत्र काव्यविशेषात्मकशब्दस्य विशेष्यत्वेन निर्देशाद् ध्वनिरिति शब्दः (काव्यविशेषः) इत्यर्थश्चावगम्यते । एवं ध्वनिरिति ज्ञानं मे जातमित्यत्र ध्वनेर्ज्ञानविषयत्वमपि बोध्यते । तथा शब्दसमुदायात्मकं वाक्यमपि यत्सामानाधिकरण्येन प्रयुक्तस्तमेवार्थं बोधयति । यथा—दशरथस्य "रामे श्रीर्न्यस्यता"मिति ज्ञानं जातम् इति, दशरथो "रामे श्रीर्न्यस्यता"मिति जनान् न्यवेदयद् इति, रामे श्रीर्न्यस्यतामिति वाक्यं रामे श्रीविन्यसनकर्तव्यतारूपमर्थं बोधयतीति च ज्ञानार्थशब्दसामानाधिकरण्येन निर्देशात् स्वस्य, स्वार्थस्य, स्वार्थज्ञानस्येति त्रयाणां बोधकं भवति रामे श्रीर्न्यस्यतामित्येकं वाक्यमितिकरणयुक्तम् । अपि च, "कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति" इत्यत्र जराया अचेतनत्वाद् आहेत्यस्य सूचयतीत्यर्थः ।

सूचनं चार्थस्यैव, न तु शब्दस्य। रामे श्रीविन्यसनरूपस्यार्थस्य बोधनाय नास्त्येव तादृशशब्दप्रयोगादृतेऽन्य उपायः। तथाच रामे श्रीविन्यसनरूपमर्थमेव सूचितवती जरा इत्येवार्थः सम्प्रतिपन्नः। एतेन इतिकरणयुक्तस्य वाक्यस्यापि पदार्थपरिच्छेदकत्वं नास्तीति प्रतिपादितम्।

वस्तुतस्तु—व्यञ्जनाव्यापारस्यानुमानेऽन्तर्भावं प्रकाशयितुं व्यक्तिविवेकं प्रकुर्वाणो महिमभट्टः अन्यदेव प्रतिजानाति, ततोऽन्यदेव विदधाति। वाच्यादर्थान्तरस्य प्रतीतिर्व्यञ्जनयेति ध्वनिकृन्मतम्। वाच्यस्यार्थस्यार्थान्तरे सङ्केताभावाद् वक्त्रादिवैशिष्ट्यवशादन्यार्थबोधजननसमर्थेन शब्देनैव व्यङ्ग्यार्थप्रतीतिरपि जायत इति तदाशयः। इदं न सम्भवतीति न महिमा ब्रूते। यदेतत् परार्थानुमानं न्यायवाक्यं स्ववाच्यमेवार्थं प्रथमतो बोधयत् तदनन्तरजातेन व्याप्तिज्ञानेन नाग्नेरन्यं पदार्थमनुमापयति। अर्थान्तरबोधने व्याप्तिज्ञानस्य (अनुमितिव्यापारस्य) सामर्थ्यमस्तीति च स न मन्यते। अनुमेयत्वेनाभिमतस्यार्थान्तरस्य बोधने असमर्थाद् व्याप्तिज्ञानादन्यः व्यापारश्च न सङ्कल्पितः। काव्यवाक्याद् व्यञ्जनाख्येन व्यापारान्तरेणार्थान्तरस्य व्यङ्ग्यत्वं प्रतिपादयन्तं ध्वनिकारमाक्रम्य यो भवता व्यञ्जनाव्यापार उच्यते तदनुमानमेव, यश्चार्थो व्यङ्ग्य इत्युच्यते सोनुमेय एव इति च कथयति। किञ्च, यद् व्यञ्जनागम्यस्यार्थस्य व्यङ्ग्यत्वमुच्यते ध्वनिकृता तदौपचारिकमेवेति च वदति। यथा तीररूपेऽर्थे शैत्यपावनत्वादिप्रतीत्यर्थो गङ्गाशब्दप्रयोगः, तथानुमेयेऽर्थे सचेतनचमत्कारित्वरूपप्रयोजनापेक्षया व्यङ्ग्यत्वमुपचर्यत इत्यभिप्रायः। एतेन सहृदयश्लाघ्यत्वाय तत्र निरूप्यमाणं व्यङ्ग्यत्वमेव प्रभवति। अनुमेयत्वं तु गङ्गातीरे घोष इति शब्द प्रयोगतुल्यमेवेति च ज्ञायते। अतः अर्थान्तरं व्यङ्ग्यमेव, तत्र व्यापारश्च व्यञ्जनैव।

अत्रेदं विचार्यते—व्यङ्ग्यव्यञ्जकभावो नाम कश्चित् सम्बन्धः। सम्बन्धश्च सम्बन्धिद्वयसाधारणः। व्यञ्जकः (वाच्यः) अर्थः, व्यङ्ग्यः प्रतीयमानश्च सम्बन्धिनौ। व्यङ्ग्यार्थबोधरूपस्य कार्यस्य अनन्यथासिद्धनियतपूर्ववर्ती वाच्यो हेतुरिति तयोः कार्यकारणभावोऽनुमतः सर्वस्यापि। कार्यकारणयोः पौर्वापर्यं को नाम निषेद्धुमीष्टे। वाच्यप्रतीयमानयोर्यथा क्रमेणैव प्रतीतिर्न समकालं, यथा चानयोर्गम्यगमक भावः, तथा तेनैव व्यक्तिवादिना

तयोः स्वरूपं निरूपयितुकामेनाप्युक्तं तदेवास्माभिः समाधित्सुभिरिह लिख्यते परम् इत्युपक्रम्य महिमा ध्वनिकृद्वाक्यमुद्धरति—"तद् यथा—नहि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः। अत एव विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेनावस्थानात् क्रमोऽवश्यंभावी स तु लाघवान्न लक्ष्यत इति अलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादयः" इति। पुनश्च, "तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्य प्रतीत्योर्निमित्तनिमित्तिभावान्नियमभावी क्रमः, स तूक्तयुक्तेः क्वचिल्लक्ष्यते, क्वचित् तु न लक्ष्यते" इति। एवं ध्वनिकृदाशये सम्यगधिगते, महिम्नः "रसादिष्वनुमेयेषु असंलक्ष्यक्रमो गम्यगमकभाव इति सहभावभ्रान्तिमात्रकृतस्तत्रान्येषां व्यङ्ग्यव्यञ्जकभावाभ्युपगमः, तन्निबन्धनश्च ध्वनिव्यपदेशः इतिवचनं न सङ्गच्छते। पूर्वापरभावेन प्रतीतिविषयतया कार्यकारणभावापन्नयोः द्वयोः सहभावो भ्रमरूपः ध्वनिकारस्यास्तीति महिमा कथमधिगतवानिति न ज्ञायते। आद्ययोस्तु क्रमस्य सुलक्षत्वाद् भ्रान्तिरपि नास्तीति निर्निबन्धन एव तत्र व्यङ्ग्यव्यपदेशग्रह इति तद्वचनेन इदमवगम्यते। वस्त्वलङ्काररसात्मना व्यङ्ग्यस्य त्रैविध्यं ध्वनिकाराभिमतम्। तत्राद्ययोर्वस्त्वलङ्कारयोः प्रतीयमानयोः क्रमो लक्ष्यत एव। अतस्तत्र व्यङ्ग्यव्यञ्जकयोः सहभावो नास्तीति तत्र प्रतीयमानयोस्तयोः व्यङ्ग्यव्यञ्जकभावो निर्निबन्धन इति वदता सहभावे सत्येव व्यङ्ग्यव्यपदेशः प्रामाणिक इति प्रख्याप्यत इति तस्यैव भ्रमः। यथा प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यपदेशो वैयाकरणैः कृतः, तथा प्रधानभूतव्यङ्ग्यव्यञ्जनक्षमस्य शब्दस्य ध्वनिरिति व्यपदेश आनन्दवर्धनेन कृतः। स्फोटो नाम वैयाकरणैः नित्यत्वेनाभिमतः शब्दः। स च कण्ठताल्वाद्यभिघातजन्येन वर्णात्मकेन शब्देन लब्धस्वरूपोऽभिव्यज्यते। तथापि वर्णात्मकतया श्रूयमाणस्य शब्दस्य व्यञ्जकत्वं स्फोटस्य व्यङ्ग्यत्वं चास्तीति तयोर्व्यङ्ग्यव्यञ्जकभाव एव। तयोरपि उक्तरीत्या कार्यकारणभावात्मकत्वेन तत्रापि सहभावो नास्तीति ध्वनिकृतोऽपि नाविदितमिदम्। एतेन सहभाव निबन्धनो व्यङ्ग्यव्यपदेश इत्यप्यसाम्प्रतम्। किञ्च, विभावानुभावव्यभिचारिसंयोगाद् रत्यादीनां या प्रतीतिः सैव रसप्रतीतिरिति मुख्यमेव व्यङ्ग्यत्वं रसादेः, वाच्यस्य च व्यञ्जकत्वं सुसम्पन्नम्। तत्र दृष्टान्तश्च घटप्रदीपन्यायः। रूपिद्रव्यचाक्षुषप्रमायामालोकोद्भूतरूपयोः कारणत्वं नियतम्। प्रदीपः स्वकीयमालोकं

प्रसारयति। तत्र विद्यमानो घटश्च चक्षुःसन्निकर्षेण प्रत्यक्षविषयो भवति। यथा प्रदीपः (प्रकाशकः) स्वमालोकं प्रसारयन् समीपस्थितं घटं तत्र स्थितान् रूपवतोऽन्यांश्च पदार्थान् प्रकाशयति, तथा प्रदीपस्थानीयः सुकविप्रयुक्तः शब्दः स्ववाच्यमर्थं बोधयन् तत्सम्बद्धमर्थान्तरमपि बोधयतीति अत्यन्तमुचित एव घटप्रदीपन्यायोपन्यासः। व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरं बोधयति, तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशक इत्यनेन वाच्यार्थबोध एव प्रथमतो जायते ततश्च व्यङ्ग्यबोधे वाच्यबुद्धिर्न दूरीभवति इति पूर्वापरभावेनोपस्थितयोरपि सहावस्थानात्मकः सहभावो भवत्येव। न तु सहोत्पत्तिरूपः सहभावः। एतेनासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरिति ध्वनिकारोक्तं सुप्रतिष्ठापितम्।

किञ्च वाच्यार्थस्य यत्र व्यञ्जकत्वं स चेद् ध्वनिस्तर्हि तदनुमितस्य व्यञ्जकत्वे ध्वनित्वं न स्यात् तस्य वाच्यत्वाभावाद् इति यदुक्तं महिम्ना तदप्यविचारिताभिधानम्। यतो वाच्यस्याप्यर्थस्य व्यङ्ग्यबोधनदशायां व्यञ्जकत्वमेव। अपि च व्यङ्ग्यस्याप्यर्थस्यार्थान्तरव्यञ्जकत्वं न प्रामाणिकम्। वाच्य एवार्थः प्रतीयमानमनन्तमप्यर्थं व्यञ्जयितुं क्षमः। वाच्यो नाम कः? काव्यात्मक शब्दात् शक्त्या प्रतिपाद्यमानोऽर्थः। काव्यशब्दश्रवणादेव स्वार्थस्यार्थान्तराणामपि प्रतीतिर्भवतीति अर्थान्तरबोधनदशायां काव्यात्मकशब्दस्यापि व्यञ्जकत्वमभ्युपगम्यते। यत्र वाच्याद् वस्तुमात्रेणैकेन द्वित्रैर्वान्तरिता वस्तुमात्रस्यैव प्रतीतिस्तत्रापि ध्वनित्वमभिमतमेव। यद्यपि व्यङ्ग्ययोर्वस्त्वलङ्कारयोर्वाच्यत्वमपि सम्भवति, तथापि अभिधायकशब्दविरहदशायां व्यञ्जनया बोध्यमानयोर्वस्त्वलङ्कारयोरपि ध्वनित्वमेव। तत्रापि काव्यात्मा शब्द एव वाच्यार्थप्रतिपादनद्वारा सर्वेषां व्यङ्ग्यानामर्थानां व्यञ्जक इत्यपि निर्विवादम्।

एतेन —

> "वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।
> सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥"

इति यदुक्तं महिम्ना, तत् कस्य स्वरूपनिरूपणपरम्। यत्रेति यच्छब्देन काव्यं (शब्दः) परामृश्यते। सा काव्यानुमितिरिति तच्छब्देन काव्यानुमिति-

विशेष्यते । काव्यानुमितिर्नाम काव्यशब्देनानुमेयविषयिणी प्रमा । अनुमिति-प्रमाविषयोऽनुमेयोऽर्थ इति अर्थश्च परामृश्यते । काव्यशब्दः यदा वाच्यमर्थं बोधयति तदा स वाचकः, यदा त्वनुमेयार्थबोधकस्तदानुमापकः (व्याप्यः) । तस्य च व्याप्यस्य व्यापकरूपार्थबोधन एव सामर्थ्यम् । अनुमितस्तु अर्थः अर्थान्तरं नानुमापयत्येव । व्याप्यस्य व्यापकबोधने व्याप्तिज्ञानं व्यापारः (व्याप्य-व्यापकभावः) । अर्थान्तरबोधने को व्यापार इति प्रश्नस्य नास्त्येवोत्तरम् । सम्बन्धतः कुतश्चिदिति स्वयं वचनेन, विद्यमानस्य व्याप्यव्यापकभावरूपस्य व्याप्तिज्ञानस्य तत्र प्राभवं नास्तीति चाङ्गीकृतं भवति । उचितं स्वाभिमतं व्यापारात्मकं कमपि सम्बन्धमवदतो महिम्नो मतं न विचारसहम् ।

इदमत्रावधेयम्—प्रतीयमानस्यार्थस्य व्यङ्ग्यत्वं नास्ति । वाच्यप्रतीयमानयोः कार्यकारणभावेनावस्थानात् । व्यङ्ग्यत्वं तु तयोः सहभावे सत्येवोपपद्यते । सहभावस्य चाभावेन तस्य व्यङ्ग्यत्वं न सम्भवति । अतस्तस्यानुमेयत्वमेव युक्तम् । सचेतनचमत्कारित्वमपि तस्य व्यङ्ग्यत्वेऽङ्गीक्रियमाण एव भवति । व्यङ्ग्यत्वाभावे च सचेतनचमत्कारित्वं नास्ति चेन्मास्त्विति महिममतं भाति । किञ्च, यत्र वाच्यादर्थाद् वस्तुमात्रस्य प्रतीतिस्तत्रापि व्यङ्ग्यत्वं नाङ्गीक्रियते तेन । किं तु अनुमेयत्वमेव । तत्र सचेतनस्य कस्यचिदपि चमत्कारो नापेक्ष्यते च । तस्य काव्यत्वमपि नास्ति, किं तु प्रहेलिकाप्रायमेव तदिति च लोचने निमील्य प्रवदन्नास्ते व्यक्तिविवेककारो महिमभट्ट इति विदाङ्कुर्वन्तु विद्वांसः ।।

---

## ध्वन्यालोकसारसङ्ग्रहः ।

काव्यार्थो द्विविधो हृद्यो वाच्यो व्यङ्ग्यश्च सम्मतः ।
वाच्यो निरूपितः सम्यक् पूर्वैर्भट्टोद्भटादिभिः ॥ १ ॥

आनन्दवर्धनाचार्यो व्यङ्ग्यार्थं ध्वनिसंज्ञितम् ।
स नास्ति भाक्तोऽनाख्येयश्चेति वादान् निबर्हयन् ॥ २ ॥

ध्वन्यालोके सहृदयानन्दनाय न्यरूपयत् ।
अधिकारी ध्वनेस्तत्त्वजिज्ञासुर्वाच्यतत्त्ववित् ॥ ३ ॥

प्रतीयमानं माधुर्यं लावण्यं ललनास्विव ।
महाकवीनां वाणीषु यतो विद्योऽस्त्यतो ध्वनिः ॥ ४ ॥

स चाप्यर्थः शब्दरूपं शरीरं समुपाश्रितः ।
आस्वाद्यते सहृदयैः क्रौञ्चशोको यथा मुनेः ॥ ५ ॥

वदनान्निर्गत श्लोकं प्राप्येत्येतन्निदर्शनम् ।
यत्र प्रधानवाक्यार्थो ध्वनिस्तत् काव्यमुत्तमम् ॥ ६ ॥

तस्यान्यवाक्यार्थेऽङ्गत्वे मध्यमं काव्यमुच्यते ।
अस्फुटत्वेऽविवक्षातस्तस्य तच्चित्रमित्यपि ॥ ७ ॥

काव्यमेवं त्रिधा भिन्नमित्येव ध्वनिकृन्मतम् ।
ध्वनेस्तत्त्वविवेकेन व्युत्पत्त्योद्बुद्धया कविः ॥ ८ ॥

अभ्यासेन च सत्काव्यकरणे शक्तिमाप्नुते ।
प्राधान्येनान्यथा वापि ध्वनिना सुविभूषिता ॥ ९ ॥

स्वभावोक्त्यादिभिर्वाच्यैरर्थैरपि च सत्कवेः ।
विन्दते नवतां वाणी पूर्वार्थस्पर्शवत्यपि ॥ १० ॥

काव्यार्थोऽनन्ततामेति काव्यस्यानन्त्यसम्भवात् ।
वाच्यस्यैवं सहृदयश्लाघ्यत्वं ध्वनिवन्मतम् ॥ ११ ॥

---

श्री

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः

पण्डितराजनीलकण्ठशास्त्रिविरचितया उज्जीवन्याख्यया व्याख्ययोल्लासितः।

## प्रथम उद्द्योतः।

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।**
**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥ १ ॥**

---

### उज्जीवनी।

शब्दब्रह्मणि रसभावादि-
व्यक्तेस्तत्त्वविवेकाकलने।
शब्दार्थाविव महितौ जगतो
मातरपितरौ सादरमीडे ॥

काव्यालङ्कारभूतस्य ध्वनेरालोचनात्मकम्।
ध्वन्यालोकं प्रणिन्ये यः श्रीमानानन्दवर्धनः ॥

तस्यैव वाचां याथार्थ्यस्योद्बोधनपरामिमाम्।
व्याख्यामुज्जीवनीं कुर्वे यथामति सतां मुदे ॥

शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकम् आशीर्वचनरूपमारचितं मङ्गलं ध्वनिकारः श्रीमदानन्दवर्धनाचार्यः शिष्यशिक्षायै ग्रन्थत उपनिबध्नाति—

उज्जीवनी ।

स्वेच्छेत्यादिना । स्वेच्छया न तु परप्रेरणया । केसरिणः केसरिरूपं धृतवतः । प्रपन्नानां शरणमुपेयुषां प्रह्लादादीनाम् आर्ति पीडां तद्धेतुनिराकरणेन नाशयतः । यद्वा, आर्तित्वेनाध्यवसितं हिरण्यकशिपुं छिन्दतः । शरण्यं भगवन्तं ये शरणं प्रपन्नास्तेषां प्रह्लादादीनां तद्वैरिणो हिरण्यकशिपोर्निग्रहद्वारा पीडापनोदनं निर्व्यूढवानिति तदुचितस्य केसरिरूपस्य परिग्रहोऽप्युपपन्नो भवति । मधुरिपोः हरेः । स्वच्छया निर्मलया, स्वस्यच्छायया कान्त्या । "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इति नानार्थकोशः । आयासितः खेदितः इन्दुर्यैस्ते तथाविधाः । आयासित इत्ययं सादृश्यलक्षकः शब्दः । बालचन्द्रातिशायि वक्रहृद्यत्वादि च व्यज्यते । नखा नखराः । वो युष्मान् व्याख्यातॄन् श्रोतॄंश्च त्रायन्तां रक्षन्तु । अत्र नखानां रक्षाकर्तृत्वोपन्यासेन प्रपन्नार्तिहरस्य नृहरेस्त-दितरप्रहरणानपेक्षयानायासेन दीनजनसंरक्षणदक्षता सूच्यते । प्रपन्नशब्देन कर्माकाङ्क्षया हरेः कर्मत्वेन भानम् ।

अत्र भगवन्नृसिंहगतः प्रपन्नार्तिपरिहारद्वारा तत्संरक्षणविषयक उत्साहो वीररसव्यपदेशहेतुः । अत एव वीररसानुगुणैर्वर्णैरोजोगुणः, दीर्घसमासरूपा सङ्घटनापि ।

ध्वनिनिरूपणोद्युक्तेन ग्रन्थकृता ध्वनेरविद्यमानत्वादिवादैः प्रतिवादित्वे-नाभिमतानां वैमत्यनिराकरणद्वारेण संरक्षणं प्रार्थ्यत इति प्रकृतार्थोऽनेन पद्येन सूच्यते ।

सहृदयालोकसहृदयहृदयालोकध्वन्यालोचनादिनामधेयान्तरैः सुविदिते ध्वन्यालोकनाम्नि काव्यालोके प्राधान्येन प्रतिपिपादयिषितो विषयः ध्वनि-निरूपणम् इति स्फुटमवगम्यते ।

किं नाम काव्यम् ? शब्दार्थात् [1]कवतेः [2]कौतेर्वा कर्तरि कविशब्दो निष्पद्यते। धातूनां क्रियार्थत्वाच्छब्दोऽयं धात्वर्थः शब्दानुकूलव्यापारात्मकक्रियापरो भवति । शब्द्यते (बोध्यते) अनेनेति व्युत्पत्त्या शब्दशब्दोऽयमर्थसाधनं परा-

१. 'कुङ्'शब्दे भ्वादिः। २. कु "शब्दे" अदादिः; धात्वोरनयोः "अच इः" इत्यौणादिकेन इप्रत्यये, अन्येभ्योऽपि दृश्यन्ते (३.२.७५) इति सूत्रेण विच् प्रत्यये वा कविशब्दो व्युत्पादयितुं शक्यम् ।

उज्जीवनी ।

मृशति । कवेः कर्म काव्यम् । कर्म च व्यापारात्मकम् । कविशब्दप्रवृत्ति-निमित्तं यो व्यापारः स एव कविशब्दाद् व्यापारे विहितेन प्रत्ययेनापि बोध्यते । येन व्यापारेण कश्चित् कविर्भवति तस्य कवेर्व्यापारो न खलु तस्मादतिरिक्तो भवितुमर्हति । स एव व्यपारस्तस्य कविव्यपदेशे निमित्तत्वं च प्रतिपद्यते । तथा च शब्दस्यैव काव्यत्वं सम्पद्यते । सहृदयहृदयाह्लादजनकस्यार्थस्य बोधने शब्दस्यैव सामर्थ्यम्, "अनन्यलभ्यः शब्दार्थ" इति न्यायात् । कविगतेन शब्द-प्रयोगानुकूलेन व्यापारेण शब्दज्ञानं, ज्ञायमानाच्च शब्दाद् वृत्त्या (अभिधया, लक्षणया, व्यञ्जनया वा) अर्थबोधात्मकं फलं च भवतीति सर्वानुभवसिद्धम् । काव्यशब्दाच्चाव्यवधानेन शब्द एव सङ्केतो गृह्यते । स च लोकोत्तराह्लाद-जनकमर्थं प्रतिपादयन् काव्यव्यपदेशविषयो भवति ।

किंच, शब्दशब्देनार्थवानेव शब्दो गृह्यते । शब्दसमूहात्मकं वाक्यम् । तच्च रमणीयमर्थं प्रदिपादयत् काव्यं भवति । वाक्यार्थश्च वाक्यतात्पर्यविषयीभूतोऽर्थः । अभिहितानां स्वस्ववृत्त्या पदैरुपस्थापितानां पदार्थानां आकाङ्क्षायोग्यतासन्नि-ध्यादिसहकारेण परस्परमन्वयबोधो भवतीत्यभिहितान्वयवादिनां मतम् । सहृदयहृदयाह्लादजननसमर्थेन तेन वाक्यार्थेन समाविष्ट एव शब्दसन्दर्भः काव्य व्यपदेशमर्हति । स चार्थः—

> वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
> प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।।
> योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।।

इति प्रदर्शितदिशा वक्त्रादिवैशिष्ट्यवशाद् वाच्यातिशायिचमत्कृतिजनक-मर्थान्तरं व्यक्त्या बोधयति । वस्तुतस्तु साक्षात् सङ्केतितार्थबोधकान्येव सन्ति पदानि । पदान्तरसमभिव्याहारे तु कस्यचित् पदार्थस्य पदार्थान्तरेण साकमन्वयस्य तात्पर्यस्य वानुपपत्तौ सत्यामर्थान्तरमुपस्थाप्यते व्यापारान्तरेण । यथा— "गङ्गायां घोषः" इत्यत्र गङ्गाशब्दमुख्यार्थस्य स्रोतसः घोषपदार्थेन (शबरगृहेण) अन्वयस्य बाधितत्वात् गङ्गाशब्दो लक्षणया गङ्गातीररूपमर्थं बोधयतीत्य-भ्युपगम्यते । गङ्गातीरे घोष इति प्रयोगे स्वायत्ते सत्यवाचकं लाक्षणिकं पदं प्रयोजनप्रतिपिपादयिषया प्रयुज्यते कविभिः । तच्च प्रयोजनं शैत्यपावनत्वादि

उज्जीवनी ।

प्रतीतिः । तस्य च बोधने व्यापारो व्यञ्जना । एवं चाभिधयाभिधेयस्यार्थस्य बोधकः शब्दो वाचकः, लक्षणया लक्ष्यार्थबोधने स शब्दो लक्षकः, व्यञ्जनया व्यङ्ग्यार्थबोधने स शब्दो व्यञ्जक इति च त्रैविध्यं प्रपद्यते शब्दः । लाक्षणिकस्यार्थस्य तु स्वात्ममात्रे चमत्कृतिजनकत्वं न विश्राम्यतीति शब्दाद् जायमानः सहृदयश्लाघ्योऽर्थौ वाच्यो व्यङ्ग्यश्चेति द्विविधः समाम्नातः । अत एव—

"योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ"

इति वदता (ध्वनिकारेण) काव्यसामान्यलक्षणं प्रथमतोऽभिहितम् । ततः—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥"

इति काव्यविशेष(उत्तमकाव्य)लक्षणं च श्रीमदानन्दवर्धनाचार्येण प्रोक्तम् । सूरिभिः प्रथमैर्विद्वद्भिः वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जनक्षमस्य शब्दस्य यथा ध्वनिरिति व्यपदेशः कृतः, तथा अन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य रमणीयार्थप्रतिपादकस्य शब्दसन्दर्भात्मकस्य काव्यविशेषस्य ध्वनिरिति संज्ञा कृतेति लक्षणवाक्यार्थः सम्पद्यते । अत एव श्रीमदानन्दवर्धनाचार्यो ध्वनिसंज्ञोपज्ञाता ध्वनिकार इति च प्रसिद्धिमुपगतो विद्वत्परिषत्सु ।

श्रूयमाणस्य [1]शब्दस्य स्फोटाभिव्यञ्जकस्य ध्वनिसंज्ञा वैयाकरणैरभ्युपगता । तदनुसारेण उपसर्जनीकृतवाच्यव्यङ्ग्याभिव्यञ्जकस्य सहृदयहृदयाह्लादजनकस्य शब्दस्यापि ध्वनिसंज्ञा इदंप्रथमतया श्रीमदानन्दवर्धनाचार्येण स्वीकृता । ध्वनति ध्वनयति वा 'ध्वनिः' व्यञ्जकः शब्दः व्यञ्जकोऽर्थः, ध्वन्यतेऽनेनेति 'ध्वनिः' 'व्यञ्जनाव्यापारः', ध्वन्यत इति 'ध्वनिः' 'व्यङ्ग्योऽर्थः'

---

१. अथ शब्दानुशासनं०० अथ गौरित्यत्र कः शब्दः । किं यत्तत् सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः ? नेत्याह । द्रव्यं नाम तत्०० कस्तर्हि शब्दः येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः । अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद् यथा-शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवकः इति ध्वनिं कुर्वन् एवमुच्यते, तस्माद् ध्वनिः शब्दः" पातञ्जलमहाभाष्यम् (१ अ० १पा० १आ०)

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ २ ॥

---

उज्जीवनी ।

ध्वन्यतेऽस्मिन्निति ध्वनिः (व्यङ्ग्यप्रधानं काव्यम्) इति पञ्चस्वर्थेषु ध्वनिशब्दस्य सङ्केतो ग्रहीतुं शक्यम् । इत्थं च ध्वनिशब्देन समभिव्याहृतविशेष्यानुसारेण ते तेऽर्थाः सङ्केतिता बोध्यन्ते ।

सङ्केतितादर्थादतिरिक्तस्य ध्वन्याख्यस्य प्रतीयमानस्यार्थस्य सद्भावे समर्थिते सत्येव, यत्र सोऽर्थः प्राधान्येन प्रतीतिविषयतां प्रपद्यते तदुत्तमं काव्यं ध्वनिसंज्ञितमिति वचनस्योचिततया, ध्वनेः (व्यङ्ग्यार्थस्य) अविद्यमानत्वादिवादैः विप्रतिपद्यमानानां तद्विषये वैमत्यमुपन्यस्य, तन्निरसनपूर्वकं ध्वनेर्निरूपणं प्रतिजानीते—काव्यस्यात्मेति । ध्वनिरिति संज्ञाशब्दोऽयम् । ध्वनिरिति ध्वनिसंज्ञितः, काव्यस्य सहृदयाह्लादजनकशब्दसन्दर्भस्य, आत्मा सारभूतः अर्थः इति सामानाधिकरण्येन निर्देशाद् ध्वनिसंज्ञितो व्यङ्ग्योऽर्थः इत्यर्थः सम्पद्यते । इत्थं च व्यञ्जकः शब्दः, व्यञ्जकोऽर्थः, व्यञ्जनाव्यापारः, व्यङ्ग्योऽर्थः व्यङ्ग्यार्थप्रधानं काव्यमित्येवंरूपाणां [1]यावतामर्थानामितिकरणयुक्तेन संज्ञा-

---

१. यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः । अर्थसम्प्रत्ययाच्च व्यवहारः । न्यायसूत्रवात्स्यायनभाष्यम् । (Chaukhamba Skt. Series Edn. P. 62)
खद्योतः—यावदर्थमिति । अर्था हि सर्वदा सर्वथा सर्वत्र नामधेयेनान्विताः । नास्ति सोऽर्थो यः कदाचिन्नामधेयेन वियुज्यते । तदनेन नामधेयतादात्म्यमर्थानाम् । अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येनावगम्यन्ते गौरित्यर्थः अश्व इत्यर्थः इति । उक्तं च सर्वसिद्धान्तसङ्ग्रहे—

शब्दस्यार्थस्य सम्बन्धस्तादात्म्यं शाब्दिकैर्मतम् ।
'अतः शब्दात्मकं विश्वं शब्दब्रह्मविदां मते' । इति ।

भाष्यचन्द्रे चोक्तं—संज्ञा शब्दो हि त्रयाणां भवति । स्वस्य, स्वार्थस्य स्वार्थज्ञानस्येति । तदुक्तं साङ्ख्ये—'घट इति शब्दः', 'घट इत्यर्थः', 'घट इति ज्ञानम्' इति ।

उज्जीवनी ।

शब्देन निर्देशो भवतीति ज्ञेयम् । एतदभिप्रायकत्वमेव काव्यस्यात्मा ध्वनि-संज्ञित: (अर्थ:) इति स्वयं व्याख्यातवतो ध्वन्यालोककर्तुरिति शक्यं वक्तुम् । किंच, 'यत्रार्थ: शब्दो वा' इति काव्यविशेषलक्षणपद्ये च ध्वनिरिति काव्यविशेष: इत्यत्र काव्यविशेषस्य सुकविप्रयुक्तस्य शब्दविशेषरूपस्य विशेष्यत्वेन निर्देशात् यस्मिन् काव्यविशेषे व्यञ्जक: शब्दो व्यञ्जकोऽर्थो वा तमर्थं व्यनक्ति स काव्यविशेषो ध्वनिसंज्ञित इति अर्थ: सम्पद्यते । एवं च ध्वनिरिति काव्यविशेष इत्यनेन काव्यात्मकशब्दसन्दर्भस्य ध्वनिसंज्ञा. ध्वनिरिति काव्यस्यात्मा इत्यनेन व्यङ्ग्यस्यार्थस्य च ध्वनिसंज्ञा ध्वनिकारेणैव सुनिपुणं निरूपिता ।

स च बुधै: विद्वद्भि: पूर्वैरलङ्कारशास्त्रकारै: अभिधालक्षणाभ्यां भिन्नेन तृतीयेन व्यञ्जनाव्यापारेण प्रतीयत इति सम्यगाम्नात: ।

अस्मिन् विषये बुधै: पूर्वं किं समाम्नातमिति पश्याम:—वामन:—काव्यं ग्राह्यमलङ्कारात् (वा. सू. १. १. १.) काव्यं खलु ग्राह्यमुपादेयं भवति, अलङ्कारात् । काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयो: शब्दार्थयोर्वर्तते । भक्त्या तु शब्दार्थमात्रवचनोऽत्र गृह्यते । कोऽसावलङ्कार इत्याह—सौन्दर्यमलङ्कार: (१. १. २) अलङ्कृतिरलङ्कार: । करणव्युत्पत्त्या पुनरलङ्कारशब्दोऽयमुपमादिषु वर्तते । स दोषगुणालङ्कारहानोपादानाभ्यां (वा. सू. १. १. ३) । स खल्वलङ्कारो दोषहानाद् गुणालङ्कारादानाच्च सम्पाद्य: कवे: । रीतिरात्मा काव्यस्य (वा. सू. १. २. ४.) रीतिर्नामेयमात्मा काव्यस्य । शरीरस्येवेति वाक्यशेष: । विशिष्टा पदरचना रीति: (वा. सू. १. २. ७) विशेषवती पदानां रचना रीति: । विशेषो गुणात्मा (वा. सू. १. २. ८) वक्ष्यमाणगुणरूपो विशेष: । काव्यशोभाया: कर्तारो गुणा: (३. १. १) तदतिशयहेतवस्त्वलङ्कारा: (३. १. २) तत्र श्लोकौ—

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभि: सदलङ्कारविकल्पकल्पनाभि: ॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनाया ।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥

चमत्कृतिजनकार्थप्रतिपादकस्य शब्दसन्दर्भात्मन: काव्यस्य काव्यपदव्यपदेशविषयत्वं दोषशून्यत्वेन गुणालङ्कारसाहित्येन च सम्पद्यते । काव्यशोभाधायका:

उज्जीवनी ।

शब्दगता अर्थगताश्च ओजःप्रसादादयो गुणाः, तदतिशयहेतवः शब्दगता अनुप्रासादयः, अर्थगता उपमादयश्चालङ्काराः । तत्र गुणा नित्या नियताः । अलङ्कारास्त्वनियताः । तैरलङ्कृतं काव्यम् उपादेयम् ।

पूर्वे अलङ्कारशास्त्रकारा भामहदण्डिभट्टोद्भटप्रतीहारेन्दुराजप्रभृतयः वाच्यार्थोपस्कारकत्वमलङ्कारसामान्यलक्षणं मन्वानाः वस्त्वलङ्काररसात्मना त्रिविधस्यापि प्रतीयमानस्यार्थस्य अलङ्कारत्वमभ्युपगतवन्तः । तथाहि— पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्तयाक्षेपव्याजस्तुत्युपमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्यार्थोपस्कारकत्वेन, रूपकदीपकापह्नुतितुल्ययोगितादावुपमाद्यलङ्कारो वाच्योपस्कारकत्वेन, रसवत्प्रेयऊर्जस्विसमाहितादौ रसभावादिर्वाच्यशोभाहेतुत्वेन चालङ्कारसामान्यलक्षणाक्रान्तत्वात् ।

तदेवं पूर्वैरलङ्कारशास्त्रप्रणेतृभिः ध्वन्यमानमर्थं वाच्योपस्कारकतयालङ्कारपक्षनिक्षिप्तं मन्यमानैः अलङ्कारा एव काव्ये प्रधानमिति सिद्धान्तितम् । अतस्तदानीं "प्राधान्येन व्यवहारा भवन्ती"ति न्यायेन तच्छास्त्रस्यालङ्कारशास्त्रमिति व्यपदेशश्च सप्रमाण एवासीत् । ततस्तेभ्योऽर्वाचीनैर्गूढविचारशालिभिरानन्दवर्धनाचार्यैः स्वप्रणीते ध्वन्यालोकेऽस्मिन् ग्रन्थे ध्वन्यमानस्यैवार्थस्य अलङ्कार्यत्वेन प्राधान्ये स्थापितेऽपि प्राचीनव्यपदेशप्रणाल्यनुसारेण अस्यापि ग्रन्थस्य अलङ्कारनाम्नैव व्यपदेशोऽभ्युपगतः । दृश्यते चैतत् प्रत्युद्योतान्तं ध्वन्यालोकनाम्नि काव्यालङ्कारे इति केषुचित् पुस्तकेषु ।

ततो ध्वनिदर्शनादनन्तरकालिको जगन्नाथपण्डितो वाक्यार्थोपस्कारकत्वमलङ्कारसामान्यलक्षणमाचष्ट । वाक्यार्थो नाम वाक्यतात्पर्यविषयीभूतोऽर्थः । स च द्विविधो वाच्यो व्यङ्ग्यश्च । वाच्यो वस्त्वलङ्कारात्मना द्विविधः । व्यङ्ग्यो वस्त्वलङ्काररसात्मना त्रिविधः । एवं वाच्यवस्तुनो, वाच्यालङ्कारस्य, व्यङ्ग्यवस्तुनो व्यङ्ग्यालङ्कारस्य, व्यङ्ग्यभूतरसस्य चेति पञ्चविधतां प्राप्तस्य वाक्यार्थस्य शोभाधायकानां उपमादीनामलङ्कारत्वं सिध्यतीति, व्यङ्ग्यार्थगतानां अलङ्काराणामलङ्कार्यत्वेन प्राधान्येऽपि अलङ्कारसामान्यलक्षणाक्रान्तैस्तैरलङ्कारैरलङ्कृतं काव्यं सुन्दरं भवति । अत एवोक्तं वामनेन—सौन्दर्यमलङ्कार इति, काव्यं ग्राह्यमलङ्कारादिति च ।

बुधैः काव्यतत्त्वविद्भिः, काव्यस्यात्मा ध्वनि[1]संज्ञितः परम्परया यः समाम्ना[2]तः सम्यग् आ समन्ताद् म्नातः प्रकटितः। तस्य सहृदयमनःप्रकाशमानस्याप्यभावमन्ये जगदुः। तदभाववादिनां चामी विकल्पाः सम्भवन्ति।

---

उज्जीवनी।

प्रकृतमनुसरामः। काव्यस्यात्मा ध्वनिरित्यत्र पूर्वमेव बुधैः अभिधालक्षणातो भिन्नेन तृतीयेन व्यञ्जनाख्येन व्यापारेण प्रतीयमानोऽर्थोऽभ्युपगतः समाम्नातश्च। तथापि गुणालङ्कारादिभिः शब्दगतैः, वाच्यार्थगतैः, व्यङ्ग्यार्थगतैश्च काव्यस्य सौन्दर्यं पश्यद्भिः व्यङ्ग्यस्याप्यर्थस्य काव्यालङ्कारत्वेन परिगणना कृता। तथापि अर्थः प्रतीयमानो नास्तीति केनचिदपि नाभ्यधायि। तदेवम् एतेन पद्येन ध्वनिसंज्ञितस्य अर्थस्य स्वरूपनिरूपणं प्रतिज्ञायते ग्रन्थकारेण। स च पूर्वमेव बुधैः समाम्नात इति च स्वयमेवोच्यते। अन्यैर्निरूपितस्य तस्य ग्रन्थेऽस्मिन् पुनर्निरूपणं किमर्थमित्याशङ्कां परिजिहीर्षुः आनन्दवर्धनः प्रतिवादित्वेनाभिमतानां केषाञ्चित् काश्चित् विप्रतिपत्तीर्दर्शयति—तस्याभावमित्यादीना। तस्य ध्वनेः प्रतीयमानार्थस्य, अभावमविद्यमानतां जगदुः कथयामासुः। अन्ये केचित् तस्य ध्वनेः भाक्तत्वं भक्ति (लक्षणा) जन्यप्रतीतिविषयत्वं आहुः वदन्ति। वर्तमाननिर्देशादिदानीन्तनानामपि अयमाशयोऽनुवर्तत इति सूच्यते। केचिदपरे तदीयं ध्वनिसम्बन्धि तत्त्वं ध्वनिव्यपदेशविषयत्वं वाचामविषये स्थितमनाख्येयमित्यूचुरवोचन्। तेन तेन हेतुना, सहृदयानां मनसि प्रीतिमुत्पादयितुं ध्वनेः व्यङ्ग्यार्थस्य, स्वरूपं ब्रूमः कथयामः।

तदेव विवृणोति—बुधैरिति। काव्यतत्त्वविद्भिः काव्यस्य तत्त्वं काव्यत्वं काव्यपदव्यपदेश्यत्वं जानद्भिः ध्वनिसंज्ञितः ध्वनिसंज्ञाविशिष्टः काव्यस्य इष्टार्थव्यवच्छिन्नपदसमुदायात्मकस्य आत्मा सारभूतोऽर्थः, परम्परया अविच्छिन्नेन प्रवाहेण, आ समन्ताद् म्नातः अभ्यासेन आवृत्त्या प्रकटितः प्रकटीकृतः। तस्य ध्वनेः, सहृदयानां मनसि हृदये, प्रकाशमानस्यापि, अभावमविद्यमानतां, अन्ये जगदुः ऊचुः। तेन ब्रूम इत्यनेन, निरूपयिष्यमाणस्य

---

१. 'निरिति मं०' ड. ढ. ण. २. 'ख्या०' च. भ. ज.

तत्र केचिदाचक्षीरन् । शब्दार्थशरीरं तावत् काव्यम् । तत्र च शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव । अर्थगताश्चोपमादयः[1], वर्णसङ्घटनाधर्माश्च ये माधुर्यादयः तेऽपि प्रतीयन्ते । तदनतिरिक्तवृत्तयो वृत्तयोऽपि याः [2]कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम् । रीतयश्च वैदर्भीप्रभृतयः । तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति ॥

---

उज्जीवनी ।

ध्वनेः दृढतरप्रतिपत्तिसम्पादनाय विप्रतिपत्तिः सम्भावितेति द्योतनाय जगदुरिति परोक्षभूते लकारः प्रयुक्तः । तस्य ध्वनिरूपस्यार्थस्य, अभावमविद्यमानत्वं वदतां च, अमी वक्ष्यमाणप्रकाराः, विकल्पाः विविधाः कल्पाः पक्षाः सम्भवन्ति ।

वस्तुतस्तु अभावं प्रति प्रतियोगिनः कारणत्वात् सर्वथा तेषां मते यदि नास्ति सोऽर्थः, तस्य शशशृङ्गायमानस्य अभावो वक्तुं नोचितः । नोक्तं च तथा तैः कैश्चिदपि ।

अपरैः ध्वनिकारदर्शितदिशा सोऽर्थो न प्रतिपादित इत्येव । अतः ध्वनिकृन्मतानुसारेण तैरनुक्तत्वादेव ते तदभाववादिनः संकल्पिताः, तेषां कल्पाश्च प्रदर्श्यन्ते—तत्रेति । शब्दार्थेति । शब्दः (सुकविप्रयुक्तः) एव अर्थः (पदार्थः) शरीरं यस्य तत् काव्यम् । तदुक्तं दण्डिना—"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली" इति । तादृशाच्च शब्दसन्दर्भात्मकात् काव्यादभिधया बोधितानां तत्तदर्थानां आकाङ्क्षादिसाहाय्येन सहृदयश्लाघ्यस्य वाक्यतात्पर्यविषयीभूतस्यार्थस्य प्रतीतिर्जायते । ततो वक्तृबोद्धव्यादिवैशिष्ट्यात् प्रतिभाशालिनामर्थान्तरबोधो व्यञ्जनया भवति । तद्व्यञ्जकत्वं च न केवलं शब्दस्य, किन्तु, पदपदैकदेशवर्णरचनाप्रबन्धादीनां नाट्याङ्गानां सर्वेषामपि । प्राचामप्येतदभिमतमेव । काव्यस्वरूपनिरूपणाय प्रवृत्तमलङ्कारशास्त्रम् । शब्दगता अनुप्रासादयः चारुत्वहेतवः काव्यरामणीयकप्रयोजकाः । रसाद्यनुगतः प्रकृष्टो न्यासो वर्णविन्यासः अनुप्रास इत्युक्तः । अर्थगता उपमादयश्च अर्थालङ्काराः । रसाद्यनुगतानां वर्णानां सङ्घटनया माधुर्यादयो गुणाश्च प्रतीयन्ते प्रतीतिविषयीक्रियन्ते । रसाद्यनुगुणवर्णव्यवहारो वृत्तिरित्युच्यते । तदुक्तं

---

१. 'यः । संङ्घ' क. ख. ग  २. 'का०' क. ग. च.

उज्जीवनी ।

भट्टोद्भटेन—'रसाभिव्यक्त्यनुगुणवर्णव्यवहारात्मिकाः वृत्तयः । ताश्च तिस्रः, उपनागरिकापरुषाग्राम्यात्मभेदात् ।

१. तत्र उपनागरिका—

सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः ।
स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः ॥

२. परुषा—

शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता ।
परुषा नाम वृत्तिः स्याद् ह्लह्वह्याद्यैश्च संता ॥

३. ग्राम्या—

शेषैर्वर्णैर्यथायोगं कथिता कोमलाख्यया ।
ग्राम्यां वृत्ति प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥

ततः

सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक् पृथगनुप्रासमुशन्ति कवयः सदा ॥

इति तदनतिरिक्तवृत्तयः गुणानतिरिक्ताः माधुर्यादिगुणात्मिका वृत्तयश्च उपनागरिकापरुषाग्राम्याश्च प्रकाशिताः ।

एतासु वृत्तिषु पृथक् पृथगुपनिबध्यमानमनुप्रासं कवयोऽभिलषन्ति । तेन उपनागरिकानुप्रासः, परुषानुप्रासः, ग्राम्यानुप्रासश्चेति त्रयोऽनुप्रासाश्च वर्ण्यन्ते ।

तेन दोषशून्यत्वे सति गुणालङ्कारसहितत्वं काव्यलक्षणम् अभ्युपगतं प्राचीनैरालङ्कारिकैरित्यवगन्तुं शक्यम् ।

'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इत्युक्तप्रकारेण काव्यस्य शोभाया आधायकान् सर्वानपि धर्मान् (अनुप्रासवत्त्व, उपमावत्त्व रसवत्त्वादीन्) काव्यालङ्कारान् मन्यमानास्तैः काव्यमलङ्कृतं भवतीति प्रत्यपद्यन्त ।

उज्जीवनी ।

किञ्च काव्यालङ्कारसारसङ्ग्रहे भट्टोद्भटेन पुनरुक्तवदाभासालङ्कारं लिलक्षयिषुणा पुनरुक्तवदाभासं नाम काव्यमेव लक्षितं "पुनरुक्ताभासमभिन्न-वस्त्विवोद्भासि भिन्नरूपपदम्" इति ।

तद् व्याचष्टे प्रतीहारेन्दुराजः—अभिन्नं वस्तु यस्मिन्नुद्भासते तदभिन्नवस्तु ! भिन्नं रूपं ययोः (पदयोः) ते भिन्नरूपे ; अभिन्नवस्त्विवाभीक्ष्णमुद्भासेते भिन्नरूपे पदे यस्मिंस्तद् अभिन्नवस्त्विवोद्भासिभिन्नरूपपदम् । x x अनेन च यत्र भिन्नरूपे पदे एकार्थवदवभासेते तत् पुनरुक्तवदाभासं काव्यम् अलङ्कार्यं निर्दिष्टम् ॥ x x x x पुनरुक्तवदाभासमाने च पदे तस्यालङ्कारः ! अत्रा-लङ्कार्यं च यत् काव्यं, तद्धर्मत्वेन पुनरुक्तवदाभासमानयोः पदयोरलङ्कारत्व-मुक्तं न तु स्वतन्त्रतया । फलं चैवमभिधानस्य पुनरुक्तवदाभासमानपदसमन्व-यस्यालङ्कारताख्यापनम् । अलङ्कारस्य अलङ्कार्यपरतन्त्रया निरूपणे क्रियमाणे सुष्ठु स्वरूपं निरूपितं भवति । स्वातन्त्र्यवस्थितस्य तस्यानलङ्का रत्वात् समुद्गकस्थितहारकेयूरपारिहार्याद्यलङ्कारवत् । अतः पुनरुक्तवदा भासत्वस्यालङ्कारताख्यापनाय काव्यपरतन्त्रतया निर्देशो युक्त एव" इति

वामनस्तु— 'रीतिरात्मा काव्यस्य" इत्युक्तवान् । शरीरस्यात्मेव काव्यशरीरस्य रीतिरात्मस्थानीयेति यावत् । "विशिष्टा पदरचना रीतिः" इति सूत्रेण गुणविशिष्टां पदसङ्घटनां रीतिं मन्यते । सा त्रिधा वैदर्भी, गौडीया, पाञ्चाली चेति । तत्र समग्रगुणोपेता वैदर्भी, ओजःकान्तिमती गौडीया, माधुर्य सौकुमार्योपपन्ना पाञ्चाली । एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितम् इति च । एतस्या रीतेः समावेशात् काव्यस्य शोभाधानानुभवात् सैव काव्यस्यात्मा भवतीति तेषामाशयः । वाच्यलक्ष्यव्यतिरिक्तस्य कस्यचिदर्थस्य तैः अनाकलनात् तेऽभाववादिनः कल्पिता आनन्दवर्धनेन"

इदमत्रावधेयम्—

रमणीयार्थप्रतिपादकः शब्दसन्दर्भः काव्यशरीरम् । तत्प्रतिपाद्योऽर्थः काव्यस्यात्मस्थानीयः । स द्विविधः, वाच्यो व्यङ्ग्यश्च । अभिधया प्रतिपाद्य-मानः वाच्यः व्यञ्जनया प्रतिपाद्यमानश्च व्यङ्ग्यः । शब्दस्य अनुप्रासादयोऽ लङ्काराः । गुणाश्च—

अन्ये ब्रूयु:—नास्त्येव ध्वनि:। प्रसिद्धप्रस्थानव्यतिरेकिण: काव्यप्रकारस्य काव्यत्वहाने: सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्षणम्। न चोक्तप्रस्थानाति[1]रेकिणो मार्गस्य तत् सम्भवति। न च तत्समयान्त:पातिन:[2] सहृदयान् कांश्चित् परिकल्प्य तत्प्रसिद्धया ध्वनौ काव्यव्यपदेश: प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते॥

---

उज्जीवनी।

श्लेष: प्रसाद: समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोज:कान्तिसमाधय:।

इति दश शब्दगुणा:। त एव च दश अर्थगुणा:। उपमादयो वाच्यालङ्कारा:। व्यङ्ग्यानां शृङ्गारादिरसरूपाणामर्थानां च अलङ्कारा: सन्ति। गुणाश्च माधुर्यौज:प्रसादाख्यास्त्रय:। तत्तद्रसानुगुणवर्णव्यवहाररूपासु परुषोपनागरिकाग्राम्यात्मिकासु तिसृषु वृत्तिषु सरूपव्यञ्जनविन्यासरूपमनुप्रासं शब्दालङ्कारं मन्यन्ते। एवं रसानामपि माधुर्यादिगुणवत्त्वेन काव्यशोभाधायकत्वस्यैवाभिमतत्वात् रसानां काव्याङ्गत्वमेव पूर्वैरङ्गीकृतम्।

अत: काव्यशोभाकराणां सर्वेषामलङ्कारत्वेन परिगणना कृतेति प्रेयोरसवदूर्जस्विसमाहितादीनामलङ्कारमध्ये परिगणनात् स्पष्टं भवति। उद्भटभट्टेन रसवदलङ्कार एवं लक्षित:—

"रसवद् दर्शितस्पष्टशृङ्गारादिरसोदयम्।
स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्॥ इति,

स्वशब्दा: शृङ्गारादेर्वाचका: शृङ्गारादय: शब्दा:। स्थायिनो रसानामुपादानकारणप्रख्या रत्यादयो नव भावा:। सञ्चारिणस्तु, निर्वेदादयो रसानामवस्थाविशेषरूपा:। विभावास्तु तेषां निमित्तकारणभूता योषिदादय:, ऋतुमाल्यानुलेपनादयश्च। आङ्गिकादयस्तु चत्वारो रसानां कार्यभूता अभिनया:, एतेषां स्वशब्दादीनां पञ्चानां समस्तव्यस्ततया आस्पदत्वात् येन काव्येन स्फुटरूपतया शृङ्गारादिरसाविर्भावो दृश्यते तत् काव्यं रसवत्। रसा: खलु तस्यालङ्कार:" इति च प्रतीहारेन्दुराजेन व्याख्यातम्।

---

1. 'कामि०' क. 2. 'न एव कांश्चित् स०' क. ख. ग.

पुनरपरे तस्याभावमन्यथा कथयेयुः । न सम्भवत्येव ध्वनिर्नामापूर्वः कश्चित् । कामनीयकमनतिवर्तमानस्य तस्य उक्तेष्वेव चारुत्वहेतुष्वन्तर्भावात् । तेषामन्यतमस्यैव वा[1] अपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं[2] स्यात् ।

उज्जीवनी ।

एवं कैश्चिदुपनागरिकाद्या वृत्तयः काव्ये प्राधान्येन स्वीकृताः, अन्यैः रीतयश्च वैदर्भ्याद्याः । सर्वा अपि ताः श्रवणविषयीभूताः । श्रुता इत्यर्थः तद्व्यतिरिक्तः तद्भिन्नः ध्वनिर्नामायं क इति प्रतिवादिनो वदेयुरित्यर्थः । इति अभाववादिनां प्रथमा विप्रतिपत्तिः प्रदर्शिता ।

अथ द्वितीया विप्रतिपत्तिः प्रदर्श्यते—अन्ये ब्रूयुरिति । सहृदयहृदयाह्लाद्यर्थप्रतिपादकशब्दसन्दर्भरूपपदार्थात्मकत्वं काव्यस्य लक्षणं प्राचामभिमतम् ; इदमेव प्रसिद्धं प्रस्थान पद्धतिरूपमिति यावत् । तदतिरिक्तस्य काव्यप्रकारस्य काव्यभेदत्वेनाङ्गीक्रियमाणस्य काव्यत्वं न विचारसहम् ।। उक्तं च यत् प्रस्थानं तदतिरेकिणः तद्बहिर्भूतस्य मार्गस्य तत् काव्यत्वं न सम्भवति ।

अन्ये ब्रूयुरिति सम्भाव्य द्वितीयमभाववादिनो मतमिति प्रकल्प्य यदुक्तं नास्त्येव ध्वनिरित्यादिकं तन्नान्यत्वेनाभिमतानामाशयाविष्करणात्मकं, किन्तु ध्वनिकारस्य सम्भावनाप्रकारविशदीकरणरूपमेव । वस्तुतोऽविद्यमानानां मतेऽविद्यमानस्य वस्तुनो निषेधस्यानवकाशात् । यदि तु तत्समयस्यान्तः प्रविष्टाः कतिपये सहृदयाः प्रथमं परिकल्प्यन्ते, तेषु अयं ध्वनिः प्रसिद्धः । ततस्तत्र काव्यव्यपदेशः प्रवर्त्यत इत्यभिमन्यते तथापि सकलानां विदुषां बुधानां, मनोग्राहितां हृदयग्रहणविषयतां नैतत् प्रतिपद्यते ।

तृतीयमभाववादिमतं प्रस्तौति—पुनरपरे इति । अपरे पुनः ध्वनिमन्यथा प्रकारान्तरेण प्रत्यवतिष्ठेरन् इति सम्भावना पूर्ववदेव । तदेव विवृणोति—न सम्भवत्येवेति । अपूर्वः पूर्वैरसम्प्रतिपन्नः नूतन इति यावत् । ध्वनिर्नाम कश्चिदर्थो न सम्भवति न विद्यते । यदभिमतं कामनीयकं काव्यार्थस्य सहृदयमनोरञ्जकत्वं नाम, तदनतिवर्तमानस्य सहृदयाह्लादकत्वेनैवावस्थितस्य,

---

१. 'वा स०' क. ख. ग.	२. 'कथितं' क. ख.

किञ्च वाग्विकल्पानामानन्त्यात् सम्भवत्यपि वा कस्मिंश्चित् काव्य-[1]लक्षणविधायिभिः प्रसिद्धैः अप्रदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति यदेतदलीक सहृदयत्वभावनामुकुलि[2]तलोचनैर्नृत्यते, तत्र हेतुं न विद्मः। सहस्रशो हि महात्मभिरन्यैरलङ्कारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च। न तेषा-मेषा दशा श्रूयते। तस्मात् प्रवादमात्रं ध्वनिः। न त्वस्य क्षोदक्षमं तत्त्वं किञ्चिदपि प्रकाशयितुं शक्यम्।

तथा चान्येन कृत एवात्र श्लोकः—

यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति<br>व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत्।<br>काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसन् जडो<br>नो विद्मोऽभिदधाति[3] किं सुमतिना पृष्टः स्वरूपं ध्वनेः॥

---

## उज्जीवनी।

तस्य ध्वनेः, उक्तेषु चारुत्वहेतुषु गुणालङ्काररूपेष्वेवान्तर्भावानुभवात्। न च तेषां गुणानामलङ्काराणां वा मध्यादेकस्य, अपूर्वा पूर्वमभूता समाख्या ध्वनिरिति संज्ञैव क्रियत इति वाच्यम्। तस्य विचारासहत्वात्।

अथवा अस्तु ध्वनिः। वाग्विकल्पानामानन्त्यात्। वक्तीति व्युत्पत्त्या वाचां शब्दानां, उच्यत इति व्युत्पत्त्या वाचामर्थानां उच्यतेऽनयेति व्युत्पत्त्या वाचामभिधाव्यापाराणां च बहुविधत्वात्। तथापि प्रसिद्धैः प्रख्यातैः, काव्यलक्षणविधायिभिः गुणालङ्कारोपस्कृतचमत्कृतिजनकार्थबोधकशब्द-सन्दर्भवत्त्वरूपं काव्यलक्षणं कृतवद्भिः कैश्चिदपि अप्रदर्शिते प्रकारलेशे, कस्मिंश्चित् काव्यप्रकारे ध्वनिः ध्वनिरिति, अलीकया मिथ्याभूतया, सहृदयत्वभावनया सहृदयत्वाभिमानेन लोचने मुकुलीकृत्य, यद् नृत्यते तत्र को हेतुरिति न वयं जानीमः। अन्यैर्महात्मभिरलङ्कारशास्त्रकारैः सहस्रशः अलङ्कारप्रकाराः, अलङ्क्रियतेऽनेन (काव्यम्) इति व्युत्पत्त्या यैः काव्यमलङ्कृत

---

१. 'लक्ष्मवि०' क. भ. ञ.   २. 'लीकृत०' क

३. 'तु।' क.

भाक्तमाहुस्तमन्ये । अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः ।

उज्जीवनी ।

भवति तेषामलङ्काराणां गुणानां रसभावादीनामपि प्रभेदाः प्रकाशिताः पूर्वम्, अद्यापि प्रकाश्यन्ते च । तेषामपि महात्मनां एषा दशा अयमवस्थाविशेषो यो ध्वनिवादिनां स न श्रवणगोचरतां प्रतिपद्यते । तस्माद् ध्वनिरिति प्रवाद एव न वस्तुतोऽस्ति । अस्य ध्वनेः क्षोदक्षमं तत्त्वं ध्वनित्वं ध्वनिव्यपदेशविषयतायोग्यत्वं किञ्चिदपि प्रकाशयितुं न शक्यम् । अत्र केनचिदन्येन ध्वनिकारसमानकालभवेन मनोरथनाम्ना कविना कृतं कमपि श्लोकं प्रमाणत्वेनाह—यस्मिन्निति । मनः-प्रह्लादि हृदयानन्दनं, सालङ्कृति काव्यशोभाकरैर्गुणैस्तदतिशयहेतुभिर-लङ्कारैश्च सुन्दरं, किञ्चन वस्तु कोऽप्यर्थरूपः पदार्थः, यस्मिन् काव्ये नास्ति न विद्यते । यत् काव्यं, व्युत्पन्नैः व्युत्पत्तिमद्भिः कर्तृभिः, वचनैः वाग्व्यापारैः न रचितं च । वक्रोक्त्या शून्यं विरहितं च । सादृश्याल्लक्षणा वक्रोक्तिरिति लक्षणलक्षितेनालङ्कारेण रहितमित्यर्थः । तत् तादृशं काव्यं, ध्वनिना समन्वितं युक्तमिति प्रीत्या प्रमोदेन प्रशंसन् प्रख्यापयन्, जडः मन्दमतिः, सुमतिना मतिमता, ध्वनेः स्वरूपं पृष्टः अनुयुक्तः किम् अभिदधाति किं वदतीति नो विद्मः न जानीमहे ।

एवमभाववादिनां मतं त्रेधा विभज्य प्रतिपादितम् । ध्वनिर्गुणा-लङ्कारेभ्यो न व्यतिरिक्तः इत्येकम् । व्यतिरिक्तत्वेपि न शोभाधायकः काव्यस्येति द्वितीयम् । शोभाधायकत्वेऽपि न सर्वेषामादरस्यास्पदमिति तृतीयम् ।

अन्येन केनचित् कृते अस्मिन् श्लोके मनःप्रह्लादि सालङ्कृति इति विशेषणाभ्यां सहृदयहृदयाह्लादिशब्दात्मकस्य काव्यस्य स्वरूपं निरूपितम् । तथा व्युत्पन्नै रचितमित्यनेन व्युत्पत्तेः काव्यकारणत्वं च प्रदर्शितम् ॥

काव्यात्मकशब्दात् प्रतीतिविषयस्यार्थस्योपस्थितिः भक्त्या भवतीति तस्य भाक्तत्वं वदतां मतमाह—भाक्तमिति । भक्तिर्नाम लक्षणाव्यापारः । तदुक्तं काव्यप्रकाशे—(P 40)

"मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते य सा लक्षणारोपिता क्रिया ॥"

उज्जीवनी ।

मुख्यार्थबाधस्तद्योगो रूढिप्रयोजनान्यतरच्च लक्षणाबीजम् । मुख्येन अमुख्योऽर्थो लक्ष्यते । यद्यपि गङ्गाशब्दवाच्योऽर्थः स्रोतोरूपः तीरात्मकमर्थं बोधयतीति व्यापारोऽयं वाच्यार्थनिष्ठस्तथापि गङ्गाशब्दस्य लाक्षणिकत्वमपि सम्भवति ।

तं सारभूतं वाच्यातिशायिसौन्दर्यजनकमर्थम्, अन्ये भाक्तं भक्तिजन्य-प्रतीतिविषयम् आहुः वदन्ति । अत्र आहुरिति वर्तमानार्थकलटः प्रयोगाद् अयं वादः अद्याप्यविच्छेदेन प्रवर्तत इति सूचितम् । अन्ये ध्वनिसंज्ञितं ध्वनिसंज्ञाविशिष्टं काव्यात्मानं काव्यस्य सारभूतं प्रतीयमानमर्थं, गुणवृत्ति गुणवृत्त्या अमुख्येन व्यापारेण प्रतिपाद्यमानमाहुः वदन्तीत्यर्थः ।

भट्टोद्भटस्तु – (Kavyalankarasarasangraha P. 10)

> 'श्रुत्या सम्बन्धविरहाद् यत् पदेन पदान्तरम् ।
> गुणवृत्ति प्रधानेन युज्यते रूपकं तु तत् ॥'

इति रूपकं लक्षितवान् । अस्यार्थस्तु—श्रुत्या निरन्तरार्थनिष्ठेन शब्दव्यापारेण सम्बन्धविरहात् पदान्तरसम्बन्धस्यानुपपद्यमानतया, पदान्तरमन्यत् पदं, गुणवृत्ति यत्रापरेण पदेन युज्यते तद्रूपकमिति ।

'अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते' इत्यत्र रूपकमलङ्कारः । अत्र चन्द्रशब्दोऽव्यवहितार्थनिष्ठशब्दव्यापारविषये चन्द्रत्वे वर्तमानो मुखशब्देन सामानाधिकरण्यं नुनाभवति। चन्द्रत्वमुखत्वयोरेकार्थवाचकत्वाभावात् । अतः चन्द्रगताह्लादकत्वादयो ये गुणास्तत्सदृशगुणवृत्तिः सन् मुखशब्दः चन्द्रे वर्तते । तेन चन्द्रशब्दस्य श्रुत्या अव्यवहितार्थनिष्ठेनाभिधाव्यापारेण पदान्तरेण मुख-शब्देन सम्बन्धशून्यत्वात् चन्द्रशब्दो गुणवृत्तिरतोऽत्र रूपकमिति तस्याशयः ।

भिन्नप्रवृत्तिनिमित्तकशब्दयोरेकार्थवाचकत्वं सामानाधिकरण्यम् । नीलमु-त्पलमित्यत्र नीलशब्दस्य गुणवाचकत्वे प्रवृत्तिनिमित्तं गुणत्वजातिः । उत्पल-शब्दस्य चोत्पलत्वजातिः, इति समानप्रवृत्तिनिमित्तकशब्दयोरनयोः सामाना-धिकरण्यस्यानुपपद्यमानतया नीलशब्दो गौण्या वृत्त्या नीलरूपवदित्यर्थं बोधयति । ततश्च प्रवृत्तिनिमित्तं नीलशब्दस्य गुण इति तयोर्भिन्नप्रवृत्तिनिमित्तत्वात् सामानाधिकरण्यं सम्भवत्येव । तथा मुखचन्द्र इत्यत्रापि मुखत्वचन्द्रत्वाभ्यां

यद्यपि[1] च ध्वनिशब्दसङ्कीर्तनेन काव्यलक्षणविधायिभि: गुणवृत्तिरन्यो वा न कश्चित् प्रकार: प्रकाशित: तथापि, [2]अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो मनाक् स्पृष्टोऽपि न लक्षित[3] इति परिकल्प्यैवमुक्तम्—भाक्तमाहुस्तमन्ये इति ।

---

उज्जीवनी

प्रवृत्तिनिमित्ताभ्यां भिन्नयो: पदार्थयो: एकार्थवाचकत्वरूपसामानाधिकरण्यस्यानुपपत्त्या चन्द्रशब्दस्य चन्द्रसदृशे लक्षणाङ्गीकारे सादृश्यस्य प्रवृत्तिनिमित्तस्य गुणत्वाद् मुखत्वस्य जातित्वाद् भिन्नप्रवृत्तिनिमित्तत्वं सम्पद्यते । अत: सामानाधिकरण्येन निर्देश उपपद्यते ।

एवं च अभिधाव्यापारजन्यप्रतिपत्तिविषयस्य मुख्यस्यार्थस्य पदार्थान्तरेण साकमन्वयतात्पर्यस्य बाधे, तत्सम्बन्धे, रूढित: प्रयोजनाद्वा अन्योऽर्थो गुणवृत्त्या यत्र प्रतीतिविषयो भवति सोऽर्थो भाक्त: । भक्तिश्च गुणवृत्ति: । तथा च शब्दाद् जायमानो मुख्यार्थभिन्न: सर्वोऽप्यर्थ: भाक्त इति तेषामाशय: ।

तदेव विशदयति—यद्यपीति । काव्यलक्षणविधायिभि: काव्यं लक्षयद्भि:, गुणवृत्त्या गौण्या अमुख्यया वृत्त्या प्रतिपाद्यमानोऽर्थ: वाच्यातिरिक्त: लक्ष्य: अन्यो वा कश्चिदर्थस्य प्रकार: ध्वनिरिति नामधेयं सङ्कीर्त्य न प्रकाशित: न प्रकटित: । गुणरूपा (गौणी) वृत्तिर्यस्य (अर्थस्य) स गुणवृत्तिरित्यर्थ: । तथापि काव्येषु अनुरूपया गौण्या वृत्त्या व्यवहारं शब्दप्रयोगं दर्शितवन्तो दृश्यन्ते । उक्तं वामनेन—'सादृश्याल्लक्षणा वक्रोक्ति:' इति (Kavyalankara sutras P. 58) अनेन ध्वनिमार्गो मनाक् स्पृष्ट: । प्रयोजनप्रतिपिपादयिषया हि लाक्षणिकशब्दं प्रयुञ्जते कवय: । अन्यथा 'गङ्गायां घोष' इति वाक्यस्य 'गङ्गातीरे घोष' इति वाक्यात् को भेद: ? अत: लाक्षणिकशब्द: सप्रयोजनस्य लक्ष्यार्थस्य प्रतिपादनेनैव सहृदयश्लाघ्यो भवतीति तत्र प्रयोजनरूपो व्यङ्ग्योऽर्थ: प्रतीयमानोऽपि तै: न लक्षित: न दृष्ट: । एवं परिकल्प्य तं प्रतीयमानमर्थम् अन्ये भाक्तमाहु: इत्युक्तम् ।

---

१. 'पि ध्व०' क     २. 'गुणवृत्त्या ।' क. ज. झ. ञ.

३. 'क्ष्य ।' क. ग. च. ज. झ. ञ

केचित् पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः । तेनैवंविधासु विमतिषु स्थितासु सहृदयमनःप्रीतये तत्स्वरूपं ब्रूमः ।

तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतं अतिरमणीय-मणीयसीभिरपि चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम् ।

अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते ।।

---

उज्जीवनी ।

ध्वनेरलक्षणीयतावादिमतमाह—केचिदिति । केचित् पुनः प्रतिवादिनः, लक्षणस्य ध्वनिलक्षणस्य, करणे निर्माणे, शालीना सलज्जा बुद्धिर्येषां ते, (वाचस्पत्यम् P. 549 शालीन (त्रि) अधृष्टे, सलज्जे, शालाप्रवेशमर्हति; शालीनकौपीने, अधृष्टाकार्ययोरिति साधुः । शोभमाने यथा—वनहरिण-शालीननयना इत्याचार्याः । ) ध्वनेः सारभूतस्य काव्यार्थस्य, तत्त्वं ध्वनि-व्यवहारविषयत्वरूपं लक्षणं, गिरां वाचामगोचरमविषयम् । सहृदयानां हृदयै-रेवेदं संवेद्यं ज्ञातव्यमिति समाख्यातवन्तः प्रख्यापितवन्तः ।

एवमभाववादिनां तिस्रः, भाक्तत्ववादिनामेका, अलक्षणीयतावादिनामेका चेति पञ्चविधा विप्रतिपत्तयः स्वयमेव ध्वनिकारेण प्रदर्शिताः । चिकीर्षित-माह—तेनेति । तेन विप्रतिपद्यमानत्वेन, एवंविधासु अनेनैव पद्येन प्रदर्शितासु वमतिषु विप्रतिपत्तिषु स्थितासु । सहृदयानां हृदये प्रीतिमाधातुं, तत्स्वरूपं तस्य ध्वनेः स्वरूपं साररूपस्यार्थस्य लक्षणप्रामाण्यादिकं ब्रूमः कथयाम इत्यर्थः ।

उक्तमर्थं प्रकाशयति—तस्येति । तस्य हि ध्वनेः प्रतीयमानस्यार्थस्य स्वं रूपं तत्त्वं सकलानां समस्तानां कवीनां काव्यतत्त्वविदां काव्येषु रमणीयार्थ-प्रतिपादकसन्दर्भेषु उपनिषद्भूतं रहस्यविज्ञानात्मकत्वेन स्थितम् अत्यन्तं रमणीयं चिरन्तनानां प्राचां, काव्यलक्षणविधायिनां काव्यलक्षणकर्तॄणां, अणीयसीभिरपि सूक्ष्मतराभिरपि, बुद्धिभिर्मनीषाभिः, अनुन्मीलितपूर्वं पूर्वं न प्रकाशितम् ।

उज्जीवनी ।

रामायणमहाभारतप्रभृतिनि रामायणमहाभारतादौ सर्वत्र, लक्ष्ये कविकर्मणि, प्रसिद्धव्यवहारं प्रसिद्धः प्रख्यातः, व्यवहारः शब्दप्रयोगः । रामायणे करुणरसः, महाभारते शान्तो रसः, इत्येवमादिः, शाब्दो व्यवहारः यस्य तं ध्वनिं सहृदया लक्षयन्त्येव पश्यन्त्येव । वस्तुतस्तु सर्वेष्वपि सत्कवीनां काव्येषु ध्वनिरूपं रहस्यरूपेण वस्त्वस्त्येव । सूक्ष्मनिरीक्षणविचक्षणबुद्धिभिः प्राचीनैस्तन्न लक्षितम् अलङ्कारशास्त्रकृद्भिः । रामायणादिषु च करुणादीन् प्रसिद्धान् लक्षयन्ति च सहृदयाः । अतस्तत्स्वरूपनिरूपणेन तेषां मनसि प्रीतिरानन्दः प्रतिष्ठां लभतां प्रतितिष्ठतु इति तत्स्वरूपं मया (ध्वनिकारेण) निरूप्यत इति प्रतिज्ञातमानन्दवर्धनाचार्येण ।

अनेनास्य ग्रन्थस्यानुबन्धचतुष्टयप्रकाशनपरत्वेन प्रेक्षावदुपादेयत्वं सूचितम् । "ध्वनिस्वरूपं विषयः । ध्वनितत्त्वज्ञानद्वारा सहृदयमनःप्रीतिः प्रयोजनम् । प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । ध्वनिस्वरूपजिज्ञासुरधिकारी" इति । सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामित्यत्रानन्दपदेनैतद्ग्रन्थकर्त्ता आनन्दवर्धननाम्ना सङ्कीर्तित इति सूचितम् । नामैकदेशग्रहणे नामग्रहणमिति न्यायात् ।

कवेः कर्म काव्यम् । [गुणवचनब्राह्मणादिभ्यः कर्मणि च, (पा० सू० ५-१-१२४) इत्यनेन कर्मणि (क्रियायां) अर्थे ष्यञ् प्रत्ययः] तच्च समुचितेन प्रकारेण सुप्तिङन्तानामायोजनमेव । धर्मादीनां सम्पादकः कविः शब्देन व्यापारेण तान् अस्मान् निवेदयति । तच्च काव्यं तत्सेवमानानां धर्मार्थकाममोक्षाख्यांश्चतुरः पुरुषार्थानपि साधयति । अत एवोक्तं साहित्यदर्पणे (P. 4)—

'चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥' इति
'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥' इति च

काव्याद् विहितकर्मणि कर्तव्यताज्ञानं, ततस्तत्प्रकारिकेच्छा, ततस्तदनुष्ठानं, ततो धर्मः, तस्मादर्थकामौ, विहितकर्मफलत्यागान्निषिद्धाननुष्ठानान्मोक्षश्च सिद्धयति ।

अथ ध्वनेरेव[1] लक्षयितुमारब्धस्य भूमिकां रचयितुम् इदमुच्यते—

**योऽर्थः[2] सहृदयश्लाघ्यः काव्यात्मेति[3] व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ[4] ॥ ३ ॥**

---

उज्जीवनी ।

उक्तं च तत्रैव—(P. 8) किञ्च काव्याद् धर्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना । 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति' इत्यादि वेदवाक्येभ्यश्च सुप्रसिद्धैव । अर्थप्राप्तिश्च प्रत्यक्षसिद्धा । कामप्राप्तिश्चार्थद्वारैव । मोक्षप्राप्तिश्चैतज्जन्यधर्मफलाननुसन्धानात् मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च ।

चतुर्वर्गफलप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते । परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव ।

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु किमिति काव्ये यत्नः करणीय इत्यपि न वक्तव्यम् । कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सिताशर्कराप्रवृत्तिः साधीयसी न स्याद् ? इति ।

प्रकृतस्य ध्वन्यालोकसंज्ञकस्य काव्यालङ्कारग्रन्थस्य काव्याङ्गत्वात् काव्यफलैरेव पूर्वोक्तैः फलवत्त्वं वेदितव्यम् ।

'करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणमिति वचनेन प्रीतेरपि फलत्वेन श्रवणात् कवेः कीर्तिं सहृदयानां प्रीतिमानन्दं च अवाप्तुकामः तद्धेतोः ध्वनिस्वरूपस्य निरूपणं प्रतिज्ञातवान् ग्रन्थकारः ।

चिकीर्षितमवतारयति—अथेति । अथ ध्वनेः स्वरूपनिरूपणस्य प्रयोजनकथनानन्तरम् । प्रथममेवानन्दवर्धनः श्रूयमाणस्य शब्दस्य वैयाकरणैः कृतां ध्वनिसंज्ञां दृष्टवान् ज्ञातवानित्यर्थः । ततो ध्वनिशब्दस्य व्युत्पत्तिभेदेनार्थभेदं विज्ञाय ध्वन्यत इति व्युत्पत्तिसिद्धं ध्वन्यमानमर्थं वाच्यातिशायिचमत्कृतिजनकं

---

१. 'व तावल्ल०' क.  २. 'अर्थः स०' क ख. ग. घ. ज. झ. ञ.
३. 'त्मा यो०' क. ख. ग. घ. ज. झ. ञ.  ४. 'स्थितौ' ख.

काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ ।

---

उज्जीवनी ।

भेदप्रभेदैः सप्रपञ्चं प्रतिपादयितुमुपक्रान्तवान् । ध्वनेरेव व्यङ्ग्यस्यार्थस्यैव, लक्षयितुं, लक्षणस्वरूपप्रामाण्यादिप्रदर्शनपूर्वकं सहृदयसमक्षमवतारयितुम्, आरब्धस्योपक्रान्तस्य, भूमिकां अर्थोऽयं केन (व्यापारेण) कस्माद् जायत इत्यादि विज्ञानौपयिकीं भूमिं अधिष्ठानं रचयितुं विधातुम् इदमुच्यत इति ।

सहृदयश्लाघ्यः सहृदयानां श्लाघां प्रशंसामर्हन्, काव्यस्य चमत्कृतिजनकार्थप्रतिपादकशब्दसन्दर्भरूपस्य, योऽर्थः काव्यरूपशब्दप्रयोक्तुः तात्पर्यविषयः यः वाक्यार्थः, आत्मा शरीरस्येवात्मा सारभूतः । (यस्यार्थस्य समावेशे स शब्दसन्दर्भः काव्यपदव्यपदेशयोग्यो भवति सः) व्यवस्थितः, तस्य वाक्यतात्पर्यविषयीभूतस्यार्थस्य, वाच्य इति प्रतीयमान इति च आख्ये नामधेये ययोस्तौ उभौ भेदौ प्रकारौ स्मृतौ ।

उक्तमर्थं विशदयति—काव्यस्य हीति । ललितेन गुणालङ्कारोपस्कृतत्वात् सुन्दरेण, उचितेन रसभङ्गहेतु यदनौचित्यं तद्रहितेन, रसानुगुणेन सन्निवेशेन सङ्घटनारूपेण चारुणः रमणीयस्य, शरीरस्यात्मेव, साररूपतया जीवनाधायकत्वेन स्थितः सहृदयश्लाघ्यः सहृदयैः श्लाघ्यः सहृदयानां श्लाघाविषयः, यः अर्थः काव्यात्मकशब्दजन्यप्रतिपत्तिविषयः सहृदयश्लाघ्यश्च भवति, तस्य वाच्यः अभिधेयः प्रतीयमानः व्यङ्ग्यश्च इति एवं, द्वौ भेदौ उभौ प्रकारौ सम्भवत इत्यर्थः । एतेन सहृदयश्लाघ्यवाच्यप्रतीयमानान्यतरार्थविषयकज्ञानजनकशब्दत्वं काव्यसामान्यलक्षणमिति ध्वनिकाराभिमतमवगम्यते ।

अत्रेदमवधेयम्—ललितशब्देन गुणालङ्कारानुग्रहमाह । उचितशब्देन रसविषयमेवौचित्यं भवतीत्यादिलोचनवाक्यादयमर्थो ज्ञायते । चारुण इति काव्यविशेषणम् । ललितेत्युचितेति च सन्निवेशविशेषणम् । गुणालङ्कारानुगुणवर्णविन्यासरूपं लालित्यं वाच्यस्यार्थस्य, रसानुगुणवर्णसन्निवेशरूपमौचित्यं व्यङ्ग्यस्यार्थस्य च चारुत्वं प्रतिपादयति इति । एतेन वाच्यव्यङ्ग्ययोरुभयोरर्थयो

उज्जीवनी ।

सङ्ग्रहः सूचितः । ताभ्यां सहृदयाः श्लाघन्ते च । सोऽर्थः वाच्यः व्यङ्ग्यश्चेति द्विविध इति भावः ।

तृतीयं ध्वन्यभाववादिमतमेवं सम्भावितं पूर्वम्—'न सम्भवत्येव ध्वनिर्नामापूर्वः कश्चित् । कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावाद्' इति 'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इत्यनेन काव्यशोभाकरत्वं (काव्यचारुत्वहेतुत्वं) अलङ्कारसामान्यलक्षणमिति सम्मन्यते । वस्त्वलङ्कारात्मना द्विविधो वाच्योऽर्थः, वस्त्वलङ्काररसात्मना त्रिविधो व्यङ्ग्योऽर्थश्च काव्यस्य शोभामातन्वते । इवादिभिः पदैः सादृश्यादेः अभिधीयमानस्योपमादिरूपस्य वाच्यार्थस्य, इवादिरहितस्थले नानार्थपदसन्निधानेन प्रतीयमानस्योपमादिरूपस्य व्यङ्ग्यार्थस्य चालङ्कारत्वात् तैः काव्यमलङ्कृतं कमनीयं भवति । एतेन वाच्यव्यङ्ग्ययोरुभयोरपि चारुत्वहेतुत्वं उद्भावितमिति व्यङ्ग्यस्यापि काव्यशोभाधायकत्वेन कस्यचिदपि विप्रतिपत्तेरवकाशो न विद्यते । अत एव उक्तेषु चारुत्वहेतुषु ध्वनेरन्तर्भावः पूर्वपक्षिभिरूच्येतेत्याशङ्क्य व्यङ्ग्यस्यार्थस्य वाच्यातिशायिचमत्कृतिजनकत्वं मनसि निधाय तेन च काव्यस्य, काव्यविशेषरूपत्वं मन्यमानैर्ध्वनिकारैर्ध्वनिरूपमर्थं प्रसाध्य तत्प्रतिपादकस्य काव्यस्य ध्वनिकाव्यत्वं च सिद्धान्तितम् ।

लोचनकारस्तु पुनरपि ध्वन्यभाववादिनां मतं ध्वनेः अनुमानेन निराक्रियमाणं सम्भावयति—तेन यदुक्तमिति । ध्वनिः, गुणालङ्कारव्यतिरिक्तो न भवति, चारुत्वहेतुत्वात् इत्यनुमानम् । ध्वनिः पक्षः, गुणालङ्कारव्यतिरिक्तत्वाभावः साध्यः, चारुत्वहेतुत्वं हेतुः, दृष्टान्तो नोक्तः । एवमनुमानं सङ्कल्प्य प्रथमं कमपि हेत्वाभासं ब्रूते, स्वयमेव प्रतिनिवर्तते च ।

द्वितीयश्च प्रदर्श्यमानः हेत्वाभास एव न भवति । प्रथमं, पक्षे (ध्वनौ) हेत्वभावरूपा स्वरूपासिद्धिरुद्भाव्यते । ध्वनेः आत्मरूपत्वात् । न ह्यात्मा चारुत्वहेतुर्देहस्येति तेषामाशयः । प्रतीयमानस्यार्थस्य सहृदयश्लाध्यत्वं तस्य चारुत्वहेतुत्व एव सम्भवति इति स्मृत्वेव अभ्युपगम्य ब्रूते—अथाप्येवं स्यादिति । तथापि वाच्येनानैकान्तिको हेतुरिति । साध्याभाववद्वृत्तित्वं अनैकान्तिकत्वम् ।

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ॥
भट्टोद्भटप्रभृतिभिस्ततो नेह प्रतन्यते ॥ ४ ॥

---

उज्जीवनी ।

साध्याभावः गुणालङ्कारव्यतिरिक्तत्वाभावाभावः, गुणालङ्कारव्यतिरिक्तत्वम्; । तद्वति वाच्येऽर्थे चारुत्वहेतुत्वमस्तोति अनैकान्तिकोऽयं हेतुरिति तेषामाशयः । इवादिशब्दवाच्यस्य सादृश्यादेः, उपमालङ्काररूपस्य वाच्यार्थस्य सपक्षत्वादेव तस्य हेतुमत्वेऽयं सद्धेतुरेव । तदेवोक्तं— तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिरिति ।

किञ्च—'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षत' इत्यनेन काव्यशोभाहेतुधर्मवत्त्वमलङ्कारसामान्यलक्षणमिति प्राचां मतम् । ते च धर्माः, गुणत्वालङ्कारवत्त्वरसवत्त्वादयः । तद्वन्तो गुणा अलङ्कारा रसदयश्च । एवमलङ्कारसामान्यलक्षणाक्रान्तत्वादेव रसादीनां, तेऽपि अलङ्कारत्वेन परिगणितास्तैः । अतो गुणा अलङ्कारा रसादयश्च चारुत्वहेतव इति निर्विवादम् । 'अर्थः सहृदयश्लाघ्य' इति कारिकागतस्य सहृदयश्लाघ्यपदस्य व्याख्यानावसरे प्रतीयमानस्य रसादिरूपस्यार्थस्य श्लाघातिषयहेतुत्वव्यवस्थापनद्वारा चारुत्वहेतुत्वमङ्गीकृतं लोचनकारैः । अतः तन्मतेऽपि ध्वनेः रसादिरूपस्यार्थस्य गुणालङ्कारातिरिक्तत्वं वक्तुं न शक्यते, काव्यशोभाकरत्वेन सामान्यात् । अतोऽभाववादिनः ध्वनिः गुणालङ्कारव्यतिरिक्तो न भवति चारुत्वहेतुत्वादिति प्रत्यवतिष्ठेरन्निति सम्भावना चिन्त्या ।

अन्यश्च—नायमलङ्कारशब्दः करणव्युत्पत्तिनिष्पन्नः । अपि त्वलङ्करोतीति भावव्युत्पत्तिनिष्पन्नः । एतदभिप्रायेणैव तदुच्येत, कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावादिति । एतस्य चालङ्कारस्य अलङ्कार्यं, गुणस्य गुणि, काव्यमेव न वाच्यो व्यङ्ग्यो वार्थः ।

तत्रेति । तत्र वाच्यप्रतीयमानयोर्मध्ये, वाच्यः अभिधेयः साक्षात् सङ्केतितोऽर्थः । उपमादिभिः उपमालङ्कारादिरूपैः प्रकारैर्भेदैः, यः प्रसिद्धः

केवलमनूद्यते पुनर्यथोपयोगमिति ।

**प्रतीयमानं[1] पुनरन्यदेव, वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत् प्रसिद्धावयवातिरिक्तं,[2] विभाति लावण्यमिवाङ्गनासु ॥ ४ ॥**

---

उज्जीवनी ।

प्रसिद्धिमुपगतः, स वाच्यः, उपमादिरलङ्कारः भेदप्रभेदभिन्नः काव्यस्य लक्ष्म लक्षणं, कुर्वाणैः भट्टोद्भटप्रभृतिभिः, उद्भटादिभिरन्यैः, बहुधा बहुप्रकारेण, व्याकृतः व्याख्यातः, ततः बहुधा व्याकृतत्वादेव, इह अस्मिन् ध्वन्यलोके ग्रन्थे, न प्रतन्यते न विस्तरेणाभिधीयते । तथा चात्र वाच्यानामुपमादीनामलङ्काराणामिह विस्तरेणानभिधानस्य प्रसिद्धत्वमेको हेतुः । भट्टोद्भटादिभिर्बहुधा व्याकृतत्वं च द्वितीयः । एवमन्यैः काव्यलक्षणकृद्भिर्बहुधा वर्णितानामलङ्काराणां यथोपयोगमनुवादः क्रियते ।

प्रतीयमानस्यार्थस्यास्तित्वं साधयितुमुपक्रमते—प्रतीयमानमिति । अर्थः सहृदयश्लाघ्य इत्युपक्रम्य वाच्यः प्रतीयमानश्चेति स द्विविध इत्यभ्युपगतवान् ध्वनिकारः । ततः प्रसिद्धत्वात् पूर्वैर्व्याकृतत्वाच्च विस्तरेण तस्य वर्णनाय नोद्युक्तवान् । अन्यश्चार्थः प्रतीयमानो व्यङ्ग्यः । चमत्कृतिजनकार्थबोधकाः शब्दाः, अर्थानामानुगुण्येनायोजिताः सङ्केतितमर्थं बोधयन्ति । ते चार्थाः परस्परमन्विता वाक्यार्थतां प्रपद्यन्ते । स च वाक्यार्थः पदसङ्घटनामहिम्ना यदि सङ्केतितानामर्थानां मिथोऽन्वयेन बोध्यमानेऽर्थ एव विश्राम्यति, काव्यस्य चारुत्वे हेतुर्भवति, सहृदयश्लाघ्यश्च भवति, स एव वाक्यतात्पर्यविषयीभूतो वाच्योऽर्थ इत्युच्यते । ततश्च, वक्त्रादिवैशिष्ट्यवशाद् महाकवीनां वाणीषु रमणीयार्थप्रतिपादकेषु शब्दसन्दर्भेषु, प्रतीयमानं व्यङ्ग्यं, वाच्याद् वाक्यार्थाद् अन्यदेव वस्तु, यद् अस्ति तद् अर्थरूपं वस्तु, अङ्गनासु प्रमदासु प्रसिद्धावयवव्यतिरिक्तं प्रसिद्धेभ्यः करचरणादिभ्योऽवयवेभ्यः, अतिरिक्तं भिन्नं, अङ्गानां समुचितसन्निवेशमहिम्ना सञ्जातं लावण्यमिव सौन्दर्यमिव विभाति चकास्ति । प्रत्येकावयवेभ्यः प्रतीयमानस्य लावण्यस्यावयवी देहः यथाश्रयस्तथा प्रतीयमानस्यार्थस्य महाकवीनां वाणीरूपं (शब्दरूपं) शरीरमेवाश्रयः ।

---

१. 'नः क'    २. 'क्रमा०' क. ग. घ. ङ. ज. झ.ञ

उज्जीवनी ।

अत्रेदमवधेयम्—समुचितेनाङ्गानां सन्निवेशेन अङ्गनानां शरीरे प्रसिद्धकर-चरणाद्यवयवेभ्योऽतिरिक्तं लावण्यं नाम गुणो विभाति। अत्र लावण्यरूपो धर्म उपमानम्। अर्थानुगुण्येनानुविहितया सङ्घटनया महाकवीनां वाणीरूपे काव्यशरीरे साक्षात् सङ्केतितानामर्थानामाकाङ्क्षादिवशादेकविशिष्टार्थबोध-रूपतामापन्नाद् वाक्यार्थादेव वाच्यार्थादन्यद् अतिरिक्तं प्रतीयमानं किमपि वस्तुतत्त्वमुपमेयं भवितुमर्हति। वृत्तौ किमप्यन्यदेव वस्तु सहृदयलोचनामृतं तत्त्वान्तरम् इति स्पष्टमुक्तम्।

यथाङ्गनानां निखिलावयवातिरिक्तं लावण्यं दृष्ट्वा आस्वादयितृणा-मानन्दो जायते, तथा काव्यशरीरे अभिधेयातिरिक्तवस्त्वलङ्काररसादि-रूपार्थवत्त्वं व्यञ्जनया बोध्यते। ज्ञातं च तत् सहृदयानामालोचनामृतं च भवति। एवं च सहृदयानामानन्दजनकं वाच्याद् भिन्नं प्रतीयमानार्थवत्त्वं च काव्येऽनुभूयते। स च प्रतीयमानोऽर्थ एव। स चार्थः अस्तीति वचनेन अविद्यमानतावादिनिराकरणौपयिकम् अस्तित्वमपि तस्य साधयति ध्वनिकारः। अत्राङ्गनाशरीरगतलावण्याख्यस्य धर्मस्य उपमानत्वेन प्रतीयमानार्थवत्त्वरूपधर्म-स्यैवोपमेयत्वमुचितम्। स चार्थो माधुर्यादिः। अतः "प्रतीयमानं पुनरन्यदस्ति वस्तु" इति नपुंसकनिर्देशो नानुचितः। प्रत्युत स एवोचितश्च। एतेन यदुक्तं महिम्ना—"प्रतीयमानः पुनरन्य एव सोऽर्थोऽस्ति वाणीषु महाकवीनाम्" इति पाठविपर्यास आवश्यक इति, यच्चोक्तं दीधितिकृता "वस्तुत्वस्याभिधेयत्व-प्रमेयत्वादिवत् केवलान्वयितया प्रतीयमानस्यार्थस्यापि वस्तुन्यन्तर्भावात् प्रतीयमानं पुनरन्यदेव वस्त्वित्युक्तं युक्तम्' इति तदुभयमपि सुधीभिर्विभाव-नीयम्।

वस्तुतस्तु अर्थस्य द्वैविध्यमुक्त्वा वाच्यः प्रतीयमानश्चेति, वाच्यमर्थं चान्यैरुक्तमिति प्रकृते विशदय्य, द्वितीयस्मिन् प्रतीयमानेऽर्थे वर्णनीयतयो-पस्थिते सति वस्त्विति नपुंसकनिर्देशः कथमुपपद्यत इत्याशङ्काया नेदं समाधानं भवति।

प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत् तत् सहृदयसु[1]प्रसिद्धं प्रसिद्धेभ्योऽलङ्कृतेभ्यः प्रतीतेभ्यो वा अवयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु । यथा ह्यङ्ग[2]नासु लावण्यं[3] पृथङ्निर्वर्ण्यमानं[4] निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः । स ह्यर्थो वाच्यसामर्थ्याक्षिप्त[5]वस्तुमात्रमलङ्कारा रसादयश्चेत्यनेक[6] प्रभेदप्रभिन्नो दर्शयिष्यते ।

---

उज्जीवनी ।

तदेव विशदयति—प्रतीयमानमिति । प्रतीयमानं व्यञ्जनया प्रतिपाद्यमानं, पुनः महाकवीनां, व्युत्पत्त्यभ्यासाभ्यां वा देवतामहापुरुषप्रसादादिजन्यादृष्टेन वा समुपजातया प्रतिभया काव्यकरणेन ध्वनिकारसम्मतमहाकविपदव्यपदेशमर्हतां वाणीषु शब्दसन्दर्भेषु । वाच्यादभिधीयमानादन्यद्, भिन्नमेव वस्तु प्रतीयमानार्थवत्त्वम् अस्ति । यत् तत् सहृदयसुप्रसिद्धं सहृदयेषु काव्यवासनापरिपक्वबुद्धिषु प्रसिद्धं, प्रसिद्धेभ्यः, प्रसिद्धिविषयेभ्यः, अलङ्कृतेभ्यः आहितसौन्दर्येभ्यः, प्रतीतेभ्यः प्रतीतिविषयेभ्यो वा अवयवेभ्यः करचरणादिभ्यः, अतिरिक्तत्वेन भेदेन, अङ्गनासु युवतिषु, लावण्यमिव प्रकाशते भासते । यथाङ्गनासु ललनासु पृथक् पृथङ्निर्वर्ण्यमाननिखिलावयवव्यतिरेकि पृथङ्निध्यायमानेभ्यो निखिलेभ्यः सर्वेभ्योऽवयवेभ्यः करचरणादिभ्यः, व्यतिरेकि भिन्नं लावण्यं किमपि अनिर्वचनीयमन्यदेव सहृदयानां लोचनस्यामृतनिष्यन्दि तत्त्वान्तरमन्यत् तत्त्वं तद्वदेव । यथाङ्गनासु लावण्यं तथा महाकविवाणीषु । प्रतीयमानार्थवत्त्वं च प्रतीयमानोऽर्थ एव । तदेवोक्तं 'तद्वदेव सोऽर्थ' इति । स हि अर्थः प्रतीयमानोऽर्थो हि वाच्यसामर्थ्याक्षिप्तं वाच्यस्य अर्थान्तरबोधजननसामर्थ्येन आक्षिप्तं वस्तुमात्रम् अलङ्कारा रसादयो भावादयश्च इति एवम् अनेकैः प्रभेदैः प्रकारैः भिन्नः दर्शयिष्यते प्रकाशयिष्यत इत्यर्थः ।

---

१. 'यहृदयसु०' क. ख. च  २. 'ङ्गला०' क  ३. 'ण्यं पृथक प०' क. ग.
४. 'ननि०' क. ख.  ५. 'प्तो व०' क.  ६. 'कभे०' क.

सर्वेषु[1] च तेषु[2] प्रकारेषु तस्य वाच्यादन्यत्वम्। तथा ह्याद्यस्तावत् प्रभेदो वाच्याद् दूरं विभेदवान्। स हि कदाचिद् वाच्ये विधिरूपे प्रतिषेधरूप:। यथा—

भम धम्मिअ वीसद्धो[3] सो सुणओ अज्ज मारिओ देण।
गोळाणइकच्छकुडंगवासिणा दरिअसीहेण॥

---

उज्जीवनी।

प्रतीयमानमर्थमेवं प्रदर्श्य तस्य व्यतिरेकमाह—सर्वेष्विति! सर्वेषु च तेषु प्रकारेषु वस्त्वलङ्काररसरूपेषु भेदेषु तस्य प्रतीयमानस्यार्थस्य, वाच्यादन्यत्वं वाच्यार्थात् व्यतिरिक्तत्वमित्यर्थः। तदेव विशदीकरोति—तथा हीत्यादिना। आद्यः उक्तेषु प्रकारेषु यः प्रथमः वस्तुरूपः, सः प्रतीयमानः वस्तुरूपोऽर्थः, वाच्यार्थाद्, दूरम् अतिशयेन, विभेदवान् भिन्नः। स हि प्रतीयमानो वस्तुरूपोऽर्थः, कदाचित् प्रकरणानुरोधात्। वाच्येऽर्थे विधिरूपे सति प्रतिषेधरूप: निषेधरूपः। उदाहरति—यथेति। हालकविकृतायां गाथासप्तशत्यां द्वितीये शतके पञ्चसप्ततितमं पद्यमिदम्।

"भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन"॥

इति संस्कृतम्। पुष्पावचयार्थं स्वसङ्केतस्थानभूते गोदावरीतीरनिकुञ्जे अभियान्तं अभिसरणविघ्नं कुर्वाणं कमपि धार्मिकं भीषयितुं कस्याश्चिदभिसारिण्याः स्वविनयं सूचयन्त्या इयमुक्तिः। हे धार्मिकेति साक्षेपसम्बोधनम्। स गृहस्थितः, यस्माद् भिया त्वया ग्रामे भ्रमणं त्यक्तमासीत् स इत्यर्थः। शुनकः श्वा, अद्य इदानीं, गोदाया गोदावरीनद्याः, कच्छो जलप्रायप्रदेशः, तत्सम्बन्धिनि कुञ्जे वसता, दृप्तेन दर्पयुक्तेन, सिंहेन मारितः। गोदानदीतीरे सततं वसन् दृप्तः सिंहः ग्राममागत्य ग्रामस्थं शुनकं निहतवान्। अत्र गृहे श्वनिवृत्त्या भ्रमण (वस्तु) वाच्योऽर्थः। निकुञ्जे सिंहोपलब्ध्या भ्रमणनिषेधो व्यङ्ग्यः। अत्र वाच्यो विधिरूपः, व्यङ्ग्यो निषेधरूप इति व्यङ्ग्यस्य वाच्यादन्यत्वम्।

---

१. 'ष्वेव' च क. ख.   २. 'षु वा०' क. ख.   ३. 'द्धो' क. ख. ग.

क्वचिद् वाच्ये प्रतिषेधरूपे विधिरूपो यथा—

अत्ता एत्थ [1]णिमज्जइ एत्थ अहं दिअसअं पळोएहि [2] ।
मा पहिअ रत्तिअंधअ सेज्जाए मह णिमज्जहिसि ॥

क्वचिद् वाच्ये विधिरूपेऽनुभयरूपो यथा—

वच्च मह ब्बिअ[3] एक्केइ[4] होंतु णीसासरोइद[5]व्वाइं ।
मा तुज्झ वि तीअ[6] विणा दक्खिण्णहअस्स जाअंतु ॥

---

उज्जीवनी ।

वस्तुनो वाच्याद् व्यङ्ग्यस्य वस्तुनो भेदं प्रदर्शयितु द्वितीयमुदाहरणमाह—अत्तेति । हालकविकृतायां गाथासप्तशत्यां सप्तमे शतके सप्तषष्टितमं पद्यमिदम् ।

"श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय ।
मा पथिक रात्र्यन्ध शय्यायामावयोर्निमङ्क्ष्यसि" ॥

इति संस्कृतम् । वसतिं प्रार्थयमानं समुपजातकामं पथिकं प्रति प्रोषितभर्तृकाया व्यभिचारिण्याः स्वयंदूत्या इयमुक्तिः । हे पथिक, अत्र अस्मिन् स्थले, श्वश्रूः पत्युर्जननी, निमज्जति जरत्तरत्वेन निष्पन्दा शेते, अत्र ततो भिन्नस्थले, अहं अहमेव, दिवसके कुत्सिते दिवसे (कुत्सायाः कन् प्रत्ययः) प्रलोकय सम्यक् पश्य । हे रात्र्यन्ध रात्रौ दर्शनशक्तिशून्य, आवयोः शय्यायां शयनीये मा निमङ्क्ष्यसि मा शयिष्यसि । अत्र गृहे श्वश्रूः अहं च । श्वश्रूश्च जरत्तरत्वेन बधिरा निष्पन्दा च । जनान्तरसञ्चारस्तु नास्त्येव । अतो यथेष्टं मम शय्यायामेव स्वपिहि इति विधिरूपं वस्तु व्यङ्ग्यम् । वाच्यं तु निषेधरूपम् ।

तृतीयमुदाहरणम्—वच्चेति ।

'व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥

इति संस्कृतम् । कस्याश्चिद् खण्डितनायिकाया नायकं प्रतीयम् उक्तिः । हे कान्त,

---

१. 'सइ.' ख. ङ.  
२. 'सु.' क.  
३. 'च्चिअ.' क.  
४. 'क्काए' क. ख. ग. ङ.  
५. 'ग्र.' क. ङ.  
६. 'ए.' ख. ग. ङ.

क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा—

देअ! पसिअ णिवत्तसु[1] मुहससिजोण्हाविलुत्ततमणिवहे ।
अहिसारिआणं[2] विग्धं करेसि अण्णाणं[3] वि हआसे ॥

क्वचिद् वाच्याद्[4] विभिन्नविषयत्वेन व्यवस्थापितो[5] यथा—

उज्जीवनी ।

व्रज प्रेयस्या गृहमेव गच्छ । एकस्याः एकाकिन्याः ममैव त्वद्विरहेण निःश्वासरोदितव्यानि च भवन्तु । दाक्षिण्येनानेकत्र तुल्ये नानुरागेण हतस्य नष्टस्य तवापि, तया अभीप्सितप्रेयस्या विना तद्वियोगेन, निःश्वासरोदितव्यानि मा जनिषत मा भूवन् । अत्र प्रियस्य प्रेयसीगृहगमनविधिर्वाच्यः । व्यङ्ग्यस्तु त्वं सर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितानायिकाया अभिप्रायः । स न विध्यात्मको न वा निषेधात्मकः ।

चतुर्थमुदाहरणम्—

प्रार्थये प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥

इति संस्कृतम् । सङ्केतस्थानमुपगता नायिका स्वविषयं नायकापराधमवगत्य प्रतिनिर्वर्तितुमुद्युङ्क्ते । तामनुनयतो नायकस्येयमुक्तिः । मुखशशिज्योत्स्नाविलुप्ततमोनिवहे, ते मुखस्य मुखरूपस्य शशिनश्चन्द्रस्य, ज्योत्स्नया कौमुद्या, लुप्तः दूरीकृतस्तमसां निवहो यस्य तादृशे प्रिये, त्वामहं प्रार्थये, प्रसीद प्रसन्नतां भजस्व । निवर्तस्व मा प्रयासीः । हताशे मन्दभाग्ये मानिनि । अन्यासामितरासामभिसारिकाणामपि नायकभवनमभिसरन्तीनामपि युवतीनां, विघ्नं सञ्चारप्रतिबन्धं करोषि । अतो निवर्तस्वेत्यनेन गमननिषेधो वाच्यः प्रतिषेधरूपः । दायितानुनयो व्यङ्ग्यः । स च न विधिरूपो न वा निषेधरूपः ।

अथ बोद्धव्यभेदेन वाच्यप्रतीयमानयोर्मिथो भेदं दर्शयति—क्वचिदिति । क्वचित् स्थलविशेषे, वाच्यादर्थात् प्रतीयमानस्य विभिन्नविषयत्वेन विषयभेदेन बोद्धव्यभेदेन व्यवस्थापितः स्थापितः ।

१. 'अ' क. ख. ग. ङ. २. 'ण' क. ख. ३. 'ण. क.'
४. 'द्धि०' क. ख. ५. 'तोऽपि' क. ख.

कस्स व ण होई रोसो, दट्‌ठूण पिआए सव्वणं अहरम् ।
सभमरपउ[1]मग्घाइणि वारिअवामे सहसु एण्हिं ॥

अन्ये[2]चैवंप्रकारा वाच्याद् विभेदिनः प्रतीयमानभेदाः सम्भवन्ति । तेषां दिङ्मात्रमेतत्[3] प्रदर्शितम् ।

---

उज्जीवनी ।

तदेवोदाहरति—

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥ इति संस्कृतम् ।

स्वकान्ताया उपपतिदष्टमधरं दृष्ट्वा रुष्टे प्रवासात् प्रतिनिवृत्ते पत्यौ सख्या निरपराधत्वबोधनाय तत्प्रतारणोक्तिरियम् । स्वप्रियायाः स्वकान्तायाः, सव्रणं व्रणसहितमधरम् अधरोष्ठं, दृष्ट्वा कस्य वा पुरुषस्य, रोषः क्रोधः, न भवति सर्वस्यापि रोषो भवत्येवेति भावः । सभ्रमरं भ्रमरयुक्तं पद्ममाघ्रातुं शीलमस्या इति सभ्रमरपद्माघ्रायिणी, तत्सम्बुद्धिः हे सभ्रमरपद्माघ्रायिणि । वारिता च सा वामा च वारितवामा, तत्सम्बुद्धौ वारितवामे । सभ्रमरपद्माघ्राणनं मा कुर्विति निवारितासि, तथापि त्वं वामा प्रतिकूलाभूरिति भावः । अतस्तदिदानीं सहस्व । तस्य मद्वचनप्रतिकूलाचरणस्य फलमनुभव । अत्राविनीतत्वरूपवाच्यार्थस्य सम्बोध्या प्रकृतनायिका विषयः । 'इयं भ्रमरेण दष्टाधरा न तूपपतिना' इति व्यङ्ग्यस्य तत्कान्तो नायको विषयः । ममैवं वैदग्ध्य'मिति व्यङ्ग्यस्य प्रातिवेशिनी विषयः । 'मयेदं समाहितं पुनरेवं न त्वया कार्य'मित्यस्योपपतिर्विषयः । 'भ्रमरेणास्या अधरः खण्डितः, न तु भर्त्रेति त्वयेर्ष्या न विधेया' इत्यस्य सपत्नी विषयः । 'एवं विषयभेदादपि वाच्यप्रतीयमानयोर्भेदो दृश्यते । इदमुपलक्षणम्—वाच्यस्यैकत्वं व्यङ्ग्यस्य नानात्वं चानेन पद्येन बोध्यत इति सङ्ख्यापि वाच्यव्यङ्ग्ययोः भेदबोधिकेति ।

वाच्यव्यङ्ग्ययोर्वस्तुनोर्भेदाख्यानमुपसंहरति—अन्ये चेति । एवंप्रकारा उक्तप्रकाराः । वाच्यादभिधेयादर्थाद्, विभेदिनः विभिन्नाः, प्रतीयमानस्य व्यङ्ग्यस्य, भेदाः प्रकाराः, अन्येऽपि सम्भवन्ति । तेषां प्रकाराणां दिङ्मात्रमेतत् प्रदर्शितम् । एषा दिक् प्रदर्शिता । अन्यत् सर्वं सुधियो विभावयन्त्वित्यर्थः ।

---

१. 'दु.' क. ङ.   २. 'न्येऽपि' च० क.   ३. 'वृ द०' क.

द्वितीयोऽपि प्रभेदो वाच्याद्[1] विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते ।

तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते, न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्[2] विभिन्न एव ॥

---

## उज्जीवनी

एतेन वस्तुरूपोऽर्थः यदा शब्दादभिधेयो भवति तदा वाच्यः, यदा तु वाच्यसामर्थ्याभिव्यक्तः तदा व्यङ्ग्यश्चेति प्रतिपादितम् ।

प्रतीयमानत्वेनाभिमतेषु वस्त्वलङ्काररसरूपेषु त्रिष्वर्थेषु वस्तुनोऽर्थस्य निरूपणानन्तरं, द्वितीयस्य अलङ्काररूपस्यार्थस्य वाच्याद् भेदख्यापनावसरे प्राप्ते आह—द्वितीयोऽपि इति । द्वितीयोऽपि अलङ्काररूपस्तु, प्रभेदः प्रतीयमान प्रकारः, वाच्यादर्थात् विभिन्नः भेदवान्, सप्रपञ्चं सविस्तरमग्रे दर्शयिष्यते प्रकाशयिष्यते ।

तृतीयस्य प्रतीयमानभेदस्य निरूपणमाह—तृतीयस्त्विति । अत्र तुशब्दः प्रतीयमानवस्त्वलङ्कारवैलक्षण्यं रसादेः द्योतयति । रसादिलक्षणः रसभावादिरूपः, प्रभेदः प्रतीयमानस्य प्रकारः, वाच्यसामर्थ्याक्षिप्तः वाच्यस्याभिधेयस्यार्थस्य सामर्थ्येन अन्यार्थप्रतीतिजननसामर्थ्येनाक्षिप्तः अभिव्यक्तः प्रकाशते । अभिव्यक्त एव भवति । न तु साक्षादव्यवधानेन शब्दव्यापारस्याभिधाया विषयः । साक्षात् सङ्केतितार्थबोधानुकूलाभिधाव्यापारजन्यबोधविषयाद् वाच्यादर्थाद् शतथाभूतोऽयं रसादिरूपः प्रतीयमानोऽर्थः अत्यन्तं विभिन्न एव ।

अत्रेदमवधेयम्—

वस्तुनोऽलङ्कारस्य रसादेश्च ध्वन्यमानस्य वाच्याद् भेदः समान एव । तथा वाच्यसामर्थ्याक्षिप्तत्वं तत्त्रितयसाधारणं लक्षणं, तथापि—

> राज्ञो मत्प्रतिकूलान्मे महद् भयमुपस्थितम् ।
> बाले वारय पान्थस्य वासदानविधानतः ॥

अत्र मयि शत्रुत्वमाचरतः कस्माच्चिद् राज्ञ उपस्थितं महद् भयं निवारय, इत्यभिधीयमानस्यार्थस्या बालां सम्बोध्य प्रति वचनस्यानुचितत्वेन प्रकरण-

---

१. 'द् भि०' क. ख. ग.  २. 'द् भि०' क.

उज्जीवनी।

वशात् राजशब्दशक्तिविषयात् चन्द्रादुपस्थितं भयं निवारयेत्यर्थसामर्थ्येन उपभोगं देहीति वस्तु व्यज्यते। अयं च वस्तुरूपोऽर्थः उपभोगं देहीति वाचकशब्देनाप्यभिधातुं शक्यत इति तस्य वाच्यत्वमपि सम्भवति। अत्र तु वाचकपदाभावेन व्यङ्ग्य एव भवतीति वाच्याद् भिन्नत्वं, अर्थसामर्थ्याक्षिप्तत्वं चास्ति। तथा—

करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम्॥

नानार्थशब्दश्रवणे सङ्केतितानामर्थानामुपस्थितौ सत्यां, शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति तात्पर्यसन्देहे सति, प्रकरणादिकं तात्पर्यनिर्णायकं पर्यालोचयतः पुरुषस्य, सति तात्पर्यनिर्णये यत्र तात्पर्यं निर्णीतं, तस्यार्थस्य शाब्दबोधो भवति। अत्र सम्राड्वर्णने प्रस्तुते सति प्रकरणवशात् सम्राज उपस्थितिः शाब्दबोधश्च भवति। ततः करदानधनदादिशब्दानां साम्निध्येन सार्वभौमशब्दाद् दिग्गजरूपेऽप्यर्थे शक्तात् कुबेरदिग्गजस्याप्युपस्थितिः शाब्दबोधश्च भवति। प्राकरणिकार्थबोधनेन क्षीणशक्तिरभिधा, अप्रकृतार्थबोधने न प्रभवतीति तस्य व्यञ्जनाव्यापारगम्यत्वं केचिदाहुः। प्राकारणिकार्थबोधनानन्तरमुपस्थितिविषये, द्वितीयस्मिन्नप्यर्थे तस्य शब्दस्य शक्तत्वात् तदर्थस्याप्यभिधेयत्वमेव सम्मन्यन्ते प्रामाणिकाः।

तथा च द्वितीयस्याप्यर्थस्य शक्तिवेद्यत्वेन सम्राड् जयति दिग्गजो जयति इति वाक्यार्थद्वयं सञ्जातम्। वाक्ययोस्तयोरसम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति तयोः सम्राड्दिग्गजयोरुपमानोपमेयभावो व्यज्यते। एवं दिग्गजसदृशः सम्राड् जयतीत्येकवाक्यतयान्वयबोधो भवति। अत्र दिग्गजसादृश्यरूप उपमालङ्कारो व्यङ्ग्यः। इयं चोपमा दिग्गज इव सम्राड् जयतीति वाचकशब्देनाप्यभिधातुं शक्यमिति तस्याः क्वचिद् वाच्यत्वमपि सम्भवति। अत्र तु सादृश्यवाचकशब्दाभावादुपमालङ्कारो व्यङ्ग्य एव। एवं चात्र ध्वन्यमानास्योपमालङ्कारस्य वाच्याद् भिन्नत्वं वाच्यसामर्थ्याक्षिप्तत्वं च वर्तते।

तृतीयस्य रसादिरूपस्यार्थस्य तु वाच्यसामर्थ्याक्षिप्तत्वं व्यङ्ग्यवस्त्वलङ्कारयोरिव समानम्। तथाप्यस्य वाच्यत्व कदाचिदपि न सम्भवतीति वस्त्वलङ्काराभ्यां भेदः। सर्वथा वाच्याद् भिन्नश्च रसादिरूपोऽर्थः।

तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्याद्, विभावादिप्रतिपादनमुखेन वा। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः।

**न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम्[1]।** यत्राप्यस्ति तत्, तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः। स्वशब्देन सा केवलमनूद्यते, न तु तत्कृता। विषयान्तरे तथा तस्या अदर्शनात्।

---

उज्जीवनी।

तृतीयं प्रतीयमानभेदमाह—तृतीयस्त्विति। तृतीयः वस्त्वलङ्काराभ्यामन्यो रसादिलक्षणः रसभावादिलक्षणः प्रभेदो भेदः वाच्यस्याभिधेयस्यार्थस्यार्थान्तरबोधजननशक्त्याक्षिप्तः अभिव्यक्तः, प्रकाशते प्रतीयते। तु किन्तु साक्षाच्छब्दव्यापारविषयः अव्यवधानेन शब्दस्य यो व्यापारः अभिधाख्यः, तस्य विषयो न भवति, अतो रसादिरूपोऽर्थः कदाचिदपि न वाच्यो भवति इत्यतो वाच्यादभिधेयादर्थाद् विभिन्नो दूरं विभेदवानेव।

तदेवोपपादयति—तथाहीति। तस्य रसादिरूपस्यार्थस्य वाच्यत्वं शक्तिविषयत्वं, स्वशब्दनिवेदितत्वेन वा स्वशब्दैः स्वार्थस्य साक्षाद् वाचकैः शब्दैः निवेदनेन स्यात् भवेत्। अथवा रसाभिव्यक्तिहेतूनां आलम्बनादिविभावादीनां वाचकैः शब्दैः प्रतिपादनेन भवेत्। रसादीनां हि वाच्यत्वं तदा भवेत् यदि रसादयः शृङ्गारादिशब्दैः रसाभिव्यञ्जकविभावादिशब्दैर्वा अभिहिताः स्युः। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वपक्षे, रसाद्यभिव्यक्ति प्रति स्वशब्दनिवेदितत्वस्य हेतुत्वाङ्गीकारे स्वशब्दनिवेदितत्वरूपकारणाभावेऽपि रसव्यक्तेरनुभवाद् व्यतिरेकव्यभिचारेण तयोः कार्यकारणभावो नास्त्येव। सर्वत्र तेषां रसादीनां, स्वशब्दनिवेदितत्वं न च दृश्यते। यत्र यस्मिन् काव्ये, तत् स्वशब्दनिवेदनमस्ति, तत्रापि तस्मिन् काव्येऽपि, एषां रसादीनां प्रतीतिः न तैः स्वशब्दैः शृङ्गारादिस्वशब्दैः, किन्तु विशिष्टविभावादिप्रतिपादनमुखेनैव। विशिष्टानां विभावादीनां प्रतिपादनद्वारेणैव भवति। यत्र तु स्वशब्दो विद्यते तत्रापि सा रसप्रतीतिः स्वशब्देनानूद्यत एव। तत्कृता तु तदभिहितस्वरूपा तु

---

१. ग्रत्वम्। ख. ग. भ. ञ.

न हि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति । यतश्च स्वाभिधानमन्तरेण केवलेभ्योऽपि विभावादिभ्यो[1] विशिष्टेभ्यो रसानां प्रतीतिः ।

---

उज्जीवनी ।

रसप्रतीतिः नास्त्येव । विषयान्तरे विभावादिवाचकशब्दशून्ये स्थले, स्वशब्दसत्त्वेऽपि तथा चमत्कृतिजनकत्वरूपेण, तस्या रसप्रतीतेः आदर्शनाद् अननुभवात् ।

उक्तमेव द्रढयति—न हीति । केवलशृङ्गारादिशब्दमात्रभाजि केवलं शृङ्गारादिशब्दानेव भजत इति तादृशे, विभावादिप्रतिपादनरहिते विभावादीनां प्रतिपादनेन रहिते शून्ये च काव्ये, रसवत्त्वप्रतीतिः रसप्रतीतिः, नहि अस्ति नास्त्येव खलु ।

पर्यवसन्नमाह—यतश्चेति । यतश्च यस्माच्च, स्वाभिधानं वाचकशब्दमन्तरेण विना, विशिष्टेभ्यो विभावादिभ्यः केवलेभ्यो विभावादिप्रतिपादनमात्रेण, रसादीनां शृङ्गारादीनां रसानां भावादीनामपि, प्रतीतिः प्रत्ययो भवति । केवलाच्च स्वाभिधानाद् वाचकशब्दादेव केवल रसादीनामप्रतीतिश्च ।

एवं च रसादिवाचकशब्देऽसत्यपि विशिष्टविभावादिप्रतिपादनमात्रेण रसप्रतीतेः सम्भवाद्, वाचकशब्दे सत्यपि विभावाद्यप्रतिपादने रसप्रतीतेरभावाच्च विभावादिप्रतिपादनरसप्रतीत्योश्च अन्वयव्यतिरेकाभ्यां कार्यकारणभावोऽवधार्यते । ततो विभावादिवाचकैः शब्दैरभिधेयस्यार्थस्य सामर्थ्येनाक्षिप्तत्वम् अभिव्यक्तिः रसादीनां भवति । न तु कथञ्चिदपि अभिधेयत्वं रसादीनां स्वशब्दनिवेदितत्वं सम्भवति । एवं तृतीयोऽपि प्रकारो रसादिरूपः प्रतीयमानस्यार्थस्य तृतीयः प्रभेदः वाच्यादर्थाद् भिन्न एवेति स्थितम् । एवं पर्यवसन्नम् ।

तथा च प्रतीयमानोऽर्थस्त्रिविधः—वस्तु, अलङ्कारः, रसादिश्चेति । तत्र आद्यभेदद्वयं क्वचिद् वाच्यतामप्युनुभवति । तृतीयस्तु भेदो रसादिरूपः कदाचिदपि न वाच्यो भवतीति सिद्धम् ।

---

१. भ्यो र० ग.

केवलाच्च स्वाभिधानादप्रतीतिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेय-सामर्थ्याक्षिप्तत्वमेव रसादीनाम्। न त्वभिधेयत्वं कथञ्चिदिति तृतीयोऽपि प्रभेदो वाच्याद् भिन्न एवेति स्थितम्। वाच्येन त्वस्य सहेव प्रतीतिरित्यग्रे दर्शयिष्यते।

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥ ६॥**

---

उज्जीवनी

अस्य तु रसादेः प्रतीयमानस्यार्थस्य तु वाच्येनार्थेन सहेव प्रतीतिरित्यग्रे उत्तरग्रन्थे दर्शयिष्यते प्रकाशयिष्यते। अस्यार्थस्य वाच्यसामर्थ्याक्षिप्तत्वात् कार्यकारणयोः पौर्वापर्यस्य नियतत्वेन वाच्यार्थबोधानन्तरमेव यद्यपि रसादि-प्रतीतिर्भवितुमुचिता तथापि सहेव प्रतीयत इत्यभिधानेन रसादिध्वनिरसंल-क्ष्यक्रमव्यङ्ग्य इति प्रामाणिका अलङ्कारशास्त्रकाराः। असंलक्ष्यक्रम इत्येनेन वचनेन क्रमोऽस्त्येव, स च लाघवान्न लक्ष्यते, कार्यकारणयोः क्रमस्य नियतत्वा-दिति तेषामाशयः।

काव्यार्थेषु ध्वनेः प्रतीयमानस्यार्थस्य प्राधान्यं प्रतिपादयितुमाह—काव्यस्यात्मेति। काव्यस्यैव ललितोचितसन्निवेशरुचिरशब्दसन्दर्भस्यैव। स एवार्थः प्रतीयमानोऽर्थः (काव्यार्थः) आत्मा सारभूतः। "अर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः। वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ" इत्यारभ्यैतदन्तेन प्रबन्धेन सहृदयश्लाघ्यः योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ। वाच्यस्यार्थस्य वस्त्वलङ्कारात्मना द्वैविध्यं, प्रतीयमानस्य च वस्त्व-लङ्काररसात्मना त्रैविध्यं चेति अर्थः पञ्चविधः प्रोक्तः। चमत्कृतिजनकत्वस्य सहृदयश्लाघ्यत्वस्य च सर्वेष्वपि तेष्वर्थेषु साधारण्येऽपि रसादिरूपोऽर्थः तदित-रातिशायिचमत्कृतिजनक इत्याशयः। तथा च यतः रसादिरूपोऽर्थस्तदितरा-र्थापेक्षयातिशयितचमत्कृतिजनकत्वात् सारभूतस्तत इत्यर्थः। पुरा पूर्वं, क्रौञ्च-द्वन्द्ववियोगोत्थः क्रौञ्चद्वन्द्वस्य क्रौञ्चमिथुनस्य, वियोगादेकस्य क्रौञ्चस्य निषादेन हननेनोद्भूताद् विरहादुत्थः उत्पन्नः, शोकः आदिकवेः वाल्मीकेः श्लोकत्वं करुणरसाभिव्यञ्जकशब्दसन्दर्भरूपत्वमागतः प्राप्त इत्यर्थः।

## उज्जीवनी

अत्रेदं तत्त्वम्—"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतमुनिकृतं रससूत्रम् । अत्र संयोगादिति पञ्चम्या हेतुत्वमर्थः । हेतुत्वं कारकत्वं ज्ञापकत्वं चेति द्विविधम् । यथा दण्डनिष्ठं घटहेतुत्वं कारकत्वरूप, न तथा विभावानुभावव्यभिचारिसंयोगनिष्ठं रसहेतुत्वम् । तथा सति यथा घटोत्पत्त्यनन्तरं घटनाशे तद्धेतोर्दण्डस्य नाशो नास्ति तथा रसप्रतीत्यनन्तरं तद्धेतूनाँ विभावानुभावव्यभिचारिणां नाशे रसस्य सम्भवप्रसङ्गः । यथा च धूमोऽग्नेः ज्ञापको हेतुः न तथा विभावादयो रसस्य ज्ञापकाः । सिद्धस्य तस्यासम्भवात् । अतः कारकत्वज्ञापकत्वाभ्यामन्यद् व्यञ्जकत्वरूपं हेतुत्वं संयोगादित्यत्र पञ्चम्या अर्थ इति अलङ्कारशास्त्रकाराः समामनन्ति । तदुक्तं काव्यप्रकाशे—

"लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते, शत्रोरेवैते तटस्थस्यैवैते, न ममैवैते, न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारानवध्यवसायाद् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानाँ वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत् सर्वमिव तिरोदधद्, ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः । स च न कार्यः । विभावादिनाशेऽपि तस्य सम्भवप्रसङ्गात् । नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवात् । अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः । कारकज्ञापकाभ्याम् अन्यत् क्व दृष्टमिति चेत् न क्वचिदित्यलौकिकत्वसिद्धेः, भूषणमेतन्न दूषणम् । चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्येत । लौकिक प्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम् । तद्ग्राहकं च न निर्विकल्पकं विभावादिपरामर्शप्रधानत्वात् । नापि सविकल्पकं चर्व्यमाणस्या-

विविध[1]वाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य च एवार्थः सारभूतः। तथा चादिकवेर्वाल्मीकेः, निहत[2]सहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः।

उज्जीवनी।

लौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्योभयात्मकत्वमपि पूर्ववल्लोत्तरतामेव गमयति, न तु विरोधम् इति श्रीमदाचार्याभिनवगुप्तपादाः" । इति।

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥ इति च।

पुरैकदा माध्यन्दिनाय सवनाय पुण्यां तमसां नदीमुपगतवान् महर्षिर्वाल्मीकिः। तत्र कस्यचित् पादपस्य शाखायां विहरतः क्रौञ्चमिथुनादेकं पुमांसं व्याधशरेण निहत (अनुविद्ध) मदर्शत्। तं (निहत) सहचरीविरहकातरं, क्रौञ्चमुद्दिश्य क्रौञ्ची आक्रन्दति स्म। व्याधशरानुविद्धं क्रौञ्चं पश्यतः क्रौञ्च्या आक्रन्दनमुपशृण्वतश्च मुनेः कारुण्यं क्रोधश्च श्लोकस्योद्भवे हेतुत्वमभजत। ततस्तदभिव्यञ्जकविभावानुभावादीनां वाचकशब्दसमुदायात्मानं काव्यरूपमाश्रयमभिगत्य श्लोकत्वमुपगतः। तत्र च (क्रौञ्चशोकः) व्याधशरविद्धक्रौञ्चालम्बनः क्रौञ्च्याक्रन्दनाद्दीपितश्च सहृदयानां हृदये वासनारूपेणावस्थितः शोकाख्यः स्थायीभावः करुणरसव्यपदेशविषयो भवति।

उक्तमर्थं विवृणोति। विविधेति—विविधानां विचित्राणां वाच्यानां प्रतीयमानार्थबोधनसमर्थानां अभिधेयानां ये वाचकाः शब्दास्तेषां रचनायाः तत्तद्रसानुगुणसङ्घटनायाः प्रपञ्चनेन चारुणः सुन्दरस्य, काव्यस्य कविप्रयुक्तशब्दसन्दर्भस्य, स एवार्थः काव्यार्थ एव प्रतीयमानरूपः, सारभूतोऽर्थः ललितोचितसन्निवेशचारुण इति पूर्वोक्तस्य विविधवाच्यवाचकरचनाप्रपञ्चचारुण इति भङ्ग्यन्तरेणानुवादरूपमिदम्। सारभूत इति चार्थकथनमात्मशब्दस्य वेत्यपि वेदितव्यम्। तथा च निहतः सहचरीविरहकातरश्च क्रौञ्चः, सहचर्या विरहः सहचरीसाहचर्यध्वंसः,

१. धार्वाशद्दवा० च. २. सन्निहित च.

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥" इति ।

शोको हि करुणस्थायिभावः । प्रतीयमानस्य चान्यभेद[1]दर्शनेऽपि रसभावमुखे[2]नैवोपलक्षणं प्राधान्यात् ॥

उज्जीवनी ।

तेन कातरो दुःखितश्च क्रौञ्चः इति, निहतसहचरीविरहकातरक्रौञ्च इति विशेषणोभयपदकर्मधारयः । तस्मै तमुद्दिश्य य आक्रन्दः क्रौञ्च्यास्तेन जनितः । निहतक्रौञ्चेन विभावेन क्रौञ्च्या आक्रन्दनेन अनुभावेन च मुनेः कारुण्यस्य क्रोधस्य च हेतुभूतः क्रौञ्च्याः शोक एव आदिकवेर्वाल्मीकेर्वदनान्निर्गते श्लोकरूपे (शब्दरूपे) शरीरे प्रतीयमानं माधुर्यं सहृदयैरास्वाद्यते । श्लोकरूपतया परिणतः परिणतिं प्राप्तः । तमेव श्लोकमाह—मा निषादेति ।

अस्यार्थः—हे निषाद, न विद्यते मा (श्रीः) यस्य सः अमः, निःश्रीकस्तत्सम्बुद्धौ हे अम! इति, यत् तु यतस्तु, त्वं क्रौञ्चमिथुनात् क्रौञ्चस्य द्वन्द्वाद् एकं पुमांसं क्रौञ्चं, काममोहितं कामुकं, अवधीः हतवान् । ततस्त्वं शाश्वतीः समाः बहून् वत्सरान् प्रतिष्ठां मा गमः न प्राप्नुया इति ।

अनेन सूचितः रामायणस्येतिहासस्यार्थः—मा (लक्ष्मीः) निषीदत्यस्मिन्निति मानिषादः, तत्सम्बुद्धौ हे मानिषाद, हे लक्ष्मीनिवास, यतस्त्वं क्रौञ्चमिथुनाद् राक्षसद्वन्द्वाद् रावणमन्दोदरीरूपाद्, एकं रावण निहतवांस्ततः, शाश्वतीः समाः प्रतिष्ठां प्राप्नुयाः इति ।

ननु शोको यदि श्लोकत्वमागतस्तर्हि काव्यार्थेषु प्रतीयमानस्य सारभूतत्वं कथमुपपद्यत इत्याशङ्कायामाह—शोक इति ।

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायिभावा नव क्रमात् ॥

---

१. प्रभेद० क. ख.    २. नोप० क. ख.

**सरस्वती स्वादु तदर्थवस्तु, निःष्यन्दमाना महतां कवीनाम् ।**
**अलोक[1]सामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥ ७ ॥**

---

उज्जीवनी ।

विभावानुभावव्यभिचारिसंयोगादभिव्यक्तः शोकाख्यः स्थायी भावः करुणरसतां प्रतिपद्यते । अतः करुणरसस्य स्थायी भावः शोकः प्रतीयमान एव न कदाचिदपि वाचकशब्दाभिधेयो भवेदिति पूर्वं प्रतिपादितम् "अन्वयव्यतिरेकाभ्यामर्थसामर्थ्याक्षिप्तत्वमेव रसादीनां न त्वभिधेयत्वं कथञ्चिदिति तृतीयोऽपि प्रभेदो वाच्याद् भिन्न एवेति स्थितम्" इति ।

प्रतीयमानस्येति—प्रतीयमानस्य च व्यङ्ग्यस्यापि अन्यौ भेदौ यौ वस्त्वलङ्काररूपौ तयोर्दर्शनेऽपि विद्यमानतया ज्ञानेऽपि वाच्यार्थापेक्षया प्राधान्येऽपि च, रसभावमुखेन रसमुखेन भावमुखेन च, व्यङ्ग्यवस्त्वलङ्कारापेक्षयापि प्राधान्येन रसभावादेस्तन्मुखेनैव, इतरयोरुपलक्षणं ज्ञापनं भवति। प्राधान्यात् रसपर्यवसायित्वादित्यर्थः ।

अत्रेदं बोध्यम्—विभावानुभावव्यभिचारिभिः अभिव्यक्तः स्थायी रत्यादिः रसः। विभावानुभावाभिव्यक्तो व्यभिचारी भावः। विभावानुभावाभ्यां चर्व्यमाणस्य व्यभिचारिणः स्वात्ममात्रे विश्रान्तेरभावेऽपि, यत्र रसपर्यन्तविश्रान्तिः न जाता तत्र भावस्य सारभूतत्वमङ्गीक्रियत इति रसादिषु भावोऽप्यन्तर्भावित इति तस्य सारभूतत्वमुररीकृतम् । तथा वस्त्वलङ्कारयोः प्रतीयमानयोरर्थयोरपि तावन्मात्रेऽविश्रान्ततेति इतरशाब्दवैलक्षण्यकारित्वेन सारभूतत्वमिति वस्तुध्वनेरलङ्कारध्वनेश्च तत्त्वं सूपपादम् ।

अथ काव्यस्योद्भवे निर्माणे समुल्लासे च प्रतिभाया एवानन्यथासिद्धनियतपूर्वभाविन्या हेतुत्वं प्रतिपादयितुमाह—सरस्वतीति । तत् पूर्वोक्तम्, अर्थवस्तु प्रतीयमानार्थतत्त्वरूपं वस्तु, स्वादु आस्वाद्यं, निष्यन्दमाना स्वयं प्रस्नुवाना, महतां कवीनां, महाकवीनां, सरस्वती वाणी काव्यरूपा, परिस्फुरन्तं परितो

---

१. 'अलोकसाम्यं प्रतिभाविशेषं परिस्फुरन्तं समभिव्यनक्ति ।' अ. भ. म.

तद् वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां भारती अ[1]लोकसामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति । येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते ।

उज्जीवनी ।

भासमानं, अलोकसामान्यं अनन्यसाधारणं, प्रतिभाविशेषं काव्यविशेषस्योद्भवे निर्माणे समुल्लासे चानुकूलं नवनवोन्मेषशालिप्रज्ञाविशेषं अभिव्यनक्ति सूचयति । तदुक्तं काव्यप्रकाशे—(P 8-11)

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ।।

शक्तिः कवित्वबीजरूपः संस्कारविशेषः, यां विना काव्यं न प्रसरेत्, प्रसृतं वोपहसनीयं स्यात् । लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां, काव्यानां च महाकविसम्बन्धिनाम्, आदिग्रहणादितिहासादीनां च विमर्शनात् व्युत्पत्तिः । काव्यं कर्तुं विचारयितुं च ये जानन्ति, तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति च त्रयः समुदिताः न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः" इति । शक्तिरनुभवजन्यः स्मृतिहेतुर्भावनाविशेषो प्रतिभापरपर्यायः ।

जगन्नाथपण्डितस्तु, प्रतिभामेव केवलां काव्यस्य कारणं मन्यते । सा च प्रतिभा कचिद् व्युत्पत्त्यभ्यासाभ्यां कचिद् देवतामहापुरुषप्रसादादिजन्येनादृष्टेन जायत इति च वदति । सर्वथा प्रतिभां विना काव्यं न प्रसरेदिति प्रतिभैव मुख्यं काव्यस्योद्भवे कारणमिति सिध्यति ।

तदेव विवृणोति—तदिति । तत् प्रतीयमानं पुनरन्यदेवेत्यादिना पूर्वमुक्तम् । वस्तुतत्त्वं प्रतीयमानार्थवस्तुरूपं तत्त्वं निःष्यन्दमाना प्रस्नुवाना, महतां कवीनां महाकवीनां, भारती काव्यरूपा वाणी, अलोकसामान्यमनितरसाधारणं, प्रतिभाविशेषं अपूर्ववस्तुप्रतिपादनक्षमं प्रज्ञाविशेषं, परिस्फुरन्तं परितः स्फुरन्तं, अभिव्यनक्ति प्रकाशयति । येनाभिव्यक्तेन, अतिविचित्रां कविपरम्परां

१. लोक० च.

इदं चापरं प्रतीयमानस्यार्थस्य सद्भावसाधनं प्रमाणम्—

> **शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।**
> **वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ८ ॥**

---

उज्जीवनी

वहत्यस्मिन् **संसारे** लोके । कालिदासप्रभृतयः कालिदासः प्रभृतिः प्रकारो येषां ते । द्वित्राः द्वौ वा त्रयो वा । पञ्चषाः पञ्च वा षड् वा महाकवय इति गण्यन्ते महाकवित्वगणनामर्हन्ति ।

इदमिति—इदं वक्ष्यमाणम् । प्रतीयमानस्यार्थस्य व्यङ्ग्यार्थविशेषस्य, सद्भावसाधनं सद्भावस्य विद्यमानतायाः, अपरम् अन्यत्, प्रमाणं चोच्यत इति शेषः ।

शब्दार्थेति । शब्दश्चार्थश्च शब्दार्थौ, तयोः शासनं शब्दार्थशासनं, शब्दानुशासनं व्याकरणम् अर्थानुशासनं कोशादिश्च । व्याकरणज्ञानेन सुशब्दावगतिः, कोशेन पदानां सङ्केतितार्थावबोधश्च जायते । अस्यार्थस्यावबोधकोऽयं शब्दो वाचक इति, अस्य शब्दस्यायमर्थो वाच्य इति च शब्दार्थयोः वाच्यवाचकरूप संसर्गज्ञानेन परं स प्रतीयमानोऽर्थः, न वेद्यते न ज्ञायते । व्याकरणात् सुशब्दान्, कोशादर्थांश्चाधिगतवद्भिः तावन्मात्रेण प्रतीयमानोऽर्थो नाधिगम्यत इति यावत् । तु किन्तु, काव्यार्थतत्त्वज्ञैः काव्यस्य सारभूतो यः प्रतीयमानोऽर्थः तस्य वाच्यातिशायिचमत्कृतिजनकस्वरूपं तत्त्वं जानद्भिः, तत्त्वज्ञानेनैव केवलं वेद्यतेऽधिगम्यते । एवं च शब्दार्थानुशासनज्ञानमात्रेण कविप्रयुक्तात् शब्दाद् वाच्यार्थबोधः, प्रतीयमानार्थतत्त्वज्ञानपुरस्कृतेन कविव्यापारेण प्रतीयमानार्थबोधश्च भवतीति वाच्यप्रतीयमानयोरर्थयोः सामग्रीभेदादपि भेदो वेदितव्यः

उक्तमर्थं विशदयति—स इति । सः अर्थः प्रतीयमानोऽर्थः काव्यार्थतत्त्वज्ञैरेव केवलं काव्यार्थतत्त्वं ये जानन्ति तैः तज्ज्ञानेनैव परं ज्ञायते अधिगम्यते । असौ अर्थः प्रतीयमानोर्थः, यदि च वाच्यरूप एव स्याद् अभिधीयमानरूप एव भवतीत्यङ्गीक्रियते चेत्, तत् तर्हि, तत्प्रतीतिः तस्यार्थस्यावबोधः, वाच्यवाचकरूपपरिज्ञानादेव वाच्यस्यार्थस्य, वाचकस्य शब्दस्य स्वरूपज्ञानादेव शब्दार्थयोर्वाच्यवाचकभावरूपसम्बन्धमात्रज्ञानादिति वार्थः, स्याद् भवेत् । अथ च ततश्च,

शब्दार्थशासनज्ञानमात्रेऽपि परैर्न वेद्यते सोऽर्थो यस्मात् केवलं काव्यार्थत-त्त्वज्ञैरेव ज्ञायते। यदि च वाच्यरूप एवासावर्थः स्यात्, तद्वाच्यवाचकस्वरूप-परिज्ञानादेव तत्प्रतीतिः स्यात्। अथ[1] च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्या[2]दिलक्षणमिवा[3]प्रगीतानां गान्धर्व-लक्षणविदामगोचर एवासावर्थः ॥

---

उज्जीवनी।

असावर्थः प्रतीयमानः, वाच्यवाचकलक्षणमात्रकृतश्रमाणां वाच्यलक्षणे कोशादौ, वाचकलक्षणे व्याकरणादौ च केवलं कृतश्रमाणां विहिताध्ययनानां, काव्य-तत्त्वार्थभावनाविमुखानां काव्यस्य यस्तत्त्वार्थः, तद्विषयकभावनाशून्यानाम् अगोचर एवाविषय एव। अप्रगीतानां प्रकृष्टं गीतं (गानं) येषां ते प्रगीताः प्रकृष्टा गायकाः, ते न भवन्तीति अप्रगीताः तेषाम्। अप्रकृष्टगायकानां गान्धर्वलक्षणविदां गान्धर्वलक्षणं सङ्गीतशास्त्रं तन्मात्रं विदतां स्वरश्रुत्यादिलक्षणं स्वराणां षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाख्यानां श्रुत्यादीनां च लक्षणं स्वरूपम् इव यथा न ज्ञायते तथायं प्रतीयमानोऽर्थोऽपीत्यर्थः।

अत्राप्रगीतानामिति वृत्तिग्रन्थस्य व्याख्यानावसरे लोचनकारेण, प्रकृष्टं गीतं येषां ते प्रगीताः इति प्रगीतशब्दस्य परमर्थो वर्णितः। तथा सति अप्रगीतानामिति वा प्रगीतानामिति वा पाठो लोचनकाराभिसंहित इति सन्देहे तत्परिहाराय उपलोचनकारस्तस्याभिसन्धिं प्रदर्शयति—'अप्रगीतानाम्' इत्येव वृत्तौ पाठः समादरणीयः। प्रगीतानामित्यस्यैव लोचने विवरणात् तथैव भवेदिति न भ्रमितव्यम्। "प्रारम्भेण चात्र फलपर्यन्तता लक्ष्यते" इति लोचन-करोक्तिः प्रगीतपदस्य द्वितीयविवरणविषया। प्रथमविवरणे गीतस्य प्रकृष्टत्वं चाभ्यासपाटवेनोपगतगानकौशलरूपम्। एतदेव फलमभिप्रेतं "फलपर्यन्तता" इत्यत्र। एवं प्रतीतपदार्थवर्णने स्वयमेव सुधियः नञर्थयोजनेन "अप्रगीताना"मि त्यस्य "अभ्यासातिशयाभिगमनीयगानकौशलरहितानाम्" इति प्रकृतानुगुणमर्थं जानीयुरिति लोचनकाराणामभिसन्धिः।

एवमिति, एवं वाच्यव्यङ्ग्ययोः स्वरूपभेदेन भिन्नसामग्रीजन्यप्रतीति-विषयत्वेन च। वाच्यव्यतिरेकिणः वाच्याद् व्यतिरिक्तस्य, व्यङ्ग्यस्य

---

१. 'अतो वा०.' क. २. 'दिस्वल०' क. ख. ३. 'व प्रगी०' च

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य[1] सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति [2]दर्शयति—

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥ ८ ॥**

व्यङ्ग्योऽर्थस्तव्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन, न [3]शब्दमात्रम् । तावेव शब्दार्थौ महाकवेः प्रत्यभिज्ञेयौ । व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनां, न वाच्यवाचकरचनामात्रेण ॥

---

उज्जीवनी ।

प्रतीयमानार्थस्य, सद्भावमस्तित्वं, प्रतिपाद्योपवर्ण्य, तस्यैव प्रतीयमानस्यैवार्थस्य, प्राधान्यमितरापेक्षया सारभूतत्वमिति दर्शयति—सोऽर्थ इति । सोऽर्थः व्यङ्ग्योऽर्थः शब्दविशेषाद् व्यञ्जनाव्यापारजन्यप्रतीतिविषयत्वेनानुभूतः, इदानीं स्मृतिहेतुभावनारूपेणावतिष्ठमानः, यश्च तद्व्यक्तिसामर्थ्ययोगी तस्यार्थस्य व्यक्तौ अभिव्यञ्जने यत् सामर्थ्यं तस्य योगोऽस्येति तादृशः कश्चन शब्दश्च शब्दविशेषोऽपि । इति एवंभूतौ तौ शब्दार्थौ शब्दश्चार्थश्च, महाकवेः कर्त्तुः यो महाकविरहं भूयासमित्याशास्ते तस्येत्यर्थः । एवमाशंसारूपयोद्बोधकसामग्र्या । यत्नतः प्रयत्नेन, प्रत्यभिज्ञेयौ प्रत्यभिज्ञामर्हतः । एवं प्रत्यभिज्ञानेन व्यङ्ग्यमर्थमनुसन्धाय तद्व्यञ्जकशब्दस्य प्रत्यभिज्ञातस्य सुनिपुणं प्रयोगः कर्तव्य इत्यर्थः ।

तदेवोपपादयति—व्यङ्ग्योऽर्थ इति । व्यङ्ग्योऽर्थः व्यञ्जनाव्यापारगम्योऽर्थः, तस्याभिव्यक्तौ व्यञ्जने समर्थश्च कश्चित् शब्दः, न शब्दमात्रं न शब्दसामान्यम् । किन्तु शब्दविशेषः, तावेव शब्दार्थौ व्यञ्जकः शब्दो व्यङ्ग्योऽर्थश्च, महाकवेः महाकविपदमभिलषतः, प्रत्यभिज्ञेयौ प्रत्यभिज्ञार्हौ । व्यङ्ग्यव्यञ्जकाभ्यां व्यङ्ग्येन व्यञ्जकेन च, सुप्रयुक्ताभ्यां पूर्वानुभूतस्यैवार्थस्योपस्थितेः योगेन (व्यङ्ग्यार्थानुसन्धानेन) तदनुकूलव्यञ्जकशब्दस्य प्रयोगेण च । महाकवीनां महाकवित्वप्रेप्सूनां, महाकवित्वलाभः महाकवित्वप्राप्तिः, त एव शब्दार्थयोः यथावत् प्रत्यभिज्ञाय प्रयोक्तार एव महाकवयो भवन्तीति भावः । न वाच्यवाचकरचनामात्रेण कोशादितः सङ्केतितमर्थमवबुद्ध्य तस्यार्थस्यानुसन्धानपुरस्सरं

---

१. 'स्यार्थस्य स०' क. ख.  २. 'प्रद०' क. ख.  ३. 'न सर्वः' च. ज. झ. ञ

इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथममुपाददते कवयस्तदपि युक्तमेवेत्याह—

**आलोकार्थी यथा दीपशिखायां यत्नवान् जनः ।**
**तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥ १० ॥**

यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवान् जनो भवति तदुपायतया । न हि दीपशिखामन्तरेणालोकः सम्भवति । तद्वद् व्यङ्ग्यमर्थं प्रत्यादृतो जनो वाच्येऽर्थे यत्नवान् भवति । अनेन प्रतिपादकस्य कवेर्व्यङ्ग्यमर्थं प्रति व्यापारो दर्शितः ।

---

उज्जीवनी ।

तद्वाचकानां तदभिधायकानां पदानां तत्तदर्थानुकूलया रचनया केवलं न कोऽपि महाकविपदमर्हति ।

इदानीमिति । व्यङ्ग्यव्यञ्जकयोः व्यङ्ग्यस्य व्यञ्जकस्य च । व्यञ्जनाव्यापारगम्यः यः सोऽर्थो व्यङ्ग्यः, व्यञ्जनयार्थप्रतिपादको यः स व्यञ्जकः शब्दस्तयोरित्यर्थः । प्राधान्येऽपि प्रत्यभिज्ञायमानस्य व्यङ्ग्यस्यार्थस्य प्रयुज्यमानस्य च व्यञ्जकस्य शब्दस्य, उपादेयतया प्राथम्ये कर्तव्यत्वेनोपस्थिते सत्यपि, यद् यतः, वाच्यवाचकावेव अभिधया बोध्यमानं वाच्यमर्थं विज्ञाय, तद्बोधकं वाचकं शब्दं च, कवयः काव्यनिर्मातारः, प्रथममादौ, उपाददते स्वीकुर्वते, वाच्यमर्थमभिसन्धाय वाचकशब्दं प्रयुञ्जते । तदपि वाच्यवाचकयोः प्रथमोपादानमपि युक्तमेवेत्याह उचितमेवेति कथयति ।

तदेवोपपादयति—अलोकार्थीति । आलोकं रमणीयस्य वस्तुनो दर्शनं चाक्षुषप्रत्यक्षमर्थयमानो जनः, तदुपायतया तदुपायत्वेन, दीपशिखायां प्रत्यक्षं प्रत्यालोकस्य प्रकाशस्य, सहकारित्वेन, प्रदीपज्वालायां, यत्नवान् प्रयत्नवान्, यथा भवति, तद्वत् तथा, तदादृतः तं व्यङ्ग्यमर्थं प्रत्यादरवान्, व्यङ्ग्यमर्थमालोकयितुमर्थी, वाच्ये अभिधाव्यापारबोध्येऽर्थे यत्नवान् भवतीत्यर्थः ।

यथेति । यथा हि यद्वत् । जनः आलोकार्थी सन्नपि आलोकं रम्यवस्तुदर्शकमर्थयमानो भूत्वा, दीपशिखायां दीपज्वालायाः सम्पादने, तदुपायतया

प्रतिपाद्यस्यापि तं दर्शयितुमाह—

**यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते ।**
**वाच्यार्थपूर्विका तद्वद् प्रतिपत् तस्य वस्तुनः ॥ ११ ॥**

यथा हि पदार्थद्वारेण वाक्या[1]र्थावगमस्तथा वाच्यार्थ[2]प्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः ॥

---

उज्जीवनी ।

दर्शनोपायत्वेन रम्यवस्तुदर्शनसामग्रीत्वेन, यत्नवान् प्रयत्नवान् भवति । तत्र हेतुमाह—न हीति । दीपशिखामन्तरेण आलोकहेतोः दीपस्यासन्निधाने, आलोको न सम्भवति हि । तद्वत् तथा व्यङ्ग्यमर्थं प्रति आदृतः प्रतीयमानेऽर्थे आदरवान् प्रतीयमानार्थप्रतिपादनेच्छया, जनः वाच्यार्थे यत्नवान् अभिधेयार्थप्रतिपादनोपायत्वेन तदभिधायकशब्दप्रयोगे यतमानो भवति । अनेन व्यङ्ग्यमर्थं बोधयितुमभिलषतः कवेः वाच्यार्थबोधनानुकूलप्रयत्नपरिग्रहकथनेन । प्रतिपादकस्य शब्दप्रयोक्तुः कवेः । व्यङ्ग्यं प्रतीयमानमर्थं प्रति प्रतीयमानार्थबोधानुकूलो व्यापारो वाच्ये यत्नः दर्शितः प्रदर्शित इत्यर्थः ।

यथा कविः प्रतीयमानार्थबोधनमभिलषन् तदुपायतया वाच्यार्थबोधनौपयिके शब्दप्रयोगानुकूले व्यापारे आदरवान् भवति तथा सहृदयस्यापि प्रतीयमानार्थजिज्ञासायां वाच्यार्थबोधस्यैव प्रथमं जायमानतां प्रदर्शयितुमाह—प्रतिपाद्यस्यापीति । प्रतिपाद्यस्य । यं प्रति शब्दः प्रयुक्तः तस्येत्यर्थः । तं व्यापारं ज्ञानानुकूलं दर्शयितुं ज्ञापयितुम्, आह ब्रूते । यथेति । वाक्यं पदसमूहः, तदर्थो वाक्यार्थः, स च पदार्थद्वारेण पदस्य पृथगर्थबोधद्वारेण पदार्थज्ञानपूर्वकमेव, वाक्यार्थः सम्प्रतीयते वाक्यार्थज्ञानं भवति । यथा पदार्थबोधानन्तरमेव वाक्यार्थबोधोऽनुभवसिद्धः, तद्वत् तथा, तस्य वस्तुनः प्रतीयमानार्थस्य, प्रतिपद् अवगतिः, वाच्यार्थपूर्विका वाच्यार्थः पूर्वं यस्याः सा तादृशी भवति ।

कविप्रयुक्तस्य शब्दसन्दर्भस्य श्रवणे तत्सङ्केतितस्यार्थस्यैव प्रथममुपस्थितिस्ततः शब्दबोधो वाच्यार्थबोधो भवति । ततश्च वक्तृबोद्धव्यादिवैशिष्ट्यात्

---

१. 'र्थस्या०' क. ख. २. 'र्थपू०' क. ख.

इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्यते तथा दर्शयति—

**स्वसामर्थ्यवशेनैव वाक्यार्थं [1]प्रतिपादयन् ।**
**यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ १२ ॥**

यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशय[2]न्नपि पदार्थो व्यापारनिष्पत्तौ न[3] भाव्यते विभक्ततया ।

---

उज्जीवनी ।

प्रतिभाजुषामन्यार्थबोधो व्यञ्जनया भवतीति क्रमः । अतः सहृदयस्यापि वाच्यार्थबोधानन्तरमेव व्यङ्ग्यार्थस्य प्रतिपत्तिर्जायत इति तत्त्वम् । यथाहीति । यथा हि यद्वद्, वाक्यार्थावगमः वाक्यार्थबोधः, पदार्थद्वारेण पदस्यार्थं विज्ञाय तद्द्वारा वाक्यार्थावगमः वाक्यस्य यो विशिष्टार्थः, तस्यावगमो ज्ञानं यथा भवति, तद्वत् तथा, वाच्यार्थप्रतीतिपूर्विका वाच्यार्थप्रतीत्यनन्तरमेव । व्यङ्ग्यस्यार्थस्य प्रतीयमानस्य वस्तुनः प्रतिपत्तिरवगमो जायत इत्यर्थः ।

इदानीमिति । इदानीं तत्प्रतीतेः व्यङ्ग्यार्थप्रतीतेः, वाच्यार्थप्रतीतिपूर्वकत्वेऽपि वाच्यार्थबोधानन्तरमेव, व्यङ्ग्यस्यार्थस्य प्रतीतिर्यद्यप्यनुभूयते तथापि व्यङ्ग्यस्यार्थस्य प्रतीयमानस्यार्थस्य, प्राधान्यं इतरातिशायिचमत्कृतिजनकत्वं, यथा येन प्रकारेण, न व्यालुप्यते न लुप्तं भवति । तथा तेन प्रकारेण तं प्रकारमिदानीं दर्शयति—स्वसामर्थ्येति । स्वसामर्थ्यवशेन, अत्र स्वशब्देन पदार्थो गृह्यते । स्वस्य तत्तत्पदेन वृत्त्या (व्यापारेण) उपस्थितस्य तत्तदर्थस्य यत् सामर्थ्यं आकाङ्क्षायोग्यतासन्निधिमत्त्वं, तद्वशेन, तत्सहकारेण, वाक्यार्थं, वाक्यतात्पर्यविषयीभूतमेकवाक्यतयान्वयबोधविषयं विशिष्टार्थं प्रतिपादयन् बोधयन् पदार्थः प्रत्येकपदार्थः । व्यापारनिष्पत्तौ व्यापारस्य वाक्यार्थबोधानुकूलस्याकाङ्क्षादेः सहकारेण फलप्राप्तौ सत्यां, यथा न विभाव्यते पृथक्त्वेन न ज्ञायते, तथेत्युत्तरकारिकया सम्बन्धो वेदितव्यः ।

यथेति । स्वसामर्थ्यवशेनैव, यथा पदार्थः आकाङ्क्षादिसहकारिवशेनैव,

---

१. 'प्रथयन्नपि.' च. २. 'प्रतिपादयन् प०' क. ३. 'न वि०' क. ख. ग.

तद्वद् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥ १३ ॥

एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह—

यत्रार्थः शब्दो वा
　　तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः
　　स ध्वनिरिति सूरिभिः कथितः ॥ १४ ॥

---

उज्जीवनी

वाक्यार्थं तात्पर्यार्थं, प्रकाशयन् अवबोधयन् व्यापारस्य तस्य फलप्राप्त्यनन्तरं विभक्ततया पार्थक्येन न भाव्यते न प्रकाशते ।

तद्वदिति । तद्वत् तथा वाच्यार्थविमुखात्मनां वाक्यार्थरूपे वाच्यार्थे विमुखः तद्बोधमात्रेणापरितुष्यन् आत्मा येषां तेषां सचेतसां सहृदयानां, तत्त्वार्थदर्शिन्यां तत्त्वार्थस्य सारभूतस्यार्थस्य दर्शनोत्सुकायां, बुद्धौ प्रज्ञायां, सोऽर्थः प्रतीयमानोऽर्थः, झटित्येव क्षिप्रमेव, अवभासते प्रकाशते । वाक्यार्थबोधानन्तरं वाच्यबोधोऽपि प्राधान्येन न प्रकाशत इत्यर्थः ।

एवमिति । एवमुक्तप्रकारेण, वाच्यव्यतिरेकिणो वाच्यादतिरिक्तस्य, व्यङ्ग्यस्यार्थस्य प्रतीयमानार्थस्य, सद्भावमस्तित्वं, प्रतिपाद्य निरूप्य, प्रकृते उपयोजयन्नाह तस्य प्रकृतोपयोगं दर्शयन्नाहेत्यर्थः ॥

काव्यविशेषलक्षणमाह—यत्रार्थ इति । यत्र यस्मिन् काव्यविशेष इत्यर्थः । अस्य स काव्यविशेषः इत्यनेन सम्बन्धः । अर्थो वाच्यः । वा अथवा । शब्दो वाचकः । उपसर्जनीकृतस्वार्थाविति द्विवचनेन अर्थशब्दयोरुभयोरपि उपसर्जनीकृतस्वार्थत्वमभिमतमिति ज्ञायते । अनुपसर्जनमुपसर्जनं सम्पद्यमानं कृतम् उपसर्जनीकृतम्, तच्च तत् स्वं चोपसर्जनीकृतस्वं, तद्रूपोऽर्थो येन स उपसर्जनीकृतस्वार्थ इति अर्थविशेषणम् । अर्थः स्वात्मानम् (अर्थम्) उपसर्जनमप्रधानं कुर्वन्, अर्थः स्वयमुपसर्जनीभवन् अप्रधानीभवन्नित्यर्थः ।

उज्जीवनी ।

तथा उपसर्जनीकृतः स्वस्य (शब्दस्य) अर्थः अभिधेयः येन स शब्दः इत्युपसर्जनीकृतस्वार्थत्वं शब्दविशेषणम् । एवं च उपसर्जनीभूतोऽर्थः उपसर्जनीकृतार्थः शब्दो वा इत्यर्थः । उपसर्जनीकृतस्वार्थश्च उपसर्जनीकृतस्वार्थश्च उपसर्जनीकृतस्वार्थौ । उपसर्जनीकृतस्वार्थत्वमुभयोरपि सम्भवतीति प्रदर्शयितुमुपसर्जनीकृतस्वार्थाविति द्विवचनमुपात्तम् । "सरूपाणामेकशेष एकविभक्ताविलेनेकशेषः" । तथाप्युभयोरप्युपसर्जनीकृतस्वार्थत्वं नेकरूपम् । अर्थः शब्दो वा इत्येकवचनमुपात्तं तु तयोः पृथक् प्राधान्याभिप्रायेण । प्राधान्येनार्थस्य व्यञ्जकत्वे शब्दस्य सहकारित्वं, शब्दस्य प्राधान्येन व्यञ्जकत्वे तु अर्थस्य सहकारित्वं च वेदितव्यम् । ननु तयोरुभयोरेकस्थलानुरोधेन व्यञ्जकत्वे प्राधान्यं सम्भवति । तमर्थं योऽविद्यमानत्वादिवादनिराकरणेन साधितः तं प्रतीयमानमर्थं व्यङ्क्तः व्यञ्जयतः । अन्तर्भावितण्यर्थोऽयं प्रयोगः । उपसर्जनीकृतस्वार्थाविति विशेषणानुरोधेन व्यङ्क्त इति द्विवचनम् । स काव्यविशेषः ध्वनिः ध्वनिसंज्ञित इति एवं, सूरिभिः विद्वद्भिः, कथित उक्तः ।

वस्तुतस्तु—"वा स्याद् विकल्पोपमयोर्वितर्के पादपूरणे । समुच्चये च" इति मेदिनी । "वा स्याद् विकल्पोपमयोरेवार्थे च समुच्चये इति विश्वः । इति कोशपर्यालोचनया वाकारस्य समुच्चयार्थत्वावगतेः उपसर्जनीकृतात्मा अर्थः, उपसर्जनीकृतार्थः शब्दश्च यत्रार्थान्तरं व्यञ्जयतः स काव्यविशेषो ध्वनिरिति ध्वनिकृद्वचने न काप्यनुपपत्तिः । तदनुरोधेनैव पण्डितराजेन "शब्दार्थौ गुणीभावितात्मानौ यत्रार्थान्तरमभिव्यङ्क्तस्तदाद्यम्" इति उत्तमोत्तमकाव्यलक्षणमभिहितम् ।

एवं ध्वनिलक्षणोऽर्थो लक्षणामूलोऽभिधामूलश्चेति द्विविधः । शब्दादेव लक्षणया लक्ष्यार्थबोधे सति तन्मूलः प्रयोजनादिरूपो योऽर्थस्तत्प्रतिपादने व्यञ्जनाव्यापार एव प्रभवतीति स शब्दो व्यञ्जक इत्युच्यते । वस्त्वलङ्कारसादिरूपाणां त्रयाणामपि व्यङ्ग्यार्थानां अर्थसामर्थ्याक्षिप्तत्वस्य साधारण्यात् लक्षणामूलध्वनौ अर्थस्य प्राधान्येन व्यञ्जकत्वं, शब्दस्य सहकारित्वं चाभ्युपगम्यते । अभिधामूलध्वनौ तु अनेकार्थबोधनसमर्थस्य शब्दस्याभिधया

यत्रार्थो वाच्यविशेष: शब्दो वा तमर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिरिति ।

---

उज्जीवनी ।

संयोगादीनां साहाय्येन प्राकरणिकार्थबोध: प्रथमं सञ्जायते। तत: तदर्थबोधनेन क्षीणशक्तिरभिधा अर्थान्तरं बोधयितुं यतोऽसमर्था ततो व्यञ्जनयार्थान्तरप्रतीतिर्जायत इति मतानुसारेण तस्य व्यङ्ग्यस्यार्थस्य स शब्द एव प्राधान्येन व्यञ्जकः। प्राथमिकार्थश्च सहकारीति विवेकः। तदुक्तम्—

> "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
> संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥"
> "संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
> अर्थ: प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधि: ॥
> सामर्थ्यमौचिती देश:, कालो व्यक्तिः स्वरादय: ।
> शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव: ॥"    इति ।

काव्यं चोत्तममध्यमाधमभेदेन त्रिविधमित्याहुरालङ्कारिका:। यत्र व्यङ्ग्योऽर्थो वाच्यातिशायी तदुत्तमं काव्यम्। वाच्यानतिशायिनि व्यङ्ग्ये मध्यमं काव्यम्। अव्यङ्ग्यं तु अधमं काव्यमिति च। अव्यङ्ग्यमित्यत्र नञीषदर्थे बोध्य:। अनुदरा कन्येत्यत्र यथा। तदेवोक्तम्—

> "तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता ।
> अप्राशस्त्यमभावश्च नञर्था: षट् प्रकीर्त्तिता: ॥ इति ।

एतेन शब्दबोध्योपसर्जनीभूतार्थव्यङ्ग्य-शब्दबोध्योपसर्जनीकृतार्थव्यङ्ग्यान्यतरत्वं ध्वनिसामान्यलक्षणम्। तच्चाविवक्षितवाच्यविवक्षितान्यपरवाच्यान्यतरत्वरूपम्। एवं च अविवक्षितवाच्यविवक्षितान्यपरवाच्यान्यतरार्थव्यञ्जकशब्दत्वं काव्यविशेषस्य लक्षणम्। काव्यसामान्यलक्षणं तु योऽर्थ: सहृदयश्लाघ्य इत्यनेनोक्तम्। तथा च यत्रार्थ उपसर्जनीभूतस्तमर्थं व्यनक्ति सोऽविवक्षितवाच्यो लक्षणामूलध्वनि:। यत्र शब्द उपसर्जनीकृतार्थस्तमर्थं व्यनक्ति, स विवक्षितान्यपरवाच्योऽभिधामूलध्वनि: इति च ध्वने: प्रकारद्वयमपि कारिकयैव प्रतिपादितमिति वेदितव्यम्।

अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम्। यदप्युक्तम्—"प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति" इति, तदप्ययुक्तम्। यतो लक्षणकृतामेव स केवलं न प्रसिद्धः। लक्ष्ये तु परीक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम्। ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः।

---

उज्जीवनी।

उक्तमेवार्थं विशदयति—यत्रेति। यत्र काव्यविशेषे, अर्थः सङ्केतितो वाच्यविशेषः, यस्यार्थस्यार्थान्तरव्यञ्जनसामर्थ्यं स वाच्यार्थविशेषः। नहि सामान्येन सर्वस्यापि वाच्यस्यार्थान्तरव्यञ्जकत्वं पश्यामः। शब्दः अभिधेयार्थवाचकः वाचकविशेषो, यस्य वाचकशब्दविशेषस्यार्थान्तरव्यञ्जकत्वमस्ति स इत्यर्थः। तमर्थं प्रतीयमानं व्यङ्ग्यमर्थं, व्यङ्क्तः प्रकाशयतः, स काव्यविशेषो, यत्र लक्षणामूलव्यङ्ग्योऽर्थश्च मत्कृतिजनकः, यत्र चाभिधामूलव्यङ्ग्योऽर्थस्तथा स च काव्यविशेषो ध्वनिरिति व्यपदेशमर्हतीति मतम्। इदं काव्यविशेषलक्षणम्।

अनेन काव्यविशेषलक्षणाख्यानेन वाच्यचारुत्वहेतुभ्य उपमादिभ्योऽलङ्कारेभ्यः वाचकचारुत्वहेतुभ्योऽनुप्रासादिभ्यश्च विभक्त एव पृथग्भूत एव, ध्वनेर्विषय इति दर्शितं प्रतिपादितम्। यदपीति— प्रसिद्धं प्रस्थानं सहृदयहृदयाह्लाद्यर्थप्रतिपादकशब्दसमुदायात्मकत्वं काव्यस्य लक्षणम्। तदेव प्रसिद्धं प्रस्थानं प्राचामनुमतम्। तदतिक्रमिणः तदतिरिक्तस्य मार्गस्य काव्यत्वं नास्तीत्यतः, ध्वनिः ध्वनिसञ्ज्ञितोऽर्थः कश्चिन्नास्ति इति प्राचीनैर्यदप्युक्तं तदपि एतेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च ध्वनेः पृथग्भूतत्वकथनेन निरस्तमित्यर्थः। यदप्युक्तमित्यस्य तदप्ययुक्तमित्यनेन सम्बन्धः। तत्र हेतुमाह—यत इति। लक्षणकृतां प्राचां काव्यलक्षणकाराणामेव केवलं स ध्वनिः न प्रसिद्धः। ध्वनिरूपोऽर्थस्तेषां दृष्टिगोचरतां न गतः। तु किन्तु, लक्ष्ये महाभारते रामायणे च परीक्ष्यमाणे परितो दृश्यमाने, स एवार्थः ध्वनिरूपोऽर्थः। सहृदयहृदयाह्लादकारि काव्यतत्त्वं सहृदयानां काव्यवासनापरिपक्वबुद्धीनाम्, आह्लादमानन्दं अलौकिकं कर्तुं शीलमस्येति तादृशंदम् काव्यतत्त्वं काव्यस्य प्रतीयमानार्थवस्तुरूपं तत्त्वं, ततः तस्मादन्यद् भिन्नं, चित्रमेव चित्रकाव्यमेवेति, अग्रे तृतीयोद्द्योते दर्शयिष्यामः।

यदप्युक्तम्—कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारा[1]दिप्रकारेष्वन्तर्भाव इति, तदप्यसमीचीनम्[2]; वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वनेः कथमन्तर्भावः, वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूताः, स त्वङ्गिरूप एवेति प्रतिपादयिष्यमाणत्वात्।

---

उज्जीवनी।

एतेन, यत्रार्थः शब्दो वा इति काव्यविशेषलक्षणमुक्तम्। काव्यसामान्यस्य तु सहृदयश्लाघ्यार्थप्रतिपादकशब्दत्वं लक्षणम्। स चार्थः वाच्यवस्त्वलङ्कार, व्यङ्ग्यवस्त्वलङ्काररसात्मना पञ्चविधः। वस्त्वलङ्काररसादीनां त्रयाणामपि व्यङ्ग्यत्वेन वाच्यातिशायिचमत्कृतिजनकत्वसम्भवेऽपि वस्त्वलङ्कारयोरुभयोः स्वशब्दनिवेदितत्वस्यापि सम्भवात् रसादीनामेव परमं प्राधान्यम्। तत्र प्रतीयमानस्यार्थस्य विद्यमानत्वे पूर्वेषां विप्रतिपत्तिरासीत्। स च प्रतीयमानस्यार्थस्य अस्तित्वसमर्थनेन तस्य वाच्यार्थापेक्षया प्राधान्यं यत्र तस्य काव्यविशेषत्वप्रख्यापनेन च निराकृता। एवं प्रतीयमानस्य अर्थस्य सिद्धौ सत्यां तस्य यस्मिन् काव्ये वाच्यातिशायिचमत्कृतिजनकत्वं, व्यञ्जकस्यार्थस्य शब्दस्य वा उपसर्जनत्वं, स काव्यविशेषो ध्वनिः, यत्र च प्रतीयमानार्थसद्भावेऽपि तदपेक्षया वाच्यस्यैव चमत्कृतिजनकत्वं, व्यङ्ग्यस्य च तदङ्गत्वं तत् काव्यं गुणीभूतव्यङ्ग्यं च वेदितव्यम्। अविद्यमानतावादनिराकरणेन प्रतीयमानस्यार्थस्यास्तित्वं समर्थितमित्यर्थः। ततोऽन्यत् ध्वनिगुणीभूतव्यङ्ग्याभ्यामन्यत् चित्रमित्यपि तृतीयोद्द्योते दर्शयिष्यते। एवं च ध्वनिः, गुणीभूतव्यङ्ग्यं, चित्रं चेति काव्यं त्रिविधमिति ध्वनिकाराभिमतम्।

तृतीयमभाववादिमतमप्येतेन निरस्तमित्याह—यदप्युक्तमिति। कामनीयकं काव्यशोभाधायकत्वेन यत् सहृदयहृदयाह्लादकारित्वरूपं तद् अनतिवर्तमानस्य अनतिक्रममाणस्य तस्य प्रतीयमानार्थस्य. उक्तेषु काव्यशोभाकरत्वेनाभिमतेषु अलङ्कारादिप्रकारेषु अलङ्काराणां गुणानां वा प्रभेदेषु, अन्तर्भावः अन्तर्गतत्वं; काव्यशोभाकरत्वेनाङ्गीकृतेभ्यो गुणालङ्कारादिभ्यो ध्वनेरनतिरिक्तत्वाद् ध्वनिर्नास्तीति तृतीयं ध्वन्यभाववादिमतम्। तदपि असमीचीनमयुक्तम्।

---

१. 'रप्र०' क. २. 'मु. यतो वा०' क. ख.

परिकरश्लोकश्चात्र—

> व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
> वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ॥

ननु यत्र प्रतीयमानस्यार्थस्य वैशद्येनाप्रतीतिः स नाम मा भूद् ध्वनेर्विषयः । यत्र तु[1] प्रतीतिरस्ति, यथा—समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिदीपकसङ्करालङ्कारादौ, तत्र ध्वनेरन्तर्भावो भविष्यतीति[2] निराकर्तुमभिहितम्—"उपसर्जनीकृतस्वार्थौ" इति ॥

---

उज्जीवनी ।

तदेव विशदीकरोति—वाच्येति । वाच्यवाचकमात्राश्रयिणि प्रस्थाने वाच्यमर्थं, वाचकं शब्दं च केवलमाश्रित्यावतिष्ठमाने मार्गे, व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य, व्यङ्ग्यः प्रतीयमानोऽर्थः, व्यञ्जकः तत्प्रत्यायकः शब्दः, तदुभयाश्रयेण व्यवस्थाविषयस्य, ध्वनेर्व्यङ्ग्यस्य, कथमन्तर्भावः, अन्तर्भावो नास्त्येवेत्यर्थः । हि यतः, वाच्यवाचकचारुत्वहेतवः वाच्यस्य चारुत्वहेतवो येऽलङ्कारा गुणाश्च, वाचकस्य शब्दस्य चारुत्वहेतवो येऽनुप्रासादयोऽलङ्काराः शब्दगुणाश्च श्लेषादयस्ते तस्य ध्वनेरङ्गभूता उपसर्जनीभूताः । स तु ध्वनिस्तु अङ्गिरूपः प्रधानभूत एव इति प्रतिपादयिष्यमाणत्वात् । एवमग्रे प्रतिपादयिष्यत इत्यर्थः ।

परिकर इति । परिकरोति प्रकृतार्थविशदीकरणायोपकरोतीति परिकरः । उक्तस्यार्थस्य स्पष्टप्रतिपत्त्यर्थं श्लोको विद्यत इत्यर्थः ।

व्यङ्ग्यः अर्थः, व्यञ्जकस्तद्बोधकः शब्दः, तयोः सम्बन्धः व्यञ्जकत्वं व्यञ्जनात्मकः, तन्निबन्धनतया तदधीनप्रतिपत्तिजनकत्वेन स्थितस्य ध्वनेः व्यङ्ग्यार्थस्य, वाच्यवाचकचारुत्वहेतुषु वाच्यस्य वाचकस्य वा यत् चारुत्वं कामनीयकं तस्य हेतुषु अलङ्कारेषु, अन्तःपातिता अन्तर्गतत्वं कुतः कस्माद् भवतीति शेषः ।

काव्यविशेषलक्षणे उपसर्जनीकृतस्वार्थत्वस्य प्रयोजनं प्रतिपादयितुमाह—नन्विति । चित्रकाव्यस्य यदव्यङ्ग्यत्वं तद् न रसभावादेरत्यन्ताभावनिबन्धनं, किन्तु रसभावादेरविवक्षाधीनम् । तदविवक्षायामपि कचिद् वाच्यसामर्थ्यवशेन

---

१. 'तु तत्प्रं०' क. २. 'त्यादि' ख. च.

अर्थो गुणीकृतात्मा, गुणीकृताभिधेयः शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति। तेषु कथं तस्यान्तर्भावः। व्यङ्ग्यप्राधान्ये हि ध्वनिः। न चैतत् समासोक्त्यादिष्वस्ति।

समासोक्तौ तावत्—

उपोढरागेण विलोलतारकं, तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया, पुरोऽपि रागाद् गलितं न लक्षितम्॥

---

उज्जीवनी

रसादिप्रतीतिः जायमाना दुर्बला भवतीत्यतो नीरसत्वं चित्रकाव्यस्याङ्गीक्रियते। एवं च यत्रालङ्कारे प्रतीयमानस्यार्थस्य वैशद्येन स्फुटतया प्रतीतिः स ध्वनेर्विषयो न भवतीति चेद् मास्तु। यत्र तु यस्मिन्नलङ्कारे तु, प्रतीतिरस्ति रसभावादेः प्रतीयमानस्यार्थस्य स्फुटं प्रतीतिर्विद्यते, तत्र समासोक्त्यादौ, ध्वनेरन्तर्भावो भविष्यति। यत्र काव्ये समासोक्तिरलङ्कारस्तत्र, वाच्यसामर्थ्याक्षिप्तस्य व्यङ्ग्यार्थस्यापि सम्भवात्, तत्र ध्वनिलक्षणस्यातिव्याप्तेः इत्यादि निराकर्तुं अतिव्याप्तिदोषनिराकरणायाभिहितमुपात्तम् उपसर्जनीकृतस्वार्थत्वं व्यञ्जक-शब्दार्थयोर्विशेषणत्वेनोपादानं कृतमित्यर्थः। तथा च यत्र समासोक्त्यादिर-लङ्कारः तत् काव्यं गुणीभूतव्यङ्ग्यम्। तत्रातिव्याप्तिवारणायोपसर्जनीकृत-स्वार्थत्वं विशेषणमिति फलितम्।

पर्यवसितमर्थमाह—अर्थ इति। अर्थः गुणीकृतात्मा, उपसर्जनीकृतः स्वार्थः येन सः। शब्दो गुणीकृताभिधेयः, गुणीकृतः उपसर्जनीकृतः अभिधेयः स्वार्थः (स्वस्य शब्दस्य अर्थः) येन सः। यत्र यस्मिन् काव्ये, अर्थान्तरं प्रतीय-मानमर्थं, अभिव्यनक्ति अभिव्यञ्जयति स ध्वनिरिति काव्यविशेष इति कथित इति शेषः। अलंकारेषु तस्य ध्वनेः, कथमन्तर्भावः। अन्तर्भावो न भवत्येव। व्यङ्ग्यप्राधान्ये हि ध्वनिः। व्यङ्ग्यस्यार्थस्य प्रधानतायां हि तत् काव्यं ध्वनिव्यपदेशं भजते। एतद् व्यङ्ग्यस्य प्राधान्यं समासोक्त्यादिषु समासो-क्त्यादयो यत्र तेषु काव्येषु नास्तीत्यर्थः।

उक्तमेवार्थं उदाहरणैर्विशदयति—समासोक्तौ तावदिति, उपोढेति। उपोढरागेण उपोढो धृतो, रागः सान्ध्योऽरुणिमा येन तादृशेन, शशिना चन्द्रेण, विलोलतारकं विलोलास्तारका ज्योतींषि यत्र तादृशं, निशामुखं निशाया रात्रे-

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते, समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् ॥

आक्षेपेऽपि व्यङ्ग्यविशेषाक्षेपिणोऽपि वाच्यस्यैव चारुत्वं प्राधान्येन वाक्यार्थ आक्षेपोक्तिसामर्थ्यादेव ज्ञायते। तत्रहि शब्दोपारूढो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेप: स एव व्यङ्ग्यविशेषमाक्षिपन्मुख्यं काव्यशरीरम्।

---

उज्जीवनी।

मुखं प्रारम्भ: तथा तेन प्रकारेण गृहीतं, यथा पुर: पूर्वस्यां दिशि, गलितं प्रशान्तं, समस्तं सकलं, तिमिरांशुकं तम:पटलं, रागात् सन्ध्यारुण्यात्, न लक्षितमपि ॥ अत्र चन्द्रोदयवर्णनं प्रस्तुतम्। निशाया: प्रारम्भे उद्यता चन्द्रेण तमांस्यपनीतानीति प्रकृतवाक्यार्थ:। ततो विशेषणानामन्यार्थबोधजननानुकूलानां महिम्ना प्रकृतस्य कस्यचिदर्थस्य बोधोऽपि भवति। तथा हि—उपोढो धृतो राग: प्रेमा येन तादृशेन शशिनेति पुंस्त्वनिर्देशेन केनचिन्नायकेन, विलोलतारकं विलोलाश्चञ्चलास्तारका अक्षिकनीनिका: यत्र तादृशं, निशामुखमिति निशाशब्दगतस्त्रीत्वनिर्देशेन नायिकाया मुखं वदनं तथा गृहीतं चुम्बितुमुन्नमितं यथा, तिमिरांशुकं नीलजालिकारूपं, रागात् प्रेम्ण:, पुरोऽपि अग्रेऽपि, गलितं पतितं, न लक्षितं नावलोकितमिति। अयं चाप्रकृतोऽर्थ:। अत्र च समासोक्तिरलङ्कार:।

> यत्रोक्तौ गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणै:।
> सा समासोक्तिरुदिता संक्षिप्तार्थतया बुधै: ॥

इति भामहलक्षणम्। अत्र प्रकृतवृत्तान्तोऽभिधया प्रतिपाद्यते। अप्रकृतवृत्तान्तस्तु व्यञ्जनयैव। प्रकृतार्थबोधनेनैवोपक्षीणत्वादभिधाया: ॥

अत्राप्रकृतवृत्तान्तो व्यज्यमानो वाच्ये प्रकृतव्यवहारे, अभिन्नतया चारोप्यमाणो वाच्योत्कर्षमेवाधत्त इत्यङ्गतयैवास्ते न तु प्रधानतयेति न ध्वनिव्यवहार:, किन्तु अपराङ्गव्यङ्ग्यरूपगुणीभूतव्यङ्ग्यव्यवहार एवेति ज्ञायते।

इत्यादौ समासोक्तिस्थले। व्यङ्ग्येन प्रतीयमानेनाप्रकृतव्यवहारेण, वाच्यमेव प्रकृतो वाच्यार्थ एव, प्राधान्येन मुख्यतया प्रतीयते प्रतीतिविषयो भवति। अत्र समारोपितनायिकाव्यवहाराया निशाया:, समारोपितनायकव्यवहारस्य च शशिनो वाक्यार्थत्वं वाक्यतात्पर्यविषयत्वम्।

उज्जीवनी ।

आक्षेपे व्यङ्ग्यस्य प्राधान्यं प्रतिषेधति—आक्षेपेऽपीति ।

प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।
आक्षेप इति तं सन्त: शंसन्ति कवय: सदा ।

(काव्यालङ्कारसारसङ्ग्रह:—P. No. 31)

वक्तुमिष्टं विवक्षितं यत् तदवश्यं वक्तव्यम् । तस्य चानश्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषमभिधातुमिच्छया प्रतिषेध इव य: स आक्षेप इत्याहु: । वक्ष्यमाणविषय:, उक्तविषयश्चेति स आक्षेपो द्विविध: । यथा—

अहो ! स्मरस्य माहात्म्यं यद् रुद्रेऽपि दशेदृशी ।
इयदास्तां समुद्राम्भ: कुम्भैर्मानि तु के वयम् ॥

इदं वक्ष्यमाणविषयस्याक्षेपस्योदाहरणम् । अत्र स्मरमाहात्म्यावस्थाविशेषाणामानन्त्यलक्षणो विशेष:, अभिधातुमिष्ट: । स च नाभिहित: तस्य च प्रतिषेधव्याजेन विशेषेऽवस्थापनादाक्षेप: । अत्र च "अहो ! स्मरस्य माहात्म्यं, यद् रुद्रेऽपि दशेदृशी" इत्येतच्छब्दव्यवहारसहायेन 'इयदास्तां' इति निषेधेनैव स्वकण्ठेनानुपात्तानामपि मन्मथमाहात्म्यावस्थाविशेषाणां वक्ष्यमाणतया सूचनम् । यथा च—

इति चिन्तयतस्तस्य चित्रं चिन्ताविधिर्न यत् ।
क्व वा कामविकल्पानामन्त: कालस्य चेक्षित: ॥

इदमुक्तविषयस्याक्षेपस्योदाहरणम् ।

अत्र चित्रत्वस्योक्ति: क्व वेति प्रसिद्धत्वादाक्षिप्यते । यश्चात्रोभयत्रापि निषेध: क्रियते स विवक्षितार्थविशेषात् स्वतात्पर्यं त्यक्त्वा विवक्षितमेवार्थं संस्कुर्वन् तदङ्गतां प्रतिपद्यते । एवं चाक्षेपेऽपि, आक्षेपालङ्कारेऽपि, व्यङ्ग्यविशेषापेक्षिन: अपि व्यङ्ग्यविशेषं य आक्षिपति बोधयति तस्यापि, वाच्यस्य वाच्यार्थस्यैव चारुत्वं चमत्कृत्याधायकत्वं, वाक्यार्थे वाक्यतात्पर्यविषयीभूतेऽर्थे, आक्षेपोक्तिसामर्थ्यादेवाक्षेपोक्तेर्निषेधवचनस्य सामर्थ्यादेव, प्राधान्येन मुख्यतया, ज्ञायतेऽवगम्यते । तत्र हि आक्षेपालङ्कारे हि, शब्दोपारूढ: शब्दमधितिष्ठन्, विशेषाभिधानेच्छया विशेषमभिधातुमिच्छया, प्रतिषेधरूपो निषेधरूपो, य

चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा । यथा—

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।
अहो दैवगतिः कीदृक्, तथापि न समागमः ॥

---

उज्जीवनी ।

आक्षेपो निषेधोक्तिरूपः स एव व्यङ्ग्यविशेषं व्यञ्जनाव्यापारागम्यमर्थविशेषं, आक्षिपद् व्यञ्जयत्, मुख्यं काव्यशरीरं काव्यरूपं रमणीयार्थप्रतिपादकशब्दरूपं शरीरं, अर्थरूपस्यात्मस्थानीयस्यावच्छेदकरूपम् ॥

वाच्यव्यङ्ग्ययोः प्रधानेतरभावव्यवस्थाया नियामकमाह-चारुत्वेति । काव्येषु वाच्यव्यङ्ग्ययोरपि सतोरुभयोरर्थयोः चारुत्वोत्कर्षमाश्रित्य प्राधान्यविवक्षा क्रियत इत्यर्थः । एतेनार्थः सहृदयश्लाघ्यः काव्यस्यात्मेत्यनेन सहृदयश्लाघ्यस्य सामान्येनार्थस्य काव्ये सारभूतत्वमुक्तं सङ्गच्छते । वाच्यस्यार्थस्य चारुत्वोत्कर्षमाश्रित्य प्राधान्ये तत् काव्यं गुणीभूतव्यङ्ग्यम् । व्यङ्ग्यस्यार्थस्य चारुत्वोत्कर्षे तस्य प्राधान्यं, ध्वनित्वं च वेदितव्यम् । तथा च वाच्यस्य व्यङ्ग्यस्य वा प्राधान्याधिगमे चारुत्वोत्कर्ष एव निबन्धनमित्यर्थः । उदाहरति—यथेति । अनुरागवतीति । अनुरागः प्रेमा तद्वती सन्ध्या । दिवसः तत्पुरःसरः तस्याः सन्ध्यायाः पुरो गच्छन् वर्तते । तथापि तयोः समागमो मिलनं नास्ति । अहो ! आश्चर्यम् ! दैवस्य गतिश्चित्रा विचित्रा । अत्रानुरागशब्दो रक्तिमानं, पुरःसरशब्दः सम्मुखस्थितिं, समागमशब्दः, स्त्रीपुरुषसङ्गमरूपं चार्थान्तरं व्यञ्जनया बोधयति (अभिधायाः प्रकृतार्थबोधनेनोपक्षीणत्वात्) । एव विशेषणमहिम्ना नायकवृत्तान्तः प्रतीयत इति अत्र समासोक्तिरलङ्कार इति मम्मटमतम् । अत्रापि व्यङ्ग्यापेक्षया वाच्यस्यैवार्थस्य चारुत्वोत्कर्षहेतुत्वान्न ध्वनिशङ्का कार्येति मतमाश्रित्येदमुदाहृतम् ॥

ध्वन्यालोके तु, अलङ्काराणां यस्मिन् काव्ये सहृदयश्लाघ्यत्वेनावस्थानं सतोऽपि व्यङ्ग्यस्यार्थस्य वाच्यचारुत्वाधायकत्वं च, तस्य न ध्वनिव्यपदेश इत्युप्रक्रम्य समासोक्तिस्थले, उपोढरागेणेत्यादौ गुणीभूतव्यङ्ग्यत्वमुपपादितम् । तत आक्षेपालङ्कारस्थलेऽपि, वाच्यस्यैव चारुत्वमिति वक्तुमुपक्रम्य वाच्यव्यङ्ग्ययोः चारुत्वोत्कर्षनिबन्धना हि प्राधान्येतरव्यवस्थेति स्वसिद्धान्तश्च

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा ।

यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्येनाविवक्षितत्वान्न तया व्यपदेशस्तद्वदत्रापि द्रष्टव्यम् ॥

---

उज्जीवनी ।

प्रतिपादितः । ततश्च 'अनुरागवती सन्ध्ये'ति पद्यमप्युदाहृतम् । तच्च पूर्वोक्तप्रकारेण समासोक्तेरुदाहरणत्वेन मम्मटेनोपन्यस्तम् । वस्तुतस्तु, अत्राक्षेपोदाहरणमेव वक्तव्यत्वेन प्रस्तुतम् ।

लोचनकारस्तु—"वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोर्युक्त्येदमेकमेवोदाहरणं व्यतरद् ग्रन्थकृत् । एवं हि समासोक्तिर्वास्तु आक्षेपो वा । किमनेनास्माकम् । समासोक्त्यादिषु सर्वथालङ्कारेषु व्यङ्ग्यं वाच्ये गुणीभवतीति नः साध्यम् । इत्याशयोऽत्र ग्रन्थे गुरुभिर्निरूपितः" इत्याहुः ।

वामनस्तु—उपमानाक्षेपश्चाक्षेपः इति आक्षेपलक्षणमाह । उपमानस्याक्षेपः प्रतिषेध उपमानाक्षेपः, तुल्यकार्यार्थस्य नैरर्थक्यविवक्षायामाक्षेपः इत्येक आक्षेपालङ्कारः । उपमानस्याक्षेपः आक्षेपतः प्रतिपत्तिरिति द्वितीयश्च" इति द्विविधमाक्षेपं प्रदर्शितवान् ।

द्वितीयस्योदाहरणं तु—

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद् दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं, तापं रवेरभ्यधिकं चकार ।" इति ।

अत्र शरद् वेश्येव, इन्दुं नायकमिव, रवेः प्रतिनायकस्येवेति उपमानानि (गम्यन्ते) आक्षिप्यन्त इत्याक्षेपः ।

तद्रीत्या 'अनुरागवती'त्यत्र दिवसो नायक इवेति नायकान्तरस्योपमानत्वेनाक्षेपादाक्षेपालङ्कारस्यैवोदाहरणत्वेनेदं पद्यं प्रदर्शितमिति अभिधानं नानुचितं भविष्यति ।

उक्तमर्थं निगमयति—अत्रेति । अत्र समासोक्तौ आक्षेपे च, व्यङ्ग्यप्रतीतौ व्यङ्ग्यस्यार्थस्यावगतौ सत्यां, वाच्यस्यैव, वाच्यार्थस्यैव, चारुत्वं

उज्जीवनी ।

चमत्कृतिमत्त्वं, उत्कर्षनदुत्कृष्टमिति, इति हेतोः, तस्यैव वाच्यस्यैव प्राधान्यविवक्षा मुख्यत्वेन वक्तुमिच्छेत्यर्थः ।

वाच्यव्यङ्ग्ययोरन्यतरस्य प्राधान्यविवक्षायां चारुत्वोत्कर्षनिबन्धनत्वमुपपाद्य, प्राधान्यनिबन्धनत्वं व्यपदेशस्य दर्शयति—यथा चेति । दीपकापह्नुत्यादौ दीपके, अपह्नुतौ, आदिशब्दादुपमामूलकेष्वलङ्कारेषु च, उपमायाः उपमालङ्कारस्य, व्यङ्ग्यत्वेन प्रतीयमानत्वेन प्रतीतौ प्रतीतिविषयतायामपि प्राधान्येन मुख्यवाक्यार्थत्वेन, अविवक्षितत्वाद् विवक्षानधीनत्वात्, तया उपमया, न व्यपदेशः नामकरणं, तद्वद् अत्रापि समासोक्त्याक्षेपादिष्वपि इति द्रष्टव्यमवगन्तव्यम् ।

तथा हि—

आदिमध्यान्तविषयाः प्राधान्येतरयोगिनः ।
अन्तर्गतोपमाधर्मा यत्र तद् दीपकं विदुः ॥

इति दीपकं भट्टोद्भटो लक्षयति । प्रस्तुताप्रस्तुतानामेकधर्मान्वयो यत्र तत्र दीपकमलङ्कारः । यथा—

सञ्जहार शरत्कालः कदम्बकुसुमश्रियः ।
प्रेयोवियोगिनीनां च निःशेषसुखसम्पदः ॥

अत्र कदम्बकुसुमश्रियः निश्शेषसुखसम्पदश्च संहरणात्मा एको धर्मः उपनिबद्धः । शरत्समयस्य चोपवर्ण्यमानतया कदम्बकुसुमशोभासंहारस्य प्रकृतत्वं, विरहिणीसुखसम्पत्संहारस्याप्रकृतत्वं च । तेनान्तर्गतोपमात्वं यथा शरत्कालः प्रेयोवियोगिनीनां निश्शेषाः सुखसम्पदः सञ्जहार, तथा कदम्बकुसुमश्रियोऽपीति उपमालङ्कारस्य व्यङ्ग्यत्वेऽपि दीपकस्यैव प्राधान्यं, तन्निबन्धनो दीपकव्यपदेशश्च प्रामाणिकैरभ्युपगतः ।

तथाह भट्टोद्भटः—(P·62)

अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा ।
भूतार्थापह्नवेनास्या निबन्धः क्रियते बुधैः ॥

अनुक्तनिमित्तायामपि विशेषोक्तौ—

आहूतोऽपि सहायैरेमी[1]त्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति ।।

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रम् । न तु तत्प्रतीतिनिमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम् ।

---

उज्जीवनी ।

यत्र भूतं विद्यमानमुपमेयलक्षणमर्थमपह्नुत्योपमानरूपारोपेणोपमानो-पमेयभावोऽवगम्यते सोऽपह्नुतिरलङ्कारः ।

यथा—

एतद्धि न तपः सत्यमिदं हालाहलं विषम् ।
विशेषतः शशिकलाकोमलानां भवादृशाम् ।।

अत्र प्राकरणिकस्य तपसः स्वरूपमपह्नुत्य हालाहलाख्यविषविशेषरूप-साध्यारोपेण तत्सादृश्यमवगमितम् । तच्चात्र हालाहलसादृश्यमुपमेयस्या-पह्नुतत्वान्न स्फुटरूपम् । अत्र तपसो विषसादृश्यं व्यङ्ग्यम् । तथापि तस्याविवक्षितत्वान्न तेन व्यपदेशः ।

प्रकारान्तरेणापि व्यङ्ग्यस्याप्राधान्यं विशेषोक्तिस्थले प्रदर्शयति—अनुक्तनिमित्तायामपीति ।

यत् सामग्र्येऽपि शक्तीनां फलानुत्पत्तिबन्धनम् ।
विशेषस्याभिधित्सातस्तद्विशेषोक्तिरुच्यते ।।

इति भट्टोद्भटकृतं विशेषोक्तिलक्षणम् । सा चोक्तनिमित्तानुक्तनिमित्ता चेति द्वेधा । तत्रानुक्तनिमित्तां विशेषोक्तिमुदाहरति—आहूतोऽपीति । सहायैः सहचरैः, आहूतोऽपि आकारितोऽपि । एमि, आगच्छामि इत्युक्त्वा, विमुक्तनिद्रः विमुक्ता निद्रा येन तादृशोऽपि निद्रां त्यक्तवानपि । तथा गन्तुमनाः गन्तुंताननुगन्तुं मनो यस्य तादृशोऽपि पथिकः पथि कश्चिन्निद्राणः पान्थः सङ्कोचं नेत्रगात्रादी-नामाकुञ्चनं, नैव शिथिलयति नैव शिथिलं करोति । अत्र यन्निमित्तं शीतबाधा-दिकं तद् अभिधित्सितं विशेषरूपं नोक्तमिति, अनुक्तनिमित्ता विशेषोक्तिः

---

१. 'रोमि' इ.

पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वं तद् भवतु नाम तस्य ध्वनावन्त-र्भावः । न तु ध्वनेस्तत्रान्तर्भावः । तस्य महाविषयत्वेनाङ्गित्वेन च प्रति[1]पादयिष्यमाणत्वात् ।

---

उज्जीवनी ।

इत्यादौ विशेषोक्त्यादिस्थले व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य, प्रकरणसामर्थ्यात् प्रतीतिमात्रं प्रतीतिरेव जायत इति यावत् । तु किन्तु, तत्प्रतीतिनिमित्ता व्यङ्ग्यप्रतीतिं निमित्तीकृत्य, काचित् चारुत्वनिष्पत्तिर्न, स्वल्पमपि चारुत्वं न निष्पद्यते । अतस्तस्य न प्राधान्यम् ।

पर्यायोक्ते व्यङ्ग्यस्य स्वभावं प्रदर्शयति—पर्यायोक्तेऽपीति । पर्यायोक्तं नाम कश्चिदलङ्कारः । तच्च लक्षितमुदाहृतं च भट्टोद्भटकृते काव्यालङ्कार-सङ्ग्रहे (P. 55)

"पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥"

वाचकस्याभिधायकस्य स्वशब्दस्य वृत्तिर्व्यापारो वाच्यार्थप्रत्यायनं; वाच्यस्य स्वभिधेयस्य, व्यापारो वाच्यान्तरेण सहाकाङ्क्षायोग्यतामाहात्म्यात्, संसर्ग-गमनं, एवंविधश्च यो वाच्यवाचकयोर्व्यापारस्तमन्तरेणापि, प्रकारान्तरेणार्थ-सामर्थ्यात्मनावगमस्वभावेन यदवगम्यते तत् पर्यायेण स्वकण्ठानभिहितमपि सान्तरेण शब्दव्यापारेणावगम्यमानत्वात् पर्यायोक्तं वस्तु । तेन च स्वसंश्लेष-वशेन काव्यार्थोऽलङ्क्रियते । तस्योदाहरणम्—

येन लम्बालकः साश्रः करघातारुणस्तनः ।
अकारि भग्नवलयो गजासुरवधूजनः ॥
सोऽपि येन कृतः प्लुष्टदेहेनाप्येवमाकुलः ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥

अत्र लम्बालकत्वादयः कार्यरूपत्वात् कारणभूतं गजासुरवधं वाच्यवाचकास्पृष्ट-मपि गमयन्ति । तेन च तथाविधया विच्छित्त्यावगम्यमानेनार्थेन ते लम्बालक-त्वादयोऽर्थाः अलङ्क्रियन्ते । तस्मात् पर्यायोक्तमलङ्कारः ॥

---

१. 'तिपिपा' च.

उज्जीवनी।

अत्रोदाहरणे भगवान् परमेश्वरः स्वासाधारणरूपेण गम्यः गजासुरवधूलम्बालकत्वादिकारकत्वेन रूपान्तरेण विवक्षितरूपादपि चारुतरेण केनचिद् रूपान्तरेणाभिधानात् पर्यायोक्तमिति ज्ञायते।

अत्र भगवतः परमेश्वरस्य प्रभावातिशयो विवक्षितः। स चार्थो गजासुरो हतो येनेति वचनेन चमत्कारकारी भवति। अतो येन लम्बालक इत्यादिना प्रकारान्तरेण विवक्षितोऽर्थोऽभिहितः।

पर्यायोक्तेऽपि पर्यायोक्तालङ्कारेऽपि, यदि प्राधान्येन व्यङ्ग्यत्वं विक्षितं भगवत्प्रभावातिशयस्य साक्षादभिधायकं शब्दं वर्जयित्वा प्रकारान्तरेणाभिधाने तस्य च प्रकारस्यैतदर्थवाचकत्वाभावाद् व्यङ्ग्यत्वं तस्य प्राधान्यं च, यद्यभिमतं, तत् तदा, तस्य ध्वनावन्तर्भावः। तस्यार्थस्य प्राधान्येन व्यङ्ग्यत्वमाश्रित्यालङ्कारत्वेनाभिमतोऽपि सोऽर्थो ध्वनिर्भवतु प्राधान्येन व्यङ्ग्यो ध्वनिरूपो भवतु। न तु ध्वनेः प्राधान्येन व्यङ्ग्यस्यार्थस्य, तत्र पर्यायोक्तेऽलङ्कारे, अन्तर्भावः अन्तर्गतत्वमित्यर्थः। तस्य ध्वनेः, महाविषयत्वेन विपुलविषयत्वेन, अङ्गित्वेन प्रधानत्वेन प्रतिपादयिष्यमाणत्वात्॥

दण्डिना काव्यदर्शे (P.179) पर्यायोक्तस्य लक्षणमुदाहरणं चैवं प्रदर्श्यते—

"इष्टमर्थमनाख्याय साक्षात् तस्यैव सिद्धये।
यत् प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते॥"

पर्यायोक्तं नामालङ्कारं लक्षयति —इष्टमर्थमिति। इष्टं प्रतिपादयितुमीहितं, अर्थं साक्षादनाख्याय अभिधयानुक्त्वा, तस्यैवाभिधित्सितार्थस्य सिद्धये सचमत्कारप्रतीतये यत् प्रकारान्तरेण चमत्कारजनकभङ्गिविशेषेणाख्यानं व्यञ्जनया प्रतिपादनं तत् पर्यायोक्तं नामालङ्कारः। विवक्षितमर्थं साक्षात् तद्वाचकपदैरनुक्त्वा चमत्कारातिशयप्रतिपत्तये प्रकारान्तरेण तत्कथनं पर्यायोक्तमिति फलितम्। पर्यायो नामैकस्यार्थस्य प्रतिपादकान्तरम्। पर्यायता हि शब्दयोरेकार्थबोधकता। सा चैकयैव वृत्त्येति न नियमः। तथा च वाच्यस्यार्थस्य व्यञ्जनया प्रतिपादनमेव पर्यायोक्तमिति भावः। न चैवमस्य ध्वनिरूपता-

न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम्। वाच्यस्य तत्रोपसर्जनीभावेनाविवक्षितत्वात्। अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं, व्यङ्ग्यस्य चानुयायित्वं प्रसिद्धमेव॥

---

उज्जीवनी।

पत्तिः। अत्र तु व्यञ्जनया वाच्यस्यैवाभिधानम्। ध्वनौ तु न वाच्य एवार्थो विषय इति भेदात्।

> दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।
> तमहं वारयिष्यामि युवाभ्यामास्यतामिह॥
> सङ्गमय्य सखीं यूना सङ्केते तद्रतोत्सवम्।
> निर्वर्तयितुमिच्छन्त्या कयाप्यपसृतं ततः॥

पर्यायोक्तमुदाहरति—दशत्यसाविति। असौ परभृतः कोकिलः, सहकारस्याम्रस्य, मञ्जरीं दशति आस्वाद्य विनाशयति। अहं तं परभृतं वारयिष्यामि, युवाभ्यामिह स्वैरं विस्रब्धमास्यताम्। अत्राहं गच्छामि, युवाभ्यां यथेप्सितं सुरतं विधीयतामिति विवक्षितमर्थं प्रकारान्तरेण चमत्कारकारिणोक्तं विभाव्य पर्यायोक्तलक्षणं सङ्गतं वेदितव्यम्" इति।

अत्रेदं बोध्यम्— वाच्यस्यैवार्थस्य व्यञ्जनया प्रतिपादने पर्यायोक्तमलङ्कारः। व्यङ्ग्यस्यार्थस्य व्यञ्जनया प्रतिपादने तु ध्वनिरिति विवेकः। पर्यायोक्ते तु यदि विवक्षितस्य व्यञ्जनयाख्यातस्यार्थस्य चमत्कृतिमत्त्वरूपं तदा तस्यालङ्कारस्यापि ध्वनित्वरूपं प्राधान्यमुपपद्यते।

भामहेन पर्यायोक्तस्य यदुदाहरणं दत्तं तत्र व्यङ्ग्यस्य प्राधान्यं निषेधति—न त्विति। भामहेनोदाहृतम्—

> "गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः।
> विप्रा न भुञ्जते तच्च रसदाननिवृत्तये।" इति।

अधीतिनो विप्रा यदन्नं न भुञ्जते, वयं गृहेष्वध्वसु वा तदन्नं न भुञ्ज्महे इत्यर्थः। अत्र रसशब्दो विषवाची। भोजनं निर्विषं भवित्विति भगवदभिप्रायो व्यङ्ग्यः स च पर्यायेणाख्यातः सन् प्रकृतं भोजनार्थमेवालङ्करोति।

सङ्करालङ्कारेऽपि यदालङ्कारोऽलङ्कारान्तरच्छायामनुगृह्णाति, तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम् ॥

---

उज्जीवनी ।

पर्यायोक्ते पर्यायोक्तालङ्कारस्थले, भामहोदाहृतसदृशे भामहे यदुदाहृतं तत्सदृशे, व्यङ्ग्यस्यैव पर्यायेणाख्यातस्यार्थस्यैव ! न पुनः प्राधान्यं, चमत्कृतिजनकत्वं नास्तीत्यर्थः । हेतुमाह—वाच्यस्येति । वाच्यस्याभिधीयमानस्यार्थस्य तत्र पर्यायोक्ते, उपसर्जनीभावेन उपसर्जनत्वेनाविवक्षितत्वात् विवक्षाभावात् ।

अपह्नुतिदीपकयोः पुनः अपह्नुतौ दीपके च पूर्वोक्ते वाच्यस्याभिधेयस्यार्थस्य प्राधान्यं, व्यङ्ग्यस्यानुयायित्वं तदनुगतत्वं तदुपस्कारकत्वं च प्रसिद्धमेव ।

सङ्करालङ्कारेऽपीति—

सङ्करालङ्कारस्तावत् भट्टोद्भटेनैवं निरूपितः ।

सङ्करश्चतुर्विधः — सन्देहशब्दार्थवर्त्यलङ्कारैकशब्दाभिधानानुग्राह्यानुग्राहक भेदेन । तत्र सन्देहसङ्करस्तावद्—

अनेकालङ्क्रियोल्लेखे समं तद्वृत्त्यसम्भवे ।
एकस्य च ग्रहे न्यायदोषाभावे च सङ्करः ।

यत्रानेकालङ्कारोल्लेखे युगपद्वृत्त्यसम्भवे च, एकतरस्य ग्रहणे साधकबाधके प्रमाणे समस्तव्यस्ततया न विद्यते तत्र सन्देहसङ्करः । यथा—

यद्यप्यत्यन्तमुचितो वरेन्दुस्तेन लभ्यते ।
तथापि वच्मि कुत्रापि क्रियतामादरो वरे ॥

अत्र वरेन्दुरिति, वर एव इन्दुः, वर इन्दुरिवेति रूपकोपमयोर्द्वयोरलङ्कारयोरुल्लेखः । न च तस्यानेकस्यालङ्कारस्य युगपद्वृत्तिः सम्भवति । एकालङ्कारसमाश्रयेणैवालङ्कारस्य कृतकृत्यत्वात् । न चात्र द्वयोर्मध्यादेकस्य ग्रहणाय साधकबाधकप्रमाणयोगः, साधकं हि प्रमाणं विद्यमान विधिमुखेनालङ्कारं ज्ञापयेत्, तथा बाधकमपि प्रहातव्यालङ्कारनिषेधमुखेनोपादेयमलङ्कारं पूर्वोल्लिखितं पारिशेष्यादुपादेयतया प्रतिपादयति । अत्र तु द्वयोः साधकबाधकप्रमाणयोरभावात् सन्देहस्तेन सन्देहसङ्करोऽलङ्कारः ।

उज्जीवनी ।

शब्दार्थवर्त्यलङ्कारस्तु—

शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र भासिनः ।
सङ्करो वा

यत्रैकस्मिन् वाक्ये शब्दवर्तिनोऽर्थवर्तिनश्चालङ्काराः संसर्गमुपयान्ति स शब्दार्थालङ्कारः । तस्योदाहरणम्—

इत्थं स्थितिर्वरार्था चेन्मा कृथा व्यर्थमर्थिताम् ।
रूपेण ते युवा सर्वः पादबद्धो हि किङ्करः ॥

वरार्था भर्त्रर्था । किङ्करो दासः । अत्र भकारोपनिबद्धोऽनुप्रासात्मकः शब्दालङ्कारः । अर्थालङ्कारश्चार्थान्तरन्यासो विद्यते । तथा ह्यत्र'मा कृथा व्यर्थमर्थिताम्' इत्युपादित्सितेऽर्थेऽर्थित्वस्याकरणं यदुपनिबद्धं तदनुपपद्यमानतया सम्भाव्य तत्समर्थनायोक्तम्—'रूपेण ते युवा सर्वः पादबद्धो हि किङ्कर' इति । यो गुणोत्कर्षशाली स नार्थयते अपि त्वर्थ्यते, यथा रत्नादि । त्वं च रूपवत्त्वात् गुणोत्कर्षशालिनी । तस्मादुपादित्सितेऽर्थे तवार्थित्वमयुक्तमिति । तेनायं शब्दार्थवर्त्यलङ्कारसङ्करः ।

एकशब्दाभिधानसङ्करस्तु—

एकवाक्यांशप्रवेशाद् वाभिधीयते ।

एकस्मिन् वाक्यांशे वाक्यैकदेशे यत्रानेकस्यालङ्कारस्यानुप्रवेशः स एकशब्दाभिधानसङ्करः । तस्योदाहरणम्—

मैवमेवास्थ सच्छायवर्णिका चारुकर्णिका ।
अम्भोजिनीव चित्रस्था दृष्टिमात्रसुखप्रदा ॥

अत्रोपमालङ्कार उपमाप्रतिभोत्पत्तिहेतुश्च श्लेष इत्येतौ द्वावलङ्कारावेकस्मिन् वाक्यांशे इवशब्देऽनुप्रविष्टौ । तथाहि अम्भोजिनी उपमानम् । गौरी उपमेया । दृष्टिमात्रसुखप्रदत्वं साधारणो धर्मः, इत्युपमा । सच्छायवर्णिका, चारुकर्णिकेति श्लेषः । अम्भोजिन्यां हि वर्णा राजावर्तादयः । गौर्यां तु गौरत्वम् । अम्भोजिन्यां कर्णिका कमलमध्यवर्ती बीजकोशः । गौर्यां तु चारुकर्णौ, कप् चात्र समासान्तः । तेनायं श्लेषः । एतौ च द्वावलङ्कारौ एकस्मिन् वाक्यांशे इवशब्देऽनुप्रविष्टौ । तेनायमेकशब्दाभिधानसङ्करः ।

उज्जीवनी

अनुग्राह्यानुग्राहकसङ्करस्तु—

परस्परोपकारेण यत्रालङ्कारतया स्थिताः ।
स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि सङ्करः ॥

यत्रोपकार्योपकारकभावादस्थितत्वादलङ्काराः स्वातन्त्र्येणात्मानं न लभन्ते सोऽनुग्राह्यानुग्राहकसङ्करः ॥

तस्योदाहरणं—

हरेणेव स्मरव्याधस्त्वयानङ्गीकृतोऽपि सन् ।
त्वद्वपुः क्षणमप्येष धार्ष्ट्यादिव न मुञ्चति ॥

अत्र धार्ष्ट्यादिव न मुञ्चतीति यासावुत्प्रेक्षा सा हरेणेव स्मरव्याधस्त्वयानङ्गीकृतोऽपि सन्नित्युपमाप्रतिभोत्पत्तिहेतुश्लेषवशेन स्वरूपं प्रतिलभते । अनङ्गीकृतो हि अनङ्गत्वमशरीरत्वमापादितः । अनूरीकृतश्च । यश्चानूरीकृतः क्षणमपि न मुञ्चति, तत्र धार्ष्ट्यं हेतुतयोत्प्रेक्षितुं शक्यते । तेन श्लेषवशेनात्रोत्प्रेक्षा, आसादितस्वभावा, अतोऽयमनुग्राह्यानुग्राहकसङ्करः ।

एवमयं चतुर्विधः सङ्करो नानालङ्कारगतविकल्पव्यवस्थासमुच्चयाङ्गाङ्गिभावसमाश्रयेणाभिहितः । तत्रानेकालङ्कारविकल्पात् सन्देहसङ्करः । विभिन्नाधारत्वेन शब्दार्थवर्तिनोरलङ्कारयोरवस्थानात् व्यवस्थासमाश्रयः शब्दार्थवर्त्यलङ्कारसङ्करः । एकशब्दाभिधानसङ्करे तु समुच्चयेनानेकोऽलङ्कार एकस्मिन् वाक्यांशे इवादावनुप्रविशति । अनुग्राह्यानुग्राहकसङ्करे तु अनेकस्यालङ्कारस्याङ्गाङ्गिभावः । अतो विकल्पव्यवस्थासमुच्चयाङ्गाङ्गिभावसंश्रया एते सङ्करभेदाः ॥

एवं भट्टोद्भटेन लक्षित उदाहृते च सङ्करालङ्कारे,व्यङ्ग्यस्य स्फुटप्रतीयमानता न विद्यते ॥

यश्च सङ्करालङ्कारस्य चतुर्थो भेदोऽनुग्राहकभावापन्नः स भामहेनैव लक्षितः—

अलङ्कारद्वयसम्भावनायां तु वाच्यव्यङ्गचयोः समं प्राधान्यम् । अथ वाच्योपसर्जनीभावेन व्यङ्गचस्य यत्रावस्थानं तदा सोऽपि ध्वनिविषयोऽस्तु, न तु स एव ध्वनिरिति वक्तुं शक्यम् पर्यायोक्तनिर्दिष्टन्यायात् ।

---

उज्जीवनी ।

परस्परोपकारेण यत्रालङ्कृतयः स्थिताः ।
स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि सङ्करः ॥ इति ।

यथा—

प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या ।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥

अत्र श्रीपार्वत्यवलोकनस्य मृगाङ्गनावलोकनस्य च सादृश्यात्मक उपमालङ्कारो व्यङ्गचः । स च वाच्यस्य सन्देहालङ्कारस्यानुग्राहकः । अनुग्राह्यश्च सन्देहालङ्कारः । यत्र चावलोकनयोरसति सादृश्ये सन्देहो नात्मानं लभत इत्युपमायाः सन्देहाङ्गत्वम् । सति तु सादृश्ये, उपमया जनितायां चमत्कृतौ सन्देहस्योपमासाह्यकरणात् सन्देहस्योपमाङ्गत्वमिति परस्परमनुग्राह्यानुग्राहकभावो वर्तते ।

तदेवाभिप्रेत्याह—सङ्करालङ्कारेऽपीति । सङ्करालङ्कारे सङ्करालङ्कारस्य योऽयमनुग्राह्यानुग्राहकभावसङ्कराख्यश्चतुर्थः प्रकारः तस्मिन् । अलङ्कारः प्रवातनीलोत्पलेत्याद्युदाहरणानुरोधेनालङ्कारः ससन्देहः, अलङ्कारान्तरच्छायामुपमालङ्कारच्छायामनुगृह्णाति । तदनुग्राहको भवति, तदा सन्देहालङ्कारेणानुगृहीतस्योपमालङ्कारस्य, व्यङ्गचस्य व्यञ्जनाव्यापारगम्यस्य, प्राधान्येन वाच्यादधिकचमत्काराजननेन न ध्वनिविषयत्वं, नायं ध्वनेर्विषय इत्यर्थः । अलङ्कारद्वयसम्भावनायां तु यदा द्वावप्यलङ्कारौ स्वतन्त्रतया सम्भाव्येते तदा वाच्यव्यङ्गचयोः परस्परमनुग्राह्यानुग्राहकभावेनोपस्थितयोः, समं तुल्यं, प्राधान्यं द्वयोरपि अनुग्राहकतादशायामङ्गत्वं, अनुग्राह्यतादशायां प्राधान्यमिति साम्यं तयोरुभयोरपीति यावत् ।

सङ्करस्य ध्वनिविषयत्वं पर्यायोक्तन्यायेनातिदिशति—अथेति । अथ यदि तत्र सङ्करालङ्कारोपस्कृते काव्ये, व्यङ्गचस्य व्यञ्जनाव्यापारगम्यस्यार्थस्य, वाच्योपसर्जनीभावेन, वाच्यं उपसर्जनमप्रधानं यस्य (व्यङ्गचस्य) तद्भावेन,

अपि च सङ्करालङ्कारेऽपि च क्वचित् सङ्करोक्तिरेव ध्वनिसम्भावनां निराकरोति । अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावाद्, निमित्त-निमित्तिभावाद् वा, अभिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुते-नाभिसम्बन्धः तदाभिधीयमानप्रतीयमानयोः सममेव प्राधान्यम् ।

---

उज्जीवनी ।

वाच्योपसर्जनत्वेन, अवस्थानं अवस्थितिः, तदा तस्यामवस्थायां, सोऽपि व्यङ्ग्योऽलङ्कारोऽपि ध्वनिविषयोऽस्तु ध्वनेर्विषयो भवतु । सङ्करे व्यङ्ग्यस्या-लङ्कारस्य प्राधान्यमाश्रित्यालङ्कारध्वनिव्यपदेशोऽङ्गीक्रियताम् ।

स एव सङ्कर एव, ध्वनिरिति वक्तुं न शक्यम् । पर्यायोक्ते व्यङ्ग्यस्य वाच्यातिशायिचमत्कृतिजनकतादशायां यथा तस्य ध्वनिविषयत्वं यथा प्रति-पादितं स न्यायः सङ्करेऽपि स्थलविशेषेऽनुसर्तव्यः । अन्येषु सङ्करप्रभेदेषु ध्वनित्वसम्भावनैव नास्तीत्याह—अपि चेति । अपि च किंच, सङ्करालङ्कारेऽपि, क्वचिद् यत्रानेकेषामलङ्काराणां, वाच्यार्थोपस्कारकत्वेनैव स्वातन्त्र्येणावस्थानं तत्र, सङ्करोक्तिरेव सङ्कर इति नामकरणमेव, ध्वनिसम्भावनां ध्वनिशङ्कां, निराकरोति निवारयति ।

अप्रस्तुतप्रशंसायामपीति—

> अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।
> अप्रस्तुतप्रशंसा सा त्रिविधा परिकीर्तिता ॥

इदं भामहोक्तमप्रस्तुतप्रशंसालक्षणम् । त्रैविध्यं च सामान्यविशेषभावाद्, निमित्तनिमित्तिभावात्, सारूप्याच्च । अधिकारादुपवर्णनावसरादपगतस्य प्राकरणिकादन्यस्य, वस्तुनः प्रस्तुतार्थानुबन्धिनी या स्तुतिः प्रशंसा साप्रस्तुत-प्रशंसेत्यर्थः । अस्याश्च, सामान्ये प्रस्तुते सति तदन्यस्य विशेषस्य, विशेषे प्रस्तुते सति तदन्यस्य सामान्यस्य, कार्ये प्रस्तुते सति तदन्यस्य, कारणस्य, कारणे प्रस्तुते सति तदन्यस्य कार्यस्य, तुल्ये प्रस्तुते सति तदन्यस्य तत्सदृशस्य प्रशंसा इति पञ्च प्रकाराः सम्भवन्ति । यथा—

> एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
> यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि ।

उज्जीवनी ।

अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥

कस्यचिन्मूर्खस्य वृत्तान्तं कुतश्चिन्निशम्य विस्मयेन भाषमाणं कञ्चित् प्रति कस्यचिदुक्तिरियम् । मूर्खः कश्चित् नलिनीपत्रे स्थितं जलकणं मौक्तिकं ज्ञातवानिति यत् तस्य मुखात् श्रुतं तदेतदत्यल्पमेव । अस्मादत्यधिकजडत्व-बोधकं शृणु । मौक्तिकबुद्धया जलकणे नलिनोपत्रगते मन्दमादीयमाने अङ्गुल्यग्रयोर्लग्ने सति, मम मुक्तामणिः कुत्रोड्डीय गत इति शोकेन निद्रामेव नाप्नोति जडोऽन्य इत्यर्थः । अत्र जडानामस्थान एव ममत्वभावना भवतीति सामान्ये प्रस्तुते सति जडविशेषस्य जलकणे ममत्वबुद्धिरूपाप्रस्तुतममत्वविशेष-स्याभिधानादप्रस्तुतप्रशंसा ॥

विशेषे प्रस्तुते सामान्यस्य यथा—

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान् स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥

कृष्णेन नरकासुरे हते तत्सुहृदं शाल्वं प्रति तन्मन्त्रिण इदं वचनम् । यः पुरुषो वैरनिर्यातनं कृत्वा मित्रस्त्रीणां बाष्पजलं प्रमार्ष्टि स एव पूज्यः, स एव पुमान्, स एव नीतिमान्, तस्यैव सुष्ठु जीवित, स एव श्रियो भाजनमित्यर्थः ।

अत्र 'श्रीकृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाघ्यः' इति विशेषे प्रस्तुते सामान्यमभिहितम् ।

कार्ये प्रस्तुते कारणस्याभिधानं यथा—

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ।

उज्जीवनी ।

अमरुकशतकान्तर्गतं पद्यमिदम् । स्वगृहं प्रति प्रस्थातुकामः सद्यः प्रस्थानान्निवृत्तः कश्चित् मित्रेण तत्कारणं पृष्टः, गमननिवृत्तिहेतुं प्रियावृत्तान्तं कथयति—

सखे, गृहात् प्रस्थानसमये मम विरहं सोढुमपारयन्ती मे प्रिया मया सप्रणयमिदमभिहिता "सुन्दरि देशान्तरं गताः अवश्यं पुनर्मिलन्त्येव, अतो मत्कृते चिन्ता न कार्या, अद्यैव नितरां क्षीणा चासि" इति । स च प्रियागमनमनिच्छन्ती प्रियेण ज्ञातेति लज्जया, प्रस्रवदश्रु चक्षुषा निगृह्य, पत्यौ प्रस्थानात् प्रतिनिवर्तमाने प्रियाया जीविते सत्येव मेलनं भवति, अहं तु प्रियवियोगे कथमपि न जीविष्यामि इति ज्ञात्वापि एवमनुतिष्ठसीति स्वाशयं हासेन सूचयन्ती स्वकीयं भाविमरणोत्साहं सूचितवतीत्यर्थः ।

अत्र प्रस्थानान्निवृत्तोऽसि किम्, इति प्रस्थाननिवृत्तिरूपे कार्ये पृष्टे कारणस्य प्रियाभाविमरणोत्साहस्याभिधानं कृतम् ।

कारणे प्रस्तुते कार्यस्याभिधानं यथा—

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥

कश्चित् कवी राजानं प्रत्याह—हे राजन्, तव प्रस्थानश्रवणमात्रेणैव शत्रुभवने वजनीकृते पञ्जरात् पान्थैर्विमुक्तः शुकः चित्रलिखितान् राजादीनवलोक्य "राजसुता मां न पाठयति, देव्यो न भाषन्ते, कुब्जे मां भोजय" इत्येवमादिकमेकैकमाभाषत इत्यर्थः ।

अत्र शत्रुपलायनरूपे कारणे प्रस्तुते पथिकमुक्तशुकाभाषणरूपाप्रस्तुतकार्याभिधानं कृतम् ।

तुल्ये प्रस्तुते तुल्याभिधानं यथा—

आदाय वारि परितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च बडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च ॥

यदा तावत् सामान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन सम्बन्धः, तदा विशेष[1]प्रतीतौ[2] सत्यामपि प्राधान्येन तत्सामान्येनाविनाभावात् सामान्यस्यापि प्राधान्यम्। यदापि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्राधान्ये, सामान्ये सर्वविशेषाणामन्तर्भावाद् विशेषस्यापि प्राधान्यम्।

---

## उज्जीवनी।

अत्र परधनमपहृत्य विफलव्ययं कुर्वाणे दुरीश्वरे तत्तुल्यस्याप्रकृतस्यार्णवस्य कथनम्।

अप्रस्तुतप्रशंसायामपि अप्रस्तुतप्रशंसाख्येऽलङ्कारेऽपि यदा यस्यामवस्थायां. सामान्यविशेषभावात् सामान्यविशेषभावसम्बन्धात्, निमित्तनिमित्तिभावात् निमित्तनिमित्तिभावसम्बन्धाद्वा, अभिधीयमानस्य वाच्यस्य, अप्रस्तुतस्याप्रकृतस्य, प्रतीयमानेन व्यज्यमानेन, प्रस्तुतेन प्रकृतेन, अभिसम्बन्धः अनुगतः सम्बन्धः। तथा तस्यामवस्थायां, अभिधीयमानप्रतीयमानयोः वाच्यव्यङ्ग्ययोः समं तुल्यं प्राधान्यं प्रधानता।

अयमर्थः—सामान्यविशेषभावसम्बन्धेन सामान्यस्याप्रकृतस्य प्रशंसायामभिधीयमानतायां प्रकृतस्य विशेषस्य प्रतीयमानता, विशेषस्याप्रकृतस्य प्रशंसायामभिधीयमानतायां प्रकृतस्य सामान्यस्य प्रतीयमानता भवतीति द्वैविध्यं सामान्यविशेषभावसम्बन्धनिबन्धनाया अप्रस्तुतप्रशंसायाः। एवं कारणस्याप्रस्तुतस्याभिधीयमानतायां कार्यस्य प्रस्तुतस्य प्रतीयमानता कार्यस्याप्रस्तुतस्याभिधीयमानतायां कारणस्य प्रस्तुतस्य प्रतीयमानतेति निमित्तनिमित्तिभावसम्बन्धनिबन्धनायाश्च तस्याः पुनश्च द्वैविध्यम्। एतत्सम्बन्धनिबन्धनायामप्रस्तुतप्रशंसायां वाच्यस्य व्यङ्ग्यस्य च तुल्यं प्राधान्यम्। न त्वेकस्येतरातिशायिचमत्कृतिजनकत्वरूपं प्राधान्यम्।

यदेति। यदा तावद् यस्मिन् सन्दर्भविशेषे, सामान्यस्याप्रस्तुतस्याप्रकृतस्य, सामान्यस्याभिधीयमानस्य, प्राकरणिकेन विशेषेण प्रकृतेन विशेषेण, प्रतीयमानेन

---

१. 'षस्य प्र०' क. ख. ग. २. 'सत्यपि०' क. ख. ग.

निमित्तनिमित्तिभावे चायमेव न्यायः। यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः सम्बन्धस्तदाप्यप्रस्तुतस्य सरूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तर्भावः। इतरथा त्वलङ्कारान्तर[1]मेव ॥

---

उज्जीवनी।

व्यङ्ग्येन सम्बन्धः। तदा तस्मिन् सन्दर्भविशेषे। विशेषप्रतीतौ सत्यामपि विशेषस्य प्रतीयमानतायामपि। प्राधान्येन मुख्यतया, तत्सामान्येनाविनाभावात् तस्य विशेषस्य यत् सामान्यं तेन व्याप्तत्वात् नियतसम्बन्धात् सामान्यस्यापि प्राधान्यं मुख्यत्वं विद्यते। यदापि विशेषस्य सामान्यनिष्ठत्वं यदा विशेषः सामान्येऽन्तर्भवति, तदापि सामान्यस्य प्राधान्ये सामान्यस्य प्रधानतया प्रतीतिविषयतायां सत्यां सामान्ये विशेषाणां सामान्यावयवभूतानां सर्वेषामपि विशेषाणां, अन्तर्भावाद् अन्तर्गतत्वेन विशेषस्यापि प्राधान्यं प्रत्येकावयवस्यापि सामान्यान्तर्गतस्य प्रधानता भवति।

निमित्तनिमित्तिभावे चेति—निमित्तनिमित्तिभावनिबन्धनायामप्रस्तुतप्रशंसायाम् अयमेव न्यायः सामान्यविशेषभावसम्बन्धनिबन्धनायां सत्यां यथा वाच्यप्रतीयमानयोस्तुल्यं प्राधान्यं स एव न्यायोऽत्रापि प्रसरतीत्यर्थः। सारूप्यनिबन्धनायास्तु तस्याः पूर्वोक्ताभ्यामप्रस्तुतप्रशंसाभ्यां भेदमाह—**यदा त्विति।** यदा तु यस्यामवस्थायां, सारूप्यमात्रवशेन केवलसारूप्यं पुरस्कृत्य, अप्रकृतप्रकृतयोः अभिधाविषयस्याप्रकृतस्य, व्यञ्जनागम्यस्य प्रकृतस्य च सम्बन्धः परस्परसम्बद्धता, तदापि तस्यामप्यवस्थायां, अप्रस्तुतस्य सरूपस्य सारूप्यसम्बन्धपुरस्कृतस्य, अभिधीयमानस्याभिधाव्यापारबोध्यस्य, प्राधान्येनाविवक्षायां प्राधान्यविवक्षायामसत्याम्, अस्य सारूप्यसम्बन्धनिबन्धनस्याप्रस्तुतप्रशंसाभेदस्य, ध्वनावेवान्तर्भावः अप्रस्तुतप्रशंसाभेदोऽयं ध्वनावन्तर्भवतीत्यर्थः। इतरथा तु अभिधीयमानस्य प्राधान्यविवक्षायां तु, अलङ्कारान्तरमेव अप्रस्तुतप्रशंसा नामालङ्कारविशेष एव।

इदमत्रावधेयम्—अन्यत्र यदभिधीयते तत् प्रकृतम्। अप्रकृतं तु प्रतीयत इति स्थितिः। अप्रस्तुतप्रशंसायां तु, अप्रस्तुतमेवाभिधीयते, प्रस्तुतं प्रतीयत

---

1. 'रत्वमे०' क. ग.

तदयमत्र संक्षेप:—

> व्यङ्गचस्य यत्राप्राधान्यं वाच्यमात्रानुयायिन: ।
> समासोक्त्यादयस्तत्र वाच्यालङ्कृतय: स्फुटा: ॥
> व्यङ्गचस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
> न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥
> तत्परावेव शब्दार्थौ यत्र व्यङ्गचं प्रति स्थितौ ।
> ध्वने: स एव विषयो मन्तव्य: सङ्करोज्झित: ॥

---

उज्जीवनी ।

इति भेद: । तथापि ध्वनिव्यपदेशस्यायं विषय:, प्रकृतं वाप्रकृतं वा भवतु वाच्यम् । तथापि अप्रकृतस्याप्यभिधीयमानतायां, तस्य प्राधान्यविवक्षायामसत्यां व्यङ्गचस्य तदपेक्षया प्राधान्यमाश्रित्य ध्वनिव्यपदेश: । वाच्यस्य प्राधान्यविवक्षायां तु अलङ्कारव्यपदेश एव ।

इत्थं च यत्र शब्द: स्वार्थमुपसर्जनीकृत्यान्यमर्थं व्यनक्ति, अर्थ: स्वयमुपसर्जनीभूयान्यमर्थं व्यनक्ति, स काव्यविशेषो ध्वनि: (उत्तमं काव्यम्) इति व्यपदिश्यते । यत्र च समासोक्त्याक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिदीपकसङ्करालङ्कारादौ, अर्थान्तरस्य प्रतीयमानतायामपि वैशद्येन तस्याप्रतीते:, तदपेक्षया वाच्यस्य प्राधान्यं चानुभूयते, तद् गुणीभूतव्यङ्गचं नाम काव्यमिति च ज्ञायते ।

उक्तमर्थं संक्षिपति—तदयमत्रेति । अत्रायमर्थ: संक्षेप: सङ्ग्रहात्मक: । व्यङ्गचस्येति । यत्र यस्मिन् स्थले, वाच्यमात्रानुयायिन: वाच्यमभिधेयमर्थमेवोपस्कुर्वत:, व्यङ्गचस्य व्यञ्जनाव्यापारगम्यस्यार्थस्य, अप्राधान्यं वाच्यातिशायिचमत्कृत्यजनकत्वेन प्राधान्याभाव:, तत्र तस्मिन् स्थले, समासोक्त्यादय: समासोक्तिप्रभृतय:, वाच्यालङ्कृतय:स्फुटा: । वाच्यार्थोपस्कारकत्वरूपं वाच्यालङ्कारत्वं स्फुटं भजन्ते । व्यङ्गचस्य प्रतीयमानस्यार्थस्य, प्रतिभामात्रे अस्फुटतया प्रतीतौ स्फुटप्रतीतिरहिततायामपि, वाच्यार्थानुगमेऽपि वा वाच्यमर्थमुपस्कुर्वाणेऽपि वा, तस्य प्रतीयमानस्यार्थस्य प्राधान्यं स्फुटप्रतीतिविषयत्वेन मुख्यत्वं, यत्र वा न प्रतीयते यत्र न बोध्यते तत्र न ध्वनि: तस्य समासोक्त्यादेर्ध्वनित्वं नाङ्गीक्रियते ।

वस्तुतो यत्र ध्वनिव्यपदेश इत्याह—तत्परावेवेति । यत्र शब्दशक्तिमूले

तस्मान्न ध्वनेरन्यत्रान्तर्भावः । इतश्च नान्तर्भावः, यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः । तस्य पुनरङ्गानि—अलङ्कारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते । न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः । अपृथग्भावे तु तदङ्गत्वं तस्य, न तु तत्त्वमेव । यत्रापि वा तत्त्वं तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव ।

---

उज्जीवनी ।

अर्थशक्तिमूले च ध्वनौ (काव्ये) शब्दार्थौ शब्दश्चार्थश्च, तत्परावेव व्यङ्ग्यार्थपरावेव यत्र शब्दशक्तिमूलध्वनौ व्यङ्ग्यार्थबोधतात्पर्येण प्रयुक्तः शब्दः स्वबोध्यं वाच्यमर्थमुपसर्जनीकृत्य व्यङ्ग्यार्थानुगुण्येनावतिष्ठते सः, यत्र अर्थशक्तिमूलध्वनौ शब्दबोध्योऽर्थः स्वयमुपसर्जनीभूय व्यङ्ग्यार्थान्तरानुगुण्येन स्थितः स च सङ्करोज्झितः सङ्करेणालङ्कारान्तरसमावेशेन रहितश्चेत् स एव ध्वनेर्विषयः तादृश एव ध्वनिव्यपदेशमर्हति ।

तस्मादिति—वाच्यार्थापेक्षया प्रतीयमानस्यार्थस्य प्राधान्य एव ध्वनित्वाङ्गीकाराद्, ध्वनेः अन्यत्रालङ्कारादौ नान्तर्भावः । इतश्चेति—इतश्च कारणान्तरतोऽपि, नान्तर्भावः ध्वनेः अन्यत्रान्तर्भावविरहः । तदेव कारणमाह—यत इति । यस्मात् कारणात्, काव्यविशेषः व्यङ्ग्यप्राधान्यमाश्रित्य काव्यविशेषपदव्यपदेश्यः । अङ्गी प्राधान्येनावतिष्ठमानः ध्वनिरिति ध्वनिसञ्ज्ञः कथितः उक्तः । तस्य पुनः ध्वनेरङ्गिनस्तु, अङ्गानि अलङ्कारा, गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते । अङ्गाङ्गिनोश्च न तादात्म्यम् । वाचकत्वव्यञ्जकत्वयोर्व्यापारयोर्भेदात् । अवयव एव अङ्गभूत एव, पृथग्भूतः पार्थक्येन विद्यमानः, अवयवीति अङ्गीति, न प्रसिद्धः न प्रसिद्धिमर्हति । अपृथग्भावे तु समुदायपतितत्वे तु, तस्य ध्वनेः, तदङ्गत्वमलङ्काराङ्गत्वमेव । समासोक्तौ व्यङ्ग्यस्याप्यप्रस्तुतवृत्तान्तस्य वाच्यार्थोपस्कारकत्वाद् वाच्यस्यैवालङ्कारस्य ध्वनिरङ्गं भवति । न तु तत्त्वमेव, नैव तादात्म्यं भजत इत्यर्थः । वा अथवा, यत्रापि यस्मिन्नलङ्कारेऽपि, तत्त्वं ध्वनेस्तादात्म्यं वाच्यस्य प्राधान्यविवक्षया प्राधान्यं च व्यङ्ग्यस्यापतति, तत्रापि ध्वनेः प्रतीयमानस्यार्थस्य तन्निष्ठत्वं अलङ्कारनिष्ठत्वमेव अलङ्कारेऽन्तर्भाव एव । तस्य हेतुस्तु ध्वनेर्महाविषयत्वमिति वस्तुस्थितिः ।

'सूरिभिः कथित" इति विद्वदुपज्ञेयमुक्तिः, न तु यथाकथञ्चित् प्रवृत्तेति प्रतिपाद्यते । प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम् । ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति ।

तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः । न चैवंविधस्य ध्वनेर्वक्ष्यमाणभेदतद्भेदसङ्कलनया महाविषयस्य यत् प्रकाशनं तदप्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन तुल्यमिति तद्भावितचेतसां युक्त एव संरम्भः ।

---

## उज्जीवनी ।

काव्यविशेषलक्षणगतं 'सूरिभिः कथित' इत्यंशं विवृणोति—'सूरिभिः कथित' इति । सूरिभिः प्रथमैर्विद्वद्भिः वैयाकरणैः कथित उपज्ञायोक्तः । इयमुक्तिः शब्दस्य ध्वनिरिति नाम्नोक्तिः अभिधानं, विद्वदुपज्ञा विदुषां (वैयाकरणानां) उपज्ञा आद्यं ज्ञानं यस्यास्तथाभूतेत्यर्थः । अत इयमुक्तिः यथा कथञ्चित् न प्रवृत्ता, संज्ञेयं निर्मूला नेति भावः । इति प्रतिपाद्यते ग्रन्थकृतेति शेषः । प्रथमे इति—प्रथमे आद्या विद्वांसः पण्डिताः वैयाकरणाः व्याकरणमधीयते विदन्ति वा वैयाकरणाः, सर्वविद्यानां सर्वासां विद्यानां, व्याकरणमूलत्वाद् व्याकरणं मूलं यस्य तत्त्वात् । तदेवोपपादयति—ते इति । ते च वैयाकरणास्तु, श्रूयमाणेषु श्रवणेन्द्रियज्ञान-(प्रत्यक्ष) विषयेषु, वर्णेषु शब्देषु, ध्वनिरिति व्यवहरन्ति ध्वनिसंज्ञां कुर्वन्ति । तन्मतानुसारिभिः तेषां वैयाकरणानां मतमनुसरद्भिः अन्यैरपि सूरिभिः अन्यशास्त्रविद्भिरपि, काव्यतत्त्वार्थविद्भिः काव्यस्य कविकर्मणः, तत्त्वभूतं प्रवृत्तिनिमित्तभूतं शब्दात्मकमर्थं जानद्भिरलङ्कारशास्त्रकारैरित्यर्थः । वाच्यवाचकसंमिश्रः वाच्येनार्थशक्तिमूलव्यङ्ग्यव्यञ्जकेन शब्दप्रतिपाद्येनार्थेन, वाचकेन शब्दशक्तिमूलव्यङ्ग्यव्यञ्जकेन शब्देन संमिश्रो मिश्रितः, काव्यमिति व्यपदेश्यः काव्यव्यपदेशविषयः, शब्दात्मा शब्द एव, ध्वनिरित्युक्तः ध्वनिरिति नाम्नाङ्कितः । वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिव्यपदेशः कृत इति तस्य शब्दमात्रस्य स्फोटव्यञ्जकत्वेन व्यञ्जकत्वं, स्फोटस्य व्यङ्ग्यत्वं चावगम्यते । प्रकृते तु न केवलशब्दस्य काव्यत्वं, किं त्वर्थवत एव, न केवलमर्थस्य । तस्य च शब्दार्थस्यानन्यलभ्यत्वात् । तथा च स्थलभेदेन

न च कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम् । तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः । अस्ति ध्वनिः । स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विविधः सामान्येन ।

तत्राद्यस्योदाहरणम्—

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।

---

उज्जीवनी ।

वाच्यप्रधानो वाचकप्रधानश्च शब्द एव चमत्कृतिजनकार्थान्तरस्य व्यङ्ग्यस्य व्यञ्जनेन शब्दात्मकस्य काव्यस्य व्यञ्जकत्वमिति, स्फोटव्यञ्जकस्य शब्दस्य वाच्यवाचकसंमिश्रस्य च तस्य व्यञ्जकत्वं समानमिति ध्वनिरिति व्यपदेशः कृत इति भावः । न चेति—एवंविधस्य व्यङ्ग्यार्थप्रधानस्य ध्वनिसंज्ञालङ्कृतस्य ध्वनेः प्रतीयमानार्थस्य, वक्ष्यमाणा ये प्रभेदास्तदवान्तरभेदाश्च तेषां सङ्कलनया गणनया, महाविषयस्यापरिमेयविषयस्य, यत्प्रकाशनं यदाविष्करण, तद् अप्रसिद्धानां अतिप्रसिद्धिशून्यानां अलङ्कारविशेषाणां परं यत् प्रतिपादनं, तेन तुल्यं न भवतीत्यर्थः । अलङ्कारनिरूपणादधिकं प्राशस्त्यं ध्वनिनिरूपणस्येति यावत् । इति अतः, तद्भावितचेतसां तस्मिन् ध्वनौ, भवितं प्रणिहितं, चेतो येषां तादृशानां ध्वनिकाराणां संरम्भो ध्वनिनिरूपणोद्यमः, युक्त एव उचित एव । तेषु ध्वनिकारेषु, ईर्ष्ययासूयया, कलुषिता कलङ्किता, शेमुषी येषां तेषः भावः । आविष्कर्तुं न युज्यते च । तदेवं तस्मात् पूर्वोक्तप्रकारेण, ध्वनेरभाववादिनां अभावो यैरुच्यते ते प्रत्युक्ताः निरस्ताः ।

ततः सिद्धमाह—अस्ति ध्वनिरिति । ध्वनिर्नाम अनपह्नवनीयचमत्कार कश्चिदर्थः, वाच्यातिशायिनीं चमत्कृतिमादधानः अस्ति विद्यते । एवं ध्वनेर-भाववादिनां मतं निराकृत्य ध्वनिः सयुक्तिकं स्थापितो ध्वनिकारेण ।

ध्वनिं विभजते—स चेति । स च ध्वनिश्च, सामान्येत सामान्यतः, द्विविधः द्विप्रकारः, अविवक्षितवाच्यः अविवक्षितो वाच्योऽभिधाविषयोऽर्थः यस्मिन् सः लक्षणामूलध्वनिः, विवक्षितं वक्तुमिष्टं, अन्यपरं अन्यार्थतात्पर्यकं च वाच्यं वाच्योऽर्थो यस्मिन् स चेति अभिधामूलध्वनिरिति च द्वैविध्यं ध्वनेरित्यर्थः ।

तत्र ध्वनौ, आद्यस्य प्रथमस्याविवक्षितवाच्यस्योदाहरणमाह—सुवर्णपुष्पा-

शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

द्वितीयस्यापि—

शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत् तपः ।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुक[1]शावकः ॥

---

उज्जीवनी ।

मिति । यः शूरः शौर्यवान्, यः कृतविद्यः विद्यावान्, यः सेवितुं परानाराधयितुं, जानाति वेत्ति सेवाकुशलश्चेत्यर्थः । स चेत्येते त्रयः पुरुषाः, सुवर्णपुष्पां सुवर्णमेव पुष्पं, यस्यास्तां, पृथिवीं वसुधां, चिन्वन्ति स्ववशे कुर्वन्तीत्यर्थः ।

अत्र शूरकृतविद्यसेवकानां सर्वत्र सुलभा विभूतय इति व्यङ्ग्योऽर्थः । पदार्थबोधानन्तरमाकाङ्क्षादिभिर्वाक्यार्थो वाच्योऽवबुध्येत, तस्याविवक्षितत्वात् प्रतीयमानोऽर्थः प्राधान्येन चमत्कारमावहतीति अविवक्षितवाच्यध्वनेरिद-मुदाहरणम् ।

द्वितीयस्य विवक्षितान्यपरवाच्यस्योदाहरणमाह—शिखरिणीति । नायिकां प्रति नायकस्योक्तिः । हे तरुणि, येन तपश्चरणेनायं शुकशावकः पुरो दृश्यमानः शुकशिशुः । तव ते, अधरपाटलमधरोष्ठवत् पाटलवर्णं बिम्बफलं दशति सम्यक् स्वदते, तत् तदौपयिकं तपः क नु नाम शिखरिणि कस्मिन् पर्वते, अकरोदनुष्ठित-वान् ।

अत्र तीव्रेण तपश्चरणेन विना नायिकाधरसदृशबिम्बफलस्याप्यास्वादनं यदि न सुलभं तर्हि नायिकाधरास्वादनलाभः सुतरामसुकर एवेति व्यज्यते । अत्र वाच्यस्यार्थस्य विवक्षितस्याप्यर्थान्तरतात्पर्यपर्यवसानाद् विवक्षितान्यपर-वाच्यध्वनिरयमित्यर्थः ।

एतावता प्रबन्धेन ध्वनेरविद्यमानतावादिमतं दूषितम् । काव्यविशेषात्मा शब्दात्मको ध्वनिश्च वैयाकरणसरणिमनुसरता श्रीमदानन्दवर्धनाचार्येण संज्ञातः । स च ध्वनिरिति संज्ञाशब्दो व्युत्पत्तिभेदात् व्यञ्जके शब्दे, व्यञ्जकेऽर्थे, व्यञ्जनाव्यापारे, व्यङ्ग्येऽर्थे, व्यङ्ग्यार्थस्य प्राधान्येन प्रतिपादके काव्ये च शक्तिमत्त्वेनाभ्युपगतः । इदमभ्युपेत्यैव ध्वनिकारेण प्रथमं 'काव्यस्यात्मा ध्वनिरिति पद्ये ध्वनिस्वरूपनिरूपणं प्रतिज्ञातवता व्यङ्ग्यार्थपरो ध्वनिशब्दः प्रयुक्त इति पूर्वमेवोक्तम् ।

---

१. 'पोत०' क. ङ

यदप्युक्तं भक्तिर्ध्वनिरिति, तत् प्रतिसमाधीयते—

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः ॥**

अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं बिभर्ति भिन्नरूपत्वात्। वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः। उपचारमात्रं तु भक्तिः।

---

उज्जीवनी।

इदानीं ध्वनेरर्थस्य भाक्तत्वं वदतां मतं निराकर्तुमुपक्रमते—यदप्युक्तमिति। भक्तेरागतो भाक्तः, भक्तिर्नाम लक्षणाख्यो व्यापारः, यथा (भक्त्या) 'गङ्गायां घोष' इत्यादौ तीरादिरूपोऽर्थः अवगम्यते, यश्च तदनन्तरभावी शैत्यपावनत्वादिरर्थः प्रतीयते, स भक्तिजन्यप्रतीतिविषय एवास्तु। व्यञ्जनाख्यं व्यापारान्तरं किमर्थमङ्गीक्रियत इति पूर्वपक्षाशयः। ध्वन्यतेऽनेनेति व्युत्पत्त्या व्यापारस्यापि ध्वनिव्यपदेशविषयत्वाङ्गीकारात् शैत्यपावनत्वादिरूपस्यार्थस्य भक्तिजन्यत्वेऽङ्गीक्रियमाणे भक्तिरेव ध्वनिर्भवतु, भक्त्यतिरिक्तो ध्वनिर्नाम व्यापारो नास्तीति पर्यवसन्नम्। एवं ध्वनिरिति ध्वनिसंज्ञो यो व्यापारः सा भक्तिरेव लक्षणेवेति यदपि कैश्चिदुक्तमभिहितं तत् तन्मतं प्रतिसमाधीयते समाधीयत इत्यर्थः। भक्त्येति। अयमस्माभिः प्रमाणोपन्यासपुरःसरमभ्युपगम्यमानः ध्वनिः ध्वन्याख्यो व्यापारः, रूपभेदात् स्वरूपभेदात्, भक्त्या लक्षणयैकत्वं तादात्म्यं न बिभर्ति नावहति। 'गङ्गायां घोष' इत्यत्र भक्त्या तीरस्यार्थस्य ध्वनिना शैत्यपावनत्वादेश्च विषयीकरणादर्थयोरनयोः स्वरूपभेदः स्फुट एव।

तदेव विवृणोति—अयमिति। अयमुक्तप्रकारो ध्वनिः व्यापारोऽपि भक्त्या व्यापारेण भिन्नरूपत्वाद् मिथो भिन्नार्थप्रतिपादकत्वाद्, एकत्वं एकरूपत्वं, न बिभर्ति। व्यापारयोरनयोः स्वरूपतोऽपि भेदं प्रदर्शयति—वाच्येति। वाच्यवाचकाभ्यां वाच्येनाभिधाबोधितेन वाच्यार्थेन, वाचकेन वाच्यार्थबोधकेन शब्देन च, वाच्यव्यतिरिक्तस्य वाच्यभिन्नस्य, वाच्यादर्थादधिकचमत्कृतिमावहतोऽर्थान्तरस्य तात्पर्येण वक्तृविवक्षया प्रकाशनमाविष्करणं यत्र स्थलविशेषे, व्यङ्ग्यप्राधान्ये तथा प्रकाशमानस्यार्थस्य प्राधान्ये प्रधानवाक्यार्थत्वे, स व्यापारो ध्वनिर्ध्वनिसंज्ञितः, उपचारमात्रं सादृश्यात् सम्बन्धा-

मा चैतद् स्याद् भक्तिर्लक्षणं ध्वनेरित्याह—

**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया ॥ १५ ॥**

नैव भक्त्या ध्वनिर्लक्ष्यते । कथम् ? अतिव्याप्तेरव्याप्तेश्च । तत्रातिव्याप्तिर्ध्वनि-व्यतिरिक्तेऽपि विषये भक्तेः सम्भवात् ।

यत्र हि व्यङ्ग्यकृतं महत् सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहाराः कवयो दृश्यन्ते ।

---

उज्जीवनी ।

न्तरतोऽपि वा लक्ष्यमाणगुणैर्योगमात्रं प्रतिपादयति भक्तिव्यापारः। एवं व्यापारयोरप्यनयोः स्वरूपभेदात् तयोरेकत्वं दुरुपपादमित्यर्थः।

नन्वस्तु भाक्तत्वं ध्वनेर्लक्षणमित्याशङ्कायामाह—मा चैतदिति । ध्वने-र्व्यङ्ग्यस्यार्थस्य, भक्तिर्भाक्तत्वं भक्तेरागतत्वं लक्षणाजन्यबोधविषयत्वं लक्षणमिति यद् व्यावर्तकधर्म इति यदुक्तं, एतच्च एतदपि, मा स्यात् मा भूदित्याह, तदपि निराकरोतीत्यर्थः।

अतिव्याप्तेरिति । अलक्ष्यवृत्तित्वमतिव्याप्तिर्लक्षणस्य । लक्ष्यैकदेशावृत्तित्व-मव्याप्तिः । द्वाभ्यामेताभ्यां, लक्षणदोषाभ्यां, असौ ध्वनिः, तया भक्त्या, भक्तिजन्यबोधवियत्वेन, न लक्ष्यते भाक्तत्वं ध्वनेर्लक्षणं न भवितुमर्हति, अतिव्याप्तेरव्याप्तेश्चेत्यर्थः।

तदेव विवृणोति—नैवेति । भक्त्या ध्वनिर्लक्ष्यते, ध्वनेर्भक्तिर्न लक्षणम् । तत्र हेतुमाह—अतिव्याप्तेरव्याप्तेश्चेति । व्यङ्ग्यो योऽर्थो, व्यञ्जनया ध्वनिना व्यापा-रेण सिद्ध्यतीत्यङ्गीक्रियते सोऽर्थो लक्षणयैव भवति । अतो ध्वनेर्भक्तिजन्यत्वं लक्षणमिति चेदुच्यते तर्हि ध्वनिव्यतिरिक्ते ध्वनिभिन्नेऽपि विषये, अलक्ष्ये लक्षणस्य सम्भवाद् विद्यमानत्वाद् अतिव्याप्तिर्नाम लक्षणदोषः। 'गङ्गायां घोष' इत्यादौ तीरादौ ध्वनिभिन्नेऽर्थे भक्तेः सत्त्वात्।

किं च भक्तिगम्यस्यार्थस्य स्वात्ममात्रे चमत्कृतिजनकत्वं यतो न विश्राम्यति, अतः प्रयोजनप्रतीतेः व्यञ्जनागम्यायाअत्र सम्भवाद् ध्वनिभिन्नस्य

यथा— परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्त: परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं [1]श्लथभुजलताक्षेपवलनै:
कृशाङ्गया: सन्तापं वदति बिसिनीपत्रशयनम् ।।

तथा— चुम्बिज्जइ असहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि ।
विरमिअ पुणो रमिज्जइ, पि[2]ओ जणो णत्थि पुणरुत्तम् ।।

---

उज्जीवनी ।

कथं प्रसिद्धिरित्याशङ्क्य समाधत्ते—यत्र हीति । यत्र सत्यपि व्यङ्ग्ये व्यङ्ग्यकृतं महत् सौष्ठवं चमत्कारातिशय:, नास्ति न विद्यते तत्र तस्मिन् स्थलविशेषेऽपि, उपचरितवृत्त्या गौणवृत्त्या, प्रसिद्धयनुरोधप्रवर्तितव्यवहारा: प्रसिद्धयनुरोधेन महाकविप्रयोगप्रसिद्धिमनुसृत्य, प्रवर्तितो व्यवहार: शब्दप्रयोगो यैस्तादृशा:, कवय: काव्यकर्तारो दृश्यन्ते ।

उदाहरति—यथेति । परिम्लानमिति । हर्षदेवकविकृतायां रत्नावलीनाटिकायां द्वितीयेऽङ्के सागरिकामुद्दिश्य वत्सराजस्योक्तिरियम् । इदं बिसिन्या: कमलिन्या:, पत्राणां शयनं तल्पं, पीनयोर्मांसलयो: स्तनजघनयो:, सङ्गात् सम्पर्काद्, उभयत: स्तनजघनस्थानयो:, परिम्लानं शुष्कं, तनो: क्षीणस्य, मध्यभागस्य परिमिलनमामर्दनमप्राप्य मध्यभागे हरितं, श्लथै: भुजलतयो: क्षेपवलनै: व्यस्तो विपरीतो न्यासो यस्मिंस्तादृशं कृशाङ्गया: सन्तापं विरहतापं वदति सूचयति । अत्र व्यक्तवागर्थको वदधातु: । कथयतीति वाच्योऽर्थ: । तस्य अचेतनशय्याकर्तृकत्वानुपपत्त्या भक्त्या सूचयतीत्यर्थे प्रयोग: कृत: । स्फुटप्रकाशनरूपो व्यङ्ग्योऽर्थ: सन्नपि न महत् सौष्ठवमावहति ।

द्वितीयमुदाहरणं प्रदर्शयति—'चुम्बिज्जइ' इति । प्रियो जन: प्रियेण जनेन शतकृत्व: चुम्ब्यते, सहस्रकृत्व: सहस्रं वारान्, अवरुध्यते आलिङ्ग्यते, विरम्य विश्रम्य, पुनश्च रम्यते, अत्र पुनरुक्तं नास्ति । पुनरुक्तशब्दस्य पुनर्वचनरूपोऽर्थो वाच्य: । तस्य चुम्बनादिक्रियास्वनन्वयात् पुनरनुपादेयत्वरूपोऽर्थो लक्ष्यते ।

---

१. 'प्रशिथिलभुजाक्षेप०' च.          २. 'पिअजणो' क. ग. 'पिओ जणो ङ'

[चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः ।
विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम् ॥]

तथा— कुविआओ पसण्णाओ ओरण्णमुहीओ विहसमाणाओ ।
जह गहिओ तह हिअअं, हरन्ति उच्छिन्तमहिलाओ ॥
[कुपिताः प्रसन्ना अवरुदितमुख्यो विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिला ॥]

तथा— अज्जाए पहारो णवलदाए[1] दिण्णो पिएण थणवट्टे ।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम् ॥
[अर्याया: प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे ।
मृदुकोऽपि दुस्सह इव जातो हृदये सपत्नीनाम् ॥]

तथा— परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।

---

उज्जीवनी ।

तासां क्रियाणां पुनरनुपादेयत्वं नास्तीत्यर्थः ।

तृतीयमुदाहरणमाह—कुविआओ इति । स्वैरिण्यः पुंश्चल्यः महिला युवत्यः, कुपिताः प्रसन्नाः सन्तुष्टाः अवरुदितमुख्यः रुदितवदना वा तथा तेन प्रकारेण हृदयं प्रेक्षकाणां मानसं हरन्ति । अत्र हरतेः हरणरूपो वाच्योऽर्थः । तस्य चानुपपद्यमानतया पारवश्यापादनरूपोऽर्थो भक्त्या बोध्यते ।

चतुर्थमुदाहरणं दर्शयति—अज्जाए इति । कनिष्ठभार्यायाः स्तनपृष्ठे नवलतया प्रियेण कान्तेन मृदुकोऽपि अतिमृदुरपि प्रहारो दत्तः, सपत्नीनां हृदये दुःसह एव जातः । दत्त इत्यस्य वितीर्ण इति वच्योऽर्थः । अत्र दानस्यानुपपद्यमानतया विहित इति लक्ष्यस्यार्थस्य प्रतीतिर्भवति ।

पञ्चममुदाहरणं यथा—परार्थे इति । य इक्षुः, परार्थे अन्यस्योपकाराय, पीडां निष्पीडनम्, अनुभवति प्राप्नोति । भङ्गेऽपि भञ्जनेऽपि, मधुरो माधुर्यगुणोपेतः, इह लोके, यदीयो विकारः इक्षोर्विकारो गुडादिरूपपरिणतः, सर्वेषां प्राणिनां, अभिमतो हितो भवति, स इक्षुः, भृशमक्षेत्रपतितः अक्षेत्रे ऊषरप्रदेशे

---

१. 'आ.' ख. ग.

न सम्प्राप्तो वृद्धिं यदि[1] स भृशम[2]क्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः॥

इत्यत्रेक्षुपक्षेऽनुभवतिशब्दः। न चैवंविधः कदाचिदपि ध्वनेर्विषयः।

यतः— उक्त्यन्तरेणाशक्यं यत्, तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयी भवेत्॥ १६॥

अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः।

---

उज्जीवनी।

पतितो वृद्धिं पुष्टिं, यदि न सम्प्राप्तः अत्यन्तं परिपोषं न गतश्चेत्, असौ पोषाभावरूपः किमिक्षोर्दोषः, अगुणाया निर्गुणाया, मरुभुवः ऊषरभूमेः किं न दोषः। मरुभूमेरेवायं दोष इति भावः।

एतेनाप्रस्तुतवृत्तान्तवर्णनेन प्रस्तुतः सज्जनवृत्तान्तः परिस्फुरति। अत्र प्रस्तुतः सज्जनः सदा परेषामर्थे पीडामनुभवति। परिभवेऽपि क्रियमाणे गुणवांश्च भवति। यदीयः सज्जनसम्बन्धी विकारः कोपश्च, सर्वेषामभिमतः प्रिय एव च भवति। सचानुचितं स्थानं प्राप्तः, वृद्धिमभ्युन्नतिं न प्राप्नोति यदि सोऽपि न साधोर्दोष इत्यर्थः। अत्र प्रतीयमानार्थापेक्षया वाच्यस्यैव चमत्कृतिजनकत्वादलङ्कारः अप्रस्तुतप्रशंसेति पूर्वमुक्तम्।

इहानुभवतिशब्दो ज्ञानार्थकः, सज्जनपक्षे उपपद्यमानोऽपि इक्षुपक्षे नोपपद्यते, तस्याचेतनत्वात्। अतो लक्षणया प्राप्नोत्यर्थं बोधयतीति एवमादिस्थलेषु व्यङ्ग्यार्थस्य विद्यमानतायामपि तस्य सौष्ठवं नोत्कृष्टमिति भक्त्या शब्दप्रयोगो दृश्यत एव। अत्रानुभूतिः प्राप्त्यर्थक इक्षुपक्षे, प्राप्तिरूपोऽर्थश्च न ध्वनिः। अतो ध्वनिव्यतिरिक्ते तस्मिन्नर्थे भक्तिः प्रवर्तत इति भाक्तत्वं तस्येति ध्वनेर्भाक्तत्वं लक्षणमित्यङ्गीक्रियमाणेऽतिव्याप्तिरित्यर्थः। इत्यत्रेति। परार्थे य इत्यस्मिन् पद्ये, इक्षुपक्षे इक्षुवर्णनात्मके वाक्ये, अनुभवतिशब्दः प्राप्त्यर्थे भाक्तः प्रयुक्तश्च दृश्यते। एवंविधः एवंप्रकारः अर्थः, कदाचिदपि जातुचिदपि ध्वनेर्विषयो न भवति।

तत्र हेतुमाह—यत इति। उक्त्यन्तरेणेति। यत् सौन्दर्यं उक्त्यन्तरेण ध्वनिनाम्नो व्यञ्जकाच्छब्दादन्येन, अशक्यं बोधयितुं न शक्यते। शब्दः स एव

---

१. 'दि. भृ.' ख. २. 'मवक्षे' ख.

किञ्च— रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः ॥ १७ ॥

तेषु चोपचरितशब्दवृत्तिरस्तीति । तथाविधे च विषये क्वचित् सम्भवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते । न तथाविधशब्दमुखेन ॥

---

उज्जीवनी ।

शब्दो व्यञ्जकतां व्यञ्जकत्वं, व्यङ्ग्यार्थबोधकत्वं बिभ्रद्, ध्वन्युक्तेर्विषयी भवेत् ध्वनिपदव्यपदेशभाग् भवति । अत एव अत्र च 'कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनमि'त्यादौ, उक्त्यन्तरेण ध्वनिव्यतिरिक्तशब्दान्तरेण, अशक्यचारुत्वव्यक्तिहेतुः शब्दः अशक्या चारुत्वव्यक्तिः चमत्कृतिव्यञ्जकत्वं तद्धेतुरित्यर्थः । एवं च पूर्वोक्तेषूदाहरणेषु वदतीत्यादयः शब्दाः उक्त्यन्तराशक्यं चारुत्वं न प्रकाशयन्तीति लाक्षणिकाः (प्रयोजनवत्या लक्षणयार्थप्रतिपादकाः, शब्दाः) न ध्वनिव्यपदेशमर्हन्ति ।

मुख्यार्थबाधे इत्यादिना प्रतिपादिता या प्रयोजनवती निरूढा चेति द्विविधा लक्षणा । तत्र प्रयोजनवत्यां प्रयोजनस्य व्यञ्जनाव्यापारविषयत्वेऽपि विजातीय चमत्कृतिजनकत्वाभावाद् सोऽर्थो न ध्वनिव्यपदेशमर्हतीत्युक्त्वा निरूढलक्षणाप्रतिपाद्यस्याप्यर्थस्य तद्व्यपदेशं निषेधति—किञ्चेति । अनादितात्पर्यविषयीभूता लक्षणा निरूढलक्षणेत्युच्यते । तत्र प्रयोजनस्य कथैव नास्ति । रूढा इति । लावण्याद्याः लावण्यानुकूलप्रतिकूलादयो ये शब्दाः, स्वविषयादपि, स्वस्य विषयाद् योगजन्यार्थप्रतीतिविषयादपि अन्यत्रान्यस्मिन् विषये, अनादितात्पर्यविषयीभूतेऽर्थे, रूढाः निरूढाः प्रयुक्ताः, ते शब्दाः ध्वनेः पदमधिष्ठानं न भवन्ति, तत्रापि ध्वनिव्यवहारो नास्तीत्यर्थः । तेष्विति । तेषु अर्थेषु च । उपचरिता गौणी शब्दस्य वृत्तिर्व्यापारात्मिकास्तीति निरूढलक्षणयार्थप्रतिपादकेषु शब्देष्वपि ध्वनिविषयत्वं नास्तीति फलितोऽर्थः । तथाविधे च विषये, यत्र निरूढलक्षणयार्थ प्रतिपादकाः लावण्यादयः शब्दा यस्मिन् शब्दसन्दर्भात्मके काव्ये प्रयुक्ताः, तादृशे क्वचित् स्थलविशेषे, सम्भवन्नपि विद्यमानत्वेनाङ्गीक्रियमाणोऽपि, ध्वनिव्यवहारो ध्वनिव्यपदेशविषयत्वरूपः प्रकारान्तरेण लावण्यादिशब्दघटितवाक्यस्य वाच्यो यः सहृदयश्लाघ्योऽर्थः, तस्य व्यञ्जकत्वात्मकव्यापारमहिम्ना प्रवर्तते प्रतीतिपथमवतरति । न त्विति—तु किन्तु, तथाविधशब्दमुखेन लावण्यादिशब्दद्वारा न प्रवर्तन्त इत्यर्थः ।

अपि च,

**मुख्यां वृत्तिं परित्यज्य, गुणवृत्त्यार्थदर्शनम् ।**
**यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ १८ ॥**

तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये, यदि शब्दस्यामुख्यता तस्य प्रयोगे दुष्टतैव स्यात् । न चैवम् ।

---

उज्जीवनी ।

एवं च ध्वनेर्भाक्तत्वं लक्षणमिति चेद्, लक्ष्यो ध्वनिः । स च ध्वनिरूपोऽर्थो निरूढलाक्षणिकशब्दप्रयोगे न स्फुरति । प्रतीतिविषयस्त्वर्थो लक्ष्य एव, न ध्वनिः । तत्र ध्वनिव्यतिरिक्ते यदुक्तं भाक्तत्वं ध्वनिलक्षणं तदस्तीत्यतिव्याप्तिः ।

ध्वनेर्भाक्तत्वं प्रकारान्तरेणापि परिहरति—अपि चेति । अपि च किं च । मुख्यामिति । मुख्यां वृत्तिमभिधाव्यापारं परित्यज्य विहाय, गुणवृत्त्या लक्षणाव्यापारेण, अर्थदर्शनं अर्थस्य दर्शनं ज्ञापनं, यत् फलं यादृशं प्रयोजनं, उद्दिश्याभिसन्धाय, क्रियते, तत्र तस्मिन्नर्थे, शब्दः न स्खलद्गतिः स्खलन्ती प्रच्युता भवन्ती, गतिर्बोधनसामर्थ्यं यस्य तादृशो न भवतीत्यर्थः ।

इदं तु तत्त्वम्—प्रयोजनप्रतिपिपादयिषया लाक्षणिकशब्दप्रयोगे कवीनां नैर्भर्यम् । कविना प्रयुज्यमानश्च स शब्दः मुख्यार्थबाधादिसमवधाने लक्ष्यमर्थं बोधयितुं न खल्वसमर्थो दृश्यते । तथा तादृशशब्दप्रयोक्त्रा कविना प्रेप्सितस्य प्रयोजनरूपस्यार्थस्यापि बोधने समर्थ एव स शब्दो भवति । किन्तु लक्ष्योऽन्यः, व्यङ्ग्यश्चान्य इति विषयभेदादपि । स एव शब्दोऽभिधया, लक्षणया, व्यञ्जनया च तत्तत्स्थलानुरोधेन वाच्यं, लक्ष्यं, व्यङ्ग्यं चार्थं बोधयितुं समर्थ एवेति यावत् ।

उक्तं काव्यप्रकाशे—(P. No. 58.)

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥' इति ।

तदेव विशदीकरोति—तत्र हीति । हि यतः, चारुत्वातिशयविशिष्टार्थप्रकाशन-

तस्माद्

**वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।**
**व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ॥ १९ ॥**

---

उज्जीवनी ।

लक्षणे चारुत्वातिशयः सौन्दर्यातिशयः तद्विशिष्टार्थस्य प्रकाशनात्मके प्रयोजने, कर्तव्ये विधातव्ये, शब्दस्य यदि अमुख्यता स्खलद्गतित्वं चेत्, तदा तस्य तादृशस्यासमर्थस्यार्थावबोधनसामर्थ्यरहितस्य शब्दस्य प्रयोगे दुष्टतैव स्यात् । काव्यं (तादृशशब्दसन्दर्भात्मकं) दुष्टमेव स्याद् इति यावत् । न चैवं, एवं न वस्तुस्थितिः । यद्वा अमुख्यता गौणता । गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिरूपे प्रयोजने तस्य शब्दस्य गङ्गाशब्दस्य यदि गौणत्वं प्रयोजनप्रतीतिः लक्षणया भवतीत्यङ्गीक्रियते, तदा तत्र प्रयोगे, दुष्टतैव स्यात् । शैत्यपावनत्वादिरूपे फले गङ्गाशब्दस्य सङ्केताभावात् अभिधा तत्र न प्रसरत्येव । प्रयोजने लक्षणापि न प्रभवति । मुख्यार्थबाधाद्यभावात् । यश्च गङ्गाशब्दस्य तीररूपोऽर्थः, स न मुख्यः । यथा गङ्गाशब्दः स्रोतसि बाधित इति तीरं लक्षयति, तथा तीरेऽपि यदि बाधितस्तदा प्रयोजनं लक्षणया बोधयेत् । तीरं तु न मुख्योऽर्थः । न च तस्य बाधः । शैत्यपावनत्वादिभिः च तीरस्य सम्बन्धोऽपि नास्ति । नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम् । नापि गङ्गाशब्दस्तीरमिव प्रयोजनं प्रतिपादयितुमसमर्थः । तस्यापि प्रयोजनान्तरेऽभ्युपगम्यमानेऽनवस्था । उक्तं च काव्यप्रकाशे—(P.60)

> "लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
> न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥ इति ।

तस्मादिति । ध्वनेर्भाक्तत्वासम्भवात् । वाचकत्वेति । वाचकत्वाश्रयेणैव वाचकत्वमभिधाव्यापारमाश्रित्यैव अभिधापुच्छभूतैव, व्यवस्थिता व्यवस्थां भजमाना, गुणवृत्तिः भाक्तत्वं (भक्तिः) व्यञ्जकत्वैकमूलस्य व्यञ्जकत्वं व्यञ्जनाव्यापार एव एकं मुख्यं, मूलं कारणं यस्य तादृशस्य, ध्वनेर्व्यङ्ग्यार्थस्य, लक्षणं

तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः। अव्याप्तिरप्यस्य लक्षणस्य। न हि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः, अन्ये च बहवः प्रकारा भक्त्या व्याप्यन्ते।

---

उज्जीवनी।

व्यावर्तकधर्मः, कथं स्यात् कथं भवेत्। भज्यते सेव्यतेऽनया मुख्योऽर्थ इति व्युत्पत्त्यनुरोधेन मुख्यमर्थमाश्रित्यैव प्रवर्तमाना भक्तिः गुणवृत्तिः व्यञ्जनामात्रगम्यस्य व्यङ्ग्यस्यार्थस्य कथमपि बोधिका न भवति। अतो भक्तिर्ध्वनिलक्षणमपि न भवितुमर्हतीति भावः।

सिद्धमर्थमाह—तस्मादिति। यस्माद् भाक्तत्वं ध्वनेर्न लक्षणं तस्मादित्यर्थः। अन्यो भिन्नविषयः, ध्वनिर्ध्वन्यात्मको व्यापारः, अन्या अन्यविषया च, गुणवृत्तिः भक्तिः (लक्षणा) इति विषयभेदोऽपि भक्तिव्यक्त्योरित्यर्थः।

एवं भक्तेर्ध्वनिलक्षणत्वेऽतिव्याप्तिमुक्त्वा अव्याप्तिमप्याह—अव्याप्तिरिति। अस्य लक्षणस्य, ध्वनेर्यद् भाक्तत्वं लक्षणमुक्तं तस्य। अव्याप्तिरपि। लक्ष्यैकदेशावृत्तित्वमव्याप्तिः लक्षणदोषः। अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्चेति ध्वनिर्द्विविधः कथितः। तत्र विवक्षितान्यपरवाच्यो नाम ध्वनेः प्रभेदः। विवक्षितं वक्तृतात्पर्यविषयीभूतं, अन्यपरं व्यङ्ग्यस्यार्थस्योपसर्जनीभूतं, वाच्यं वाच्योऽर्थो यस्मिन् सः विवक्षितान्यपरवाच्यो ध्वनिः काव्यभेदः, यतस्तत्र ध्वनेः प्रतीयमानस्यार्थस्य भाक्तत्वं नास्ति। स काव्यभेदो भक्त्या न व्याप्यते। तस्मिन् ध्वनौ भक्तेर्व्याप्त्यभावाल्लक्ष्यैकदेशावृत्तित्वरूपा अव्याप्तिः भाक्तत्वलक्षणस्य। तस्य विवक्षितान्यपरवाच्यस्य भेदप्रकाराः अन्ये च बहवः, रसभावतदाभासभावशान्तिभावशबलतादयः प्रकाराश्च भक्त्या न व्याप्यन्ते। तानपि प्रकारान् भक्तिर्न व्याप्नोतीति चाव्याप्तिः। तथा च तेष्वपि प्रतीयमानेषु रसभावादिष्वर्थेषु ध्वन्यात्मकेषु भाक्तत्वलक्षणमव्याप्तमित्यर्थः।

अत्र च, अन्ये च बहवस्तद्भेदप्रकारा इत्यनेन असंलक्ष्यक्रमध्वनेः प्रकारा गृह्यन्ते। अतो ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षण इत्यनेन संलक्ष्यक्रमव्यङ्ग्यो ग्रन्थकर्तुरभिमत इति ज्ञायते। एवं च सर्वोऽपि ध्वनिर्लक्षणीयः। तत्र कचिल्लक्षणस्यासत्त्वे अव्याप्तिरित्युक्तं भवति। अविवक्षितवाच्ये ध्वनौ भक्तिरस्ति, विवक्षितान्यपरवाच्ये तु भक्तिर्नास्तीति।

उज्जीवनी ।

वस्तुतस्तु भाक्तत्वस्य ध्वनिलक्षणत्वेऽव्याप्तिः प्रदर्शिता । अविवक्षितवाच्ये ध्वनौ भाक्तत्वमस्तीति चानुमन्यते । किन्तु तत् कुत्रास्तीति विचारणीयम् । अविवक्षितमन्वयायोग्यं, वाच्यं वाच्योऽर्थो यत्र तादृशो ध्वनिरविवक्षितवाच्यध्वनिः, लक्षणामूलध्वनिरिति चोच्यते । स चार्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । आद्यो यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥

विद्वत्सभां गच्छन्तं प्रति कस्यचिदाप्तस्येदं वचनम् । यतः अत्र विदुषां पण्डितानां समवायस्तिष्ठति । ततोऽत्रात्मीयां स्वीयां, मतिमास्थायाश्रित्य स्थितिं विधेहि कुरु इति अहं वच्मीत्यर्थः । अत्र सम्बोध्यं पुरुषमुद्दिश्य सर्वमुक्त्वा पुनः 'त्वामस्मि वच्मि' इति कथनमनुचितमिति उपदेशार्हं त्वां आप्तोऽहं वच्मि उपदिशामीति लक्ष्यते । हितकारित्वं व्यङ्ग्यम् । तथा—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥

अपकारिणं प्रति कस्यचिदुक्तिरियम् । त्वया यद् बहूपकृतं तत्र विषये किमुच्यते, न किमपि वक्तुं शक्यत इत्यर्थः । भवता परं केवलं सुजनता प्रकटिता । अतो हे सुहृद्, यतस्ते सुजनता प्रथिता तत ईदृशमेव सदा विदधन् कुर्वाणः शरदां शतं सुखितं सुखयुक्तं आस्स्व वर्तस्वेति वाच्योऽर्थः । स च विपरीतलक्षणया उपकृतमित्यनेन अपकृतमिति, सुजनतेत्यनेन दुर्जनतेत्यादिकं लक्ष्यते । तेन चापकारातिशयो व्यज्यते ।

एवं चाविवक्षितवाच्यध्वनिभेदयोरुभयोरपि योऽर्थः लक्षणाद्वारा व्यञ्जनामात्रजन्यप्रतीतिविषयो भवति, तस्मिन्नर्थे भाक्तत्वं न सम्भवत्येव । इदं च तस्मादन्यो ध्वनिरन्या च गुणवृत्तिरिति ग्रन्थकारेणैवाभिहितम् । एवं भक्तिध्वन्योर्विषयभेदश्च प्रकटीकृतः । अत्र कश्चिदपि ध्वनिः (प्रतीयमानोऽर्थः) भाक्तो भवितुं नार्हतीति भाक्तत्वलक्षणस्यासम्भवो दोष इति सुवचम् । अयं च सकलशास्त्रकारसम्मतः पन्थाः । यत् कस्यचिल्लक्षणस्यालक्ष्यवृत्तित्वरूपाया

तस्माद् भक्तिरलक्षणम् ॥

**कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।**

सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षणतया सम्भाव्येत,

---

उज्जीवनी ।

अतिव्याप्तेः प्रसक्तौ तद्व्यावर्तकविशेषणदानेन सा परिहरणीया । तथा लक्ष्यैकदेशावृत्तित्वरूपाया अव्याप्तेस्तु प्रसङ्गे लक्षणं परिष्करणीयम् । यदा तु क्वचिदपि लक्ष्ये लक्षणासम्भवरूपोऽसम्भवस्तदा लक्षणमेव तत् त्याज्यमिति ।

तस्मादिति—पूर्वोक्तदोषाद् भक्तिर्भाक्तत्वं लक्षणं ध्वनिलक्षणं न सम्भवतीति सिद्धम् । एतावता च प्रबन्धेन ध्वनेरविद्यमानत्वं भाक्तत्वं च निराकृतम् ।

भाक्तत्वस्य ध्वनिलक्षणत्वासम्भवेऽपि तस्योपलक्षणत्वमस्त्वित्याशङ्क्याह—कस्यचिदिति । अविद्यमानं व्यावर्तकमुपलक्षणम् । काकवद् देवदत्तगृहमित्यत्र काकवत्त्वमुपलक्षणम् । तच्च देवदत्तगृहमितरस्माद् व्यावर्त्य ततो निवर्तते । तस्य च तत्र सर्वदावस्थानं नियमेन नापेक्ष्यते । तथा गङ्गाशब्दः प्रथमं तीरं भक्त्या लक्षयति । ततश्चोपलक्षणविधया शैत्यपावनत्वादिकं बोधयति । तथा च भक्तिजन्यप्रतीतिविषयत्वरूपं भाक्तत्वं ध्वनेरुपलक्षणं भवत्विति पूर्वपक्षाशयः । शैत्यपावनत्वादिकं प्रत्याययित्वा ततो निवर्तत इत्यर्थः । सा तु भक्तिरस्तु । कस्यचिद् ध्वनिभेदस्य यस्मिन् ध्वनेः प्रभेदे भक्तिर्वर्तते तस्य ध्वनेः । उपलक्षणं अविद्यमानो व्यावर्तको धर्मः, स्याद् भवेद्, भवत्वित्यर्थः । अमुमेवार्थं विशदीकरोति—सा पुनरिति । सा पुनः, या ध्वनेर्लक्षणत्वेन पूर्वपक्षिणोक्ता सेत्यर्थः । वक्ष्यमाणप्रभेदाद्, ध्वनेर्ये प्रभेदा वक्ष्यन्ते, ततः अन्यतमस्य यस्यकस्यचिदपि भेदस्योपलक्षणत्वेन, यदि नाम सम्भाव्येतानुमन्येत चेत् तथैव भवत्विति शेषः । ध्वनेः प्रभेदेषु बहुषु सत्स्वपि क्वचिदेव भक्तिः । किं च भक्त्योपलक्षितस्यापि ध्वनेर्व्यङ्ग्यार्थस्य प्रत्यायने नास्ति व्यञ्जनादृते अन्यो व्यापारः । तथा च भाक्तत्वस्य काचित्कध्वन्युपलक्षणत्वकथनेन ध्वनिकाराणां न किञ्चिदपि हीयेत । भाक्तत्ववादिनामभीष्टं न

यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्यत इत्युच्यते, तदभिधाव्यापारेण तदितरो-ऽलङ्कारवर्गः समग्र एव लक्ष्यत इति प्रत्येकमलङ्काराणां लक्षणकरणवैयर्थ्य-प्रसङ्गः। किं च,

**लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ २० ॥**

कृतेऽपि वा पूर्वमेवान्यैः ध्वनिलक्षणे, पक्षसंसिद्धिरेव नः। यस्माद् ध्वनिरस्तीति नः पक्षः।

---

उज्जीवनी।

किमपि साध्यते। अत उपलक्षणत्वपक्षेणापि न किञ्चिदपि प्रयोजनमिति वाक्यार्थः आयोजनीयः।

भाक्तेर्ध्वनिलक्षणत्वकथने दोषान्तरमप्याह—यदि चेति। ध्वनिः व्यङ्ग्योऽर्थः, गुणवृत्त्यैव लक्ष्यत इति च यदि उच्यते, गुणवृत्तिः भाक्तत्वं ध्वनेर्लक्षणमिति च यदि कथ्यते, तत् तर्हि, अभिधाव्यापारेण शक्त्या, तदितरो ध्वनिभिन्नः, व्यङ्ग्यालङ्कारभिन्नः, वाच्यः अलङ्कारवर्गः अलङ्कारसमूहः समग्र एव सर्व एव। लक्ष्यते शाक्तत्वं (शक्तिजन्यप्रतीतिविषयत्वं) वाच्यालङ्काराणां सर्वेषामपि सामान्यलक्षणमिति वक्तुं शक्यत इति हेतोः प्रत्येकं पृथग् अलङ्काराणां, लक्षणकरणवैयर्थ्यप्रसङ्गः लक्षणकरणमलङ्कारविशेषाणां व्यर्थमापद्येतेत्यर्थः।

लक्षणकरणेन स्वाभीष्टलाभमाह—किं चेति। किञ्च अपि च, अस्य ध्वनेः, अन्यैः पूर्वैरलङ्कारशास्त्रकारैः लक्षणे कृतेऽपि भाक्तत्वमन्यद् वा यत् किमपि लक्षणं विहितं चेदपि, नः अस्माकं ध्वनिकाराणां, पक्षसंसिद्धिरेव पक्षस्य सम्यक् सिद्धिरेव सञ्जातेत्यर्थः। विवृणोति—कृतेऽपि वेति। अन्यैः पूर्वैः, ध्वनिलक्षणे ध्वनेर्लक्षणे, पूर्वमेवादावेव, कृतेऽपि वा विहिते वा नः पक्षसंसिद्धिरेव भवति। हेतुमाह—यस्मादिति। यस्माद् यतः, ध्वनिर्नाम सहृदयहृदयानन्दकरः अर्थः, अस्ति विद्यते इति नोऽस्माकं, पक्षः मतम् अभावप्रसिद्धिं प्रति, प्रतियोगि-प्रसिद्धेरावश्यकता, ध्वनेरविद्यमानत्ववादिनां मते प्रतियोगिविधया ध्वनिः प्रसिद्धः पूर्वमेवेति सिद्ध्यति। ध्वनेर्भाक्तत्वं वदद्भिरपि लक्षणीयत्वेन ध्वनिरेवाङ्गीकृत इति तन्मतानुरोधेनापि ध्वनिरस्तीति पूर्वैरङ्गीकृत इति

स च प्रागेव संसिद्ध इत्ययत्नसम्पन्नसमीहितार्थाः संवृत्ताः स्मः । येऽपि सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुस्तेऽपि न परीक्ष्यवादिनः, यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं तत् सर्वेषामेव वस्तूनां तत् प्रसक्तम् ।

यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायि तैः स्वरूपम् आख्यायते, तत् तेऽपि युक्ताभिधायिन एव ॥

*इति राजानकानन्दवर्धनविरचिते ध्वन्यालोके प्रथम उद्द्योतः ॥

---

उज्जीवनी ।

वस्तुतत्त्वमाह—स चेति । स च ध्वनिश्च, प्रागेव पूर्वमेव, संसिद्धः प्रसिद्ध इति हेतोः, अयत्नसम्पन्नसमीहितार्थाः अयत्नेनैव सम्पन्नः सिद्धः, समीहितोऽभीप्सितः, अर्थो ध्वनिरूपो येषां तादृशाः संवृत्ताः स्म अभूमेत्यर्थः ।

एवं भाक्तत्वं नास्तित्वं च निराकृत्य ध्वनेरनाख्येयतां निरस्यति—येऽपि इति । येऽपि ये तु, सहृदयहृदयसंवेद्यं सहृदयानां हृदयेन सम्यग् वेत्तुमर्हं, ध्वनेः प्रतिपक्षनिराकरणेन सिद्धस्य, वाच्यातिशायिचमत्कृतिजनकस्य व्यङ्ग्यस्यार्थस्य स्वरूपं, अनाख्येयं नाख्यातव्यम् । वाचां स्थितमविषये तत्त्वमूचुस्तदीयमिति समाम्नासिषुः । तेऽपि न परीक्ष्यवादिनः, तत्त्वमपरीक्षमाणा एव ते यत् किञ्चिदवोचन्नित्यर्थः । तदेव विशदयति—यत इति । यतो यस्मात् कारणाद् उक्तया नीत्या "यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः" इत्यन्तेन कारिकांशेन ध्वनेः सामान्यलक्षणं, वक्ष्यमाणया नीत्या "अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् । अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् । इत्यनेन ध्वनेरविवक्षितवाच्यात्मकविशेषस्य लक्षणं च प्रतिपादितं भवति । तथाहि—शब्दबोध्योपसर्जनीभूतार्थव्यङ्ग्य—शब्दबोध्योपसर्जनीकृतार्थव्यङ्ग्यान्यतरत्व—अविवक्षितवाच्यविवक्षितान्यपरवाच्यान्यतरत्वरूपेण पर्यवसन्नं ध्वनेः सामान्यलक्षणमभिहितम् । ततः—अर्थान्तरसङ्क्रमितवाच्यव्यङ्ग्यात्यन्त-

---

*"इति श्रीमदानन्दवर्धनाचार्यविरचिते ध्वन्यालोचने प्रथमः सङ्केतः" ट.

"इति राजानकानन्दवर्धनविरचिते सहृदयालोकनाम्नि काव्यालङ्कारे प्रथम उद्द्योतः" । ख. ग. घ.

उज्जीवनी ।

तिरस्कृतवाच्यव्यङ्ग्यान्यतरत्वम् अविवक्षितवाच्यात्मकस्य ध्वनिविशेषस्य लक्षणम् । अस्मिन् ग्रन्थे लक्षणानि प्रायेण तत्तद्विभागपुरःसरमेव प्रदर्श्यन्ते । यथा न्यायशास्त्रे पदार्थत्वं द्रव्यादिसप्तान्यतमत्वं, द्रव्यत्वं पृथिव्याद्यन्यतमत्व-मिति । अविवक्षितवाच्यस्य लक्षणमप्येवंरूपं प्रदर्शितम् । तत्र द्विधा मतमिति कण्ठत उक्तम् । यत्रार्थः शब्दो वेत्यत्र तु द्विधा इति नोक्तं, तथापि उक्तरीत्या विभागपुरःसरमेव लक्षणकथनाद् वाकारघटितेन शब्दसमुदायेन अन्यतरत्वात्मकं ध्वनिसामान्यलक्षणमुक्तं ग्रन्थकारेण । एवं स्फुटतया ज्ञायमानं विभागवचनं लोचनकारो यदि नाभ्युपैति तर्हि अनेन ग्रन्थेन ध्वनेः सामान्यलक्षणमपि नोक्तं भवति । कारिका तु सामग्र्येण अविवक्षितवाच्याविवक्षितान्यपरवाच्यत्वरूप-विभागघटितसामान्यलक्षणाक्रान्तो ध्वनिः यत्र (काव्ये) प्रधानवाक्यार्थो भवति स काव्यविशेषः ध्वनिः (उत्तमं काव्यम्) इति काव्यविशेषलक्षणमेवानया कारि-कयाख्यायते । काव्यसामान्यलक्षणं तु "योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः । वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ" ।। इत्यनेन सहृदयश्लाघ्यवाच्यप्रतीयमानान्यतरार्थबोधकशब्दत्वात्मकं पूर्वमेव प्रतिपादि-तम् । एवं च व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिः, गुणभावे गुणीभूतव्यङ्ग्यं, अस्फुटत्वे चित्रं चेति काव्यस्य त्रैविध्यं भवति इत्येव ध्वनिकारस्य सुचिन्तितो दृढतरश्चाभिप्रायः । तत्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम् । विभागस्तु वृत्तिकारेणैव कथित इत्यादिलोचनवचनस्योपादेयता सुधीभिर्विभावनीया । उपपत्तिरहितमेतादृशं लोचनकारवचनमेव परमं प्रमाणं मन्वानाः, अतिपरिस्फुटार्थबोधके ध्वन्यालोकवाक्ये अश्रद्दधानाश्च कारिका वृत्त्योर्भिन्नकर्तृकत्वमुद्घोषयन्तीत्यहो विवेकान्धता तेषाम् ।

एवं ध्वनेः सामान्यलक्षणं विशेषलक्षणमपि प्रतिपादितमिति ग्रन्थस्य समुचितोऽर्थः कथितः । तदनुसारेणैव द्वितीयोद्द्योतारम्भे एवमविवक्षितवाच्य-विवक्षितान्यपरवाच्यत्वेन ध्वनिर्द्विप्रकारः प्रकाशित इत्यादि ग्रन्थोऽपि सुसङ्गता-र्थो भवति ।

सामान्यविशेषलक्षणाभ्यां ध्वनौ प्रतिपादितेऽपि यदि अनाख्येयत्वम् (अवर्णनीयत्वम्) आख्यातुमनर्हत्वम् उच्यत इति शेषः । तत् तर्हि, तद्

उज्जीवनी ।

अनाख्येयत्वं, सर्वेषां वस्तूनां, सकलानामपि पदार्थानां, प्रसक्तं सर्वेषामपि पदार्थानामनाख्येयत्वं प्रसज्यत इत्यर्थः ।

ध्वनेरनाख्येयत्ववादिनोऽपरीक्षयाभिधायित्वेन दूषयित्वा तेषां युक्ता-भिधायित्वमपि भङ्ग्या प्रकाशयति—यदि पुनरिति । ध्वनेः ध्वनिकाव्यस्य, अनयातिशयोक्त्या अनाख्येयत्वेन वचसामगोचरत्वेन, चमत्कारातिशयवत्त्वस्य, उक्त्या कथनेन, काव्यान्तरातिशायि गुणीभूतव्यङ्ग्यादिकाव्यान्तरातिशायि चमत्कारवत्त्वादनाख्येयत्वं स्वरूपं लक्षणं तैः प्रतिपक्षिभिः यदि आख्यायते, उच्यते चेत्! तत् ततः, तेऽपि युक्ताभिधायिन एव युक्तमभिधातुं शीलमेषामस्तीति तादृशा एवेति मन्यामहे ।

एवं ध्वनेरविद्यमानत्वस्य, भाक्तत्वस्य, अनाख्येयत्वस्य च निरसनेन ध्वनिरस्ति इति समर्थितम् । स च यस्मिन् काव्ये प्राधान्येन प्रतीयते स काव्यविशेषो ध्वनिरिति च सिद्धान्तितम् । स च द्विविधः अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति प्रथमोद्द्योतेन प्रतिपादितम् ।

## द्वितीय उद्द्योतः ।

एवमविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वेन ध्वनिर्द्विप्रकारः प्रकाशितः । तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—

**अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ।**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥ १ ॥**

---

उज्जीवनी ।

प्रथमोद्द्योते वाच्यव्यङ्ग्यात्मना द्वयोः काव्यार्थयोः ध्वनिसंज्ञितो वाच्यातिशायिचमत्कृतिजनको व्यङ्ग्योऽर्थः, तस्याविद्यमानत्वभाक्तत्वा-निर्वचनीयत्ववादिमतनिराकरणपूर्वं समर्थितः । स चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्विप्रकार इति च प्रतिपादितम् आनन्दवर्धनाचार्येण ।

अथ द्वितीयोद्द्योतेन ध्वनेर्भेदप्रभेदान् वक्तुमुपक्रमते—एवमिति । **एवं** प्रथमोद्द्योतोक्तप्रकारेण, **अविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वेन,** अविवक्षितवाच्यत्वेन विवक्षितान्यपरवाच्यत्वेन चोपाधिना, **ध्वनिः द्विप्रकारः** द्वौ प्रकारौ विभाजकधर्मौ अविवक्षितवाच्यत्व, विवक्षितान्य-परवाच्यत्वात्मकौ यस्य तादृशः **प्रकाशितः** निरूपणेन स्फुटीकृतः । **तत्र** तयोर्भेदयोर्मध्ये **अविवक्षितवाच्यस्य** प्रथमस्य भेदस्य, **प्रभेदप्रतिपादनाया-**वान्तरभेदं प्रतिपादयितुं, **इदं** वक्ष्यमाण**मुच्यते** उक्तिविषयीक्रियते । तदेवाह—**अर्थान्तर इति । अविवक्षितवाच्यस्य** अविवक्षितं तात्पर्याविषयीभूतं पदार्था-न्तरान्वयायोग्यं वा वाच्यं वाच्योऽर्थः यस्य तादृशस्य ध्वनेः अनेनाभिधेयस्यार्थस्य या पदार्थान्तरेण साकमन्वयस्य तात्पर्यस्य वानुपपत्तिस्तस्या लक्षणाबीजत्वं

तथाविधाभ्यां च ताभ्यां व्यङ्ग्यस्यैव विशेषः।

तत्रार्थान्तरसङ्क्रमितवाच्यो यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव॥

---

उज्जीवनी।

सूचितम्ः अत एव प्रथमभेदस्यास्य लक्षणामूलध्वनित्वमिति ज्ञेयम्। वाच्यं वाच्योऽर्थः, अर्थान्तरे सङ्क्रमितं अन्येन प्रकारेण वाच्यलक्ष्यसाधारणेऽर्थे सङ्क्रमितं परिणमितम्। वा अथवा, अत्यन्तं तिरस्कृतम्। प्रकृतार्थान्वयानुपयोगित्वेनान्यार्थमात्रबोधकम्। एवं द्विधा द्विप्रकारेण मतं अभिमतमित्यर्थः।

यत्र प्रतीयमानार्थस्य व्यञ्जको वाच्योऽर्थः अर्थान्तरे सङ्क्रमितो वा अत्यन्तं तिरस्कृतो वा भवति तथापि तस्य (वाच्यार्थस्य) स्वेन रूपेण, अविवक्षितत्वात् तात्पर्याविषयत्वाद् अविवक्षितवाच्य इत्यन्वर्थेयं संथा। ध्वनिप्रभेदे प्रस्तुते वाच्यद्वैविध्यकथनं कथमुपपद्यत इत्याशङ्कायामाह—तथाविधाभ्यामिति। तथाविधाभ्यां च ताभ्यामुक्तप्रकारेण द्विविधाभ्यां वाच्यार्थाभ्यां व्यञ्जकाभ्यां व्यङ्ग्यस्यैव प्रतीयमानस्य ध्वनेरेवार्थस्य विशेषो वैशिष्ट्यम्।

प्रथमं भेदमुदाहरति—तत्रेति। तत्र अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यध्वन्योर्मध्ये, अर्थान्तरसङ्क्रमितवाच्यः तदाख्य आद्यभेदः उदाह्रियत इत्यर्थः। स्निग्धेति। विरहिणः श्रीरामस्य वचनमिदम्। स्निग्धश्यामलकान्तिलिप्तवियतः स्निग्धया श्लक्ष्णया, श्यामलया अत्यन्तं कृष्णया च कान्त्या रोचिषा, लिप्तं व्याप्तं, वियद् आकाशं यैस्तादृशाः। वेल्लद्बलाकाः वेल्लन्त्यः शोभमाना बलाका बकपङ्क्तयो येषु तादृशाश्च, घना मेघाः, कामं सन्त्विति शेषः। तथा शीकरिणः अम्बुकणवाहिनः, वाता मरुतः, कामं सन्तु। ततश्च पयोदसुहृदां पयोदो मेघः, सुहृद् मित्रं, येषां तथाभूतानां मयूराणां कला अत्यन्तमधुराः, आनन्दकेकाः आनन्देन सञ्जाता वाण्यः (केका वाणी मयूरस्यै-त्यमरः) च कामं यथेष्टं सन्तु वर्तन्ताम्। तथापि यतोऽहं दृढमतिशयेन कठोर-

इत्यत्र रामशब्दः। अनेन हि व्यङ्ग्यधर्मान्तर[1]परिणतः संज्ञी प्रत्याय्यते, न संज्ञिमात्रम् ।

यथा च ममैव विषमबाणलीलायाम्—

ताळा जाअन्ति गुणा जाळा दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइं होन्ति कमळाइं कमळाइं ॥

---

उज्जीवनी

हृदयः कठोरं क्रूरं हृदयं चेतो यस्य तादृशः, अस्मि भवामि । ततः सर्वं दुःखजातं विरहिजनोद्दीपनजनितं, सहे सोढुं यते । तु किन्तु, वैदेही जानकी, कथं भविष्यति कथं जीविष्यति । दुःखमिदं कथमपि सोढुं न प्रभविष्यतीत्यर्थः । अतो हे देवि, सीते, ह हा हा अतिदुःखजनकमिदं भवेत् । धीरा भव धैर्यमव-लम्बस्व । अत्र स्वयं रामस्य सतः रामोऽस्मि इति वचनम् अनुपयुक्तं सद् रामपदवाच्यस्यार्थस्याविवक्षितत्वेन दुःखभाजनत्वरूपेऽर्थान्तरे लक्ष्ये सङ्क्रान्तम् । दुःखभाजनत्वं लक्ष्यम् । स्वावधीरणं व्यङ्ग्यं, तस्य च प्राधान्येन प्रतीति-विषयत्वादत्रार्थान्तरसङ्क्रमितवाच्यध्वनिः प्रधानवाक्यार्थीभूत इति बोध्यम् । तदेवोपपादयति—इत्यत्रेति । इत्यत्र इत्यस्मिन् काव्ये (पद्ये) रामशब्दः अर्थान्तरसङ्क्रमितवाच्यः । अनेन रामपदेन, व्यङ्ग्यधर्मान्तरपरिणतः व्यङ्ग्येन लक्षणाफलत्वेन प्रतीयमानेन, धर्मान्तरेण स्वावधीरणात्मकेन परिणतः विशिष्टः, संज्ञी धर्मी प्रत्याय्यते ज्ञाप्यते । न तु संज्ञिमात्रम् न तु केवलसंज्ञीत्यर्थः । स्वकीयमुदाहरणान्तरमाह—यथा चेति । ममैव विषमबाणलीलायां ध्वनिकारे-णैव निर्मिते विषमबाणलीलाख्ये ग्रन्थे इत्यर्थः । 'ताळा' इति । ते गुणाः सौशील्यादयः, यदा यस्मिन् समये सहृदयैः सुहृदयैः, गृह्यन्ते ज्ञायन्ते, तदा तदानीमेव, गुणाः प्राशस्त्यवन्तो गुणाः जायन्ते भवन्ति । उपमानवाक्यमाह—रवीति । रविकिरणानुगृहीतानि रवेः सूर्यस्य, किरणैरनुगृहीतानि रविकिरण-सम्पर्केणाभिनन्दितानि कमलानि पद्मानि, कमलानि कमलपदव्यपदेशयोग्यानि भवन्ति जायन्त इत्यर्थः । इत्यत्र द्वितीयः कमलशब्दः अर्थान्तरसङ्क्रमितवाच्य-

---

१. रूपप०, ख,

[तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ।। इति छाया ।]

इत्यत्र द्वितीयः कमलशब्दः ।

अत्यन्ततिरस्कृतवाच्यो[1] यथादिकवेर्वाल्मीकेः—

रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ।। इति ।

अत्रान्धशब्दः ।

---

उज्जीवनी ।

ध्वनेः बोधकः । अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्त्या कमलानि कमलानि इति सरूपोपस्थितयोः पदार्थयोः शाब्दबोधो न सम्भवतीति द्वितीयकमलशब्दार्थस्य प्रथमकमलशब्दार्थेन साकमन्वयस्यानुपपत्त्या कमलपदवाच्यत्वरूपेऽर्थान्तरे लक्षणा स्वीक्रियते । अतिशयितकान्तिमत्वं व्यङ्ग्यम् । रविकिरणानुगृहीतान्येव कमलानि अतिशयितकान्तिसम्पादनात् कमलशब्दव्यपदेशार्हाणि भवन्तीत्यर्थः ।

मुख्यार्थस्य तात्पर्यानुपपत्त्या, अन्वयानुपपत्त्या वा लक्षणा सम्भवतीत्यभिप्रायेणार्थान्तरसङ्क्रमितवाच्यध्वनिप्रभेदस्योदाहरणद्वयप्रदर्शनं बोध्यम् ।

द्वितीयं प्रभेदमुदाहर्तुमाह—अत्यन्तेति । अत्यन्ततिरस्कृतवाच्यः अत्यन्तम् अविवक्षितत्वेन वक्तृतात्पर्याविषयत्वेन तिरस्कृतं निराकृतं वाच्यं यस्मिंस्तादृशः ध्वनिः । यथा येन प्रकारेण, आदिकवेर्वाल्मीकेः आदिकाव्ये प्रकाशते तथा प्रदर्श्यत इत्यर्थः । रवीति । अयोध्यातो वनं गतो रामः पञ्चवट्यां वसन् हेमन्ते कदाचिदेवं वक्ति । रविसङ्क्रान्तसौभाग्यः, रवौ सूर्ये, सङ्क्रान्तं सौभाग्यं शोभासम्पद् यस्य तथाविधः, तुषारावृतमण्डलः तुषारेण हिमेन, आवृतं, संवृतं मण्डलं यस्य तादृशः, चन्द्रमाश्चन्द्रः, निःश्वासान्धः निःश्वासेन मुखमारुतेन अन्धः मलिनः, आदर्श इव दर्पण इव न प्रकाशते न शोभते । अत्रेति—अत्रास्मिन् उदाहरणे, अन्धशब्दः अत्यन्ततिरस्कृतवाच्यः सन् व्यञ्जको भवतीत्यर्थः । अत्र

---

१. च्यार्थो ध्वनिर्य०. ख.

यथा च—

गअणं च मत्तमेहं धाराळुळिअज्जुणाइं अ वणाइं ।
णिरहंकारमिअंका हरन्ति णीळाओ वि णिसाओ ।।
[गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि ।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः ।। इति च्छाया ।]

अत्र मत्तनिरहङ्कारशब्दौ ।

**असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः ।**

---

उज्जीवनी ।

च ध्वनेः पदप्रकाश्यत्वम् । तदुक्तं, काव्यप्रकाशे—"एकावयवस्थितेन भूषणन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्यापि भारती भासते" (P.149) अन्ध उपहतदृष्टिरिति वाच्योऽर्थः । मलिन इति च लक्ष्यः । उपयोगरहित इति च व्यङ्ग्यः । अत्र मुख्यस्यार्थस्य अविवक्षितत्वेन पदार्थान्तरे आदर्शे अन्वयानुपपत्या तिरस्कारेण मालिन्यगुणविशिष्ट इत्यर्थे सङ्क्रमेण उपयोगशून्यत्वं व्यङ्ग्यमर्थं बोधयतीत्ययम् अत्यन्ततिरस्कृतवाच्यध्वनेर्विषयः ।

उदाहरणान्तरमप्याह—गअणमिति । गगनमाकाशं, मत्तमेघं च मत्ता उद्धता मेघा यत्र तादृशमपि, चोऽप्यर्थे । तेन न केवलं सञ्जाततारकमित्यर्थः सिध्यति । तथा वनान्यरण्यानि धारालुलितार्जुनानि च धाराभिर्लुलिता आलोडिताः, अर्जुनवृक्षा यत्र तादृशान्यपि । अत्रापि न केवलं मलयमारुताकम्पितसहकाराणि इत्यपि-शब्दाज्ज्ञायते । निरहङ्कारमृगाङ्काः निरहङ्कारो विच्छायो, मृगाङ्कश्चन्द्रमा यासु तादृशा नीला अपि, न केवलं शुभ्रांशुकिरणशुभ्राः, निशा रात्रयः हरन्ति औत्सुक्य जनयन्ति । वर्षर्तुवर्णनमिदम् । अत्र मत्तनिरहङ्कारशब्दौ मत्तशब्दो निरहङ्कारशब्दश्च मत्तशब्दोऽनुपयुक्तस्वार्थतया मदिरापानजन्यक्षीबत्वरूपमुख्यार्थस्य बाधेनोद्धतत्वं लक्षयति । ततश्च विरहिमारणाद्यनर्थकारित्वासमीक्ष्यकारित्वादीन् व्यञ्जयति । तथा निरहङ्कारशब्दोऽपि असम्भवत्स्वार्थतया बाधितमुख्यार्थः मालिन्यं लक्षयति । तेनान्धकारपराजयोद्यमानुकूलचतुर्दिक्प्रस्थानाभावो व्यज्यते ।

एवमविवक्षितवाच्यं लक्षणामूलध्वनिं निरूप्य द्वितीयं विवक्षितान्यपर-

**विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २ ॥**

मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा। स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते, कश्चित् क्रमेणेति द्विधा मतः। तत्र—

**रसभावतदाभास[1]भावशान्त्यादिरक्रमः ।**
**ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ ३ ॥**

---

उज्जीवनी ।

वाच्यमभिधामूलं निरूपयितुमाह—असंलक्ष्येति। विवक्षिताभिधेयस्य विवक्षितं तात्पर्यविषयत्वेनाभिमतं अभिधेयं वाच्योऽर्थः यत्र, तस्य ध्वनेः व्यङ्ग्यार्थस्य। आत्मा स्वरूपं, असंलक्ष्यक्रमोद्द्योतः असंलक्ष्यः सूक्ष्मतया लक्षयितुम् अशक्यः क्रमः यत्र तादृशः उद्द्योतः प्रकाशो यत्र तादृशः, कार्यकारणयोः पौर्वापर्य-क्रमस्य नियतत्वेऽपि क्वचिद्विद्यमानोऽपि क्रमः सूचीशतपत्रपत्रशतभेदन्यायेन न लक्ष्यत इति स एको ध्वनिः। परः अन्यः द्वितीय इत्यर्थः। क्रमेण द्योतितः संलक्ष्येण क्रमेण प्रतिभासमानः, द्विधा मतः द्वेधा अभिमन्यत इत्यर्थः। एतेनासंलक्ष्यक्रमोद्द्योतसंलक्ष्यक्रमोद्द्योतान्यतरत्वं विवक्षितान्यपरवाच्यध्वने-र्लक्षणम् उक्तं वेदितव्यम्। तथा च विवक्षितान्यपरवाच्यो ध्वनिः असंलक्ष्यक्रमः, संलक्ष्यक्रमश्चेति द्विविधः सम्पद्यते।

तदेव विवृणोति—मुख्यतयेति। मुख्यतया प्राधान्येन, प्रकाशमानो द्योतमानो, व्यङ्ग्योऽर्थः प्रतीयमानोऽर्थः, ध्वनेः ध्वनिसंज्ञितस्यार्थस्य आत्मा स्वरूपम्। स च विवक्षिताभिधेयो ध्वनिश्च, कश्चिदेकः, वाच्यार्थापेक्षय विवक्षितमपि वाच्यमर्थमपेक्ष्य, अलक्ष्यक्रमतया प्रकाशते द्योतते। कश्चिदन्यः कोऽपि, क्रमेण संलक्ष्येण क्रमेण द्योतत इति द्विधा द्विप्रकारः, मतः अभिमतः।

अलक्ष्यक्रमस्य प्रभेदान् वक्तुमाह—तत्रेति। तत्र अलक्ष्यक्रमलक्ष्यक्रम-व्यङ्ग्ययोर्मध्ये। रसभावेति—अक्रमः असंलक्ष्यक्रमस्य ध्वनेरात्मा प्रकारः, अङ्गिभावेन प्राधान्येन, भासमानः प्रकाशमानः। रसभावतदाभासभाव-

---

1. सततप्रशा०. ग.

रसादिरर्थो हि सहेव वाच्येनावभासते। स चाङ्गित्वेनावभासमानो ध्वनेरात्मा।

इदानीं रसवदलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वनेः विभक्तो विषय इति प्रदर्श्यते—

---

उज्जीवनी।

शान्त्यादिः, रसः, भावः, तदाभासाः रसाभासा भावाभासाश्च; भावशान्त्यादिः भावशान्तिः, भावोदयः, भावसन्धिः, भावशबलतादिः च व्यवस्थितः।

रसादिरिति—रस आदिर्यस्येति व्युत्पत्त्या रस, भाव, रसाभास, भावाभास, भावोदय, भावसन्धि, भावशबलता, भावशान्त्यादिरूपः अर्थः, वाच्यार्थबोधानन्तरं प्रतीयमानो व्यङ्ग्योर्थः कार्यकारणयोः पौर्वापर्यनियमात् सत्यपि क्रमे तस्यासंलक्ष्यत्वेन वाच्येन वाच्यार्थेन, सहेव अक्रम इव, अवभासते प्रकाशते, स च व्यङ्ग्योऽर्थश्च, अङ्गित्वेन प्रधानत्वेन, अवभासमानः प्रतीयमानः, ध्वनेः प्रतीयमानस्यार्थस्यात्मा स्वरूपमित्यर्थः।

अत्रेदमवधेयम्—स्फुटे प्रकरणे रत्यादिलक्षणः व्यङ्ग्यः पक्षः, विभावानुभावव्यभिचारिषु च झटिति प्रतीतिविषयेषु सहृदयतमेन प्रमात्रा सूक्ष्मेणैव समयेन प्रतीयत इति हेतुहेतुमतोः पौर्वापर्यस्यालक्षणादलक्ष्यक्रम इति व्यपदिश्यते। यत्र तु प्रकरणं विचारवेद्यं, विभावादयश्चोन्नेयाः तत्र सामग्रीविलम्बेन रत्यादेरास्वादस्य विलम्बात् संलक्ष्यक्रमव्यङ्ग्योऽपि रसादिध्वनिर्भवत्येव। असंलक्ष्यक्रमव्यङ्ग्यो, रसादिध्वनिरिति व्यवहारस्य तु क्वचिद् रसादिध्वनेः संलक्ष्यक्रमव्यङ्ग्यत्वे सम्भवत्यपि सर्वोऽपि ध्वनिः न संलक्ष्यक्रमव्यङ्ग्य इत्यत्र तात्पर्यम्।

रसवदलङ्काराद् ध्वनेर्भेदं प्रतिपादयितुमाह—इदानीमिति। इदानीं, प्रथमोद्द्योतेन ध्वनिं प्रसाध्य वाच्यव्यङ्ग्ययोः क्रमस्य संलक्ष्यत्वेनासंलक्ष्यत्वेन च द्वैविध्यं प्रदर्शितं तदनन्तरमित्यर्थः। रसवदलङ्कारात् यत्र प्रधानतया रसः स्थितः, तत्र सोऽलंकार्यः। यत्र तु प्रधाने अन्यत्र वाक्यार्थे रसोऽङ्गभूतस्तत्र गुणीभूतव्यङ्ग्ये काव्ये स रसवदलङ्कारो भवति। अङ्गस्यापि तस्य रसस्य परिपोषभावाद् रसतुल्यता। रसेन तुल्यं रसवदिति तुल्यार्थे वतिः।

**वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।**
**रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥ ४ ॥**

रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दा[1]र्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया विभिन्नरूपा व्यवस्थितास्तत्र काव्ये ध्वनिरिति व्यपदेशः ।

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ ५ ॥**

---

उज्जीवनी ।

तस्माद् असंलक्ष्यक्रमद्योतनात्मनो ध्वनेः असंलक्ष्यक्रमव्यङ्ग्यरूपस्य ध्वनेः, **विषयो विभक्तो भिन्नो विषय इति प्रदर्श्यते निरूप्यते :**

वाच्येति । वाच्यस्याभिधेयस्यार्थस्य, वाचकस्याभिधायकस्य शब्दस्य च, यच्चारुत्वं सौन्दर्यं तस्य हेतूनां तदाधायकशब्दार्थालङ्काराणां, यत्र यस्मिन् काव्ये, रसादिपरता रसभावाद्युपस्कारकत्वं, रसस्य प्रधानवाक्यार्थत्वं अलङ्काराणां तत्तात्पर्यकत्वं च, सः रसादिः ध्वनेर्विषयः ध्वनिव्यपदेशविषयः, मतः अभिमत इत्यर्थः ।

तदेव विवृणोति—रसभावेति । रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थं रसभावरसाभासभावाभासभावशान्त्यादयोऽर्था यत्र प्रधानवाक्यार्थीभवन्ति तं प्रधानमर्थं, अनुवर्तमाना उपकुर्वाणाः, यत्र काव्ये, शब्दार्थालङ्कारा शब्दगता अनुप्रासादयः, अर्थगता उपमादयश्चालङ्काराः । गुणाश्च शब्दगतास्तथार्थगताश्च, ध्वन्यपेक्षया ध्वनेः सकाशाद् विभिन्नरूपा भिन्ना व्यवस्थिताः भिन्नरूपेण व्यवस्थां प्राप्ताः तत्र काव्ये तस्मिन् काव्ये, ध्वनिरिति व्यपदेशः प्रधानवाक्यार्थीभूतोऽर्थो ध्वनिव्यपदेशं भजत इत्यर्थः ।

रसाद्यलङ्कारानाह—प्रधानेऽन्यत्रेति । अन्यत्रान्यस्मिन्, वाक्यार्थे वस्त्वलङ्काररूपे वाच्ये, वस्त्वलङ्काररसरूपे व्यङ्ग्ये वा अर्थे, प्रधाने प्रधानवाक्यार्थभूते सति, यत्र यस्मिन् काव्ये, रसादयः रसादयः रसभाव-

---

१. "ब्दालङ्कारा ग०" ख

यद्यपि रसवदलङ्कारस्यान्यैर्दर्शितो विषयस्तथापि यस्मिन् काव्ये प्रधानतयान्योऽर्थो वाक्यार्थभूतस्तस्य चाङ्गभूता ये रसादयस्ते रसादेरलङ्कारस्य विषया इति मामकीनः[1] पक्षः। तद् यथा चाटुषु प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते।

---

उज्जीवनी।

तदाभासादयः, अङ्गं अङ्गत्वं प्रपद्यन्ते, तस्मिन् काव्ये, रसादिः रसभावादिः, अलङ्कारः अलङ्कारव्यपदेशविषयः इति मे मतिः इति ममाभिप्रायः।

यद्यपीति—अन्यैः पूर्वैरुद्भटादिभिः, रसवदलङ्कारस्य रसवदित्यनेन भावरसाभासभावाभासभावशान्तीनामपि ग्रहणं विवक्षितम् तेषामलङ्काराणां विषयस्तैः रसादीनि विभाजकोपाधित्वेनाभ्युपगम्य रसवत्प्रेयऊर्जस्विसमाहिताख्यानि चत्वारि काव्यानि तैः प्रतिपादितानि। तत्र रसादीनां प्रधानवाक्यार्थत्वेऽपि काव्यशोभाकरत्वरूपालङ्कारसामान्यलक्षणाक्रान्तैस्तैः काव्यमलङ्कृतं भवतीति तेषां रसादीनामलङ्कारत्वं पूर्वेषामभिमतमिति ज्ञायते।

स्वमतमाह—तथापीति। यस्मिन् काव्ये काव्यविशेषे, प्रधानतया मुख्यत्वेन, अन्योऽर्थः वस्त्वलङ्काररूपो वाच्यो, वस्त्वलङ्काररसरूपो व्यङ्ग्यो वा यः कोऽप्यर्थः वाक्यार्थीभूतः वाक्यतात्पर्यविषयीभूतः तस्य च वाक्यार्थस्य, अङ्गभूतास्तत्सहायभूताः ये रसादयः रसभावरसाभासभावाभासभावशान्त्यादयस्ते, रसादेरलङ्कारस्य रसवदाद्यलङ्कारस्य विषया इति रसवदाद्यलङ्कारव्यपदेशभाजो भवन्तीति मामकीनः पक्षः। ग्रन्थकर्तुः स्वकीय आशय इत्यर्थः।

उदाहरति—तद्यथेति। चाटुषु चाटुविषये, प्रेयस्विपदप्रवृत्तिनिमित्तं भावः। स च गुरुदेवनृपतिपुत्रादिविषया रतिः प्रीतिरेव। स भावः प्रेयस्विकाव्येऽलङ्कारो भवति। तस्य प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि, रसादयो रसभावादयः, अङ्गभूताः प्रधानवाक्यार्थीभूतप्रेयोऽलङ्कारस्याङ्गभूता दृश्यन्ते।

---

१. "कः प०" ख. ज.

स च रसादिरलङ्कारः शुद्धः सङ्कीर्णो वा। तत्राद्यो यथा—

किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद् दर्शनं
केयं निष्करुण! प्रवासरुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः॥

इत्यत्र करुणरसस्य शुद्धस्याङ्गभावात् स्पष्टमेव रसवदलङ्कारत्वम्। एवंविधेऽपि विषये रसान्तराणां स्पष्ट एवाङ्गभावः।

---

उज्जीवनी

स चेति। स च रसादिः, अलङ्कारः प्रधानवाक्यार्थस्याङ्गत्वं प्राप्तो रसभावादिः, शुद्धः केवलः, सङ्कीर्णो वा रसान्तरेण भावान्तरेण वा सङ्कीर्णो दृश्यत इत्यर्थः। आद्यमुदाहरति—तत्राद्यो यथेति। किं हास्येनेति। कश्चित् कविः राज्ञः प्रतापातिशयमुपवर्णयति—हे राजन् ते तव रिपुस्त्रीजनः शत्रुस्त्रीरूपो जनः, शत्रुभार्येत्यर्थः, स्वप्ने दृष्टं कान्तं सम्बोध्य प्रलपति। किं हास्येन परिहासेनालम्। चिराद् बहोः कालादनन्तरं मे दर्शनं मम दृष्टिगोचरतां प्राप्तः उपगतः। त्वं पुनः न प्रयास्यसि पुनरपि न गमिष्यसि। चिरात् प्राप्तं त्वां नाहं मोक्ष्यामीत्यर्थः। निष्करुण निर्दय यतस्त्व यदृच्छयोपगतो न तु स्वयमागतः, अतो निर्दयोऽसि। इयं प्रवासरुचिता प्रवासे रुचिर्यस्य तस्य भावः, दूरदेशवासेऽभिरुचिः का? अनुचितेत्यर्थः। केनापराधेन दूरीकृतोऽसि, इति पूर्वोक्तप्रकारेण, स्वप्नान्तेषु उत्स्वप्नायितेषु. प्रियतमव्यासक्तकण्ठग्रहः प्रियतमे, स्वप्ने दृष्टे पत्यौ विशेषेणासक्तः, कण्ठस्य ग्रहो ग्रहणं, यस्य तादृशः वदन् कथयन्, बुद्ध्वा प्रबोधं प्राप्य, रिक्तबाहुवलयः रिक्तः शून्यः बाह्वोः वलयं यस्य तथाविधो भूत्वा, तारं उच्चैः रोदिति। अत्र राज्ञः प्रतापातिशयरूपः प्रधानवाक्यार्थः, राजगता कविरतिरत्र भावः। अत्र चाटुविषये करुणरसोऽङ्गम् अत्र प्रमीतपतिरालम्बनम्। स्वप्ने तद्दर्शनमुद्दीपनम्। शोकः स्थायी भावः। अत्र शुद्धस्य रसान्तरेण भावाद्यन्तरेण वा, असङ्कीर्णस्य करुणरसस्य राजविषयकरतौ अङ्गत्वाद् रसवदलङ्कारः। एवमुक्तया रीत्या एवंविधे विषये यत्र रसो वा, भावो वा, अन्यो वा प्रधानवाक्यार्थो भवति तत्र, रसान्तराणां तद्भिन्नानां रसादीनामङ्गभावः अङ्गत्वं स्पष्टमेव स्फुटमेव

सङ्कीर्णो रसादिरङ्गभूतो यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतश्चाददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रु[1]नेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे ईर्ष्याविप्रलम्भस्य श्लेषसहितस्याङ्गभाव इति, एवंविध एव रसवदाद्यलङ्कारस्य न्याय्यो विषयः ।

---

उज्जीवनी ।

ज्ञायत इत्यर्थः । द्वितीयमुदाहरति—सङ्कीर्ण इति । सङ्कीर्णो मिश्रः, रसादिः रसभावादिः, अङ्गभूतः प्रधानेऽन्यत्र वाक्यार्थेऽङ्गतां प्रपन्नः । क्षिप्त इति—अमरुककविकृतं मङ्गलपद्यमिदम् । स त्रिपुरदाहकालिकः शम्भुप्रेरितः बाणरूपोऽग्निः वो युष्माकं दुरितं पापं, हरतु अपनयतु इति प्रार्थ्यते । अनेन शाम्भवः शराग्निः आर्द्रापराधेन कामिनोपमीयते । क्षिप्त इत्यादीनि विशेषणानि श्लिष्टानि । तरुणीभिस्तत्क्षणकृतापराधः । कामी हस्तावलग्नः पाणौ स्पर्शं कुर्वन्, क्षिप्तः तिरस्कृतः । प्रसभं बलात् अंशुकान्तं चेलाञ्चलं, आददानो गृह्णन्नपि, अभिहतस्ताडितः. केशेषु शिरोरुहेषु, गृह्णन् स्पृशन्, अपास्तः अनादृतः । चरणनिपतितः चरणयोः प्रणतः । सम्भ्रमेणावेगेन, नेक्षितो नावलोकितः, आलिङ्गन्नाश्लिष्यन्, अवधूतो निराकृतश्च, यथा भवति तथा, साश्रुनेत्रोत्पलाभिः साश्रुणी अश्रुसहिते नेत्रोत्पले नयनकमले यासां ताभिः, त्रिपुरयुवतिभिः त्रिपुरासुराणां योषिद्भिः, हस्ते स्पृशन् वियोजितः । अंशुकान्तमाददानः निर्धूतः, केशेषु गृह्णन् अपास्तो दूरीकृतः, चरणयोः निपतितः पतितः, सम्भ्रमेण भयेन नेक्षितः । य एवम्भूतः स शाम्भवः शम्भुप्रेरितः, शराग्निः बाणरूपो वह्निः, वो दुरितं दहतु इति वाक्यार्थः सम्पद्यते ।

उपपादयति—इत्यत्रेति । इत्यत्र इत्यस्मिन् पद्ये (काव्ये) त्रिपुरारिप्रभावातिशयस्य त्रिपुरासुराणां संहर्तुः शम्भोः, यः प्रभावातिशयो महिमातिरेकः,

---

१. "स्र०" ज.

अत एव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात् समावेशो न दोषः। यत्र हि रसस्य वाक्यार्थीभावस्तत्र कथमलङ्कारत्वम्। अलङ्कारो हि चारुत्वहेतुः प्रसिद्धः, न त्वसावात्मैवात्मनश्चारुत्वहेतुः ॥

---

उज्जीवनी।

तस्य वाक्यार्थत्वे वाक्यतात्पर्यविषयत्वेन प्रधानवाक्यार्थत्वे, ईर्ष्याविप्रलम्भस्य ईर्ष्याहेतुकस्य विप्रलम्भशृङ्गारस्य, श्लेषसहितस्य श्लेषोपस्कृतस्य, अङ्गभावः अङ्गत्वमिति इति हेतोः, एवंविध एवं प्रकार एव, रसवदाद्यलङ्कारस्य, न्याय्यो न्यायादनपेतो विषयः। अत्र श्लेषालङ्कारसङ्कीर्णस्य विप्रलम्भशृङ्गारस्याङ्गतया रसवदलङ्कारस्यायं विषय इत्यर्थः। अत्र त्रिपुरयुवतिगतः त्रिपुरासुरालम्बनः शोकस्थायिभावकः करुणरसोऽप्यङ्गम्।

शृङ्गारादीनां नवानां रसानां कैरपि सह मिथोऽविरोधः, कैश्चिदपि सह विरोधोऽप्यस्ति। तत्र शृङ्गारबीभत्सयोः, शृङ्गारकरुणयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तशृङ्गारयोश्च विरोधः। विरोधश्च तदधिकरणावृत्तितारूपः (विरुद्धयोरेकत्र) स्थितिविरोधः, तज्ज्ञानप्रतिबद्धज्ञानकत्वलक्षणः, ज्ञानविरोधश्चेति द्विरूपोऽस्ति। अधिकरणान्तरे विरोधिनः स्थापनेन स्थितिविरोधः, रसान्तरस्याविरोधिनः सन्निधकर्तुं विश्रान्तरालेऽवस्थापनेन ज्ञानविरोधोऽपि परिहृतो भवति। अपि चाङ्गाङ्गिनोश्चेद विरुद्धयोरपि तयोर्विरोधो न विद्यते। अङ्गिनि विरुद्धयोर्द्वयोरङ्गत्वेन सन्निवेशेनापि विरोधः परिह्रियते।

प्रकृते विप्रलम्भशृङ्गारकरुणयोः परस्परं विरोधेऽपि तयोर्द्वयोरपि अन्यत्र प्रधाने वाक्यार्थेऽङ्गत्वेन न विरोधः।

अत एवेति। प्रधाने वाक्यार्थेऽन्यस्मिन् रसादीनामङ्गत्वे रसवदलङ्कारत्वाभ्युपगमादेव। ईर्ष्याविप्रलम्भस्य करुणस्य च मिथो विरुद्धत्वेऽपि। अङ्गत्वेन व्यवस्थानाद् अङ्गिन्यन्यस्मिन् विरुद्धयोरपि तयोर्द्वयोरङ्गभावेनावस्थापनात्। समावेशः उभयोस्तयोः सन्निवेशनं, न दोषः न दुष्यतीत्यर्थः।

यत्र हीति। यत्र यस्मिन् काव्ये, रसस्य, रसभावादेः, वाक्यार्थीभावः प्रधानवाक्यार्थत्वं, तत्र कथकलङ्कारत्वम्। रसादेः तत्राळङ्कार्यत्वेना-

तथा चायमत्र संक्षेपः--

रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥

तस्माद् यत्र रसादयो वाक्यार्थीभूताः स सर्वो न रसादेरलङ्कार[1]स्य विषयः । स ध्वनेः प्रभेदः, तस्योपमादयोऽलङ्काराः ।

यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थभावे रसादिभिश्चारुत्वनिष्पत्तिः क्रियते, स रसादेरलङ्कारताया विषयः ।

---

उज्जीवनी

लङ्कारत्वं नास्तीत्यर्थः । हेतुमाह—अलङ्कारो हीति, अलङ्कारो हि वाक्यार्थोपस्कारकत्वेन अलङ्कारव्यपदेशविषयः, चारुत्वहेतुः स्वस्मादन्यस्य सौन्दर्याधायकः इति प्रसिद्धः प्रसिद्धिं गतः । तु किन्तु, असौ आत्मैव यः अलङ्कार्यत्वेन सारभूतः स एवात्मनः स्वस्यैव सारभूतस्यार्थस्य । चारुत्वहेतुः सौन्दर्याधायकः, तेनालङ्कार्यस्येतरस्य वाक्यार्थस्याभावादलङ्कारत्वं न प्राप्नोति ।

पर्यवसितमर्थं संक्षिप्य दर्शयितुमाह—तथाचायमत्र संक्षेप इति । रसेति । रसभावादितात्पर्यं रसभावादीनां प्रधानवाक्यार्थत्वं, आश्रित्यावलम्ब्य, विनिवेशनं समावेशः, सर्वासामलङ्कृतीनां अलङ्काराणां सर्वेषामपि, अलङ्कारत्वसाधनमलङ्कारत्वस्यालङ्कारपदव्यपदेशविषयतायाः कारणम् । अयमर्थः—अलङ्क्रियतेऽनेनेति करणव्युत्पत्त्या अलङ्कारशब्दः यं कमप्यर्थमलङ्कुर्वाणोऽलङ्कारत्वं न भजते । किन्तु यत्र रसभावादयः प्रधानवाक्यार्थीभूताः तेषामलङ्करणेनैवालङ्कारत्वं उपमादीनामित्याशयः । यत्र तूपमादयो वाच्यमेव प्रधानमर्थमुपकुर्वन्ति तत्रापि विभावत्वादीनां केवलान्वयितया व्यङ्ग्यार्थावबोधनस्वरूपयोग्यतावत्त्वेन वाच्यस्याप्यर्थस्य रसभावादितात्पर्यमविरुद्धम् ।

तदेव विवृणोति—तस्मादिति । तस्माद् यस्माद् रसभावादीनां प्रधानवाक्यार्थानामलङ्करणेनैव सर्वेऽप्यलङ्कारा अलङ्कारव्यपदेशं प्राप्नुवन्ति

---

१. "रताया वि०" ख. ग.

एवं ध्वनेरुपमादीनां रसवदलङ्कारस्य च विभक्तविषयता भवति ।

यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषय इत्युच्यते तर्ह्युपमादीनां प्रविरलविषयता निर्विषयता वाभिहिता स्यात् । यस्मादचेतनवस्तुवृत्ते वाक्यार्थीभूते पुनश्चेतनवस्तुवृत्तान्तयोजनया यथाकथञ्चिद् भवितव्यम् ।

---

उज्जीवनी ।

तस्मादित्यर्थः । यत्र यस्मिन् काव्ये, रसादयो रसभावादयः, वाक्यार्थीभूताः प्राधान्येन वाक्यतात्पर्यविषयीभूताः, स तथाविधः, सर्वो वाक्यार्थः, रसादेरलङ्कारस्य रसवदाद्यलङ्कारस्य विषयः न भवति, किन्तु स ध्वनेः ध्वनेरेव विषय इत्यर्थः । तस्य ध्वनेः, उपमादयः अलङ्काराः शोभाहेतवः भवन्ति । यत्र तु यस्मिस्तु, काव्ये, प्राधान्येन मुख्यत्वेनार्थान्तरस्य वाच्यादेरर्थान्तरस्य, वाक्यार्थभावे वाक्यतात्पर्यविषयत्वे सति, रसादिभिः, चारुत्वनिष्पत्तिः चमत्कारसम्पत्तिः, स रसादिः, रसादेरलङ्कारताया रसवदाद्यलङ्कारस्य विषयः ।

एवमिति—यत्र व्यङ्ग्यस्यार्थस्य प्रधानवाक्यार्थत्वं तत्र ध्वनिः । तदुपस्कारका उपमादयोऽलङ्काराः ! अन्यस्य यस्य कस्यापि प्रधानवाक्यार्थत्वे तदुपस्कारका रसभावादयः रसवदाद्यलङ्कारस्य विषया इति ध्वनेः उपमादीनां रसवदाद्यलङ्काराणां च विभक्तविषयता विषयविभागो भवति ।

यदीति । तु किन्तु, चेतनानां चेतनावतां प्राणभृतां, वाक्यार्थीभावः वाक्यजन्यार्थबोधविषयत्वं, रसाद्यलङ्कारस्य प्रधानवाक्यार्थाङ्गभूतत्वेन रसभावादेः अलङ्कारस्य विषय इति यदि उच्यतेऽभिधीयते, तर्हि उपमादीनां वाक्यार्थशोभाधायकानामलङ्काराणां, प्रविरलविषयता अल्पविषयत्वं, निर्विषयता विषयशून्यत्वं वा, अभिहिता भवेद् उक्तं स्यात् ।

हेतुमाह—यस्मादिति । यस्माद् यतः, अचेतनवस्तुवृत्ते अचेतनवस्तुवृत्तान्ते, वाक्यार्थीभूते वाक्यतात्पर्यविषयतां प्राप्ते, सति । पुनः चेतनवस्तुवृत्तान्तयोजनया चेतनवस्तुवृत्तान्तसमारोपणेन, यथाकथञ्चिद् भवितव्यं यथाकथञ्चिदपि चेतनवस्तुवृत्तान्तसमारोपणं कर्तव्यमित्यर्थः । अयमाशयः—यत्र चेतनानां

अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नासौ रसवदलङ्कारस्य विषय इत्युच्यते, तन्महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात् ।

---

उज्जीवनी ।

वाक्यार्थत्वं तत्र प्रधानभूतं रसभिन्नं वाक्यार्थमलङ्कुर्वाणानामर्थानां, विभावत्वादीनां केवलान्वयित्वेन, विभावादित्वेन पर्यवसितानां यथाकथञ्चिद् रससंस्पर्शोऽस्तीति रसभावादीनामेव तत्रालङ्कारत्वसम्भवात् । तद्भिन्नस्थले अचेतनवस्तुवृत्तस्य वाक्यार्थत्वे उपमादीनामलङ्कारतायाः सम्भवात् प्रविरलविषयत्वमुपमादीनां । यदि चाचेतनवृत्तान्ते वाक्यार्थीभूते चेतनवृत्तान्तस्य समारोपणं क्रियते तर्हि विभावत्वादिसम्पादनेन रसस्पर्शवत्त्वात् तमप्यर्थं रसवदाद्यलङ्कारा व्याप्नुवन्तीति उपमादीनामलङ्काराणां विषयापहार एव स्यात् ।

अथेति । तस्यां चेतनवस्तुवृत्तान्तयोजनायां सत्यां जातायामपि । यत्र यस्मिन् स्थले । अचेतनानां वाक्यार्थीभावः वाक्यतात्पर्यविषयत्वं, असौ रसवदलङ्कारस्य न विषय इत्युच्यते तत्र रसवदलङ्कारो नास्तीति यदि कथ्यते, तत् तर्हि, रसनिधानभूतस्य रसाश्रयभूतस्य, महतः काव्यप्रबन्धस्य रसानुकूलवस्तुनिबन्धनात्मकस्य कविकर्मणः, नीरसत्वं रसशून्यत्वं, अभिहितं स्याद् उक्तं भवेत् ।

अत्रेदमवधेयम् । यत्र रसादयः प्रधानवाक्यार्थत्वमुपयान्ति तत्र तेषां काव्यमलङ्कुर्वाणानां अलङ्कारत्वमिति प्राचीनालङ्कारिकाणां मतम् । तन्मतानुसारेण यत्राचेतनानां वाक्यार्थीभावस्तत्र चेतनवस्तुवृत्तान्तसमारोपणे क्रियमाणेऽपि नासौ रसवदलङ्कारस्य विषय इति चेदुच्यते तर्हि रसनिधानभूतस्य महतः काव्यस्य नीरसत्वमभिहितं स्याद् इत्युक्तम् । रसादेः प्रधानवाक्यार्थत्वं यत्र तत्र तस्य ध्वनित्वमङ्गीकुर्वाणानां ध्वनिकाराणां मते तु रसवदादेरलङ्कारताया अभावो न काव्यप्रबन्धस्य नीरसत्वापादने प्रयोजकः किन्तु रसाभाव एव ।

यथा—तरङ्गभ्रूभङ्गा[1] क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदी[2]रूपेणेयं ध्रुवमसहना सा परिणता ॥

यथा च—तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥

उज्जीवनी ।

उदाहरणेन विशदयति—यथेति । तरङ्गेति । तरङ्गा वीचय एव भ्रूभङ्गाः भ्रूविक्षेपाः यस्यास्तादृशी । क्षुभिता विहगानां शकुन्तानां श्रेणी पङ्क्तिरेव रशना काञ्ची यस्यास्तादृशी । संरम्भेण कोपावेशेन, शिथिलं श्लथबन्धम् । वसनमंशुकमिव फेनं विकर्षन्ती आकर्षन्ती। बहुशो नानाप्रकारेण, स्खलितं ममापराधं, अभिसन्धाय पुनः पुनर्विचिन्त्य, असहना असहमाना सेयं मे दयिता, नदीरूपेण परिणता नदीत्वं प्राप्ता । यथाविद्धं कुटिलतामनतिक्रम्य, कुटिलगतिरित्यर्थः। याति गच्छति । अत्राचेतननदीवृत्तान्ते चेतनमानिनीवृत्तान्तसमारोपणं चमत्कारजनकं दृश्यते ।

उदाहरणान्तरमाह—यथा वेति । तन्वीति । तन्वी वियोगेन कार्श्यमुपगता । मेघजलार्द्रपल्लवतया मेघजलैर्वर्षोदकैः, आर्द्राणि पल्लवानि यस्यास्तादृश्या भावस्तत्ता तया । अश्रुभिः नेत्रजलैः, धौताधरेव धौतं क्षालितमधरं यस्यास्तादृशीव, स्वकालविरहात् स्वस्य पुष्पोद्गमस्य यः कालस्तस्य विरहादभावात् । विश्रान्तपुष्पोद्गमा विश्रान्ताः पुष्पाणां सुमनसां उद्गमाः यस्यास्तादृशी सती, आभरणैः भूषणैः । शून्येव रहितेव, मधुकृतां भ्रमराणां, शब्दैः रवैः, विना विनाभूता, चिन्तामौनं चिन्तया मौनं तूष्णींभावम् । आश्रिता प्राप्ता इव, सा चण्डी कोपना, पादपतितं पादयोः पतितं प्रणतम् । मामवधूय तिरस्कृत्य, जातानुतापेव जातोऽनुतापः पश्चात्तापः यस्यास्तादृशीव । पुरः पुरस्तात्, लक्ष्यते दृश्यते ।

१. 'ङ्गक्षु'० ग.    २. 'भावेनेयं' ख.

यथा वा—

> तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
> क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम् ।
> विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
> ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥

इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चेतनवस्तुवृत्तान्तयोजना-स्त्येव । अथ यत्र चेतनवस्तुवृत्तान्तयोजनास्ति तत्र रसादिरलङ्कारः । तदेवं सत्युपमादयो निर्विषयाः प्रविरलविषया वा स्युः ।

---

उज्जीवनी ।

अत्र लतावृत्तान्ते नायिकावृत्तान्तसमारोपणेन चारुता । पुनरप्युदाह॰ रति—यथा वेति । तेषामिति । उद्धवं प्रति श्रीकृष्णस्येदं वचनम् । भद्र, गोपवधूनां गोपिकाङ्गनानां, ये विलाससुहृदो नर्मसचिवास्तेषाम् । राधाया रहः समागमस्य साक्षिभूतानां तेषां पूर्वानुभूतानां, कलिन्दशैलतनया कालिन्दी, तस्यास्तीरे, लतावेश्मनां लतागृहाणां, किं क्षेमं कुशलं किमु । अधुना अद्य, बहोः कालादनन्तरं स्मरतल्पस्य मदनशयनीयस्य, कल्पनाय निर्माणाय मृदु यथा भवति तथा, यश्छेदः छेदनं तस्योपयोगे, विच्छिन्ने विरते सति, विगलन्तो नश्यन्ती नीला त्विट् कान्तिर्येषां तादृशास्ते पल्लवाः किसलयानि, जरठी भवन्ति जीर्णतां यान्ति इति जाने मन्ये इत्यर्थः ॥

अत्र अचेतनलतागृहवृत्तान्ते चेतननर्मसचिववृत्तान्तसमारोपः सुन्दरता-मावहति ।

तदेव विशदीकरोति—इत्येवमादौ विषये उक्तोदाहरणस्थले । अचेत-नानां वाक्यार्थीभावेऽपि चेतनवृत्तान्तयोजना चेतनवृत्तसमारोपणम्, अस्ति विद्यत एव । पर्यवसितमाह—अथेति । एवं च यत्र, अचेतनवृत्तान्ते वर्ण्यमाने चेतनवृत्तान्तयोजना चेतनवस्तुवृत्तान्तसमारोपणमस्ति विद्यते, तत्र तत्रस्थितो रसादिः आस्वादविषयीभूतरत्यादिः, अलङ्कारः अलङ्कारव्यपदेशं भजते । तत् तस्माद् एवं सति पूर्वोक्तप्रकारेण, उपमादयोऽलङ्काराः निर्विषयाः निरालम्बाः, प्रविरलविषयाः अल्पविषया वा स्युर्भवेयुः ।

यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्त्यन्ततो विभावत्वेन। तस्मादङ्गत्वेन रसादीनामलङ्कारता। यः पुनरङ्गी रसो भावो वा सर्वाकारमलङ्कार्यः स ध्वनेरात्मे[1]ति। किञ्च—

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥ ६ ॥**

---

उज्जीवनी।

तत्र हेतुमाह—यस्मादिति। यस्माद् यतः, यत्र अचेतनवृत्तान्ते चेतनवृत्तान्तयोजना चेतनवृत्तान्तसमारोपणं, नास्ति, अन्ततो विभावत्वेन विभावत्वादिरूपेण पर्यवसानं वा नास्ति, असौ तादृशः अचेतनवस्तुवृत्तान्तः नास्त्येव न विद्यत एवेत्यर्थः। तस्माद्, रसादीनां रसभावादीनां, अङ्गत्वेन अङ्गतासम्भवेन, अलङ्कारता रसाद्यलङ्कारत्वम्। यः पुनः यस्तु रसो वा भावो वा अङ्गी प्रधानभूतः, सः सर्वाकारं सर्वथा अलङ्कार्यः, स ध्वनेरात्मा तदेव ध्वनेः स्वरूपमित्यर्थः।

एवं च रसादीनां प्रधानवाक्यार्थत्वे तेषामलङ्कार्यत्वमेवेति। स्वमतं द्रढयितुमाह—किञ्चेति। तमिति। येऽङ्गिनं प्रधानवाक्यार्थत्वेन अङ्गिभूतं, तमर्थं रसभावादिरूपं प्रतीयमानमर्थं, अवलम्बन्ते आश्रित्यावतिष्ठन्ते, ते गुणाः स्मृताः। अङ्गानि वाच्यवाचकरूपाणि आश्रिताः आश्रित्य वर्तमानाः कटकादिवत् शरीरमाश्रित्य कटकादय इव, विद्यमानं तमेवार्थं परम्परया उपकुर्वाणास्तु, अलङ्काराः मन्तव्याः अलङ्कारपदव्यपदेश्या इत्यर्थः।

अत्रेदमवधेयम्—यत्र रसभावादेः प्रधानवाक्यार्थत्वं तत्र माधुर्यौजःप्रसादाख्यास्त्रयो गुणाः, शौर्यादय आत्मन इव साक्षादुपस्कारका भवन्ति, यत्र च वाच्यस्यार्थस्य वाचकस्य शब्दस्य च चारुत्वहेतव उपमादयः, अनुप्रासादयश्चालङ्काराः। एतेन यत्र रसभावादिः प्रधानवाक्यार्थीभवन्नपि काव्यशोभाकरत्वरूपालङ्कारसामान्यलक्षणाक्रान्तत्वेन, रसवदाद्यलङ्कारत्वेन व्यपदिश्यत इति प्राचां मतं निरस्तमिति। इदमेवोक्तं—"वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्। रसादिपरता यत्र स ध्वनेर्विषयो मतः" इति ॥

---

१. 'त्मा।' क

ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणाः शौर्यादिवत् । वाच्यवाचकलक्षणान्यङ्गानि । ये पुनः तदाश्रितास्तेऽलङ्कारा मन्तव्याः क[1]टकादिवत् ।

उज्जीवनी

य इति । ये समर्थं प्रतीयमानमर्थं रसादिलक्षणं रसभावादिरूपम् । अङ्गिनं सन्तं अङ्गित्वेनावस्थितं, अवलम्बन्ते आश्रयन्ते, ते गुणाः माधुर्यादयः, शौर्यादिवद् आत्मनः शौर्यादय इव समवायवृत्त्या । वाच्यवाचकलक्षणानि वाच्यः अर्थः वाचकः शब्दः, तद्रूपाणि चाङ्गानि इत्युच्यन्ते । ये पुनः ये तु तदाश्रिताः तान्यङ्गान्याश्रित्य वर्तन्ते । ते कटकादिवत् शरीरं कटकादय इव, अलङ्काराः मन्तव्याः, अलङ्कारा इति ज्ञेयाः (संयोगवृत्त्या) ।

अत्र असंलक्ष्यक्रमव्यङ्ग्यस्य रसभावादेर्वर्णने प्रस्तुते माधुर्यादीनां गुणानां निरूपणं कथं सङ्गच्छते ? उच्यते—काव्यशोभाकरत्वमलङ्कारसामान्यलक्षणं मन्यमानैः प्राचीनैः गुणैरलङ्कारै रसादिभिश्च काव्यमेवालङ्क्रियत इति रसादीनामप्यलङ्कारत्वमभ्युपगतम् । ध्वन्यभाववादिनां (१) ध्वनिर्गुणालङ्कारेभ्यो न व्यतिरिक्तः, (२) व्यतिरिक्तत्वेऽपि न शोभाधायकः काव्यस्य, (३) शोभाधायकत्वेऽपि न सर्वेषामादरास्पदम् इति त्रिरूपा विप्रतिपत्तीर्निरस्य ध्वनिरानन्दवर्धनेन समर्थितः । ततो ध्वनेरुपमादीनां रसवदलङ्कारस्य च विविक्तविषयत्वमपि प्रतिपादितम् । रसभावादिश्च प्रधानवाक्यार्थीभूतो यो ध्वनिः यद्यपि तस्य काव्याश्रितस्यैव, प्रमातृप्रतीतिविषयत्वं तथापि तेन तदा न कश्चिदप्यन्यो वाक्यार्थोऽलङ्क्रियत इत्यतस्तस्यालङ्कार्यत्वमपि अङ्गीकृतम् । तथा रसाद्यनुगुणपदसङ्घटनाधर्मत्वेन काव्याश्रितैर्माधुर्यादिभिरेव काव्यशोभाधाने तदनतिरिक्तत्वमेव रसादीनां न तु पृथग्भाव इति शङ्कायां मुख्यवाक्यार्थीभूतरसभावादेर्माधुर्यौजःप्रसादादिधर्मकत्वात् तद्द्वारा तद्धर्मित्वेन, रसादीनां मुख्यवाक्यार्थत्वेनापि प्राधान्यं भवतीत्यभिसन्धाय गुणान् निरूपयितुमाह—किंचेति । वाच्यं प्रतीयमानं चेति द्विविधमर्थं प्रदर्श्य तत्र वाच्यं प्रसिद्धत्वेन प्रख्याप्य प्रतीयमानार्थनिरूपणोद्युक्तो ध्वनिकारः अङ्गनासु लावण्यस्येव महाकविवाणीषु प्रतीयमानस्य माधुर्यादेः स्वरूपनिरूपणे कृते

१. कुण्डलादिवत् । ख. ग. घ.

तथा च—

शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ ७ ॥

शृङ्गार एव रसान्तरापेक्षया मधुरः, परः प्रह्लादहेतुत्वात् तत्प्रकाशनपरशब्दार्थतया काव्यस्य स माधुर्यलक्षणो गुणः । श्रव्यत्वं पुनरोजसोऽपि साधारणमिति ॥

---

उज्जीवनी ।

तद्धर्मिणो रसादयः निरूपिता भवन्ति इत्याशयेन माधुर्यादीन् निरूपयतीति अस्य ग्रन्थस्य साङ्गत्यमनुसन्धेयम् ।

गुणान् निरूपयितुमुपक्रमते—तथा चेति । मधुरः माधुर्यगुणविशिष्टः, शृङ्गारः एव परः प्रह्लादनः इतरातिशाय्याह्लादजनकः रसो भवतीत्यर्थः। तन्मयं शृङ्गारमयं काव्यं आह्लादजनकार्थप्रतिपादकशब्दसन्दर्भस्य काव्यत्वात् । यत्र शृङ्गारो व्यङ्ग्यः प्राधान्येन तद्व्यञ्जकं शब्दरचनादिकमाश्रित्य माधुर्यं पृथक्पदत्वरूपं प्रतितिष्ठति प्रतिष्ठितं वर्तते । आह्लादजनकत्वरूपं यन्माधुर्यं स रसधर्मः शौर्यादिरिवात्मनः । तेन मधुरो रस इति मुख्यः प्रयोगः, वर्णरचनादिगतं च पृथक्पदत्वादिकमपि तत्तद्रसानुगुण्येन आह्लादप्रयोजकं शरीरगतं आकारसौष्ठवादिकमिवेति मधुरा रचना, मधुरो वर्णः इत्यादिः गौणः प्रयोगः। आह्लादप्रयोजकत्वं माधुर्यं शरीरात्मनोरविशिष्टम् । विशदीकरोति—शृङ्गार इति । शृङ्गार एव सहृदयास्वादविषयीभूता रतिः शृङ्गारात्मिकैव । रसान्तरापेक्षया अन्यान् रसानपेक्ष्य, मधुरः माधुर्यगुणविशिष्टः, प्रह्लादहेतुत्वात् प्रकृष्टाह्लादजनकत्वात्, काव्यस्य कविकर्मणः, तत्प्रकाशनपरशब्दार्थतया तस्य आह्लादस्य, प्रकाशनपरेण व्यञ्जनतात्पर्येण प्रयुक्तो यः शब्दः तद्वत्तया, तत्प्रतिपाद्यार्थवत्तया च, सः माधुर्यलक्षणो गुणः, काव्यरूपं शरीरमाश्रित्य वर्तत इत्यर्थः, श्रुतिसुभगत्वं माधुर्यमस्त्वित्याशङ्कां मनसिकृत्याह—श्रव्यत्वं (श्रुतिहृद्यत्वं) ओजसोऽपि ओजोगुणस्यापि साधारणम्, ओजस्यपि श्रव्यत्वमस्तीति तन्न व्यावर्तकं भवति ।

**शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥ ८ ॥**

विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत् । सहृदयहृदयावर्जननिमित्तत्वादिति ॥

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ।**
**तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥ ९ ॥**

रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां जनयन्तीति लक्षणया त एव दीप्तिरित्युच्यते । तत्प्रकाशनपरः शब्दो दीर्घसमासरचनालङ्कृतं वाक्यम् ।

---

उज्जीवनी ।

माधुर्यस्य विशेषमाह—शृङ्गार इति । यतो यस्माद्, विप्रलम्भाख्ये शृङ्गारे विप्रलम्भशृङ्गारे, करुणे च करुणरसे च, मनश्चित्तं, अधिकमधिकतया आर्द्रतामार्द्रीभावं, याति प्राप्नोति । अतिशयितां चित्तवृत्तिं द्रुत्यात्मिकां जनयतीति भावः । ततो विप्रलम्भशृङ्गारे करुणे च माधुर्यं प्रकर्षवत् प्रकृष्टमित्यर्थः ।

इदं तु तत्त्वम्—यद्यपि पूर्वैः श्लेषादयो दश शब्दगुणाः दश अर्थगुणाश्च समाम्नायन्ते तथापि, नव्याः माधुर्यौजःप्रसादाख्यांस्त्रीन् गुणानेव मन्यन्ते । माधुर्यगुणविशिष्टसम्भोगशृङ्गारविप्रलम्भशृङ्गारकरुणरसचर्वणया द्रुत्याख्या, ओजोगुणविशिष्टबीभत्सरौद्ररसचर्वणया दीप्त्याख्या, प्रसादगुणविशिष्टसर्वरसचर्वणया विकासाख्या च चित्तवृत्तिरुपजायते ।

विप्रलम्भेति । तु किन्तु, विप्रलम्भशृङ्गारकरुणयोः विप्रलम्भशृङ्गारे करुणे च, माधुर्यमेव आह्लादजनकत्वरूपं माधुर्यगुणवत्त्वमेव. प्रकर्षवत् प्रकृष्टम् । हेतुमाह—सहृदयेति । सहृदयहृदयावर्जनातिशयनिमित्तत्वात् सहृदयानां हृदयस्य चित्तस्यावर्जने योऽतिशयस्तस्य निमित्तत्वात् कारणभूतत्वाद्, इति एवं माधुर्याख्यो गुणो निरूपित इत्यर्थः ।

ओजो निरूपयति—रौद्रादय इति । काव्यवर्तिनः काव्ये वर्तमानाः, रौद्रादयो रौद्रप्रकाराः वीरबीभत्सरौद्रा इत्यर्थः । दीप्त्या रसा लक्ष्यन्ते

यथा—

> चञ्चद्भुजभ्रमितचण्डगदाभिघात-
> सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
> स्त्यानावबद्धघनशोणितशोणपाणि-
> रुत्तंसयिष्यति कचांस्तव देवि भीमः॥

---

उज्जीवनी।

दीप्तिमत्त्वेन लक्ष्या भवन्ति। चित्तस्य विस्ताररूपा दीप्तिः वीराद् बीभत्से, ततोऽपि रौद्रे च, क्रमेण सातिशया वर्तते। ततस्तत्कारणमोजः क्रमेणोत्कर्षवत्। स्निग्धस्य सामाजिकचित्तस्य, द्वेष्यविषयसम्पर्केण, दीप्तत्वमुष्णता जायते। तत्र वीरस्य द्वेष्यनिग्रहे जिगीषामात्रम्। बीभत्से तु जुगुप्सितविषयेऽत्यन्तं त्यागेच्छा। रौद्रे तु अपकारिणी वधावधिकः प्रयास इति क्रमेण दीप्त्याधिक्यम्। तद्व्यक्ति-हेतू तस्या आत्मविस्तृतिरूपाया दीप्तेः या व्यक्तिरभिव्यक्तिस्तस्या हेतू, शब्दार्थौ शब्दमर्थं च आश्रित्याधिष्ठाय, ओजः दीप्तिजनकत्वरूपो गुणः व्यवस्थितः। अत्रापि ओजस्वी रस इति मुख्यः, ओजस्वी बन्धः इति च गौणः प्रयोगः।

विवृणोति—रौद्रादय इति। रौद्रादयो हि रसाः वीरबीभत्सरौद्रा रसा उत्साहजुगुप्साक्रोधस्थायिनः, परां उत्कृष्टां, दीप्तिं दीप्ततां उज्ज्वलतां ज्वलना-त्मकतां जनयन्ति, अभिव्यक्तिहेतवो भवन्तीति, लक्षणयोपचारेण। त एव रौद्रादय एव, दीप्तिरित्युच्यते दीप्तिपदव्यवहारविषया भवन्ति। तत्प्रकाशनपरः रौद्रादिरसप्रकाशनतात्पर्येण प्रयुक्तः, शब्दः शब्दसन्दर्भः, दीर्घसमासेन उद्धत-रचनया च अलङ्कृतं विभूषितं, वाक्यं च दीप्तिरित्युच्यते।

उदाहरति—चञ्चदिति। चञ्चता भुजेन बाहुना, भ्रमितायाः चण्डाया उग्राया गदायाः अभिघातेन ताडनेन, सञ्चूर्णितं ऊर्वोर्युगलं यस्य तादृशस्य सुयोधनस्य, स्त्यानेन स्निग्धेन, अवबद्धेन लग्नेन, घनेन निबिडेन च, शोणितेन रुधिरेण, शोणोऽरुणः, पाणिर्यस्य तादृशो भीमः, हे देवि, तव कचान् संयतान् केशान्, उत्तंसयिष्यति शिरसो भूषणं करिष्यति। वेणीसंहारे भीमसेनो द्रौपदीमेवं ब्रूते। अत्र दुर्योधनालम्बनः, भीमसेनगतः क्रोधाख्यः स्थायी भाव। रौद्ररसव्यपदेशहेतुः। अत्र शब्दस्य प्राधान्येन क्रोधरसव्यञ्जकत्वात् तदनुकूलो दीर्घसमासः, रचना च दीप्तिमती।

तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नआचकाभिधेयः । यथा—

> यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
> यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
> यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
> क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽयम् ।

इत्यादौ द्व[1]योरोजस्त्वम् ॥

---

उज्जीवनी ।

तत्प्रकाशनपरश्चार्थः शब्दप्रतिपाद्योऽर्थश्चेत् प्राधान्येन दीप्तिप्रकाशनपरस्तदा, अनपेक्षितदीर्घसमासरचनः अनपेक्षिते अपेक्षाशून्ये, समासो रचना च समासरचने, येन तथाभूतः प्रसन्नवाचकाभिधेयः प्रसन्नेन प्रसादगुणयुक्तेन वाचकेन अर्थप्रतिपादकेन शब्देन, अभिधेयः अभिधया प्रतिपाद्यः । शब्दस्य रौद्राद्यभिव्यञ्जकत्वे दीर्घसमासः, ओजस्वी बन्धश्चापेक्ष्यते । अर्थस्य तद्व्यञ्जकत्वे तूभयमिदं नापेक्ष्यत इत्याशयः ।

उदाहरति—यो य इति । वेणीसंहारनाटके क्रुद्धस्याश्वत्थाम्न इदं वचनम् । अर्थस्यात्र प्राधान्येन व्यञ्जकत्वाद् दीर्घसमासः, उद्धता च रचना नापेक्ष्यत इति दर्शयितुमिदमुदाहरणम् । पाण्डवीनां पाण्डवसम्बन्धिनीनां चमूनां सेनानां मध्ये, स्वभुजगुरुमदः स्वस्यात्मनो, भुजयोर्बाह्वोः, गुरुर्महान्, मदो गर्वो यस्य तादृशः यो यः शस्त्रमायुधं बिभर्ति धारयति । पाञ्चालगोत्रे पाञ्चालराजस्य द्रुपदस्य वंशे । शिशुः, अधिकवया वृद्धः, गर्भशय्यां गतः गर्भस्थितो वा यो यः । तत्कर्मसाक्षी तस्य क्रूरस्य मत्पितुर्द्रोणस्य पराभवलक्षणस्य कर्मणः साक्षी द्रष्टा च यो यः । यश्च यश्च रणे सङ्ग्रामे मयि चरति जागरूके सति, प्रतीपः प्रतिकूलः । तस्य तस्य पुरुषस्य सर्वस्य स्वयं जगतां लोकानां, अन्तकस्यापि संहर्तुरपि । क्रोधान्धः क्रोधेनान्धः, अहं अन्तकः संहर्ता भवामि । अत्र दीर्घसमासस्य दीर्घरचनायाश्चाभावेऽपि प्राधान्येनार्थस्य रसप्रकाशनपरता युक्ता ।

---

१. 'त' ख

**समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति ।**
**स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ १० ॥**

प्रसादस्तु स्वच्छता शब्दार्थयोः । स च सर्वरससाधारणो गुणः, सर्वरचनासाधारणश्च व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः ॥

---

उज्जीवनी ।

इत्यादाविति—इत्यादौ चञ्चदित्यादौ यो य इत्यादौ च ओजोगुणव्यञ्जकत्वं द्वयोः शब्दस्यार्थस्य च स्पष्टमिति भावः ।

यत्तु पण्डितराजेन "काव्यप्रकाशगतरौद्ररसोदाहरणे तु 'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः । नरकरिपुणा सार्धं तेषां सभीमकिरीटिवामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् । इति पद्ये रौद्ररसव्यञ्जनक्षमा नास्ति वृत्तिः, अतस्तत्कवेरशक्तिरेव" इत्युक्तम् तद् ध्वनिकारानभिमतमित्येव भाति । स्वस्यार्थमुपसर्जनीकुर्वाणः शब्दो वा, स्वयमुपसर्जनीभवन् शब्दप्रतिपाद्योऽर्थो वा यत्र प्राधान्येनार्थान्तरं प्रतीयमानं प्रकाशयति तत्र शब्दस्यार्थान्तरप्रकाशनतात्पर्ये सति दीर्घसमासादयः अपेक्ष्यन्त इति, अर्थस्य तथात्वे दीर्घसमासादयो नापेक्ष्यन्त इत्युक्त्वा चञ्चद्भुजेति, यो य इति चोदाहरणभेदप्रदर्शनेन चेदं स्फुटमवगम्यते । एतद्रीत्या काव्यप्रकाशगतरौद्ररसोदाहरणे 'कृतमनुमतमि'त्यादिपद्येऽपि, अर्थस्य व्यञ्जकत्वाद् रौद्ररसव्यञ्जनक्षमा दीर्घसमासादयो नापेक्ष्यन्त इति मन्तव्यम् ।

प्रसादगुणं निरूपयति—समर्पकत्वमिति । काव्यस्य कविकर्मणः, सर्वरसान् शृङ्गारादीन् माधुर्येणौजस्वित्वेन च विदितानितरानपि च सर्वान् रसान् प्रति यत् समर्पकत्वं सहृदयहृदयसंवादकारित्वं, सः सर्वरससाधारणक्रियः सर्वेषां रसानां साधारणी अनुकूला क्रिया स्थितिर्यस्य तादृशः प्रसादो गुण इति ज्ञेयः प्रसादाख्यो गुण इत्यवगन्तव्यः ।

प्रसाद इति । प्रसादाख्यो गुणः । प्रसादस्तु प्रसादाख्यो गुणस्तु, शब्दार्थस्य शब्दस्यार्थस्य च, स्वच्छता नैर्मल्यम् । स च प्रसादश्च सर्वरससाधारणः सर्वरसाभिव्यञ्जनानुकूलः, सर्वरचनासाधारणश्च रौद्रादिरसाभिव्यञ्जिकासु

**श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥ १९ ॥**

अनित्या दोषाश्च ये श्रुतिदुष्टादय सूचितास्तेऽपि न वाच्ये अर्थमात्रे, न च व्यङ्ग्ये, शृङ्गारव्यतिरेकिणि, शृङ्गारे वा ध्वनेरनात्मभूते। किं तर्हि? ध्वन्यात्मन्येव, शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः। अन्यथा हि तेषामनित्यदोषतैव न स्यात्। एवमयमसंलक्ष्यक्रम [1]द्योतो ध्वनेरात्मा प्रदर्शितः सामान्येन।

---

उज्जीवनी।

अपि रचनासु शुष्केन्धनमग्निरिव, निर्मलं वस्त्रादिकं जलमिव च सहृदहृदये झटित्यर्थप्रतीतिजनकत्वेन साधारण्येन स्थितश्चा मुख्यतया प्राधान्येन व्यङ्ग्यार्थापेक्षयैव व्यङ्ग्यार्थानुकूलतयैव, व्यवस्थितः सम्यगवस्थितः, मन्तव्य ज्ञातव्यः। एवं माधुर्यादीनां गुणानां निरूपणेन शृङ्गारादयो रसा अपि प्रदर्शिता इति ध्येयम्। एतेन रमणीयार्थप्रतिपादकशब्दरूपकाव्यस्याङ्गं अनुप्रासादिरूपेण, तादृशशब्दप्रतिपाद्यमर्थं उपमादिरूपेण वा, आश्रित्य काव्यस्य शोभामातन्वाना अलङ्काराः, अङ्गिनं प्रधानभूतं व्यङ्ग्यं अर्थमाश्रित्य शोभातिशयमाविष्कुर्वाणा माधुर्यौजःप्रसादरूपेण त्रिविधा गुणा इति च गुणालङ्कारयोर्विभागः स्फुटो ज्ञायते।

एवं च तत्तद्रसानुगुणानां रचनादीनां व्यवस्थापनेन श्रुतिदुष्टादीनां काव्यदोषाणां सार्वत्रिकत्वं नास्तीति दर्शयितुमाह—श्रुतिदुष्टादय इति। ये च यद्रूपाश्च श्रुतिदुष्टादयः श्रुतिदुष्टत्वादयो दोषाः शब्दार्थदोषाः, दर्शिता उक्ताः। ते दोषा, ध्वन्यात्मनि प्राधान्येन ध्वन्यमाने, शृङ्गारे शृङ्गार-रसमात्रे, हेयाः त्याज्याः, इति उदाहृता उक्ताः। स्वय विवृणोति—अनित्या इति। अनित्या नित्यत्वशून्याः। श्रुतिदुष्टादयः श्रुतिदुष्टत्वादयः, ये दोषाश्च सूचिताः ये दोषत्वेन प्रकाशिताः ते दोषाः, वाच्ये अर्थमात्रे न हेयाः, न च व्यङ्ग्ये, शृङ्गारव्यतिरेकिणि शृङ्गारभिन्ने व्यङ्ग्ये च। एवं ध्वनेः अनात्मभूते शृङ्गारे, प्राधान्येन प्रतीत्यविषये। तेन किमायातमित्याह—किं तर्हीति।

---

१. "मोद्द्योo" ख

**तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ।**
**तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥ १२ ॥**

अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्यवाचकानुपातिनामलङ्काराणां ये प्रभेदा निरवधयो ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ताः स्वाश्रयापेक्षया निःसीमानो विशेषास्तेषामन्योन्यसम्बन्धपरिकल्पने क्रियमाणे कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसङ्ख्यातुं न शक्यन्ते किमुत सर्वेषाम् ॥

---

उज्जीवनी ।

अङ्गितया प्राधान्येन, व्यङ्ग्ये प्रतीयमाने, ध्वन्यात्मनि ध्वनिरूपे शृङ्गारे शृङ्गारध्वनावेवेत्यर्थः । ते श्रुतिकटुत्वादयो दोषाः, हेयाः त्याज्याः, इति एवम्, उदाहृताः प्रदर्शिताः । अन्यथा श्रुतिकटुत्वादीनां क्वचिद् हेयत्वं, क्वचित् तदभावः, इति यदि न स्यात्, तेषां दोषाणाम् अनित्यदोषतैव अनित्यदोषत्वं न स्यादेव न भवेत् । एवमुक्तप्रकारेण, असंलक्ष्यक्रमद्योतो ध्वनेरात्मा असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः स्वरूपं सामान्येन प्रदर्शितं सामान्यतो वर्णितमित्यर्थः ॥

विशेषत इयत्तया निरूपणस्याशक्यतामाह—तस्येति । तस्य ध्वनेः । अङ्गानामलङ्काराणां ये प्रभेदा अवान्तरभेदाः । ये च स्वगता आत्मगताश्च, प्रभेदाः, तेषां प्रभेदानाम् अन्योन्यसम्बन्धपरिकल्पने अन्योन्यसम्बन्धस्य परस्परसम्बन्धस्य, परिकल्पने कल्पनायाम् आनन्त्यम् अनन्तत्वम् । इयत्तया अपरिच्छेद्याः प्रभेदाः स्युरिति यावत् ।

विवृणोति—अङ्गितयेति । यः अङ्गितया प्रधानत्वेन व्यङ्ग्यः प्रतीयमानः, रसादिः रसभावादिः । विवक्षितान्यपरवाच्यस्य तदाख्यस्य ध्वनेः, एक आत्मा एकः प्रकारः तस्य ध्वनेः, अङ्गानामङ्गभूतानाम् । वाच्यवाचकानुपातिनां वाच्यमर्थं वाचकं शब्दं चानुपातिनाम्, अनुसृत्य वर्तमानानामलङ्काराणाम् अनुप्रासादीनाम् उपमादीनां च ये निरवधयः अनन्ताः प्रभेदाः, ये च स्वगताः स्वमङ्गिनं रसभावादिकमाश्रित्य वर्तमानस्याङ्गिनः, अर्थस्य व्यङ्ग्यस्यार्थस्य विभावानुभावव्यभिचारिप्रतिपादनसहिता विभावानुभावानां व्यभि-

तथाहि—शृङ्गारस्याङ्गिनस्तावदाद्यौ द्वौ भेदौ सम्भोगो विप्रलम्भश्च। सम्भोगस्य च परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकाराः। विप्रलम्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः।

तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदः। तेषां च देशकाला[1]द्याश्रयावस्थाभेद इति स्वगतभेदापेक्ष[2]यैकस्य तस्यापरिमेयत्वं किं पुनरङ्गप्रभेदकल्पनायाम्। ते ह्यङ्गप्रभेदाः प्रत्येकमङ्गिप्रभेदसम्बन्धपरिकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति॥

---

उज्जीवनी।

चारिणां च प्रतिपादनेन सहिताः, रसभावतदाभासतत्प्रशमलक्षणाः रस, भाव, रसाभास, भावाभास, भावप्रशमनरूपाः अनन्ताः स्वाश्रयापेक्षया स्वस्याश्रयमपेक्ष्य, निःसीमानः निरवधयः, विशेषाः प्रभेदाः, तेषां प्रभेदानाम्, अन्योन्य सम्बन्धकल्पने परस्परसम्बन्धकल्पनायाम्। अन्यतमस्य बहुष्वेकस्यापि कस्यचिद् रसस्य प्रकारा भेदाः, परिसङ्ख्यातुं गणयितुं न शक्यन्ते। किमुत किं पुनः सर्वेषां सर्वप्रभेदानां परिगणना सुतरां न शक्येत्यर्थः।

उपपादयति—तथाहीति। अङ्गिनः प्रधानतया व्यङ्ग्यस्य शृङ्गारस्य, आद्यौ प्रथमौ, द्वौ भेदौ प्रकारौ भवतः—सम्भोगो विप्रलम्भश्चेति। तत्र प्रथमस्य शृङ्गारस्य परस्परप्रेमा स्त्रीपुंसयोरन्योन्यालम्बनः चित्तवृत्तिविशेषः, दर्शनं परस्परावलोकनं, सुरतविहरणमित्येवमादिरूपाः प्रकारभेदाः विद्यन्ते। द्वितीयस्य विप्रलम्भस्यापि अभिलाषहेतुको विप्रलम्भः, तथा ईर्ष्याविरहप्रवासादिहेतवो विप्रलम्भप्रकाराः सम्भवन्ति। तेषां च विप्रलम्भशृङ्गारभेदानां विभावानुभावव्यभिचारिभेदाश्च। तेषां च विभावादीनां देशकालाद्याश्रयावस्थाभेदः, देशकालादीनाश्रित्य जायमानानां अवस्थानां भेद इति स्वगत भेदापेक्षया स्वनिष्ठभेदानपेक्ष्यैकस्यापि तस्य शृङ्गारस्य रसस्य, अपरिमेयत्वमसङ्ख्यता, किं पुनरङ्गभेदकल्पनायाम् अङ्गस्य भेदानां परिगणने, प्रस्तुते किमु वक्तव्यम्। ते ह्यङ्गभेदाः अङ्गभूतानां च विभावादीनाम् अङ्गिनो भेदेन

---

१. 'लाश्र०' ख. २. 'यैव त०' ख. च.

दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ।
बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥ १३ ॥

दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे सहालङ्कारैरङ्गाङ्गिभावपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति । तत्र,

शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवा[1]न् ।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥ १४ ॥

---

उज्जीवनी

सह सम्बन्धस्य योगस्य परिकल्पने क्रियमाणे सङ्ख्याने विधीयमाने सति आनन्त्यम् अनन्तत्वमेवोपयान्ति उपगच्छन्ति ॥

दिङ्मात्रमिति । दिङ्मात्रं तूच्यते मार्गप्रदर्शनमात्रं क्रियते । येन मार्गप्रदर्शनेन, व्युत्पन्नानां लोकशास्त्रकाव्याद्यवेक्षणाद् व्युत्पत्तिमतां सचेतसां सहृदयानाम् । आसादितालोका बुद्धिः आसादितः सम्प्राप्तः, आलोकः प्रकाशः यस्याः तादृशी मतिः, सर्वत्र सर्वेषु ध्वनिकाव्यप्रभेदेषु प्रकाशेन एकदेशप्रदर्शनेन सहृदयानां बुद्धिः सर्वत्र प्रसरिष्यतीत्यर्थः ।

विशदयति—दिङ्मात्रकथनेनेति । दिङ्मात्रकथनेन एकांशवर्णनेन व्युत्पन्नानां काव्यादिपरिशीलनेन समुपगतनिपुणतानां सहृदयानाम् एकत्रापि रसभेदे रसस्य एकस्मिन्नपि प्रकारे अलङ्कारैः सह अलङ्करणैः सह, अङ्गाङ्गिभावपरिज्ञानाद् अङ्गभावस्याङ्गिभावस्य च विशेषतो विज्ञानाद्, आसादितालोका आसादित आलोको यस्याः सा बुद्धिः सर्वत्र समुदितालोका भविष्यतीत्यर्थः ॥

काव्यस्याङ्गान्याश्रित्यावतिष्ठमाना अलङ्कारा अङ्गद्वारा अङ्गिन एवोपकारका इत्युक्तम् । तदेव प्रतिपादयितुमाह—शृङ्गारस्येति । अङ्गिनो व्यङ्ग्यत्वेन प्रधानस्य शृङ्गारस्य शृङ्गाररसतां प्राप्तस्यास्वादविषयस्य रत्याख्यस्य स्थायिनो भावस्य सर्वेष्वेव प्रभेदेषु सर्वेष्ववान्तरभेदेषु यत्नाद् यत्नमवलम्ब्य पृथक् प्रयत्नेनेति यावत् । एकरूपानुबन्धवान् एकरूपेण अनुबन्धेन युक्तः, अनुप्रासः शब्दगतोऽलङ्कारः, न प्रकाशकः न चमत्कारकृत् ।

---

१. 'नात्'. च.

अङ्गिनो हि शृङ्गारस्य ये उक्ताः प्रभेदास्तेषु सर्वेष्वेकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः। अङ्गिन इत्यनेनाङ्गभूतस्य शृङ्गारस्यैकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह--

**ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।**
**शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ १५ ॥**

ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्यवाचकाभ्यां प्रकाशमानस्तस्मिन् यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम् ।

---

उज्जीवनी ।

तदेव विवृणोति--अङ्गिन इति। अङ्गिनः अङ्गित्वेन प्रकाशमानस्य शृङ्गारस्य शृङ्गाररसस्य, ये उक्ताः प्रभेदाः, येऽवान्तरप्रकाराः प्रदर्शिताः। तेषु सर्वेषु समस्तेषु तेष्वलङ्कारेषु, एकप्रकारानुबन्धितया एकरूपपदावृत्त्या प्रबन्धेन प्रवृत्तः प्रबन्धगतत्वेन निबद्धः, अनुप्रासः अलङ्कारः न व्यञ्जकः न रसानुगुणः। अङ्गिन इत्यनेन प्रधानभूतस्य रसस्येति कथनेन, अङ्गभूतस्य शृङ्गारस्य, व्यङ्ग्यत्वेऽपि इतराङ्गत्वेन, अङ्गभूतस्य शृङ्गारस्य, एकरूपानुबन्धी योऽनुप्रासः, तन्निबन्धने कामचारं यथेष्टप्रवर्तनार्हत्वम् आह कथयति।

तदेव भूयो विशदीकर्तुमाह—ध्वन्यात्मभूत इति। शृङ्गारे सम्भोगाख्ये, ध्वन्यात्मभूते प्रतीयमानतया प्रधानतया च ध्वनेः प्रकारभूते। यमकादिनिबन्धनम् 'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः, यमकम्' इति लक्षणलक्षितो यः। शब्दालङ्कारो यमकाख्यः। तद्रूपाणां शब्दावृत्तिरूपाणां अलङ्काराणां निबन्धनं निबन्धः, शक्तावपि कवेः तन्निबन्धने शक्तिमत्त्वेऽपि प्रमादित्वं प्रमाद एवानवधानतैवेति यावत्। विप्रलम्भे तु विप्रलम्भशृङ्गारे तु विशेषतः प्रमाद एवेत्यर्थः। चित्तवृत्तिरूपाया द्रुतेः हेतुभूतं यन्माधुर्यं तस्य करुणे विप्रलम्भे शान्ते चोत्कर्षातिशयदर्शनाद् विप्रलम्भे यमकनिबन्धनमत्यन्तमनुचितमिति यावत्।

विवृणोति—ध्वनेरिति। ध्वनेरात्मभूतः शृङ्गारः ध्वनेः प्रधानव्यङ्ग्यस्य प्रकारभूतो यः शृङ्गाररसः, वाच्यवाचकाभ्यां वाच्येनार्थेन, वाचकेन शब्देन च, तात्पर्येण विवक्षाधीनत्वेन प्रकाश्यमान आविष्क्रियमाणः, यः शृङ्गारो रसः,

प्रमादित्वमित्यनेनैतद् दर्श्यते—काकतालीयेन कदाचित् कस्यचिदेकस्य यमकादेर्निष्पत्तावपि भूम्नालङ्कारान्तरवद् रसाङ्गत्वेन निबन्धो न कर्तव्य इति । विप्रलम्भे विशेषत इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते । तस्मिन् द्योत्ये यमकादेरङ्गस्य निबन्धो नियमान्न कर्तव्य इति ।

अत्र युक्ति[1]रिधीयते—

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ १६ ॥**

---

उज्जीवनी ।

तस्मिन् शृङ्गारे, यमकादीनां यमकम् आदिः प्रकारो येषां तादृशानां, यमकप्रकाराणामलङ्काराणां शब्दावृत्तिरूपाणां निबन्धनं, दुष्करशब्दभङ्गश्लेषादीनां दुष्कराणां पृथक् प्रयत्नापेक्षिणामशक्यनिबन्धानां पदभङ्गश्लेषादीनां शब्दालङ्काराणां, शक्तावपि प्रबन्धुः शक्तिसत्त्वेऽपि प्रमादित्वं प्रमादः । प्रमादित्वमिति कारिकायां वचनेन स्वय विवक्षितमाह—प्रमादित्वमित्यनेनेति । प्रमादित्वमित्यनेन प्रमादित्वमिति कथनेन । एतद् दर्श्यते विवक्षितं प्रदर्श्यते । काकतालीयेन काकतालीयन्यायेन । कदाचित् समये, कस्यचित् कवेः, एकस्य कस्यचिद् यमकादेः शब्दावृत्तिरूपस्यालङ्कारस्य, निष्पत्तावपि उत्पन्नत्वेऽपि, भूम्ना बाहुल्येन, अलङ्कारान्तरवद् अलङ्काराणामन्येषामिव, निबन्धः स्वयंनिबन्धनं न कर्तव्य इति कर्तुं न युक्तमित्यर्थः । "विप्रलम्भे विशेषतः" इत्यनेन तादृशकारिकाभागेन विप्रलम्भे विप्रलम्भशृङ्गारे, सौकुमार्यातिशयः अतिशयितं सौकुमार्यं ख्याप्यते प्रख्याप्यते । तस्मिन् सौकुमार्यातिशये, द्योत्ये प्रकाश्यमाने यमकादेरङ्गस्य अङ्गत्वेन यमकादेरलङ्कारस्य निबन्धः नियमान्न कर्तव्य इति न निबन्धनीय इत्येव नियम इत्यर्थः ।

विशदीकरोति—अत्रेति । अत्र अस्मिन् विषये युक्तिः अभिधीयते कथ्यते । रसेति । रसाक्षिप्ततया रसाविनाभूतत्वेन, रसान्यथानुपपत्त्या वा, यस्याङ्गस्य बन्धो निबन्धः शक्यक्रियः कर्तुं शक्यः स्वयमेव कृतो भवेत् स्यात् । अपृथग्-

---

१. 'रभिधी०' ख. ग.

निष्पत्तावाश्चर्यभूतोऽपि यस्यालङ्कारस्य रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत्
सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलङ्कारो मतः। तस्यैव रसाङ्गत्वं
मुख्यमित्यर्थः॥

यथा—

> कपोले पत्राली करतलनिरोधेन मृदिता
> निपीतो निःश्वासैरयममृतहृद्योऽधररसः॥
> मुहुः कण्ठे लग्नस्तरलयति बाष्पःस्तनतटीं
> प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम्॥

रसाङ्गत्वे च तस्य लक्षणमपृथग्यत्ननिर्वर्त्यत्वमिति यो रसं बन्धुमध्यवसितस्य

---

उज्जीवनी

यत्ननिर्वर्त्यः अपृथगयत्नेन पृथग्यत्नेन विनैव निर्वर्तयितुं शक्यः यो भवति, ध्वनौ प्रधानतया व्यङ्ग्ये रसे, स एवालङ्कारो मतः सम्मत इति यावत्।

स्वयं विवृणोति। निष्पत्ताविति। निष्पत्तावुत्पत्तौ, आश्चर्यभूतोऽपि कथमयमुत्पन्न इत्याश्चर्यास्पदीभूतः यस्यालङ्कारस्य बन्धो निबन्धनं रसाक्षिप्ततयैव रसनान्तरीयकतयैव शक्यक्रियः कर्तुं शक्यो भवेत्। स तादृशः अपृथग्यत्नेन स्वयं निष्पन्नः। अलक्ष्यक्रमव्यङ्ग्ये ध्वनौ असंलक्ष्यक्रमव्यङ्ग्यध्वनौ। अलङ्कारो मतः अलङ्कारत्वेनाभिमतः। तस्यैव अपृथग्यत्ननिर्वृत्तस्यैव तस्य मुख्यं प्रधानं रसाङ्गत्वं रसानुकूलत्वमित्यर्थः।

उदाहरति—यथेति। क्रोधेन परित्यक्तस्य नायकस्य नायिकां प्रत्युक्तिरियम्। कपोले पत्राली पत्ररचना। करतलनिरोधेन करतलसम्मर्देन, मृदिता परिमार्जिता, अयम् अमृतहृद्यः अमृतवन्मनोरमः, अधररसः, निःश्वासैर्निःश्वासमरुद्भिः, निपीतः नितरां पीतः, शोषं प्राप्तः। कण्ठे गले लग्नो निरुद्धः, बाष्पः, अश्रु, स्तनतटीं स्तनयोस्तटीं, मुहुः असकृत्, तरलयति चालयति, हे निरनुरोधे, अनुरोधशून्ये, प्रिये, तव ते मन्युः क्रोधः प्रियो जातः, न तु वयं नाहं प्रियो जात इत्यर्थः।

अत्र नायकालम्बना, नायकत्यागानुभाविता क्रोधसहचरिता रतिः (ईर्ष्या विप्रलम्भशृङ्गारः) प्राधान्येन प्रतीयते।

कवेरलङ्कारस्तां वासनामत्यूह्य यत्नान्तरमास्थितस्य निष्पद्यते स न रसाङ्गमिति ॥

यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपतति शब्दविशेषान्वेषणपरः। अलङ्कारान्तरेष्वपि तत् तुल्यमिति चेत्—नैवम्। अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति।

---

उज्जीवनी।

अत्र प्रियायाः क्रोधस्य प्रियोत्कर्षरूपो व्यतिरेकालङ्कारः अपृथग्यत्ननिर्वृत्तः विप्रलम्भश्रृङ्गारमुपस्करोतीति रसाङ्गत्वम्।

रसाङ्गत्व इति। तस्य स्वयं निष्पन्नालङ्कारस्य रसाङ्गत्वे सम्भवति, अपृथग्यत्ननिर्वर्त्यत्वं पृथग्भूतेन प्रयत्नेन विना निर्व्यूढत्वं लक्षणं तस्यालङ्कारस्येतिभावः। इति एव, रसं शृङ्गारादिकं बन्धुं निबन्धुम्, अध्यवसितस्य कृतनिश्चयस्य कवेर्निबन्धुः, तां रसानुकूलतया निबन्धनसमर्थां, वासनां कवित्वबीजरूपं संस्कारविशेषम्, अत्यूह्य अतिक्रम्य, योऽलङ्कारः, निष्पद्यते, यत्नान्तरमास्थितस्य प्रयत्नान्तरमाश्रितवतः, स तादृशोऽलङ्कारो, न रसाङ्गं रसाङ्गत्वं न प्राप्नोतीत्यर्थः: यमके च यमकालङ्कारे तु, प्रबन्धेन अनुस्यूततया बुद्धिपूर्वं तत्परतया, क्रियमाणे विधीयमाने, नियमेन नियतत्वेनैव। शब्दविशेषान्वेषणरूपः शब्दविशेषस्य यमकत्वप्राप्त्यनुकूलस्य। अन्वेषणात्मकः यत्नान्तरपरिग्रहः, प्रयत्नान्तरस्य स्वीकारः,आपतति अवश्यकर्तव्यो भवति।

सर्वस्यापि निबन्धनं प्रयत्नपूर्वकमेवेत्याशङ्कते—अलङ्कारान्तरेष्वपीति। अलङ्कारान्तरेषु यमकभिन्नालङ्काराणां निबन्धनेऽपि, तत् प्रयत्नपूर्वकत्वं तुल्यं समानमिति चेद् इत्याशङ्कायामुत्तरयति—नैवमिति। अलङ्कारान्तराणि यमकातिरिक्ता अलङ्काराः। निरूप्यमाणानि कविना निरूपयितुमुद्युज्यमानानि तथापि दुर्घटानि अघटमानापि घटितानि न भवन्तीति यावत्। तथापि रससमाहितचेतसः रसे रसनिरूपणे समाहितं सश्रद्धं चेतो मानसं यस्य तादृशस्य, प्रतिभानवतः नवनवोन्मेषशालिप्रज्ञाविशेषवतः, कवेः काव्यकर्तुः अहंपूर्विकया अहमहमिकया। परापतन्ति स्वयमाविर्भवन्ति। पृथक् प्रयत्नं

यथा कादम्बर्यां कादम्बरीदर्शनावसरे। यथा च मायारामशिरोदर्शनेन विह्वलायां सीतादेव्यां सेतौ। युक्तं चैतत्, यतो रसा वाच्यविशेषैरेवाक्षेप्तव्याः।

तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलङ्काराः। तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ। यमकदुष्करमार्गेषु तु तत् स्थितमेव। यत्तु रसवन्ति कानिचिद् यमकादीनि दृश्यन्ते, तत्र रसादीनामङ्गता, यमकादीनां त्वङ्गितैव।

---

उज्जीवनी।

तान्यलङ्कारान्तराणि नापेक्षन्त इत्यर्थः। उदाहरति—यथेति। कादम्बर्यां कादम्बरीदर्शनावसरे भट्टबाणविरचिते कादम्बर्याख्ये प्रबन्धे—"चन्दनविलेपनामनङ्गरागिणीं च बालां मन्मथजननीं च, मृणालिनीमभ्यर्थिततुषारस्पर्शां च कादम्बरीं चन्द्रापीडोऽवलोकयद्" इति विरहोत्कण्ठितायाः कादम्बर्या विरहविप्रलम्भवर्णनावसरे रससमाहितचेतसो बाणस्य अपृथग्यत्ननिर्वर्तिता अलङ्कारा अहमहमिकया परापतिता दृश्यन्ते। उदाहरणान्तरं च यथा—सेतौ सेतुबन्धाख्ये प्रवरसेनविरचिते प्राकृतमहाकाव्ये इन्द्रजिता छित्त्वा प्रदर्शितानि रामादीनां शिरांसि विलोक्य विह्वलायाः सीताया वर्णने चालङ्कारान्तरोपनिपातः दृश्यते। तस्य युक्ततामाह—युक्तमिति। एतत् युक्तं युज्यत एवेत्यर्थः। यत इति। यतो यस्मात् कारणाद् रसा आस्वाद्या रत्यादयः। वाच्यविशेषैरेव अभिधया प्रतिपाद्यमानैरर्थविशेषैरेव। आक्षेप्तव्याः प्रत्याययितुमर्हाः। तत्प्रतिपादकैश्च तस्य वाच्यार्थस्य प्रतिपादनाय प्रयुक्तैरेव शब्दैः, तत्प्रकाशिनः तैः प्रकाशतामुपगताः, वाच्यविशेषा एव, वाच्यार्थविशेषा एव, रूपकादयोऽलङ्काराः रूपकाद्यलङ्कारव्यपदेशभाजो भवन्ति। तस्माद् अपृथग्यत्ननिर्वृत्तत्वात्, तेषामलङ्काराणां, रसाभिव्यक्तौ रसव्यञ्जने, न बहिरङ्गत्वम् अनपेक्षितत्वं नास्तीत्यर्थः। यमकदुष्करमार्गेषु यमकात्मकेषु, दुष्करेषु कृच्छ्रेण कर्तुं योग्येषु, पृथग्यत्ननिर्वर्त्येषु मार्गेषु, तद् बहिरङ्गत्वम् अनुपकारकत्वम् स्थितमेव विद्यत एव।

अत्र विशेषमाह—यत्त्विति। रसवन्ति रसानुगुणानि, कानिचिद् यमकादीन्यलङ्करणानि यदि दृश्यन्ते, तत्र तादृशे स्थलविशेषे, यमकादीनामेव अङ्गित्वं प्राधान्यं, रसादीनां तु अङ्गत्वमेवाङ्गीक्रियते। रसाभासे अनौचित्य-

रसाभासे चाङ्गत्वमप्यविरुद्धं, अङ्गितया तु व्यङ्ग्ये रसे नाङ्गत्वं पृथग्यत्ननिर्वर्त्यत्वाद् यमकादेः ।

अस्यैवार्थस्य सङ्ग्रहश्लोकाः —

[1] रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥
यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते ।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्यते ।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते ॥

इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलङ्कारवर्ग आख्यायते—

---

उज्जीवनी ।

प्रवृते रत्यादौ च यमकादीनामङ्गत्वं गुणभावः । अविरुद्धं, न विरुध्यते । यमकादेरलङ्कारस्य, पृथग्यत्ननिर्वर्त्यत्वात् पृथग्भूतेन यत्नेन निष्पाद्यतया, अङ्गितया मुख्यत्वेन व्यङ्ग्ये रसे आस्वाद्यविषये रत्यादौ, अङ्गत्वं रसानुकूलत्वं नास्ति । उक्तमर्थं सङ्गृह्य कारिकया प्रदर्शयितुमाह—अस्यैवेति । अस्यैव पूर्वोक्तस्यैवार्थस्य सङ्ग्रहश्लोकाः संक्षिप्तपद्यानि । अधो निर्दिश्यन्त इत्यर्थः । महाकवेः महत् काव्यं रचयितुमुद्युक्तस्य, रसवन्ति प्रतिपाद्यतया रसयुक्तानि, सालङ्काराणि अलङ्कारसहितानि च, कानिचित् कतिपयानि, वस्तूनि काव्यजातानि, एकेनैव यत्नेन एकरूपेणैव प्रयत्नेन, निर्वर्त्यन्ते निष्पन्नानि भवन्ति । अस्य कवेः, यमकादिनिबन्धे तु यमकादीनामलङ्काराणां ग्रथने तु, पृथग् यत्नः, पृथग्भूतो यत्नः, जायते आवश्यको भवतीत्यर्थः । शक्तस्यापि निबन्धनानुकूलशक्तिमतोऽपि कवेः, एषां यमकादीनामलङ्काराणां, रसे शृङ्गारादौ, अङ्गत्वम् अङ्गभावः, न विद्यते नास्ति । तु किन्तु, यमकादेरलङ्कारस्य, रसाभासाङ्गभावः रसाभासान् प्रति अङ्गत्वं न वार्यते न प्रतिषिध्यते । ध्वन्यात्मभूते शृङ्गारे प्राधान्येन प्रतीयमाने शृङ्गारे रसे तु अङ्गता अङ्गत्वं नोपपद्यते न युज्यत इत्यर्थः ।

---

१. एतदारभ्य षट् पङ्क्तयः कारिकात्वेन परिगणिताः घ. पाठे.

**ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।**
**रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥ १७ ॥**

अलङ्कारो हि बाह्यालङ्कारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते । वाच्यालङ्कारवर्गश्च रूपकादिर्यावानुक्तो वक्ष्यते च कैश्चित् । अलङ्काराणामनन्तत्वात् ।

स सर्वोऽपि यदि समीक्ष्य विनिवेश्यते तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्वस्यैव चारुत्वहेतुर्निष्पद्यते ।

---

उज्जीवनी

अलङ्काराणां, रसाङ्गत्वं वक्तुमाह—इदानीमिति । इदानीं पृथग् यत्नं विना स्वयं प्रवृत्तानाम् अलङ्काराणां वर्गः समूहः, ध्वन्यात्मभूतस्य प्राधान्येन प्रतीयमानस्य शृङ्गारस्य शृङ्गाररसस्य अनुकूल इत्यर्थः । आख्यायते कथ्यत इति यावत् । ध्वन्यात्मेति । ध्वन्यात्मभूते प्राधान्येन व्यङ्ग्ये शृङ्गारे शृङ्गाररसे समीक्ष्य सम्यग्विज्ञाय, विनिवेशितः सन्निवेशितः, रूपकादिः अलङ्कारवर्गः रूपकप्रभृतिः काव्यालङ्कारसमूहः, यथार्थताम् अन्वर्थत्वम् एति प्राप्नोति ।

अलङ्कार इति । अलङ्कारो हि वाच्यस्यार्थस्य चारुत्वहेतुः । रूपकादिरलङ्कारस्तु, बाह्यालङ्कारसाम्याद् बाह्यैः शरीराश्रितैरलङ्कारैः सह सादृश्यात् चारुत्वहेतुः चमत्कृतिजनकः, उच्यते कथ्यते । वाच्यालङ्काराणां वर्गः सङ्घः यावान् उक्तः पूर्वैर्भामहादिभिः । कैश्चित् पश्चात्तनैर्वक्ष्यते कथयिष्यते च । अलङ्काराणामनन्तत्वाद् बहुत्वात् । यथा लोके देहालङ्करणानि केयूरादिविभूषणानि नवनवानि विधृतानि शरीरशोभामातन्वते तथा प्रतिभानवता रससमाहितचेतसा कविना समीक्ष्य विनिवेशितानि रूपकादीनि काव्यं विभूषयन्तीत्यर्थः ।

स इति । स सर्वोऽपि अलङ्कारवर्गः । यदि समीक्ष्य समीक्षापूर्वकं, विनिवेश्यते प्रतिपाद्यते, तत् तर्हि, सोऽलङ्कारवर्गः अलक्ष्यक्रमव्यङ्ग्यस्य असंलक्ष्यक्रमव्यङ्ग्याख्यस्य ध्वनेः अङ्गिनः प्राधान्येन प्रतीयमानस्य, सर्वस्यैव सर्वप्रकारस्यैव चारुत्वहेतुः चमत्कृतिजनकः, निष्पद्यते निष्पन्नो भवति ।

एषा चास्य विनिवेशने समीक्षा —

विवक्षा तत्परत्वेन नाङ्गित्वेन कदा[1]चन ।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ १८ ॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम् ।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥ १९ ॥

रसबन्धेष्वत्यादृतमनाः कविर्यमलङ्कारं तदङ्गतया विवक्षति । यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।

---

उज्जीवनी ।

समीक्षाप्रकारमाह—एषा चेति । एषा वक्ष्यमाणप्रकारा च, अस्यालङ्कारसङ्घस्य, विनिवेशने सन्निवेशने समीक्षा समीक्षणम् । रूपकादेः रूपकप्रभृतेः, अलङ्कारस्यालङ्कारवर्गस्य अङ्गत्वसाधनम् अङ्गत्वस्य रसाङ्गत्वस्य साधकमुपपादकम् । किं तदित्याह—विवक्षेति । अलङ्कारस्य रूपकादेः, तत्परत्वेन अलङ्कारतात्पर्येण, विवक्षा वक्तुमिच्छा । अङ्गित्वेन रसापेक्षया प्राधान्येन, न विवक्षा । कदाचिदलङ्कारोऽङ्गित्वेनापि विवक्षितो दृश्यते । काले समुचिते समये, ग्रहणं प्रतिपादनम्, अनुचिते काले त्यागः । नातिनिर्वहणैषिता अत्यन्तं निर्वहणेच्छाभावः । निर्व्यूढावपि निर्वहणविषयतासम्भवेऽपि अङ्गत्वे रूपकादेरङ्गत्वे अङ्गभावे, यत्नेन प्रयत्नतः । प्रत्यवेक्षणं समीक्षा । एष्वैककमपि रूपकादेरलङ्कारस्य अङ्गत्वसाधनोपायतां धत्त इत्यर्थः ।

उदाहरति—रसबन्धेष्विति । रसबन्धेषु शृङ्गारादिरसनिबन्धनावसरेषु । आदृतमनाः आदृतमादरवद् मनो यस्य स तथाविधः कविः यमलङ्कारं रूपकादिकं, तदङ्गतया रसाङ्गत्वेन । विवक्षति वक्तुमिच्छति ।

यथेति । चलापाङ्गामिति । हे मधुकर, भ्रमर, चलापाङ्गां चलश्चञ्चलोऽपाङ्गः कटाक्षो यस्यास्ताम् । वेपथुमतीं समुपजातकम्पां, दृष्टिं नयनं, बहुशः असकृत् स्पृशसि । रहसि विजने, आख्यायीव वदन्निव, कर्णान्तिकचरः

---

१. 'थञ्च०' ख.

करौ व्याधुन्वत्याः[1] पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥

अत्र हि भ्रमरस्वभावोक्तिरलङ्कारो रसानुगुणः, नाङ्गित्वेनेति न प्राधान्येन । कदाचिद् रसादितात्पर्येण विवक्षितोऽपि ह्यलङ्कारः कश्चिदङ्गित्वेन विवक्षितो दृश्यते । यथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥

---

उज्जीवनी ।

श्रोत्रसमीपे चरन्, मृदु कोमलं, स्वनसि नदसि । करौ बाहू, व्याधुन्वत्याः चालयन्त्याः । रतिसर्वस्वं रतेः सर्वस्वभूतम् । अधरमधरोष्ठं पिबसि । वयमिति राज्ञो वचनम् । तत्त्वान्वेषात् तत्त्वस्य याथार्थ्यस्यान्वेषणात् । हताः पीडिताः । त्वं खलु कृती कृतकृत्यो भवसीति यावत् । शाकुन्तले दुष्यन्तस्य भ्रमरं प्रत्युक्तिरियम् । अत्र भ्रमरस्वभावोक्तिरलङ्कारः अभिलाषविप्रलम्भशृङ्गाररसतत्परत्वेनैव विवक्षितः ।

अत्रेति । अत्रास्मिन् पद्ये, भ्रमरस्वभावोक्तिरलङ्कारः । रसानुगुणः रसाभिव्यक्तेरनुकूल इत्यर्थः । नाङ्गित्वेन न प्राधान्येनेति तत्परत्वेन विवक्षामुक्त्वा व्यतिरेकमप्याह । कदाचिदित्यंशं विवृणोति—कदाचिदिति । कदाचित् समयविशेषे, रसादितात्पर्येण, रसभावादितत्परत्वेन । विवक्षितोऽपि वक्तुमिष्टोऽपि । अलङ्कारो रूपकादिः, कश्चिदेकः, अङ्गित्वेन प्राधान्येन, विवक्षितो दृश्यते रसानुगुण्येन विवक्षितोऽपि कश्चिदलङ्कारः प्राधान्येन क्वचिद् विवक्षाविषयः दृश्यत इत्यर्थः । उदाहरति—यथेति । चक्रेति । चक्रेण सुदर्शनाख्येन विष्णुचक्रेण, योऽभिघातोऽभिहननं तद्रूपा या प्रसभाज्ञा अलङ्घनीयो नियोगस्तया एव । राहोर्वधूजनस्य वध्वाः, रतोत्सवं रतरूपमुत्सवम् आलिङ्गनोद्दामविलासवन्ध्यम् आलिङ्गनमाश्लेषणमेव उद्दाममुत्कृष्टं येषु तादृशैर्विलासैः वन्ध्यं शून्यम् । चुम्बनमात्रशेषं चुम्बनमेव शेषभूतं यस्मिंस्तथाविधं चकारेत्यर्थः ।

---

१. 'धू०' ख.

अत्र हि पर्यायोक्तस्याङ्गित्वेन विवक्षा रसादितात्पर्ये सत्यपि । अङ्ग[1]त्वेन[2] विवक्षितमपि यमवसरे गृह्णाति नानवसरे । अवसरे गृहीतिर्यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणाद्
आयासं श्वसनोद्गमैरविरलै[3]रातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

इत्यत्र उपमा श्लेषस्य ॥

---

उज्जीवनी ।

अत्र पर्यायोक्तस्य व्यङ्ग्यस्य भङ्ग्यन्तरेणाभिधानरूपस्यालङ्कारस्य रसादि-तात्पर्ये सत्यपि अङ्गित्वेन प्राधान्येन विवक्षा दृश्यते ।

यम् अलङ्कारम्, अङ्गत्वेनामुख्यत्वेन, विवक्षितमपि विवक्षाधीनमपि । अवसरे उचितेऽवसरे, गृह्णाति उपादत्ते । नानवसरे अनुचितेऽवसरे नोपाद-दातीत्यर्थः । अवसरे गृहीतिर्ग्रहणं यथेति । उदाहरणं प्रदर्शयति—उद्दामेति । उद्दामा उद्भूता उत्कलिकाः कोरका यस्यास्ताम् । विपाण्डुररुचं विपाण्डुरा विशेषेण पाण्डुरा रुक् कान्तिर्यस्यास्तथाविधाम् । क्षणात् तस्मिन्नेवावसरे, प्रारब्धजृम्भां प्रारब्धा आरब्धा, जृम्भा विकासो यया तादृशीं, अविरलैः निरन्तरैः, श्वसनोद्गमैः श्वसनस्य वसन्तमारुतस्य उल्लासैः । आत्मनः स्वस्य, आयासमान्दोलनयत्नम् । आतन्वतीं कुर्वतीं, समदनां मदनेन वृक्ष-विशेषेण सहिताम्, अद्येदानीम् । इमामुद्यानलताम् उद्यानस्थितां वल्लीम् । उद्दामोत्कलिकाम् उद्दामा उत्कलिकोत्कण्ठा यस्यास्ताम् । विपाण्डुरा विशेषेण पाण्डुरा रुग् वर्णो यस्याः ताम् । क्षणात् तस्मिन्नेव क्षणे, प्रारब्धजृम्भां प्रारब्धा जृम्भा जृम्भणं मुखविकासो यया तादृशीं, अविरलैः धारया प्रवृत्तैः, श्वसनोद्गमैः श्वसनस्य निःश्वासमरुत उद्गमैः प्रादुर्भावैः, आत्मनः स्वस्य आयासं हृदयस्थितं सन्तापम् आतन्वतीं प्रकाशयन्तीं, समदनां मदनाविष्टाम् अन्यां धारिणीतरां, नारीमिव स्त्रियमिव, पश्यन् अवलोकयन्, देव्या धारिण्याः

---

१. 'ङ्गि' च २. 'नावि०' च ३. 'तै०' ज

गृहीतमपि यमवसरे त्यजति तद् रसानुगुणतयालङ्कारान्तरापेक्षया ।

यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ता[1]स्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥

अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति ॥

---

उज्जीवनी ।

प्रियायाः, मुखं वदनम् । कोपविपाटलद्युति कोपेन ईर्ष्याजनितेन, क्रोधेन, विपाटला अरुणा द्युतिः कान्तिर्यस्य तादृशम्, अहं करिष्यामि ध्रुवं नूनम् ।

अत्र नार्याः कस्याश्चिदुद्यानलतासादृश्यरूपोपमायाः, भाविन ईर्ष्या विप्रलम्भश्रृङ्गारस्यानुगुणत्वेन उचितेऽवसरे श्लेषालङ्कारस्य च ग्रहणं कृतम् ।

गृहीतमिति । यम् अलङ्कारं गृहीतमपि स्वीकृतमपि अवसरे उचिते समये, तद्रसानुगुणतया तस्य प्रकृतस्य रसस्यानुगुण्येन, अलङ्कारान्तरापेक्षया अन्यस्यालङ्कारस्य परिग्रहापेक्षायामुपस्थितायां, त्यजति पूर्वगृहीतमलङ्कारं परित्यजति इत्येतदुदाहरति—यथेति ।

रक्तेति । अशोकतरुं प्रति कस्यचिन्नायकस्योक्तिरियम् । हे अशोक ! त्वं नवपल्लवैः नूतनतयोद्गतैः किसलयैः रक्तः रक्तवर्णः । अहमपि श्लाघ्यैः श्लाघनीयैः, प्रियायाः प्रेयस्याः गुणैः, रक्तः अनुरक्तः, अस्मि । किं च त्वां (अशोकतरुं) शिलीमुखाः भ्रमराः आयान्ति उपगच्छन्ति । तथा मामपि (नायकम् उद्दिश्य) स्मरधनुर्मुक्ताः स्मरस्य कामस्य, धनुषः चापान्मुक्ताः शिलीमुखाः बाणाः, आयान्ति । तथा कान्तापादतलाहतिः कान्तानां सुन्दरीणां पादतलाहतिः पादतलेनाहतिस्ताडनं तव मुदे सन्तोषाय भवति । स्त्रीणां पादा-

---

१. 'क्ताः सखे मा०' ख. ग. च. ज.

नात्रालङ्कारद्वयसंनिपातः, किं तर्हि ? अलङ्कारान्तरमेव श्लेषव्यतिरेकलक्षणं नरसिंहवदिति चेन्न तस्य प्रकारान्तरेण व्यवस्थापनात्।

यत्र हि श्लेषविषयैरेव शब्दैः प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते स तस्य विषयः। यथा—'स हरिर्नाम्ना देवः सहरिर्वरतुरगनिवहेन' इत्यादौ। अत्र ह्यन्य एव शब्दः श्लेषस्य विषयोऽन्यश्च व्यतिरेकस्य। यदि चैवंविधे विषयेऽलङ्कारान्तरत्वकल्पना क्रियते तत् संसृष्टेर्विषयापहार एव स्यात्॥

---

उज्जीवनी।

घातादशोकः पुष्प्यतीति प्रसिद्धिः। तद्वन्ममापि कान्तायाः पादतलेनाहननं मुदं जनयति। एवं सर्वं तुल्यं सदृशम्। किन्तु धात्रा विधिना केवलमहं सशोकः शोकसहितः कृतो विहितः। अत्र हि अस्मिन् पद्ये प्रबन्धप्रवृत्तोऽपि प्रबन्धेनादितः प्रभृति, प्रवृत्तोऽपि श्लेषः श्लेषालङ्कारः, व्यतिरेकविवक्षया नायकस्य उपमानादाधिक्यरूपव्यतिरेकालङ्कारस्य कविमत्युपारोहे सति त्यज्यमान उपेक्ष्यमाणः, रसविशेषं विप्रलम्भशृङ्गारं पुष्णाति पोषयति। आशङ्कते—नात्रेति। अत्र रक्तस्त्वमिति पद्ये। अलङ्कारद्वयसंनिपातः द्वयोरलङ्कारयोः श्लेषव्यतिरेकयोः सन्निपातः समबलत्वेन सन्निवेशः। भवत्वित्याशङ्का, न नास्तीत्यर्थः। पुनः किं तदिति पृच्छति—किं तर्हीति। यद्यत्र द्वयोस्तुल्यत्वेन सन्निवेशो नानुमन्यते, तर्हि, कोऽसावत्रालङ्कार इति स्वयमाशङ्क्य स्वाभिमतं प्रदर्शयति—अलङ्कारान्तरमेवेति। श्लेषव्यतिरेकलक्षणं श्लेषव्यतिरेकसङ्कररूपम् अलङ्कारान्तरमेवात्र चारुत्वहेतुः। दृष्टान्तमाह—नरसिंहवदिति। नरहरिवपुषोरुभयोरेकत्र साङ्कर्येण यथा नरहरिरूपमेकं शरीरं तथा श्लेषव्यतिरेकसङ्करात्मक एकोऽलङ्कारो भवत्विति पूर्वपक्षाशयः। समाधत्ते नेति। तस्य सङ्कराख्यस्यालङ्कारस्य, प्रकारान्तरेण व्यवस्थापनात्। अन्येन प्रकारेण, व्यवस्थाया विधानात्। कः स प्रकार इत्याह—यत्रेति। यत्र यस्मिन् काव्ये, श्लेषविषय एव शब्दे यः शब्दोऽनेकार्थत्वेन श्लेषालङ्कारविषयो भवति तत्रैवेत्यर्थः। प्रकारान्तरेणान्येन प्रकारेणार्थवर्णने, व्यतिरेकप्रतीतिर्व्यतिरेकालङ्कारस्यावगतिः, स काव्यरूपः शब्दः, तस्य सङ्करालङ्कारस्य विषयः स्थानम्। उदाहरति—यथेति। स हरिर्नाम्ना स प्रसिद्धः, अच्युतः, नाम्ना हरिरित्युच्यते, देवः प्रकृतो राजा तु सहरिः हरिभिः सह वर्तत इति तादृशः

श्लेषमुखेनवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति चेत्—न, व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात् ।

यथा—

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या[1]
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥

---

उज्जीवनी ।

वरतुरगनिवहेन वराणामाजानेयानां तुरगाणां निवहेन समूहेन हरिसहितो जात इत्यर्थः । आद्यः स हरिरिति व्यस्तः, द्वितीयः सहरिरिति समस्तः । तथा चात्र सहरिशब्द एक एव विषयः, श्लेषव्यतिरेकयोर्वाचकः । अत्र 'रक्तस्त्वमिति पद्य, अन्य एव शब्दः रक्तः इत्यादिः शब्दः, श्लेषस्य श्लेषालङ्कारस्य विषयः । अन्यः अशोकः सशोकः इत्यादिरिति भेदः । नन्वत्र सङ्कर एवालङ्कार इत्याशङ्कते—यदि चेति । एवंविधे विषये, सहरिरित्यादौ, अलङ्कारान्तरत्वकल्पना [नीरक्षीरन्यायेनास्फुटभेदालङ्कारद्वयमेलने सङ्करः । स चाङ्गाङ्गिभावेन, समप्राधान्येन, सन्देहेन, एकवाचकानुप्रवेशेन, च चतुर्विधः । तिलतण्डुलन्यायेन स्फुटावगम्य भेदालङ्कारमेलने संसृष्टिः] यदि क्रियते यद्यङ्गीक्रियते । तस्य फलमाह—संसृष्टेरिति । संसृष्टेस्तदाख्यस्यालङ्कारस्य विषयापहार एव स्यात्, कचिदपि संसृष्टिर्न भवेदित्यर्थः । अभ्युपगम्याह—श्लेषेति । अत्र सहरिरित्यत्र श्लेषमुखेन श्लेषालङ्कारद्वारैव, व्यतिरेकस्य व्यतिरेकालङ्कारस्य, आत्मलाभः स्वरूपप्राप्तिः । इति एतेन हेतुना, नायं संसृष्टेर्विषयः एतादृशस्थले यत्र स्वतन्त्रेण केनचिदलङ्कारेण अलङ्कारान्तरस्य प्राप्तिः, तत्र संसृष्टेः प्रतिभैव नास्तीति, नात्र संसृष्टिरलङ्कारो मास्त्वित्यर्थः । समाधत्ते—नेति । व्यतिरेकस्य, प्रकारान्तरेणापि, श्लेषादिना साम्यप्रतिपादनं, विनापि सम्भवस्य, दर्शनात् । तदेवोदाहरणेन दर्शयति—यथेति । नो इति । सूर्यशतकस्थितं त्रयोविंशं पद्यमिदम् । अदयरयदलत्क्ष्माधरस्य अदयेन निर्दयेन, तीव्रेण रयेण वेगेन, दलन्तः शीर्यमाणाः क्ष्माधराः पर्वता यस्मिन् तथाविधस्य

---

[1] 'ग'. ख.

अत्र हि साम्यप्रपञ्चप्रतिपादनं विनैव व्यतिरेको दर्शितः ।

नात्र श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षितत्वा[1]न्न स्वतोऽलङ्कारतेत्यपि न वाच्यम् । यत एवंविधे विषये साम्यमात्रादपि सुप्रतिपादितात् चारुत्वं दृश्यत एव ॥

---

उज्जीवनी ।

कल्यापायवायोरपि कल्पस्य योऽपायोऽन्तस्तस्य वायोः प्रलयमारुतस्यापि, नो शम्या अविनाश्या, अह्नि दिवसे, गाढोद्गीर्णोज्ज्वलश्रीः गाढं यथा तथा, उद्गीर्णा उज्ज्वला दीप्ता श्रीर्यया तादृशी, तमःकज्जलेन अन्धकाररूपेण कज्जलेन न नो रहिता रहितैवेत्यर्थः । पतङ्गात् सूर्यात् । प्राप्तोत्पत्तिः प्राप्ता उत्पत्तिर्यया तादृशी, मोषं निर्वाणं, पुनः नोपगता न प्राप्ता, निखिलद्वीपदीपस्य निखिलानां समस्तानां, द्वीपानां जम्बूप्रभृतीनां, दीपस्य प्रदीपस्य अन्यरूपा विलक्षणा वर्तिः वर्तिरूपा उष्णत्विषः सूर्यस्य, दीप्तिः कान्तिः वो युष्मान् सुखयतु सुखिनः करोतु ।

अत्रेति । अत्र अस्मिन् पद्ये, साम्यप्रपञ्चप्रतिपादनं विनैव साम्यस्य सादृश्यस्योपमायाः प्रपञ्चेन विस्तरेण प्रतिपादनं स्वशब्देनाविष्करणमकृत्वैव । व्यतिरेकः सूर्यकान्तेरुत्कर्षात्मको व्यतिरेकालङ्कारो दर्शितः प्रदर्शितः ।

इदं तु तत्त्वम् । अत्र वाचकशब्देनोपमा नाभिहिता । नानार्थशब्दस्थले प्रकरणादिभिः प्राकरणिकेऽर्थे प्रथमतया बुद्ध्यारूढे वक्तृबोद्धव्यादिवैशिष्ट्यवशादर्थान्तरस्य प्रतीतौ सत्यां तयोरर्थयोः श्लेषालङ्कारविषयत्वमेव प्रामाणिकैरलङ्कारशास्त्रकारैरभ्युपगतम् । एवमेकेन वाक्येन प्राकरणिकाप्राकरणिकयोरुभयोरर्थयोर्बोधे वाक्यभेदापत्त्यास्य वाक्यस्यासम्बद्धार्थाभिधायकत्वं मा प्रासाङ्क्षीदिति तयोरुपमानोपमेयभावश्च तैः कल्प्यते । अतश्च प्रतीयमानेनैव सादृश्येनात्र व्यतिरेकोऽलङ्कारतां भजते । तथा च श्लेषमात्रेणात्र चारुत्वप्रतीतिर्नास्ति । किन्तु तदुपस्थापितेन साम्यप्रतिपादनेनैव ।

श्लेषस्य पृथगलङ्कारत्वमाशङ्कते—नात्रेति । अत्र 'नो कल्पापाये'त्यादिपद्ये । श्लेषमात्रात् श्लेषालङ्कारमात्रात्, चारुत्वप्रतीतिश्चमत्कृतिजनक-

---

१. 'त्वं न' ख. च. ज.

यथा—

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो-
स्तत् किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥

इत्यादौ ।

---

उज्जीवनी

त्वबोधः, नास्तीति हेतोः, श्लेषस्य व्यतिरेकालङ्कारं प्रत्यङ्गत्वेनैव, अत्र श्लेषाभावे व्यतिरेकस्याप्रादुर्भावेन, विवक्षितत्वाद् विवक्षाधीनत्वाद् । न स्वतोऽलङ्कारता श्लेषस्यात्रालङ्कारत्वेन परिगणना नास्ति । समाधत्ते—न वाच्यमिति । श्लेषस्य विविक्तविषयत्वमस्त्येवेति भावः । हेतुमाह—यत इति । यतः यस्मात् कारणात् । एवंविधे विषये प्रकृताप्रकृतयोरर्थयोः साम्यमात्रादपि, सुप्रतिपादितात् श्लेषस्य साहाय्यं विनैव, सम्यक् प्रतिपादितात् केवलं सादृश्यात्, चारुत्वं चमत्कारातिशयो दृश्यत एव । श्लेषविनाकृतेनैव सादृश्येन उपमारूपेणोद्भूताद् व्यतिरेकादपि चारुत्वं दृश्यत इत्यर्थः ।

उदाहरति—यथेति । आक्रन्दा इति । कस्यचिद् विरहिणो मेघं प्रत्युक्तिरियम् । हे जलधर, हे मेघ, मम आक्रन्दाः, स्तनितैः मेघगर्जितैः, तुल्याः सदृशाः । तुल्यशब्दोऽत्रोपमावाचकः । विलोचनजलानि विलोचनाभ्यां नेत्राभ्यां प्रस्रवन्ति अस्रूणि, अश्रान्तधाराम्बुभिः अश्रान्तमविच्छेदेन, प्रवहद्भिः धारारूपैर्वृष्ट्युदकैस्तुल्यानि । तद्विच्छेदभुवश्च तस्या नायिकाया विच्छेदेन विरहेण भवन्ति इति तादृशाः, शोकशिखिनः शोकाग्नयश्च, तडिद्विभ्रमैः सौदामिनीविलासैः तुल्याः । तथा मे मम, अन्तः हृदये, दयितामुखं दयिताया भार्याया वदनं, तव तु अन्तः अन्तर्भागे, शशी चन्द्रः । एवम् आवयोः विरहिणो मेघस्य च समा तुल्यैव वृत्तिः वर्तनम् । तत् तथापि, सखे, मित्र, मेघ, त्वं माम् अनिशं सर्वदा, दग्धुं पीडयितुमित्यर्थः । किं किमर्थमुद्यतोऽसि उद्युक्तोऽसि । इत्यादाविति एवमादिस्थले, श्लेषं विनैव केवलयोपमया व्यतिरेकप्रतीतिः सम्भवतीति श्लेषस्य विविक्तविषयत्वमुपपादितम् ।

रसनिर्वहणैकतानहृदयो यं च नात्यन्तं निर्वोढुमिच्छति ।

यथा—

> कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
> नीत्वा[1] वासनिकेतनं दयितया सायं सखीनां पुरः ।
> भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
> धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥

अत्र हि रूपकमाक्षिप्तमनिर्व्यूढं च परं रस[2]पुष्टये ।

निर्वोढुमिष्टमपि यं यत्नादङ्गत्वेन प्रत्यवेक्षते । यथा—

---

उज्जीवनी ।

नातिनिर्वहणैषित्वं प्रतिपादयति—रसेति । रसनिर्वहणैकतानहृदयः रसस्य रसभावादेः, निर्वहणे निर्वाहे, एकतानमनन्यवृत्ति हृदयं यस्य तथाविधः, कविरिति शेषः । यं चालंकारम्, अत्यन्तं सम्यक्तया, निर्वोढुं नेच्छति नाभिलषति, तादृशस्यापि रसभावादेरङ्गभूतस्यालङ्कारस्य अलङ्कारत्वं, ध्वनिकाराभिमतमित्यभिप्रायः । उदाहरति—यथेति । कोपादिति । सायमपराह्णे, कोमललोलबाहुलतिकापाशेन कोमलया मनोहारिण्या, लोलया च बाहुलतिकया तद्रूपेण पाशेन, रज्ज्वा । दृढं यथा भवति तथा । कोपाद् बद्ध्वा, वासनिकेतनं नीत्वा, सखीनां वयस्यानां, पुरोऽग्रे भूयः पुनरपि, एवं न कुर्या इति स्खलत्कलगिरा स्खलन्ती कला मधुरा, गीर्वाग् यस्यास्तादृश्या दयितया प्रेयस्या, दुश्चेष्टितं दन्तक्षतादिरूपम् असच्चेष्टितं, संसूच्य सम्यक् सूचयित्वा, धन्यः प्रेयान् हसन् निह्नुतिपरः अपह्नवतत्परः, हन्यत एव ताडयत एव ॥

अत्र बाहुलतिकायाः पाशत्वेन रूपणमुपक्रान्तं, तथापि रसस्य विप्रलम्भशृङ्गारस्य पुष्ट्ये परं परिपोषायैव, अनिर्व्यूढं निर्व्यूढं न कृतमित्यर्थः । अत्रोपक्रान्तस्य रूपकस्य निर्वहणमत्यन्तमनुचितमेव भवेत् ।

निर्वहणेच्छायामलङ्कारस्य स्थानमाह—निर्वोढुमिति । निर्वोढुमारब्धस्यालङ्कारस्य निर्वहणाय, इष्टमपि इच्छाविषयमपि, यमलङ्कारमङ्गत्वेन

---

१. 'मोहनमन्दिरं' द०' ख. २. 'सपरिपु०' ख. ज

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥

इत्यादौ—

स एवमुपनिबध्यमानोऽलङ्कारो रसाभिव्यक्तिहेतुः कवेर्भवति । उक्तप्रकारातिक्रमे तु नियमेनैव रसभङ्गहेतुः सम्पद्यते । लक्ष्यं च तथाविधं महाकविप्रबन्धेष्वपि दृश्यते बहुशः ॥

---

उज्जीवनी ।

प्रत्यवेक्षते रसाङ्गत्वेन पर्यवसाययितुं यतते । उदाहरति—यथेति । श्यामास्विति । हे भीरु, श्यामासु प्रियङ्गुलतासु, ते अङ्गं, चकितहरिणीप्रेक्षणे भयसम्भ्रान्ताया हरिण्याः प्रेक्षणे ईक्षणे ते दृष्टिपातं नयनव्यापारम् । शशिनि चन्द्रे, वक्त्रच्छायां वक्त्रस्य मुखस्य छायां कान्तिं, शिखिनां मयूराणां, बर्हभारेषु पिञ्छकलापेषु केशान् केशपाशान्, नदीवीचिषु नद्या वीचिषु तरङ्गेषु भ्रूविलासान् भ्रुवोर्विलासान् च उत्पश्यामि सम्भावयामि । तथापि एकस्थम् एकत्र स्थितं ते सादृश्यं क्वचिदपि कुत्रापि नास्ति ॥

अत्र विरही कश्चिन्नायकः पृथक् पृथगुत्प्रेक्षाजीवातुभूतं सादृश्यमवलोकयन्नप्येकत्र स्थितं सर्वसादृश्यमपश्यन् स्वकीयं वैक्लब्यं प्रकाशयति ।

अत्र निर्वहणायेष्टमप्युत्प्रेक्षालङ्कारं यत्नेन विप्रलम्भशृङ्गारस्याङ्गत्वेनावस्थापयति ॥

एवं पूर्वोपदर्शितप्रकारेण, कवेः काव्यकर्तुः, उपनिबध्यमानः, कविसम्बन्धि कविकर्तृकं यदुपनिबन्धनं तद्विषयः कविना प्रतिपाद्यमान इत्यर्थः । अलङ्कारो रूपकादिः, रसाभिव्यक्तिहेतुः रसस्य रसभावादेः अभिव्यक्तौ प्रत्यायने, हेतुः कारणं भवति । उक्तप्रकारातिक्रमे तु उक्तो यः प्रकारः रूपकादेरलङ्कारवर्गस्य रसाङ्गत्वेन समीक्ष्य विनिवेशनरूपः, तस्यातिक्रमेऽतिक्रमणे तु नियमेनैव नियतमेव, रसभङ्गहेतुः रसस्य यो भङ्गः विच्छेदः, तस्य हेतुः कारणम् । सम्पद्यते सम्पन्नो भवति । तथाविधं लक्ष्यं यादृशेन लक्ष्येण, रसभङ्गः

तत्तु सूक्तिसहस्रद्योतितात्मनां महा[1]त्मनां दोषोद्घोषणमात्मन एव दूषणं भवतीति न विभज्य दर्शितम्। किन्तु रूपकादेरलङ्कारवर्गस्य येयं व्यञ्जकत्वे रसादिविषये लक्षणदिग् दर्शिता तामनुसरन् स्वयं चान्यल्लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रम[2]प्रतिभमनन्तरोक्तमेनं ध्वनेरात्मानमुपनिबध्नाति सुकविः समाहितचेतास्तदा तस्यात्मलाभो भवति महीयानिति ॥

**क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः ।**
**शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः ॥ २० ॥**

---

उज्जीवनी ।

परापतति तादृशं, महाकविप्रबन्धेष्वेव महाकवीनां महाकविपदवीमधितिष्ठतां प्रबन्धेषु शब्दसन्दर्भात्मकेषु काव्येषु, बहुशः अनेकधा दृश्यते, अवलोक्यते। सूक्ष्मेक्षिकया परीक्ष्यमाण तथाविधं लक्ष्यं बहुशो दृश्यत इति यावत्। तथापि तद्वचनमात्मन एव दोषाविष्करणमिति मन्यमान आह—तत्त्विति। सूक्तिसहस्रद्योतितात्मनां, यतस्ते महाकवयः सूक्तीनां सुभाषितानां सहस्रैः द्योतिता आत्मानो यैस्ते सूक्तिसहस्रेण प्रकाशमाना विद्यन्ते तेषां महात्मनां महतां, दोषोद्घोषणं दोषाविष्करणसंरम्भः आत्मन एव स्वस्यैव दूषणं दोषाविष्करणं भवति परिणमेदिति विभज्य पृथक्कृत्य न दर्शितं न प्रकाशितम्। स्वाशयं प्रकाशयति—किन्त्विति। पूर्वैरलङ्कारशास्त्रकारैः सहृदयश्लाघ्यार्थप्रतिपादकस्य शब्दसन्दर्भस्य काव्यत्वमङ्गीकृतम्। तत्राभिधेयस्याप्यर्थस्य सहृदयश्लाघ्यत्वेन तदुपस्कारका रूपकादयोऽर्थालङ्काराः, तथानुप्रासादयः शब्दालङ्काराश्च विभज्य प्रदर्शिताः।

काव्यप्रकाशकारादिभिश्च काव्यलक्षणे "तददोषौ सगुणावनलङ्कृती पुनः क्वापि" इत्यादिना गुणानामलङ्काराणामभावप्रतियोगित्वेन दोषाणामपि प्रवेशः कृतः। ध्वनिकारेण न तथा अलङ्कारादयः पृथक् प्रदर्शिताः। येऽन्यैरुक्ता रूपकादयोऽलङ्कारास्तेऽङ्गीक्रियन्ते। किन्तु सामान्येन परमतानुसारेण काव्यमलङ्कुर्वाणानामपि तेषां रसादिव्यञ्जकत्वे सत्येव तत्त्वमङ्गीक्रियते। एवं रूपकादेः रूपकप्रभृतेः, अलङ्कारवर्गस्यालङ्कारसमूहस्य रसादिविषये

---

१. 'हतां दो०' ज    २. 'पतितम०' च 'प्रतिभास्वस्य तु ध्व०' ज

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः [1]संलक्ष्यक्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः ।

---

उज्जीवनी ।

व्यञ्जकत्वे रसादिव्यञ्जकत्वे येयं लक्षणादिग् समीक्ष्यविनिवेशनरूपो यो निरूपणमार्गः । प्रदर्शित आविष्कृतः, तां दिशमनुसरन् तदनुसारेण, अन्यल्लक्षणमुत्प्रेक्षमाणः स्वतन्त्रं लक्षण सम्भावयन्, अलक्ष्यक्रमप्रतिभम् अलक्ष्यो न लक्ष्यः क्रमः यस्यास्तादृशी, प्रतिभा प्रतिभानं यस्य तथाभूतम् । अनन्तरोक्तमनन्तरमेवाव्यवहितपूर्वभावेनैव कथितं ध्वनेरात्मानं ध्वनेः काव्यात्मनः स्वरूपं, समाहितचेताः समाहितं सम्यगाहितं चित्तं यस्य तादृशः, मनः समाधायेत्यर्थः । सुकविः उपनिबध्नाति काव्यं सुकविः निबध्नाति यदि, तदा तस्य सुकवेः महान् आत्मलाभो भवति महतो कृतकृत्यता भवति इति अलक्ष्यक्रमव्यङ्ग्यध्वनिर्निरूपितः ।

अथ संलक्ष्यक्रमव्यङ्ग्यध्वनिं निरूपयितुमुपक्रमते—क्रमेणेति । अस्य विवक्षितान्यपरवाच्यध्वनेः । अनुस्वानसंनिभः घण्टायां वाद्यमानायां प्रधानशब्दप्रतीत्यनन्तर यथा क्षोदीयानपरोऽनुरणनानुस्वानप्रतिध्वन्यादिपदाभिधेयः शब्दविशेषः प्रतीयते तत्सन्निभस्तत्सदृशः । य आत्मा यः प्रकारः, क्रमेण पौर्वापर्येण, प्रतिभाति प्रतीयते सोऽपि विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमाख्यो यो भेदः सोऽपि शब्दार्थशक्तिमूलत्वात् शब्दशक्तिमूलत्वादर्थशक्तिमूलत्वाच्च, द्वेधा द्विप्रकारः । व्यवस्थितः द्वैविध्यं प्राप्त इत्यर्थः । तदेव विवृणोति—अस्येति । अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः, अभिधामूलध्वन्याख्या यो भेदः तस्य, संलक्ष्यक्रमव्यङ्ग्यत्वात् अनुरणनप्रख्यः अर्थयोः पौर्वापर्यक्रमस्य संलक्ष्यत्वादनुरणनध्वनिव्यपदेश्यः य आत्मा प्रकारः, सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः द्विविध इत्यर्थः, योऽयं शब्दशक्तिमूलध्वनिरित्युच्यते स च नानार्थस्थले सम्भवति । तत्र च शब्दस्य सर्वेष्वर्थेषु शक्तिः समाना । प्रकरणादिवशादभिधया प्राकरणिकार्थबोधानन्तरं द्वितीयो योऽर्थोऽप्राकरणिकः

---

१. 'सक्र०' ख

ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात् ॥

नापहृत इत्याह—

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते ।**
**यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥ २१ ॥**

यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम् ॥

वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

---

उज्जीवनी

तस्य ध्वनित्वे दोषमाशङ्क्य समाधत्ते—नन्विति । शब्दशक्त्या शब्दादभिधया, यत्र यस्मिन् काव्ये, अर्थान्तरं प्रकाशते अप्रकृतोऽर्थः तस्यैव शब्दस्य शक्त्या प्रतिपाद्यमानोऽन्योऽर्थः । स यदि ध्वनेः प्रकारः ध्वनिप्रभेद इति यदि उच्यते, तत् तर्हि, श्लेषस्य श्लेषाख्यस्य नानार्थसंश्रयस्यालङ्कारस्य विषय एवापहृतः स्यात् श्लेषाख्योऽलङ्कार एव न स्यात् । इयमाशङ्का । समाधानं तु नापहृत इति । एतद्विशदीकरणायाह—इत्याहेति । समाधानमेवाह आक्षिप्त इति । हि यतः, यस्मिन् काव्ये, शब्देन वाचकशब्देन, अनुक्तोऽनभिहितः, अलङ्कारो रूपकोपमादिः, शब्दशक्त्या शब्दस्य द्वितीयार्थबोधनसामर्थ्यवशाद्, आक्षिप्त एव प्रतीयमान एव, प्रकाशते प्रकटो भवति, स शब्दशक्त्युद्भवः शब्दशक्तिमूलध्वनिरित्युच्यते ।

विवृणोति—यस्मादिति । यस्माद् यतः, अलङ्कारो रूपकादिः, न तु वस्तुमात्रं न तु द्वितीयोऽर्थः, यस्मिन् काव्ये यत्र काव्यविशेषे, शब्दशक्त्या शब्दस्य शक्त्या, अर्थान्तरबोधनसामर्थ्येन, प्रकाशते भासते, स शब्दशक्त्युद्भवो ध्वनिरिति शब्दशक्तिमूलध्वनिरिति, अस्माकं विवक्षितं वक्तुमिष्टं, शब्दस्य शक्त्या यत्र वस्तुद्वयं प्रकाशते तत्र श्लेषः अलङ्कारः, स श्लेषालङ्कारस्य विषयः । उदाहरति—यथेति । विष्णुपक्षे—

**येन ध्वस्तम् अनोऽभवेन बलिजित्कायः पुरा स्त्रीकृतो**

यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः,
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

उज्जीवनी ।

यश्चोद्वृत्तभुजङ्गहा रवलयोऽगं गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥

येन देवकीतनयत्वेनावतीर्णेन विष्णुना, अनः शकटं, तद्रूपं रक्षः, कंसेन कृष्णनिग्रहार्थं प्रेषितं, ध्वस्तं नाशितम्, अभवेन अजातेन बलिजित्कायः बलिनोऽसुरान् जयतीति तादृशः कायो देहः, पुरा अमृतमथनसमये,स्त्रीकृतः मोहिनीरूपं प्रापितः यश्च उद्वृत्तभुजङ्गहा उद्वृत्तं धूर्तं भुजङ्गं कालियाख्यं सर्पं हन्तीति तादृशः। रवलयो रवे शब्दे लयो यस्य तथाभूतः। अगं गोवर्धनपर्वतं, गां च हिरण्याक्षेणापहृतां भूमिं वराहरूपेणावतीर्य यो विष्णुरधारयत् । यस्य विष्णोः अमरा देवाः, शशिमच्छिरोहर इति शशिनं पूर्णिमाचन्द्रं मथ्नातीति तादृशस्य शशिमथः राहोः शिरः शीर्षं हरतीति तथाविधः, इति स्तुत्यं प्रशंसार्हं नामाहुः कथयन्ति । अन्धकक्षयकरः अन्धकानां यादवानां, क्षयं नाशं, करोतीति तादृशः, सर्वदः सर्वाभीष्टप्रदायकः, माधवो माया लक्ष्म्याः धवः पतिर्विष्णुः, त्वां स्वयं पातु रक्षतु ।

शिवपक्षे—येन शिवेन, ध्वस्तमनोभवेन ध्वस्तः भस्मसात्कृतः मनोभवो मन्मथो येन तथाभूतेन, पुरा त्रिपुरदाहसमये, बलिजित्कायः बलिजितो विष्णोः कायो देहः, अस्त्रीकृतः शरः कृतः, तथा यः शिवः, उद्वृत्तभुजङ्गहारवलयः उद्वृत्ता वर्तुलाकाराः, भुजङ्गा एव हारावलयानि च यस्य तादृशः, गङ्गां च भागीरथीं च यः शिवः, अधारयत्; यस्य शिवस्य शिरः शशिमच्चन्द्रयुक्तम्, अमरा देवाः, यस्य स्तुत्यं स्तवार्हं, नाम नामधेय, हर इति चाहुः वदन्ति; सः तादृशः, अन्धकक्षयकरः अन्धकासुरस्य क्षयं नाशं करोतीति तादृशः, उमाधवः उमायाः पार्वत्याः, धवः पतिः, त्वां सर्वदा सर्वस्मिन्नपि काले स्वयं पायाद् रक्षतु। अत्र श्लेषोऽलङ्कारः। श्रुत्यैकयार्थप्रतिपादनं श्लेषः । अत्रैकया श्रुत्या विष्णुः पायात्, शिवः पायादिति चार्थद्वयस्याप्यभिधानात्, द्वयोरपि स्तोतव्यत्वेन प्रकृतत्वानपायाच्च श्लेषोऽलङ्कारः ।

नन्वलङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन । तत् पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्येदमुक्तम् 'आक्षिप्त' इति ॥

---

उज्जीवनी ।

आक्षिप्तत्वविशेषणव्यावर्त्यं प्रदर्शयति—नन्विति । अत्र भट्टोद्भटः—

एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्टमिहोच्यते ॥
अलङ्कारान्तरगतां प्रतिभां जनयत् पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत् प्रतीयताम् ॥

इति श्लेषाख्यमलङ्कारं लक्षितवान् ।

तस्य चोदाहरणम्—

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥

अत्र भगवती, किसलयवदाताम्रौ, भास्वन्तौ दीप्तिमन्तौ यौ करौ हस्तौ ताभ्यां विराजते । प्रभातसन्ध्या तु, पल्लववद् आताम्रैः, भास्वत आदित्यस्य करैर्मयूखैर्विराजते । अत्र चोभयत्रापि हलादीनां साम्यम् । अतस्तन्त्रेणोच्चारणस्य सम्भवादयमर्थश्लेषः ।

अस्वापफललुब्धेहितप्रदेत्यत्र तु भगवतीपक्षे—अस्वापे सुखेनाप्तुमशक्ये फले, लुब्धेभ्यः ईप्सितं प्रददातीत्यर्थः । प्रभातसन्ध्यापक्षे तु—स्वापस्य निद्रानुभवस्य फले श्रमनिवृत्तिलक्षणे यो न लुब्धः सन्ध्योपासनप्रवृत्तत्वात् तद्विषयं हितमदृष्टं समर्पयतीति तथाविधेत्यर्थः । अत्रैकस्मिन् पदे समुच्चारिते शब्दान्तरस्य तत्सादृश्यात् प्रतिपत्तिः । अतोऽयं शब्दश्लेषः ।

एतयोश्च द्वयोरपि अर्थश्लेषशब्दश्लेषयोरुपमाप्रतिभोत्पत्तिहेतुत्वम् । प्रभातसन्ध्या ह्यत्रोपमानम् । भगवती उपमेया । इव शब्द उपमानोपमेयभावं द्योतयति । शब्दव्यतिरेकेण तु साधारणो धर्मोऽर्थाधिकरणोऽत्र न विद्यते । तेन नेयमुपमा । अपि तु श्लेष उपमाप्रतिभोत्पत्तिहेतुः । द्विविधस्यापि श्लेषस्य

तदयमर्थः—यत्र शब्दशक्त्या साक्षादलङ्कारान्तरं वाच्यं सत् प्रतिभासते स सर्वः श्लेषविषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः॥

---

उज्जीवनी।

अर्थद्वयप्रतीत्यविनाभावेनैवालङ्कारत्वाभ्युपगमादर्थाश्रितत्वेनार्थालङ्कारतया अलङ्कारसर्वस्वकारादिभिरर्थालङ्कारत्वेन परिगणना कृता। अलङ्कारान्तर-प्रतिभायामपि श्लिष्टेन पदेनार्थद्वयस्य प्रतिपादनेऽपि तावन्मात्रे चमत्कृतिजन-कत्वस्य विश्रान्त्यभावात् तत्रालङ्कारान्तरस्योपमादेः प्रतिभानं तत्रापि, श्लेषव्यपदेशः श्लेषस्यैवालङ्कारत्वाभ्युपगमो भवति इति भट्टोद्भटेन स्वकीये काव्यालङ्कारसङ्ग्रहे प्रतिपादितम्। तत् तस्मात्। पुनरपि श्लेषेण यत्रार्था-न्तरस्य प्रतिभोत्पद्यते तत्रार्थान्तरस्यालङ्कारान्तरात्मकस्य श्लेषादेव प्रतीत्या, तादृशस्थले श्लेषस्यैवालङ्कारत्वं मुख्यमिति वचने शब्दशक्तिमूलध्वनिर्निरव-काश इत्याशङ्कायाम् 'आक्षिप्त' इत्युक्तम्।

विशेषणस्य सार्थक्यं प्रदर्शयति—तदिति। तदयमर्थः—यत्र यस्मिन् काव्ये (पद्ये) शब्दशक्त्या शब्दस्य योऽभिधाख्यो व्यापारस्तेन, साक्षात् तस्मादेव शब्दात्। अलङ्कारान्तरम् उपमाद्यात्मकं, वाच्यं सद् वाचकशब्दबोधितं सत्, प्रतिभासते प्रतिपाद्यते, स सर्वः श्लेषविषयः तत्रैव श्लेषव्यपदेशः। यत्र तु यस्मिन् काव्ये, शब्दशक्त्या, सामर्थ्याक्षिप्तं तस्यैव शब्दस्यार्थान्तरबोधकत्व-सामर्थ्याद् आक्षिप्तं व्यञ्जनागम्यं, वाच्यव्यतिरिक्तं वाच्यभिन्नं, व्यङ्ग्यमेवा-लङ्कारान्तरम् उपमाद्यात्मकं प्रकाशते स ध्वनेर्विषयः तदेव काव्यं शब्दशक्ति-मूलध्वनिव्यपदेशमर्हतीत्यर्थः॥

अत्रेदमवधेयम्—भट्टोद्भटकृते श्लेषोदाहरणपद्ये उपमादेरलङ्कारान्तरस्य प्रतिभानमिवादिशब्दैरभिधीयमानमेव प्रदर्शितम्। तत्र च काव्यालङ्कारः श्लेषो वा, उपमा वा प्राधान्येन परिगणनीयेति सन्देहे श्लेष एवालङ्कारस्तत्र व्यपदिश्यत इत्युक्तम्। उपमादेस्तत्र व्यङ्ग्यत्वस्यैवाभावान्न तत्र ध्वनिः सावकाशो भवति। अतस्तादृशस्थले ध्वनेः सावकाशत्वसम्पादनायाक्षिप्तत्वविशेषण-मित्युक्तं चिन्त्यम्।

शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा—

तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद् विरोधालङ्कारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः ॥

अलक्ष्यक्रम[1]व्यङ्ग्यस्य तु ध्वनेर्वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य विषय एव । यथा ममैव—

---

उज्जीवनी ।

शब्दशक्त्येति—शब्दस्य नानार्थस्य शक्त्या सङ्केतितत्वेनैवार्थान्तरस्यालङ्काररूपस्य प्रतिभानं दर्शयति—यथेति । तस्या इति । तस्या नायिकायाः पयोधरौ वक्षोजौ, हारेण स्रजा विनापि हारिणौ हारवन्ताविति विरोधः, अपिशब्देन वाच्य एव भवति । वस्तुतो वास्तवस्य विरोधस्यालङ्कारत्वं नास्ति । अतस्तत्परिहारः, हारिशब्दादर्थान्तरबोधने सति भवति । हरतः (हृदयं) इति हारिणौ रमणीयावित्यर्थः । अत्र श्लेषेण विरोधालङ्कारस्य प्रतिभा जायते । नायं ध्वनेर्विषयः, किन्तु श्लेषस्यैव ॥

अत्रेति । अत्रास्मिन् पद्ये, शृङ्गारव्यभिचारी विभावानुभावव्यभिचारिसंयोगादास्वाद्यमानो रत्याख्यः स्थायीभावः तस्य व्यभिचारिभावः, सञ्चारिभावो विस्मयात्मकः भावः, साक्षाच्छब्दशक्त्या प्रतिभासमानो विरोधालङ्कारश्च वर्तत इति विरोधच्छायानुग्राहिणः विरोधालङ्कारप्रतिभोत्पत्तिहेतोः श्लेषस्य श्लेषाख्यस्यैवायं विषयः ।

अनुस्वानोपमव्यङ्ग्यस्य अनुस्वानेनानुरणनेनोपमा सादृश्यं यस्य तथाविधस्य व्यङ्ग्यस्य प्रतीयमानार्थरूपस्य ध्वनेः, शब्दशक्तिमूलध्वनेस्तु नायं विषयः । तु किन्तु वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य व्यञ्जनागम्यस्य शृङ्गाररसस्य अलक्ष्यक्रमव्यङ्ग्यस्य असंलक्ष्यक्रमव्यङ्ग्यात्मकस्य ध्वनेरयं विषय एव ।

---

१. 'प्रतिभस्य' ख. ग., प्रतिभासस्य ज.

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥

अत्र वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः प्रतीयते ॥

यथा च—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

---

उज्जीवनी

अलङ्कारान्तरप्रतिभोत्पत्तिहेतोः श्लेषस्य स्वकीयमुदाहरणं प्रदर्शयति—यथा ममैवेति । श्लाघ्येति । सुदर्शनकरः सुदर्शनं चक्रं करे यस्य तादृशः । चरणारविन्दललितेन चरणारविन्दस्य पादपद्मस्य ललितेन लीलया, आक्रान्तलोकः आक्रान्तो मितः लोकस्त्रिभुवनं येन तथाभूतः । चन्द्रात्मचक्षुः चन्द्रात्मा चन्द्ररूपं चक्षुः नयनं दधत् धारयन्, हरिः कृष्णः, श्लाघ्याशेषतनुं श्लाघ्या प्रशंसनीया, अशेषा सकला, तनुः शरीरं यस्यास्ताम् । सर्वाङ्गलीलाजितत्रैलोक्यां सर्वेषामङ्गानामवयवानां, लीलया जितं त्रैलोक्यं त्रिभुवनं यस्यास्ताम् । इन्दुरूपं चन्द्रात्मकम्, अखिलं मुखं वदनं, बिभ्राणां बिभ्रतीं, यां स्वतनोः स्वदेहाद्, अधिकामुत्कृष्टाम् । स्थाने युक्तमेव, अपश्यद् दृष्टवान्, सा तथाविधा, रुक्मिणी कृष्णस्य पत्नी । वो युष्मान्, अवतु रक्षतु इत्यर्थः ।

अत्र हरेः रुक्मिण्या उत्कर्षात्मको व्यतिरेकालङ्कारो वाच्यः । श्लेषस्तु व्यतिरेकप्रतिभोत्पत्तिहेतुः । चक्रिणः सकाशादुत्कर्षः, शोभनं दर्शनं यस्य तादृशो रमणीयः करः यस्य तादृश इति सुदर्शनकरशब्दश्लेषेण हरेः कर एव रमणीयः, देव्यास्तु सर्वा तनुः रमणीया इति, यो हरिः त्रिविक्रमरूपेणावतीर्णः, पादेन लोकत्रयं ममौ, तस्मात् सर्वाङ्गलीलया त्रैलोक्यं जितवत्या उत्कर्षः । पादेन लोकानाक्रान्तवान् जितवानिति श्लेषेण, हरिः पादमात्रेण त्रिलोकीं जितवान्, रुक्मिणी तु सर्वाङ्गैरिति । एवं यस्य चक्षुश्चन्द्ररूपं, तस्माच्चन्द्रमुख्या उत्कर्षः, चक्षुर्मात्रेण चन्द्रवानिति श्लेषेण, हरेश्चक्षुर्मात्रं चन्द्रात्मकं देव्यास्तु मुखं चन्द्रात्मकमिति प्रतिभासते ।

यथा वा—

> चमहिअमाणसकञ्चणपंकअणिम्महिअ परिमळा जस्य ।
> अखण्डिअदाणप्पसरा बाहुप्पळिहा व्विअ गइन्दा ॥

[खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य ।
अखण्डितदानप्रसरा बाहुपरिघा इव गजेन्द्राः ॥ इति छाया]

अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते ।

---

### उज्जीवनी ।

उदाहरणान्तरं दर्शयति—यथा चेति । भ्रमिमिति । नायिकावस्थां नायकमावेदयितुं सख्या सामान्यतो वर्षावर्णनापरा उक्तिरियम् । जलदभुजगजं जलदो मेघ एव भुजगः सर्पः तज्जं विषं जलमेव गरलं, वियोगिनीनां विरहिणीनां, प्रसह्य बलात्कारेण, भ्रमिं भ्रमणं, मूर्धादिविकारकारिणमान्तरं विकारं चेतसोऽनवस्थानं वा । अरतिं विषयेष्वनभिलाषमरुचिं वा, अलघ्नहृदयानाम् अलसं हृदयं यासां तादृशीनां भावस्ताम् । (उदासीनताम्) । प्रलयं बहिरिन्द्रियचेष्टाराहित्यं, मूर्च्छां बाह्याभ्यन्तरेन्द्रियचेष्टाराहित्यं, तमः, तमोगुणोद्रेकेणान्ध्यं शरीरसादं कार्श्यं, मरणं मरणप्रागभावावस्थां च कुरुते करोति ।

यथा वेति । खण्डितेति । राजानं प्रति कस्यचिदुक्तिरियम् । खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमलाः खण्डितैः विदीर्णैः (शत्रूणां) मानसैरेव काञ्चनपङ्कजैः कनककमलैः निर्मथित उद्भावितः परिमलः प्रतापोत्कर्षो येषां तादृशाः अखण्डितदानप्रसराः अखण्डितो विच्छेदरहितः, दानस्य प्रसरः प्रसृमरत्वं येषु तादृशाःयस्य राज्ञो बाहुपरिघाः लोहदण्डवद् दृढा बाहवः एव तद्रूपाः गजेन्द्राः । खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमलाः खण्डितानां मानसस्य मानससरसः, काञ्चनपङ्कजानां स्वर्णकमलानां निर्मथितो निर्मन्थनात्, विमर्दनादुत्थः परिमलो गन्धो येषु तादृशाः । अखण्डितदानप्रसराः अखण्डिताः अविच्छिन्नाः, दानस्य मदजलस्य प्रसरा येषु तादृशाः, शोभन्त इति शेषः ।

अत्र श्लेषो रूपकच्छायामनुगृह्णाति । वाच्यतयैव अभिधेयतयैव, अवभासते प्रतिभासते ।

---

१. 'च्चिअ' ख.

स चाक्षिप्तोऽलङ्कारो यत्र पुनः शब्दान्तरेणाभिहितस्वरूपः, तत्र न शब्द-शक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः। तत्र वक्रोक्त्यादिवाच्यालङ्कार-व्यवहार एव ॥

यथा—

> दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया
> तेनैव स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे ।
> एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
> र्गोप्यैवं गदितः सलेशमवताद् गोष्ठे हरिर्वश्चिरम् ॥

---

उज्जीवनी ।

स चेति । एवमाक्षिप्तः व्यक्तिविषयीभूतः अलङ्कारो, यत्र पुनः नानार्थ-शब्दप्रयोगस्थले, शब्दान्तरेण केनापि शब्देन अभिहितस्वरूपः अभिहितमभिधया प्रतिपादितं स्वरूपं यस्य तादृशोऽलङ्कार इत्यर्थः । तत् तस्मिन् काव्ये, शब्दशक्त्यु-द्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः शब्दशक्तिमूलध्वनिव्यपदेशः नास्त्येव । तत्र तादृशस्थले, वक्रोक्त्यादिवाच्यालङ्कारव्यवहार एव उक्तिवैचित्र्यरूपया ये वाच्या अलङ्काराः, तैरेव व्यवहार इत्यर्थः ।

उदाहरति—यथेति । दृष्ट्येति । हे केशव, हे कृष्ण, गोपरागहृतया गवां परागैः खुरोद्धतैर्धूलिभिः, हृतया आवृतया, दृष्ट्या, मया किञ्चिन्न दृष्टं नाव-लोकितम् । तेनैव हेतुना स्खलितास्मि, निम्नोन्नते मार्गे भ्रष्टास्मि । हे नाथ, पतितां मां किं नाम नालम्बसे कुतो नावलम्बं ददासि । विषमेषु निम्नोन्नत-प्रदेशेषु खिन्नमनसां खिन्नं सञ्चाराशक्ततया खेदमनुभवतां, सर्वाबलानां बल-रहितानां बालानां वृद्धानां स्त्रीणां च, त्वमेकः गतिः आश्रयः । इति एवं गोष्ठे व्रजे, गोप्या गोपाङ्गनया कयाचित्, सलेशं ससूचनं, गदित उक्तः, हरिः कृष्णः, वो युष्मान् चिरं बहुकालं, पातु रक्षतु । अत्र शब्दशक्त्यान्योऽप्यर्थो बोध्यते—केशवगोपरागहृतया केशवगेन केशवगतेन, उपरागेणानुरागेण हृतया दृष्ट्या मत्या, मया किंचिदपि न दृष्टं न चिन्तितम् । तेनैव तत एव स्खलितास्मि चारित्र्याद् भ्रष्टास्मि । हे नाथ ! प्रभो ! पतितां पतिभावं भर्तृत्वं, कुतो नालम्बसे कस्मान्नाश्रयसि । कुतो मे पतिर्न भवसीत्यर्थः । विषमेषुखिन्नमनसां विषमेषुणा पञ्चबाणेन खिन्नं पीडितं मनो यासां तादृशीनां, सर्वाबलानां सर्वासामपि कामिनीनां त्वमेको गतिः अवलम्ब इति ।

एवञ्जातीयक: सर्व एव भवतु कामं वाच्यश्लेषस्य विषय:। यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषय: ॥

---

## उज्जीवनी ।

अत्र प्रकरणवशात् प्राथमिकार्थबोध: प्रथमं जायते । तेनाभिधायां विरतायां सलेशमित्यनेन सूचितोऽन्योऽप्यर्थ: प्रतीतिविषयो भवति । उक्तिवैचित्र्यरूपस्य द्वितीयार्थस्य वक्रोक्त्यलङ्कारात्मकस्य प्रतिभां जनयन् श्लेषोऽत्रालङ्कार: । स चालङ्कारान्तरप्रतिभामुद्भावयति । तस्य च द्वितीयस्यार्थस्य प्रतीयमानतायां ध्वनिकाराभिमतायामपि सलेशपदजन्यप्रतीतिविषयतया वाच्यायमानतयात्र आक्षिप्तत्वाभावान्नायं ध्वनेर्विषय: ।

तदेवाह—एवञ्जातीयक इति । एवञ्जातीयक एवंविध: सर्व एव सकलोऽप्यलङ्कारवर्ग:, कामं यथाभिमतं वाच्यश्लेषस्य वाच्यस्य श्लेषाख्यस्यालङ्कारस्य विषयो भवतु । यत्र तु यस्मिन् स्थले सामर्थ्याक्षिप्तं शब्दस्य तस्यैवार्थान्तरबोधकत्वसामर्थ्येन, आक्षिप्तं व्यक्तिगम्यं सत् । अलङ्कारान्तरं श्लेषादन्योऽलङ्कार: । शब्दशक्त्या अभिधाद्वारा प्रकाशते प्रतिभासते, स सर्व एव तादृश आक्षिप्तरूप एव सर्वोऽप्यलंकार:, ध्वने: शब्दशक्तिमूलालङ्कारध्वनेर्विषय: ।

अत्रेदमवधेयम्—आक्षिप्त एवालङ्कार इति कारिकायाम् अवधारणार्थकेनैवकारेण आक्षिप्तशब्दोत्तरं प्रयुक्तेन अभिधेयत्वं व्यवच्छिद्यते । नानार्थस्थले प्रकरणादिवशात् प्राकरणिकेऽर्थे गृहीततात्पर्येण पुंसा तस्य प्रथममुपस्थितौ जातायां तस्यैव शब्दस्यार्थान्तरबोधजननसाथ्र्येन द्वितीयोऽप्यर्थोऽत्रगम्यते । तस्यापि प्राकरणिकत्वसम्भवे उभयोरपि तयोरर्थयो: शक्तेस्तुल्यत्वात् श्रुत्यैकयानेकार्थप्रतिपादनात्मक: श्लेषाख्योऽलङ्कार: ।

यत्र तु द्वितीयार्थस्य प्राकरणिकत्वं न सम्भवति तत्र प्राकरणिकार्थबोधनेन क्षीणशक्तिरभिधा तत्पदशक्तिविषयमन्यमप्यर्थं बोधयितुमसमर्थेति तस्य व्यञ्जनावेद्यत्वमङ्गीकुर्वते केचिदालङ्कारिका: । श्रीमदानन्दवर्धनाचार्यस्याप्यभिमतोऽयमेवाभिप्राय इति स्पष्टमवगच्छाम: ।

अर्थो हि सहृदयश्लाघ्य: वाच्यो व्यङ्ग्यश्चेति द्विविध: । वाच्यो वस्त्वलङ्कारात्मना द्विविध: । व्यङ्ग्यो वस्त्वलङ्कारसात्मना त्रिविधश्चेति जानीम: ।

यथा—"अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः।"

---

उज्जीवनी

नानार्थस्थले प्रकृतार्थविषयकशाब्दबोधानन्तरं तस्यैव शब्दस्यार्थान्तरबोधनसामर्थ्येन द्वितीयार्थस्य वस्तुरूपस्यालङ्काररूपस्य वा बोधो भवति। स च व्यङ्ग्य इति मन्यते यैस्तन्मते द्वितीयस्यार्थस्य वस्तुमात्रस्वरूपेणावस्थितिं विना अलङ्कारच्छायायामवगम्यमानायां यत्रालङ्कारवाचका अप्यादिशब्दा न प्रयुक्ताः तत्र आक्षिप्तो व्यञ्जनाव्यापारगम्यः सोऽर्थः शब्दशक्तिमूलालङ्कारध्वनेर्विषयः। द्वितीयोऽर्थो यद्यलङ्कारस्वरूपं भजते तदा व्यङ्ग्य एव स ध्वनिविषयः, अन्यथा तु तत्तदलङ्कारान्तरप्रतिपत्तिहेतुः श्लेष एव तस्मिन् काव्येऽलङ्कारः। यत्र तु वस्तुस्वरूपमात्रेणावतिष्ठते द्वितीयोऽर्थस्तस्याप्रकृतार्थस्यापि व्यञ्जनाव्यापारगम्यत्वाभ्युपगमात् सोऽर्थः शब्दशक्तिमूलध्वनेर्विषय इति शब्दशक्तिमूलध्वनिरपि वस्त्वलङ्काररूपेण द्विविधः। यद्यपि ग्रन्थकृता द्विविध इति कण्ठतो नोक्तस्तथापि आक्षिप्त एवेति आक्षिप्तशब्दोत्तरम् एवकारप्रयोगेण, अलङ्कारशब्दस्य, वस्तुमात्ररूपेणानवस्थितस्य अलङ्काररूपं बिभ्रत इत्यर्थवर्णनात्मकेन 'अलङ्कारो न वस्तुमात्रम्' इति व्याख्यानेन चास्यैतदभिप्रायकत्व मुचितं प्रतिभाति।

श्लेषस्य शब्दशक्तिमूलध्वनेश्च विषयभेदप्रदर्शनप्रस्तावावसरे श्लेषविषयमुदाहृत्य ध्वनिविषयमुदाहरति—यथेति। अत्रान्तर इति। बाणभट्टविरचिते हर्षचरिते द्वितीयोच्छ्वासे ग्रीष्मसमयवर्णनात्मकं गद्यमिदम्। अत्रान्तरे अस्मिन्नवसरे, कुसुमसमययुगं वसन्तर्तुमासद्वयात्मकं कालमुपसंहरन् समाप्तिं नयन्, फुल्लमल्लिकाधवलाट्टहासः फुल्लाः विकसिताः मल्लिकाः मल्लिकाकुसुमान्येव धवलाः अट्टहासाः महाहासाः यस्य तादृशः। ग्रीष्माभिधानः ग्रीष्म इत्यभिधानं नामधेयं यस्य तादृशः। महाकालः महान् कालः अजृम्भत उल्लास। अयं प्रकृतोऽर्थः। तद्बोधनेन क्षीणशक्तौ अभिधायां, महाकालस्य शिवरूपार्थान्तरबोधनसामर्थ्येन विशेषणानां श्लेषेण च द्वितीयोऽप्यप्रकृतोऽर्थो व्यञ्जनया बोध्यते। कुसुमयुगं वसन्तर्तुतुल्यं युगं कालम् उपसंहरन्, संहरन् फुल्लमल्लिकाधवलाट्टहास, फुल्लमल्लिकावद् धवलः अट्टहासः यस्य तादृशो महाकालः शिव इति।

यथा च—

> उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।
> पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम्॥

यथा वा—

> दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
> पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः।
> दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
> गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥

---

## उज्जीवनी

द्वितीयमुदाहरणमाह—**यथा चेति**। **उन्नत इति**। उन्नतो यौवनवशात् पृथुः, **प्रोल्लसद्धारः** प्रोल्लसन् प्रकाशमानो हारः मुक्ताहारो यस्य तादृशः, **कालागुरुमलीमसः** कालः कृष्णवर्णः, योऽगुरुः सुगन्धिधूपद्रव्यविशेषस्तेन तल्लेपनेन मलीमसः कृष्णः, **तन्व्याः** स्त्रियः, **पयोधरभरः** कुचभारः, कं कं जनम् अभिलाषिणं न चक्रे कामयमानं नाकरोद् इति प्रकृतोऽर्थः। अत्रापि पयोधर-शब्दस्य मेघरूपार्थान्तरबोधजननसामर्थ्यात् प्राथमिकार्थबोधेन विरतायामभिधायाम् अर्थान्तरं शब्दात्तस्मादेवाक्षिप्यते। **उन्नतः** उच्छ्रितः, प्रोल्लसन्ती धारा यस्मात्तथाविधः, कालागुरुवन्मलीमसो मलिनः, पयोधरभरो मेघपङ्क्तिरिति।

तृतीयमुदाहरणं प्रदर्शयति—**यथावेति**। **दत्तानन्दा इति**। मयूरकवि-विरचिते सूर्यशतके रविकिरणवर्णनात्मकं पद्यमिदम्। **समुचितसमयाक्लिष्टसृष्टैः** समुचिते समये वर्षर्तौ, अक्लिष्टं क्लेशेन विनैव, सृष्टैः वृष्टैः, **पयोभिर्जलैः**, **प्रजानां** जनानां, **दत्तानन्दाः** दत्तो वितीर्णः, आनन्दो यैस्तादृशाः, **पूर्वाह्णे** अह्नो दिवसस्य पूर्वभागे प्रभाते, **दिशि दिशि** सर्वासु दिक्षु, **विप्रकीर्णाः** व्याप्ताः। **अह्नि विरमति** सति, **संहारभाजः** संहृतिं भजमानाः। **दीर्घदुःखप्रभवभव-भयोदन्वदुत्तारनावः** दीर्घस्य महतः दुःखस्य, प्रभवः उत्पादकः, यो भवः संसारः, तस्माद् यद् भयं भीतिस्तस्योत्तारे उत्तारणे, नावः नौकारूपाः, **दीप्तांशोः** सूर्यस्य, **गावः** किरणाः, **पावनानां** परिशुद्धात्मनां, **वो** युष्माकम्, **अपरिमिताम्** अपरिच्छिन्नां, **प्रीतिमानन्दं**, **परं** केवलम्, **उत्पादयन्तु** जनयन्तु॥

एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्या-सम्बद्धार्थाभिधायित्वं मा प्रासाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरुपमानो-पमेयभावः कल्पयितव्यः सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति, विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः ॥

अन्येऽपि चालङ्काराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ सम्भवन्त्येव । तथा हि विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यते । यथा

---

उज्जीवनी ।

एवं गोशब्दस्य किरणात्मकप्राकरणिकार्थबोधनेन विरतव्यापाराभिधा, गोशब्दस्य धेनुरूपार्थान्तरबोधनसामर्थ्येन अर्थान्तरव्यक्तिमुत्पादयति । प्रजानां शिशूनां, समुचिते समये प्रभातादौ, क्लेशेन विना वितीर्णैः, पयोभिर्दुग्धैः, दत्तानन्दा आनन्दसन्दायिन्यः, पूर्वाह्णे प्रभाते, दिशि दिशि सर्वदिक्षु, विप्रकीर्णा घासग्रासाय प्रेषिताः, अह्नि विरमति सायाह्नि, संहारभाजः गोष्ठमुपगताः गावो धेनव इति ॥

एषूदाहरणेष्विति । एषु पूर्वोक्तेषु अत्रान्तरे, उन्नतः प्रोल्लसद्धारः, दत्तानन्दा इति त्रिषूदाहरणेषु, शब्दशक्त्या अनेकार्थशब्दादभिधया वाच्यार्थ-बोधानन्तरम् अप्राकरणिकेऽप्रकृते, अर्थान्तरे द्वितीयस्मिन्नर्थे प्रकाशमाने, व्यक्त्या प्रतिपाद्यमाने, वाक्यस्य अर्थान्तरबोधजननाकूलस्य वाक्यान्तरस्य, असम्बद्धा-र्थान्तराभिधायित्वं प्रकृतेनार्थेन सम्बन्धरहितस्यार्थान्तरस्याभिधानात्मकत्वं मा प्रासाङ्क्षीद् मा भूदिति तत्परिहाराय अप्राकरणिकस्य प्राकरणिकस्य चार्थस्य प्रथमे—ग्रीष्मसमयशिवयोः, द्वितीये—कुचभरमेघयोः, तृतीये—किरणधेन्वोश्च, उपमानोपमेयभावः सम्बन्धः कल्पयितव्यः, कल्पनीयः । स च सामर्थ्याद् अर्थान्तरबोधजननशक्तिमत्त्वाद् अयम् अत्रत्यः श्लेषः, द्वितीयोऽ-प्रकृतोऽर्थश्च न शब्दारूढः, शब्दात् तदभिधानसामर्थ्ये सत्यपि न तस्मादभि-धेयतां प्राप्नोति, इति हेतोः श्लेषादलङ्काराद्, अनुस्वानोपमव्यङ्ग्यस्य (संलक्ष्यक्रमव्यङ्ग्यस्य) शब्दशक्तिमूलध्वनेश्च विषयो विभिन्न एव । तथा च द्वितीयोऽर्थो वाच्यश्चेत्श्लेषः, आक्षिप्तश्चेच्छब्दशक्तिमूलध्वनिरिति विवेकः । तत्रापि द्वितीयोऽर्थो यद्यलङ्काररूपतां भजते, तत्र तत्तदलङ्कारवाचकशब्दानां समवधाने तत्तदलङ्कारप्रतिभोत्पत्तिहेतुः श्लेषः, तद्विरहे तत्तदलङ्कारध्वनिः ॥

स्थाण्वीश्वराख्यजनपदवर्णने भट्टबाणस्य—"यत्र च मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च प्रमदाः"।

अत्र हि वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम्। साक्षाच्छब्देन विरोधालङ्कारस्याप्रकाशितत्वात्।

---

उज्जीवनी

तदेवाह—अन्येऽपीति। शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ शब्दशक्तिमूलानुरणनध्वनौ, अन्येऽपि इतरेऽपि, अलङ्काराः स्वस्ववाचकशब्दरहिताः, सम्भवन्त्येव ध्वनिविषया भवन्त्येव। तथाहि विरोधोऽपि विरोधालङ्कारोऽपि, शब्दशक्तिमूलानुस्वानरूपः शब्दस्यान्यार्थबोधकत्वशक्त्या, अनुरणनात्मकः दृश्यते। उदाहरति—यथेति। बाणभट्टविरचिते हर्षचरिते स्थाण्वीश्वराख्यस्य जनपदस्य देशस्य, वर्णनावसरे गद्यमिदं दृश्यते। यत्रेति। यत्र स्थाण्वीश्वराख्यजनपदे, प्रमदाः कामिन्यः, मातङ्गगामिन्यः मातङ्गान् शबरान् अभिगन्तुं शीलमासामिति तादृश्यः, शीलवत्यश्च चारित्रवत्यश्चेति विरोधः। परिहारस्तु, मातङ्गगामिन्यः मत्तेभगमना इति। गौर्यः पार्वतीरूपाः, विभवरताः विभवे भवरहिते स्थाने, रता आसक्ता इति विरोधः, गौरवर्णा विभवे वित्ते रता इति परिहारः। श्यामाः कृष्णवर्णाः, पद्मरागिण्यश्च पद्मस्य राग इव रागो (वर्णः) यासां तादृश्यः इति विरोधः। श्यामाः सर्वाङ्गसुन्दर्यः, पद्मरागमणियुक्ताश्चेति तत्परिहारः। धवलद्विजशुचिवदनाः धवलानां शुद्धानां, द्विजानां ब्राह्मणानाम् इव, शुचि निर्मलं वदनं यासां तथाविधाः, मदिरामोदिश्वसनाश्च मदिरावद् आमोदि सुरभि श्वसनं श्वासो यासां तादृश्यः इति विरोधः। धवलैः श्वेतैः, द्विजैः दन्तैः, शुचि वदनं यासामिति तत्परिहारः।

अत्रेति। अत्र पूर्वोक्तस्थले, वाच्यः अभिधाव्यापारगम्यः। विरोधः विरोधालङ्कारः। वा अथवा, तच्छायानुग्राही तत्प्रतिभोत्पत्तिहेतुः, श्लेषः श्लेषालङ्कारः, अयमिति वक्तुं न शक्यं वक्तुं नोचितम्। शब्देन अपिना, साक्षाद् विरोधरूपस्य, अर्थस्यालङ्कारात्मकस्य, अप्रकाशितत्वात् प्रकाशनाभावात्॥

यत्र हि साक्षाच्छब्दावेदितो विरोधालङ्कारस्तत्र हि श्लिष्टोक्तौ वाच्यालङ्कारस्य विरोधस्य श्लेषस्य वा विषयत्वम्। यथा—तत्रैव "समवाय इव विरोधिनां पदार्थानाम्। तथाहि—सन्निहितबालान्धकारापि भास्वन्मूर्तिः" इत्यादौ। यथा वा ममैव—

सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम्।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम्॥

अत्र हि शब्दशक्तिमूलानुरणनरूपो विरोधः स्फुटमेव प्रतीयते।

एवंविधो व्यतिरेकोऽपि दृश्यते। यथा ममैव—

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये।

---

## उज्जीवनी।

यत्र हि यस्मिन् काव्ये, विरोधालङ्कारो विरोधाख्योऽलङ्कारः, साक्षात् शब्देन आवेदित आविष्कृतः। तत्र हि तस्मिन् काव्ये, श्लिष्टोक्तौ अर्थद्वयप्रतिपादकशब्दप्रयोगस्थले, विरोधस्य श्लेषस्य वा, वाच्यस्यालङ्कारस्य विषयत्वं, तत्र विरोधो वा श्लेषो वा अलङ्कार इति वक्तव्यम्। उदाहरति—तत्रैवेति। तत्रैव हर्षचरित एव। समवाय इति। वर्णनीया गायत्री। विरोधिनां परस्परं विरुद्धानां, पदार्थानां वस्तूनाम्। समवाय इवैकत्रावस्थानमिव। तदेवोपपादयति—तथाहीति। सन्निहितबालांधकारापि सन्निहितः सन्निधिं प्राप्तो, बालो नूतनोऽन्धकारः तमः यस्यास्तादृश्यपि। भास्वन्मूर्तिः भास्वतः सूर्यस्येव मूर्तिर्यस्यास्तादृशीति विरोधः। सन्निहिताः बालाः केशा एव अन्धकारो यस्यास्तादृशी, भास्वती चकासती मूर्तिर्यस्यास्तादृशीति परिहारः। अत्र समवाय इव विरोधिनां पदार्थानामिति वचनाद् विरोधस्य वाच्यत्वम्॥

स्वकीयमुदाहरणं विरोधध्वनेर्दर्शयति—यथा वा ममैवेति। सर्वेति। सर्वेषामेकं मुख्यं शरणं गृहम्, अक्षयं गृहभिन्नमिति विरोधः। सर्वेषामेकं रक्षितारमविनाशिनमिति परिहारः। धियां बुद्धीनामीशो न भवतीत्यधीशस्तम्। धीशं धियामीशमिति विरोधः। अधीशमधिपतिमिति परिहारः। हरिं हरितवर्णं कृष्णमिति विरोधः। विष्णुं कृष्णनामानमिति परिहारः। चतुरः

ये मूर्ध्वस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥

एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकाराः सन्ति, ते सहृदयैः स्वयमनुसर्तव्याः। इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृतः।

---

उज्जीवनी।

क्रियासु कुशलः, आत्मा यस्य तादृशं चतुरात्मानम्। निष्क्रियं क्रियाशून्यमिति विरोधः। चत्वारः कृष्णबलभद्रप्रद्युम्नानिरुद्धरूपा आत्मानो यस्य तादृशमिति परिहारः। अराणि अस्मिन् सन्तीति अरिं चक्रं तस्य नाशकं, चक्रधरं चक्रं धरतीति तादृशमिति विरोधः। अरिमथनम् अरीणां शत्रूणां, नाशकमिति परिहारः। तादृशं भगवन्तं नमत नमस्कुरुत, इत्यर्थः।

उपपादयति—अत्रेति। अत्र हि अस्मिन् स्थले, विरोधो विरोधालङ्कारः। शब्दशक्तिमूलानुस्वानरूपः शब्दशक्तिमूलानुरणनात्मकः। स्फुटमेव स्पष्टमेव, प्रतीयते भासते। विरोधवाचकपदाभावात्।

अलङ्कारान्तरस्य व्यङ्ग्यत्वं प्रदर्शयति—एवंविध इति। एवंविधः शब्दशक्तिमूलानुरणनव्यङ्ग्यः व्यतिरेकालङ्कारोऽपि दृश्यते। स्वकीयमेवोदाहरणं प्रदर्शयति—यथा ममैवेति। खमिति। ये पादाः किरणाः, (सूर्यस्य) लूनतमसः लूनं नाशितं तमो यैः तादृशाः, खमाकाशम्, अत्युज्ज्वलयन्ति अतितरां प्रकाशयन्ति। ये वा पादाः चरणाः, नखैः नखरैः, उद्भासिनः उद्भासनशीलाः। ये पादाः किरणाः, सरोरुहश्रियमपि सरोरुहाणां शोभामपि, पुष्णन्ति वर्धयन्ति। ये पादाश्चरणाः, क्षिप्ताः दूरीकृताः, अब्जानां कमलानां, भाः कान्तिः यैस्तयाविधाः। ये पादाः किरणाः क्षितिभृतां पर्वतानां, मूर्धसु शिखरेषु, अवभासिनः शोभमानाः। ये पादाश्चरणाः, अमराणां देवानां, शिरांसि आक्रामन्ति ये देवैः शिरोभिः स्पृश्यन्ते, देवैर्नम्यन्त इत्यर्थः। दिनकरस्य रवेः, उभयेऽपि उभयरूपाः अपि, पादाश्चरणाः, वो युष्माकं, श्रियै क्षेमाय सम्पदे, सन्तु भवन्तु।

अत्र दिनपतेश्चरणेभ्यस्तत्किरणानामुत्कर्षो व्यतिरेकात्मा तद्वाचकशब्दानभिधेयो व्यज्यत इति शब्दशक्तिमूलव्यतिरेकालङ्कारध्वनिः।

**अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते ।**
**यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः ॥ २२ ॥**

यत्रार्थः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव, सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनिः ।

यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

उज्जीवनी ।

एवमिति । एवमुक्तप्रकारेण, शब्दशक्तिमूलानुरणनव्यङ्ग्यात्मकस्य ध्वनेः प्रकाराः सन्ति विद्यन्ते । ते सहृदयैः काव्यवासनापरिपक्वहृदयैः, स्वयमनुसर्तव्याः स्वयमेवावगन्तव्याः । इह तु अस्मिन् ग्रन्थे तु, ग्रन्थविस्तरभयात् तत्प्रपञ्चः न कृतः अतिविस्तरो न विहितः ।

अर्थशक्तिमूलध्वनिं निरूपयति—अर्थेति । यः अर्थः तात्पर्येण वक्तुरिच्छया, स्वतः स्वस्मादेव शब्दात् । उक्तिं विनाभिधानं विना, अन्यद् वस्तु वस्त्वन्तरं व्यनक्ति व्यञ्जनया बोधयति । सोऽर्थः, यत्र यस्मिन् काव्ये, प्रकाशते प्रतीयते, स तु अन्यः शब्दशक्तिमूलादितरः, अर्थशक्त्युद्भवः अर्थशक्तिमूलो ध्वनिरिति समाम्नात इति शेषः ।

विवृणोति—यत्रेति । यत्र यस्मिन् काव्ये, अर्थः शब्दाभिधेयः सामर्थ्याद् अर्थान्तरबोधजननानुकूल्येन, अर्थान्तरं चमत्कृतिजनकमन्यमर्थं, शब्दव्यापारं विनैव, शब्दस्य यो व्यापारोऽभिधारूपस्तं विनैव, अभिव्यनक्ति व्यञ्जयति, सः, अर्थशक्त्युद्भवो नाम अर्थशक्तिमूलो नामानुस्वानोपमव्यङ्ग्यः अनुस्वानेनानुरणनेन, उपमा सादृश्यं यस्य तादृशं व्यङ्ग्यं व्यङ्ग्योऽर्थः यस्य तादृशो ध्वनिः अनुरणनध्वनिः, संलक्ष्यक्रम इति यावत् ।

उदाहरति—यथेति । एवं वादिनीति । देवर्षौ नारदे, एवंवादिनि विवाहवृत्तान्तं वदति सति, पितुः हिमवतः, पार्श्वे स्थिता पार्वती । अधोमुखी कुमारीस्वभावादवनतवदना सती । लीलाकमलपत्राणि लीलया करतलगृहीतस्य कमलस्य पत्राणि दलानि गणयामास गणनामकरोत् ।

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैवार्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति। न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः। यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः, स तस्य केवलस्य मार्गः। यथा कुमारसम्भवे, मधुप्रसङ्गे, वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं, मनोभवशरसन्धानपर्यन्तं शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादि साक्षाच्छब्दनिवेदितम्। इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः, तस्मादयमन्यो ध्वनेः प्रकारः॥

---

उज्जीवनी।

उपपादयति—अत्र हीति। अत्र हि अस्मिन् पद्ये हि, लीलाकमलपत्रगणनं लीलाकमलपत्राणि गणयामासेति शब्दप्रतिपाद्यार्थात्मकम्, उपसर्जनीकृतस्वरूपम् उपसर्जनीकृतं स्वं रूपं यस्य तथाविधं, स्वयमुपसर्जनीभूतमित्यर्थः। शब्दव्यापारं विनैव शब्दानभिधेयत्वेन व्यभिचारिभावलक्षणं व्रीडारूपो यो व्यभिचारिभावस्तदात्मकम्, अर्थान्तरं वस्तुरूपं, प्रकाशयति व्यञ्जयति।

ननु रसभावादीनाम् असंलक्ष्यक्रमव्यङ्ग्यध्वनिरूपत्वात् संलक्ष्यक्रम व्यङ्ग्यस्यार्थशक्तिमूलध्वनेर्लक्षणमुक्त्वा तदुदाहरणत्वेन, एवंवादिनीति पद्यस्योपन्यासः कथमुचितो भवेदित्याशङ्कायामाह—न चायमिति। 'रसभावतदाभासभावशान्त्यादिरक्रम' इति असंलक्ष्यक्रमव्यङ्ग्यत्वेन परिगणितोऽपि, अत्रत्यभावध्वनिः असंलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेः असंलक्ष्यक्रमव्यङ्ग्यध्वनेरेव, विषयो न भवति। एवं च असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिरेव, न तु रसादिध्वनिरसंलक्ष्यक्रमव्यङ्ग्य एवेत्यत्र परिगणनग्रन्थस्य तात्पर्यम्। अत एवोक्तं "यस्तात्पर्येण वस्त्वन्यद् व्यनक्ती"ति।

असंलक्ष्यक्रमव्यङ्ग्यस्य वास्तवं विषयं प्रदर्शयितुमाह—यत इति। यतो यस्मात् कारणाद्, यत्र यस्मिन् काव्ये, साक्षात् शब्दनिवेदितेभ्यः शब्दादव्यवधानेन बोधितेभ्यः, विभावानुभावव्यभिचारिभ्यः रसादीनां रसभावादीनां प्रतीतिरभिव्यक्तिः। स रसभावादिः तस्य केवलस्य, अलक्ष्यक्रमव्यङ्ग्यध्वनिमात्ररूपेणावस्थितस्य, मार्गः विषयः। उक्तमुपपादयति—यथेति। कुमारसम्भवे महाकाव्ये, मधुप्रसङ्गे वसन्तसमागमे, वसन्तपुष्पाभरणं वसन्तकालसुलभैः पुष्पैः

यत्र च शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नास्य ध्वनेर्विषयः ॥

**यथा—**

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूत लीलापद्मं निमीलितम् ॥

अत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम् ।

---

उज्जीवनी ।

कृतं भूषणं, वहन्त्या धारयन्त्या देव्याः पार्वत्याः, आगमादीनां वर्णनं, मनोभवशरसन्धानपर्यन्तं मनोभवेन मदनेन, कृतं यच्छरसन्धानं तदवधिकं, शम्भोश्च शिवस्य च परिवृत्तधैर्यस्य परिवृत्तं लुप्तं धैर्यं यस्य तादृशस्य, चेष्टाविशेषवर्णनादिव्यापारविशेषाणां वर्णनादिकं साक्षाच्छब्दनिवेदितं शब्देनाभिधया बोधितम् । इह तु एवंवादिनीत्यत्र, सामर्थ्याक्षिप्तव्यभिचारिमुखेन, अर्थस्य वाच्यस्य, अर्थान्तरबोधजननसामर्थ्येन, आक्षिप्तो व्रीडाख्यो व्यभिचारिभावस्तन्मुख्येन रसप्रतीतिः । तस्मादयम् अन्यः असंलक्ष्यक्रमव्यङ्ग्यध्वनेरन्यः संलक्ष्यक्रमव्यङ्ग्यध्वनेः प्रकारः ।

यत्रेति । यत्र च यस्मिन् काव्ये, अर्थशक्तिमूलध्वनौ, अर्थः शब्दजन्यप्रतीतिविषय एव । अर्थान्तरस्य व्यङ्ग्यस्य व्यञ्जकत्वेन, उपादीयते व्यञ्जकतयाङ्गीक्रियते । तत्र स व्यञ्जकोऽर्थः शब्दव्यापारसहायः शब्दस्य योऽभिधाव्यापारस्तत्साहाय्येन प्रकाशते स सोऽर्थः, अस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यस्य न विषयः । उदाहरति—यथेति । सङ्केतेति । विदग्धया चतुरया कयाचिदुपनायिकया । हसन्नेत्रार्पिताकूतं हसद्भ्यां विकसद्भ्याम्, नेत्राभ्याम्, अर्पितः सूचितः, आकूतः रहस्यं येन तादृशं, सङ्केतकालमनसं सङ्केतकाले सङ्केतकालज्ञाने (उत्सुकं) मनो यस्य तादृशं, विटं ज्ञात्वा विज्ञाय, लीलापद्मं लीलाकुसुमं निमीलितं सङ्कोचितम् ।

अत्र सायंसन्ध्या सङ्केतकाल इति व्यङ्ग्योऽर्थः । जिज्ञासितः सङ्केतकालः कयाचित् इङ्गितमात्रेण विदितः सायं समयशंसिना कमलनिमीलनेन सूचितः । तस्य च लीलाकमलनिमीलनं, लीलापद्मं निमीलितमिति उक्त्या पदेनैव निवेदितं बोधितम् । अतो नायमर्थशक्तिमूलध्वनेर्विषयः ।

तथा च—

**शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।**
**यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः ॥ २३ ॥**

शब्दशक्त्यार्थशक्त्या शब्दार्थशक्त्या वाक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते सोऽस्मादनुस्वानोपमव्यङ्ग्याद् ध्वनेरन्य एवालङ्कारः । अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वनेः सति सम्भवे स तादृगन्योऽलङ्कारः ॥

तत्र शब्दशक्त्या यथा—

वत्से मा गा विषादं श्वसनमुरुजवं स[१]न्त्यजोर्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि ।

---

उज्जीवनी ।

शब्दार्थोभयशक्तिमूलत्वेन प्रतीयमानमर्थं संलक्ष्यक्रमव्यङ्ग्यध्वनिविषयं निरूप्य तस्यैव स्वोक्तिनिवेदितत्वे यो यो विशेषस्तमाह—शब्देति । यत्र यस्मिन् काव्ये, शब्दार्थशक्त्या शब्दशक्त्या, अर्थशक्त्या, उभयशक्त्या वा आक्षिप्तः व्यञ्जनाव्यापारगम्यः, व्यङ्ग्यः प्रतीयमानः अर्थः, कविना पुनः स्वोक्त्या कविवचनेन आविष्क्रियते प्रकाश्यते, सा ध्वनेरन्या अलङ्कृतिः, ध्वनिव्यपदेशविषयतारहितोऽलङ्कारः । न तत्र ध्वनिः, किन्तु अलङ्कार एवेत्युच्यते । व्यञ्जनाव्यापारविषयीभूतोऽपि सोऽर्थालङ्कारव्यपदेशं लभत इत्यर्थः । तदेव विवृणोति—शब्देति । शब्दशक्त्या शब्दस्यार्थान्तरबोधजनकत्वशक्त्या, अर्थशक्त्या अर्थस्यार्थान्तरबोधजनकत्वसामर्थ्येन, शब्दार्थशक्त्या वा शब्दार्थोभयशक्त्या वा । आक्षिप्तोऽपि प्रतीतोऽपि, व्यङ्ग्योऽर्थः, कविना पुनर्यत्र काव्ये स्वोक्त्या वचनेन, प्रकाशीक्रियते आविष्क्रियते सोऽर्थः, अस्माद् अनुस्वानोपमव्यङ्ग्याद्, ध्वनेरन्य एवालङ्कारः । वा अथवा अलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः, सति सम्भवे व्यङ्ग्यस्यार्थस्य उक्तिविषयत्वे सम्भवति सति, सः अर्थः, तादृगन्यः वाच्यालङ्कारमात्रापेक्षयातिशयितचमत्कारकारी, अलङ्कारः (रसादिध्वनिं) अलङ्करोतीति व्युत्पत्त्या तस्यालङ्कारत्वम् अङ्गीक्रियत इत्यर्थः ।

प्रथममुदाहरति—तत्र शब्दशक्त्येति । यथेति । वत्से इति । वत्से,

---

१. 'संवृणूर्ध्व०' ख. ग.

प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद् वः स दहतु दुरितं मन्थमूढां पयोधिः ॥

अर्थशक्त्या यथा—

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र ।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

---

उज्जीवनी ।

कन्ये, विषादं दुःखं, मा गाः मा गमः, ऊर्ध्वमुच्चैरुद्गतं, उरुः जवो वेगो यस्य तादृशं, श्वसन श्वासमरुतं, श्वासमरुत ऊर्ध्वप्रवृत्तिमिति यावत् । सन्त्यज त्यजते तव, गुरुर्महान्, कम्पः कः कस्माज्जायते ? बलभिदा बलक्षयकारिणा, जृम्भितेन जृम्भिततया च, किं ? न किमपि प्रयोजनम् । अतः अत्र याहि भयरहिते स्थाने याहि गच्छ इति वाच्योऽर्थः । एवं भयशमनच्छद्मना लक्ष्म्या भयनिवारणव्याजेन । सुराणां देवानां, प्रत्याख्यानं निराकरणं, कारयित्वा, मन्थमूढां मन्थानाचलस्य संक्षोभेण मूढां पर्याकुलां लक्ष्मीं, पयोधिः समुद्रः यस्मै देवाय अदाद् दत्तवान्, स देवः विष्णुः, वो युष्माकं, दुरितं पापं, दहतु नाशयतु । अत्र लक्ष्म्या भयशमनच्छद्मना सुराणां प्रत्याख्यानं कारयित्वेति च्छद्मशब्दप्रयोगेण विषादादिशब्दैः शिवादिरूपार्थान्तरं व्यङ्गचमपि प्रकाशते । अतः प्रतीयमानस्यापि शब्दशक्त्यार्थान्तरस्य छद्मशब्देनाविष्करणात् नायं शब्दशक्तिमूलध्वनेर्विषयः । विषमत्तीति विषादः शिवः, श्वसनो वायुः, ऊर्ध्वप्रवृत्त ऊर्ध्वज्वलवानग्निः, कं (जलं) पातीति कम्पो वरुणः, कः ब्रह्मा, गुरुर्महान् (स्थूलः) बलभिद् इन्द्रः, विषभक्षणम् अतिवेगवत्त्वम्, ऊर्ध्वप्रवृत्तिः, गुरुत्वं, बलभेदकत्वं च शिवादीनां दोषत्वेन व्यङ्गचानि । दोषैरेतैर्विवर्जितस्य विष्णोः अप्रत्याख्येयतया च वाच्यायमानतां भजते ॥

अर्थशक्तिमूलव्यङ्गचस्यापि पदप्रकाश्यत्वमुदाहरति—अर्थशक्त्या यथेति । अम्बेति । प्रोषितभर्तृका काचिन्नायिका पान्थं गृहागतं वदति । अत्रेतिशब्दैः तत्तत्स्थानानि निर्दिश्यन्ते । अत्र अस्मिन् गृहस्य भागे, वृद्धा जरती,

ध्वनिः
अविवक्षितवाच्यः (लक्षणतामूलः)
विवक्षितान्यपरवाच्यः (अभिधामूलः)
अर्थान्तरसङ्क्रमितः
अत्यन्ततिरस्कृतः
असंलक्ष्यक्रमव्यङ्ग्यः
(रसादिध्वनिः)
संलक्ष्यक्रमव्यङ्ग्यः
शब्दशक्तिमूलः
(व्यञ्जकः शब्दः)
अर्थशक्तिमूलः
(व्यञ्जकः अर्थः)
वस्तु
अलङ्कारः
स्वतः सम्भवी
कविप्रौढोक्तिनिष्पन्नः
कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नः
वस्तु
अलङ्कारः
वस्तु
अलङ्कारः
वस्तु
अलङ्कारः
वस्तु अलङ्कारः
(1) (2)
वस्तु अलङ्कारः
(3) (4)
वस्तु अलङ्कारः
(5) (6)
वस्तु अलङ्कारः
(7) (8)
वस्तु अलङ्कारः
(9) (10)
वस्तु अलङ्कारः
(11) (12)

उभयशक्त्या यथा—'दृष्ट्या केशवगोपरागहृतया' इत्यादौ ।

**प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।**
**अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥ २४ ॥**

---

उज्जीवनी ।

अम्बा माता, अत्र कश्चित् (निर्दिश्यमाने) परिणतवयसां परिणतं वयो येषां तादृशानाम् अतिजरताम् अग्रणीर्जरत्तम इत्यर्थः । तथा अत्र अन्यत्र, निःशेषागार-कर्मश्रमविवशतनुः निश्शेषैः समस्तैः, अगारकर्मभिः गृहकर्मभिः श्रमेण शिथिला तनुः यस्यास्तादृशी, कुम्भदासी चेटी शेते । अस्मिन् पूर्वोक्तादन्यस्मिन् गृहभागे । कतिपयदिवसप्रोषितप्राणनाथा कतिपयैः दिवसैर्दिनैः, प्रोषितः प्रवासं गतः, प्राणनाथः पतिर्यस्याः तादृशी, पापा दौर्भाग्यशालिनी, एका असहाया, शये । इत्थम् एवं, पान्थाय पथिकायाभ्यागताय, अवसरव्याहृतिव्याजपूर्वं पान्थस्यागमनसमयः समागमावसर एवेति वचनापदेशपूर्वकं, तरुण्या युवत्या, कथितमुक्तम् ।

अत्र अम्बा वृद्धेत्यादि शब्दानामर्थाः तस्या भोगेच्छां व्यञ्जनया बोधयन्ति । तथापि अवसरव्याहृतिव्याजपूर्वमिति व्याजशब्देन वाच्यायमानां प्राप्तो व्यङ्ग्योऽर्थ इति नायं ध्वनेर्विषयः ।

उभयशक्त्येति—उभयशक्त्या शब्दशक्त्यार्थशक्त्या चेत्यर्थः । यथेति । दृष्ट्या केशवगोपरागहृतयेति । व्याख्यातं पूर्वम् । अत्र गोपरागादिशब्दानां शक्त्यैवार्थान्तरबोधनात् शब्दस्य व्यञ्जकत्वं, प्रकरणवशादर्थेनार्थान्तरप्रतीतेः सम्भवादर्थस्यापि व्यञ्जकत्वमित्युभयशक्तिमूलध्वनेः सम्भवेऽपि सलेशशब्देन वाच्यायमानता भवतीति नायमपि ध्वनेर्विषयः । किन्तु उदाहरणत्रयेऽपि व्याजादिशब्दानामनुपादाने शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्तिमूलश्च ध्वनिर्भवत्येव ।

अर्थशक्तिमूलध्वनौ व्यञ्जकस्यार्थस्य भेदानाह—प्रौढेति । अन्यस्य वाच्यातिशायिचमत्कृतिजनकस्य वाच्यादन्यस्य, वस्तुनः अर्थस्य, दीपकः दीप इव प्रकाशकः । अर्थोऽपि व्यञ्जकः वाच्योऽर्थोऽपि । प्रौढोक्तिमात्रनिष्पन्नशरीरः, कवेः प्रतिभावतः, प्रौढोक्तिमात्रेण, निष्पन्नं शरीरं स्वरूपं यस्य तादृशः, कवि-

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तस्तस्यापि द्वौ प्रकारौ। कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीर एकः, स्वतःसम्भवी च द्वितीयः।

कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—

सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे।
अहिणवसहआरमुहे णवपल्लवपत्तळे अणंगस्स सरे॥
[सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान्॥]

---

उज्जीवनी।

कलितः, स्वतःसम्भवी चेति द्विविधः द्विप्रकारः, ज्ञेयः ज्ञातव्यः। अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ, अर्थशक्तिमूले संलक्ष्यक्रमव्यङ्ग्यध्वनौ व्यञ्जकः व्यङ्ग्यार्थप्रतिपादकः यः अर्थः, वाच्य उक्तः, तस्यापि व्यञ्जकस्यार्थस्य द्वौ प्रकारौ द्वौ भेदौ तावेवाह—कवेरिति। कवेः, कविनिबद्धस्य कविना निबद्धस्य वा, वक्तुः प्रौढोक्तिमात्रेण निष्पन्नशरीरः कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति द्वाववान्तरविभागौ प्रौढोक्तिनिष्पन्नत्वरूपेणैकत्वेनोक्तौ। स्वतःसम्भवी च द्वितीयः। एवं व्यञ्जकोऽर्थः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति त्रिविध इति फलितोऽर्थः।

कविप्रौढोक्तिमात्रनिष्पन्नशरीरमुदाहरति—कवीति। यथेति सज्जेहीति।

सुरभिमासः वसन्तसम्बन्धो मासः। युवतिजनलक्ष्यमुखान् युवतिजनास्तरुण्यः, एव लक्ष्याणि येषां तादृशानि मुखानि येषां तान्। नवपल्लवान्, नवान् पल्लवान् पत्राणि लान्ति आददते इति तादृशान्। अभिनवसहकारमुखान् नूतनसहकारकुसुमादीन्, अनङ्गस्य मन्मथस्य, शरान्, बाणान्, सज्जयति सज्जीकरोति। न तावदर्पयति न ददाति॥

अत्राचेतनस्य वसन्तस्य मदनबाणसज्जीकरणात्मको वस्तुरूपो व्यञ्जकोऽर्थः कविप्रौढोक्तिनिष्पन्नशरीरः तेन वस्तुना वसन्तस्य मन्मथोन्माथकारित्वारम्भरूपं वस्तु संलक्ष्यक्रमतया व्यज्यते।

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो यथोदाहृतमेव—'शिखरिणि' इत्यादौ।

यथा वा—

साअरविइण्णजोव्वणहत्थालम्बं समुण्णमन्तेहिम्।
अब्भुट्ठाणं विअ मम्महस्य दिण्णं तुअ थणेहिम्॥
[सादरवितीर्णयौवनहस्तावलम्बं समुन्नमद्भ्याम्।
अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम्॥]

स्वतः सम्भवी य औचित्येन बहिरपि सम्भाव्यमानसद्भावो न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः। यथोदाहृतम् "एवं वादिनि" इत्यादि।

---

## उज्जीवनी।

कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नशरीरः वस्तुना वस्तुध्वनिः। उदाहृतं पूर्वोदाहृतं 'शिखरिणि' इति पद्यमित्यर्थः। तत्र कविनिबद्धस्य वक्तुः कामिनः प्रौढयोक्त्या निष्पन्नस्य लोहितस्य बिम्बफलस्य शुकशावककृतदंशनरूपस्य वस्तुनः व्यञ्जकत्वम्। कामिन्यधरास्वादनविषयककामुकेच्छारूपं वस्तु व्यज्यते।

उदाहरणान्तरमप्याह—यथा वेति। साअरेति।

कविनिबद्धस्य कस्यचिद् वक्तुः नवयौवनां प्रति उक्तिरियम्। सादरवितीर्णयौवनहस्तावलम्बं सादरं सबहुमानं वितीर्णः दत्तः, यौवनेन तारुण्येन, हस्तावलम्बः करावलम्बो यस्मिन् तद् यथा भवति तथा। समुन्नमद्भ्यां तव स्तनाभ्यां, मन्मथस्य मदनस्य, अभ्युत्थानमिव दत्तम्।

तारुण्येन स्तनावुन्नताविति वस्तुरूपोऽर्थः, कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नः व्यञ्जकः। तद्दर्शनेन सर्वोऽपि उपारूढमदनावस्थो भवतीति वस्तुरूपोऽर्थो व्यङ्ग्यः॥

स्वत इति। स्वतःसम्भवी व्यञ्जकोऽर्थः। औचित्येन उचिततया। बहिरपि लोकेऽपि, सम्भाव्यमानसद्भावः सम्भाव्यमानः सम्भावनाविषयः सद्भावः विद्यमानत्वं, यस्य तादृशोऽर्थः, न केवलं, भणितिवशेनैव भङ्गिभणितिरूपेणैव केवलम्, अभिनिष्पन्नशरीरः निष्पन्नो न भवति किं तु

यथा वा—

सिहिपिञ्छकण्णऊरा जाआ वाहस्स गव्विरी भमइ ।
मुत्ताफळरइअपसाहणाणं मज्झे सवत्तीणम् ॥
[शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥]

**अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते ।**
**अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥ २५ ॥**

---

उज्जीवनी ।

स्वयमभिनिष्पन्नशरीरः स्वतः सम्भवीत्युच्यते । यथेति । एवंवादिनीति पद्यमस्योदाहरणमित्यर्थः । तत्र स्वतः नववधूस्वाभाव्यात् सम्भवता मुखावनमनादिना वस्तुरूपेण व्यञ्जकेनार्थेन लज्जावती जातेति वस्तु व्यज्यते ।

स्वतः सम्भविवस्तुना वस्तुध्वनेरेवोदाहरणान्तरमभ्याह–सिहोति ।

शिखिपिञ्छकर्णपूरा शिखिनो मयूरस्य, पिञ्छमेव कर्णपूरः कर्णाभरणं यस्यास्तादृशी । व्याधस्य शबरस्य, जाया भार्या, गर्विणी सगर्वा, भ्रमति सञ्चरति । कुत्रेत्याह—मुक्ताफलेति । मुक्ताफलरचितप्रसाधनानां मुक्ताफलैः रचितानि प्रसाधनानि भूषणानि यासां तादृशीनां, सपत्नीनां मध्ये, तस्यैव शबरस्य भार्यान्तराणां मध्ये ।

अत्र गर्विताया व्याधवध्वाः सपत्नीमध्ये भ्रमणरूपेण वस्तुना व्यञ्जकेन तस्याः सौभाग्यातिशयात्मकं वस्तु व्यज्यते ।

अर्थशक्तिमूलं वस्तुध्वनिं निरूप्य तादृशमलङ्कारध्वनिं निरूपयितुमाह—अर्थेति । यत्रापि यस्मिन् काव्येऽपि, अर्थशक्तेः अर्थस्य सामर्थ्याद्, अन्यः वाच्यादलङ्कारादन्यः, अलङ्कारः प्रतीयते व्यज्यते, सोऽर्थशक्तिमूलध्वन्यात्मकः शब्दसन्दर्भः । अनुस्वानोपमव्यङ्ग्यः अनुस्वानेन अनुरणनेन, उपमा सादृश्यं यस्य तादृशं व्यङ्ग्यं व्यङ्ग्योऽर्थः यस्य तादृशः, ध्वनेः काव्यविशेषस्य, अपरः प्रकारः अन्यो भेदः ।

वाच्यालङ्कारव्यतिरिक्तो यत्रान्योऽलङ्कारोऽर्थसामर्थ्यात् प्रतीयमानोऽवभासते सोऽर्थशक्त्युद्भवो नामानुस्वानरूपव्यङ्ग्योऽन्यो ध्वनिः ॥

तस्य प्रविरलविषयत्वमाशङ्क्येदमुच्यते—

**रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः ।**
**स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः ॥ २६ ॥**

अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः । तथा च ससन्देहादिषूपमा रूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलङ्कारान्तरस्यालङ्कारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम् ।

---

उज्जीवनी ।

तदेव विवृणोति—वाच्येति । वाच्यालङ्कारव्यतिरिक्त वाच्यादलङ्काराद् भिन्नः, यत्र काव्ये, अन्य इतरः, अलङ्कारः रूपकादिः, अर्थसामर्थ्याद् अर्थस्य सामर्थ्यात्, प्रतीयमानः व्यज्यमानः, अवभासते प्रकाशते, स ध्वनिः अर्थशक्त्युद्भवो नाम अर्थशक्तिमूलव्यङ्ग्यध्वनिनामकः अनुस्वानरूपव्यङ्ग्यः अनुरणनव्यङ्ग्योऽन्यो ध्वनिः ध्वनेः प्रकारान्तरमित्यर्थः ।

तस्येति । तस्य अङ्कारध्वनेः, प्रविरलविषयत्वं प्रविरलः अल्पः, विषयो यस्य तादृशस्य भावम् । आशङ्क्य अलङ्कारध्वनेः विरल एव विषय इत्याशङ्कायाम्, इदं वक्ष्यमाणम्, उच्यचे कथ्यते ।

रूपकादिरिति । वाच्यताम् अभिधेयत्वं, श्रितः प्राप्तः, रूपकादिः रूपकम् आदिर्यस्य तादृशः, अलङ्कारवर्गः अलङ्काराणां गणः, स सर्वः अपि सकलः अपि, अलङ्कारवर्गः, गम्यमानत्वं प्रतीयमानत्वं, बिभ्रद् वहन्, भूम्ना बाहुल्येन, प्रदर्शितः अन्यैः अलङ्कारशास्त्रकारैरिति शेषः ॥

अन्यत्रेति । अन्यत्र कचिद्, वाच्यत्वेन अभिधेयत्वेन, प्रसिद्धः प्रसिद्धिविषयीभूतः, रूपकादिः रूपकोपमादिः, अलङ्कारो यः, सः अन्यत्र केषुचिदलङ्कारेषु प्रतीयमानतया व्यङ्ग्यत्वेन, बाहुल्येन प्रदर्शितः बहुधा दर्शितः । तत्रभवद्भिः पूज्यपादैः, भट्टोद्भटप्रभृतिभिरित्यर्थः । उक्तमेवोपपादयति—

इयत् पुनरुच्यत एव—

**अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।**
**तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥ २७ ॥**

अलङ्कारान्तरेषु तु अनुरणनरूपालङ्कारप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गः । तथा च दीपकादावलङ्कारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः । यथा—

चन्दमऊहेहिं णिसा णळिनी कमळेहिं कुसुमगुच्छेहिं ळआ ।
हंसेहिं सरअसोहा कव्वकहा सज्जणेहिं कीरइ गरुई ॥

---

उज्जीवनी

तथा चेति । ससन्देहादिषु सन्देहाद्यलङ्कारेषु, उपमायाः, रूपकस्य, अतिशयोक्तेश्च प्रतीयमानत्वं, व्यज्यमानत्वं प्रदर्शितं तैरिति, एवम् अलङ्कारान्तरस्यान्यालङ्कारस्य, अलङ्कारान्तरे अन्यस्मिन् अलङ्कारे, व्यङ्ग्यत्वं प्रतीयमानत्वं, सम्भवतीति तदिदं न यत्नप्रतिपाद्यं तदर्थं पृथग् यत्नो न कार्य इत्यर्थः ।

तत्र यो विशेषस्तमाह—इयदिति । इयत् पुनः एतावत् तु, उच्यत एव । अलङ्कारान्तरस्येति । यत्र काव्ये, अलङ्कारान्तरस्यापि सहृदयश्लाघ्यस्योपमादेस्तु, प्रतीतौ प्रतीयमानतायां वाच्यस्याभिधेयस्यार्थस्य, तत्परत्वं व्यङ्ग्यार्थपरत्वं व्यङ्ग्यार्थोपस्कारकत्वेन तात्पर्यविषयत्वं न भासते न प्रकाशते, असौ ध्वनेर्मार्ग इति ध्वनिविषय इति, न मतः नाङ्गीक्रियते ।

तदेवाह—अलङ्कारान्तरेषु इति । अलङ्कारान्तरेषु वाच्यादतिरिक्तेषूपमाद्यलङ्कारेषु तु, अनुरणनरूपालङ्कारप्रतीतौ सत्यामपि अनुस्वानात्मकत्वेनालङ्काराणां प्रतीयमानत्वेऽपि, यत्र यस्मिन् काव्ये, वाच्यस्य वाच्यार्थस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन व्यङ्ग्यार्थप्रतीतिजननानुकूल्येन, चारुत्वं चमत्कारः, न प्रकाशते न भासते, नासौ ध्वनेर्मार्गः । पर्यवसितमाह—तथा-चेति । दीपकादौ अलङ्कारे, उपमाया उपमालङ्कारस्य, गम्यमानत्वेऽपि, चारुत्वस्य चमत्कृतिजनकत्वस्य, तत्परत्वेन व्यङ्ग्योपमातात्पर्येण, अनवस्थानादनवस्थितेः, ध्वनिव्यपदेशो नास्तीत्यर्थः ।

[ चन्द्रमयूखैर्निशा, नलिनी कमलैः, कुसुमगुच्छैर्लता ।
हंसैः शारदशोभा, काव्यकथा सज्जनैः, क्रियते गुर्वी ।। ]

इत्यादिषूपमागर्भत्वेऽपि सति वाच्यालङ्कारमुखेनैव चारुत्वं व्यवतिष्ठते, न व्यङ्ग्यालङ्कारतात्पर्येण । तस्मात्तत्र वाच्यालङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः ।।

यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य व्यवस्थानं तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः । यथा—

---

उज्जीवनी ।

उदाहरति—यथेति ! चन्द्रमऊएहिं इति । चन्द्रमयूखैः चन्द्रस्य मयूखैः किरणैः, निशा रात्रिः, कमलैः पद्मैः, नलिनी पद्मिनी, कुसुमगुच्छैः कुसुमानां पुष्पाणां गुच्छैः स्तबकैः, लता वल्ली, हंसैः शारदशोभा, शारदी शरत्काल-सम्बन्धिनी द्युतिः, सज्जनैः सहृदयैः, काव्यकथा गुर्वी क्रियते महती प्रकाशमाना विधीयते इति यावत् ।

अत्र दीपकमलङ्कारः । प्रकृतानामप्रकृतानां चैकधर्मान्वयो दीपकम् । प्रकृतमुपमेयम् । अप्रकृतमुपमानम् । तथा चात्र काव्यकथारूपस्योपमेयस्य, निशा, नलिनीलताशारदशोभानामुपमानानां च महत्त्वापादनरूपैकधर्मान्वयः । यथा चन्द्रकिरणा निशां गुर्वीं (भास्वरां), कमलानि नलिनीं (शोभनां), कुसुमगुच्छाः लतां (मनोहारिणीं), हंसाः शारदशोभां श्रुतिसुखकारिणीं च कुर्वन्ति, तथा सहृदयाः काव्यकथां गुर्वीं समादरणीयां कुर्वन्तीति उपमालङ्कारो यद्यपि व्यङ्ग्यः, तथापि वाच्यस्य दीपकस्य व्यङ्ग्यतत्परत्वाभावान्नायं ध्वनिव्यपदेश-विषयः ।

इत्यादिष्विति । इत्यादिषु दीपकादिष्वलङ्कारेषु, उपमागर्भत्वे सति उपमाया अन्तर्गतत्वेऽपि, वाच्यार्थमुखेनैव वाच्यार्थभूतदीपकद्वारैव, चारुत्वं चमत्कृतिजनकत्वं, व्यवतिष्ठते व्यवस्थितं भवति । न व्यङ्ग्यालङ्कारतात्पर्येण व्यङ्ग्यो य उपमालङ्कारः तत्परत्वेन, न चारुतेत्यर्थः । तस्मात् तत्र दीपकस्थले, वाच्यालङ्कारमुखेनैव दीपकालङ्कारद्वारेणैव, काव्यव्यपदेशः काव्यत्वव्यवहारः, याय्य उक्तः । यत्र तु यस्मिन् काव्ये पुनः, वाच्यस्यार्थस्य व्यङ्ग्यपरत्वेनैव

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

यथा वा ममैव,--

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।

---

उज्जीवनी ।

व्यवस्थानं व्यङ्ग्यतात्पर्येणैव व्यवस्थितिः तत्र व्यङ्ग्यमुखेनैव व्यपदेशः अलङ्कारध्वनिव्यपदेशः ।

उदाहरति—प्राप्तश्रीरिति । महाप्रभावे कस्मिंश्चिद् राजनि महोदधेस्तीरमुपगते तस्य संक्षोभं पश्यतः कस्यचिदुक्तिरियम् । एष पुरोदृश्यमानः, प्राप्तश्रीः पयोधिमथनावसरे तत उद्भूतां लक्ष्मीं प्राप्तवान् । अतः पुनरपि भूयोऽपि, तं तादृशं, मन्थखेदं मन्थान्मन्दरगिरेर्जायमानं खेदं पीडां, कस्माद् विदध्यात् कुर्यात् । अनलसमनसः अनलसमालस्यशून्यं मनो यस्य तथाविधस्य, पूर्वां पूर्वं सञ्जातां, निद्रामपि योगनिद्रामपि नैव सम्भावयामि नैव तर्कयामि, । सकलद्वीपनाथानुयातः सकलैः द्वीपनाथैः द्वीपानामधिपैः सर्वैरपि अनुयातश्च, भूयः पुनरपि, किमिति किमर्थं, सेतुं बध्नाति सेतुबन्धनायोद्युक्तो भवेत्, इति एवंभूतान्, वितर्कान् सन्देहान्, दधत इव धारयत इव, पयोधेः समुद्रस्य, कम्पः क्षोभः, आभाति प्रतिभाति ।

समुद्रतीरमुपगतोऽयं किं मथनायागतः, अथवा योगनिद्रां कर्तुमुत्सुकः, द्वीपान्तरस्थितं रिपुं जेतुं सेतुबन्धनतत्परो वा इति ससन्देहालङ्कारस्य, वितर्कान्

---

१. "व—ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन् सरय्वां
वादाद्यूतं सरसमभवत् सिद्धयूनोः कयोश्चित् ।
एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः
स त्वं तथ्यं कथय भवता को हतस्तत्र पूर्वम् ॥"
इति खपाठेऽधिकतया दृश्यते ।

क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥

इत्येवंविधे विषयेऽनुरणनरूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद् रूपक-ध्वनिरिति व्यपदेशो न्याय्यः ।

उपमाध्वनिर्यथा—

वीराणां रमइ घुसिणरुणम्मि ण तहा पिआथणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्थळम्मि जह बहळसिन्दूरे ॥
[ वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥ ]

---

उज्जीवनी ।

दधत इवेत्यनेन उत्प्रेक्षायाश्च सङ्करः, तेन च विष्णुतादात्म्यरूपं रूपकं व्यज्यत इति कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नः अलङ्कारेणालङ्कारध्वनिः ।

स्वकीयमुदाहरणान्तरं प्रदर्शयितुमाह—यथा वेति । लावण्येति । हे तरलायताक्षि, तरले चले आयते दीर्घे चाक्षिणी नेत्रे यस्यास्तादृशि, अधुना कोपकालुष्यपरित्यागानन्तरं स्मेरे मन्दहसनशोले, लावण्यकान्तिपरिपूरितदिङ्-मुखे लावण्येन रूपमाधुर्येण, कान्त्या दीप्त्या च परिपूरितानि दिशामाशानां मुखानि येन तादृशे, तव मुखे वदने, अभिमुखमागते सति पयोधिः समुद्रः, क्षोभं मनागपि ईषदपि, न एति न प्राप्नोति, इति यत् तेन हेतुना अयं समुद्रः जल-राशिः, डलयोरभेदाद् जडराशिः मन्ये ॥

अत्र वाच्यः श्लेषालङ्कारः । अनुस्वानरूपं मुखचन्द्रयोरभेदात्मकं रूपकं व्यङ्ग्यम् । श्लेषस्य व्यङ्ग्यरूपकतात्पर्येण व्यवस्थितेः अलङ्कारेणालङ्कार-ध्वनिव्यपदेशः । तदेवोपपादयति—इत्येवंविध इति । एवंविधे एतादृशे विषये, अनुरणनात्मकं यद् रूपकं, तदाश्रयेण काव्यस्य यत् चारुत्वं सहृदयहृदयाह्लाद-कत्वं, तस्य व्यवस्थानाद् व्यवस्थितेः, रूपकध्वनिरिति व्यपदेशः नामकरणं न्याय्य उचितः ।

उपमाध्वनिमुदाहरति—वीराणामिति । वीराणां दृष्टिः, बहलसिन्दूरे बहलं सिन्दूरं यस्मिस्तादृशे रिपुगजकुम्भस्थले रिपूणां शत्रूणां ये गजास्तेषां कुम्भस्थले,

यथा वा ममैव विषमबाणलीलायामसुरपराक्रमणे कामदेवस्य—

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥
[तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥]

आक्षेपध्वनिर्यथा—

स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥

---

उज्जीवनी ।

यथा रमते रतिमादत्ते, तथा घुसृणारुणे घुसृणेन कुङ्कुमेन, अरुणे शोणे, प्रियास्तनोत्सङ्गे प्रियायाः कामिन्याः कुचतटे न रमते ।

अत्र वीराणां प्रियास्तनोत्सङ्गादपि रिपुगजकुम्भस्थले रतेराधिक्यं व्यतिरेकालङ्कारस्य वाच्यस्य विषयः । वाच्यो व्यतिरेकालङ्कार इत्यर्थः । गजकुम्भस्थले प्रियास्तनतटसादृश्यं व्यज्यत इति व्यङ्ग्योपमातात्पर्येणैव व्यतिरेकस्यात्मलाभो भवतीति उपमायाः प्राधान्यम् । अतोऽत्रोपमाध्वनिः ।

उदाहरणान्तरमाह—यथा वेति । विषमबाणलीलाभिधे ग्रन्थे, कामदेवस्य मदनस्य, असुरपराक्रमे असुरपराक्रमवर्णनावसरे । तदिति । श्रीसहोदररत्नाहरणे श्रियो लक्ष्म्याः, सहोदरस्य सहजातस्य, रत्नस्य कौस्तुभमणेः, आहरणे ग्रहणे, एकरसम् एको मुख्यो, रसः प्रीतिर्यस्य तादृशम् । तेषामसुराणां, तद् हृदयं मानसं, कुसुमबाणेन कामेन, प्रियाणाम् असुरवनितानां, बिम्बाधरे कौस्तुभमणित्वेनाध्यवसिते बिम्बाधरे, निवेशितं विन्यस्तम् ।

अत्र साध्यवसानलक्षणामूलातिशयोक्तिर्वाच्यालङ्कारः । सादृश्यसम्बन्धनिबन्धनत्वाच्चेयं गौणी साध्यवसानेत्युच्यते । निरतिशयशोभावत्त्वेन साधारणधर्मेण बिम्बाधरस्य कौस्तुभमणिसादृश्यरूप उपमालङ्कारः प्रतीयते । अत्र व्यङ्ग्योपमातात्पर्यकत्वाद्वाच्याया अतिशयोक्तेः, उपमाध्वनिः ।

आक्षेपध्वनिमुदाहरति—आक्षेपेति । स इति । यः अम्बुकुम्भैः जलग्रहणोपयुक्तघटैः, महोदधेः महतः समुद्रस्य, परिच्छेदं परिमाणं, ज्ञातुं वेदितुं, शक्तः

अतिशयोक्त्या हयग्रीवगुणानामवर्णनीयता प्रतिपादनरूपस्यासाधारण-तद्विशेषप्रकाशनपरस्याक्षेपस्य प्रकाशनम् ॥

अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानु-रणनरूपव्यङ्ग्यश्च सम्भवति । तत्राद्यस्योदाहरणम्—

देव्वाएत्तम्मि फले किं कीरई एत्तिअं पुणः भणिमो ।
कक्किल्लपल्लवाः पल्लवाणं अण्णाणं ण सरिच्छा ॥
[दैवायत्त फले किं क्रियतामेतावत् पुनर्भणामः ।
कङ्केलिपल्लवाः पल्लवानामन्येषां न सदृक्षाः ॥]

---

## उज्जीवनी

समर्थः भवेत्, स एव पुमान्, हयग्रीवाश्रितान्, हयग्रीवमाश्रितान् तद्गतान्, अखिलान् समस्तान्, गुणान् वक्तुं वर्णयितुं, शक्तः प्रगल्भो भवेदित्यर्थः ।

बहिरविद्यमानस्यार्थस्य सम्भावनामात्रेणोपनिबन्धनात्मिकातिशयोक्तिः योऽम्बुकुम्भैरित्यादिना वाच्यालङ्काररूपा भवति ।

अत्र वर्णयितुमिष्टानां हयग्रीवगुणानां विशेषप्रतिपादनेच्छया यः प्रतिषेध इव क्रियते स आक्षेपः व्यज्यते ।

अत्रेति । अत्र अस्मिन् पद्ये, अतिशयोक्त्या वाच्यालङ्कारेण हयग्रीवगुणा-नामवर्णनीयताप्रतिपादनरूपस्य अवर्णनीयत्वावबोधनात्मकं यद् व्यङ्ग्यं तद्रूपस्य। असाधारणः यस्तद्विशेषः तेषां गुणानां, उत्कर्षस्तत्प्रकाशनपरस्य तत्प्रकाशनपर्यवसायिनः, आक्षेपस्य आक्षेपालङ्कारस्य, प्रकाशनं व्यङ्ग्यमि-त्याक्षेपालङ्कारध्वनिः ।

अर्थान्तरन्यासध्वनेः शब्दशक्तिमूलानुस्वानात्मकत्वमपि सम्भवतीति स्फुटीकर्तुमाह—अर्थान्तरेति । अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणन-रूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च भवति । तत्रेति । तत्र तयोर्मध्ये, आद्यस्य शब्दशक्तिमूलानुरणरूपव्यङ्ग्यस्योदाहरणं देव्वायत्तम् इति ।

फले दैवायत्ते अदृष्टाधीने, किं क्रियतां न किमपि कर्तुं वयं प्रभवाम इत्यर्थः । कङ्केलिः रक्ताशोकः, तस्य पल्लवाः किसलयानि, अन्येषां पल्लवानां

पदप्रकाशश्चायं ध्वनिरिति वाक्यस्यार्थान्तरतात्पर्येऽपि सति न विरोधः। द्वितीयस्योदाहरणं यथा—

हिअअट्ठाविअमण्णुं[1] अवरुण्णमुहं हि मं पसाअन्त।
अवरुद्धस्स वि णहु दे बहुजाणअ रोसिउं सक्कम्॥
[हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन्।
अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम्॥]

अत्र हि वाच्यविशेषेण सापराधस्यापि बहुज्ञस्य कोपः कर्तुमशक्य इति समर्थकमर्थं सामान्यमन्वितमन्यत् तात्पर्येण प्रकाशते।

---

## उज्जीवनी।

आम्रादिकिसलयानां न सदृक्षाः न सदृशाः, किन्तु ततोऽप्युत्कृष्टाः, एतावत् पुनः वयं भणामः इयदेव वक्तुं शक्यमस्माभिर्नातोऽधिकमिति वाच्योऽर्थः। फलशब्दः सस्यरूपफले समृद्धौ च शक्तः। अत्र अशोकस्य पल्लवा हृद्याः, तथापि फलमाम्रादिवन्नास्ति। तत्तु दैवायत्तमेवेति विशेषरूपोऽर्थः, लोकोत्तरविजिगीषया तदुपायप्रवृत्तस्यापि जनस्य सम्पद्रूपं फलं दैवाधीनमेव सामान्येन समर्थ्यते। सामान्येन विशेषसमर्थनात्मकस्यार्थान्तरन्यासस्य फलपदशक्तिमूलात्मकस्य शब्दशक्तिमूलध्वनिविषयत्वम्।

पदप्रकाश इति। अत्र वाक्यस्य अर्थान्तरतात्पर्येऽपि सति अर्थान्तरे व्यङ्ग्यरूपे अर्थे तात्पर्यं सत्यपि, अयं ध्वनिः पदप्रकाश्यः अनेकार्थेन फलशब्देन प्रकाशं प्राप्त इति वचने विरोधो नास्तीत्यर्थः।

द्वितीयस्योदाहरणमाह—द्वितीयस्येति। हिअअेति। हे बहुज्ञ, बहु-जानातीति तादृशो बहुज्ञः तत्सम्बुद्धिः। हृदयस्थापितमन्युं हृदये मनसि स्थापितो निगूहितो, मन्युः क्रोधः यया तादृशीं, अपरोषमुखीं अपगतो रोषो यस्मात् तादृशं मुखं यस्यास्तथाविधां, प्रसादयन् अनुकूलयन्, भवसि, अतः अपराद्ध-स्यापि कृतापराधस्य, तव त्वद्विषये मया रोषितुं न शक्यम्।

अत्र कृतापराधत्वेऽपि बहुज्ञे त्वयि मया रोषो न विधातुं शक्य इति विशेषरूपेण वाक्यार्थेन (वाच्येनार्थेन) सर्वेष्वपि बहुज्ञेषु रोषो न कर्तुं शक्य

---

१. 'मण्णुभरमणुरण्णमु०' ख. ग. ('मन्युभरमनुरक्तमुखीम्' इति च्छाया)

व्यतिरेकध्वनिरपि उभयरूपः सम्भवति । तत्राद्यस्योदाहरणं प्राक्प्रदर्शित-मेव[1] ।

द्वितीयस्योदाहरणं यथा—

जाएज्ज वणुद्देसे खुज्ज च्चिअ पाअवो गडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥
[जायेय वनोद्देशे कुब्ज एव पादपो गळितपत्रः ।
मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥]

अत्र हि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं त्रुटितपत्रकुब्जपादप-

---

उज्जीवनी ।

इति सामान्यरूपोऽर्थो व्यञ्जनया सिद्ध्यतीति विशेषेण सामान्यसमर्थनात्मको-ऽत्रार्थान्तरन्यासो ध्वन्यत इति अर्थशक्तिमूलोऽयमर्थान्तरन्यासध्वनिः ।

अत्रेति । अत्रास्मिन् पद्ये, वाच्यविशेषेण सापराधस्यापि बहुज्ञस्य, कोपः कर्तुमशक्य इति एवंरूपेणेत्यर्थः । तेनान्वितं समर्थकं समर्थनविषयीभूतं सामान्यं, अन्यद् वाच्यभिन्नं तात्पर्येण व्यञ्जनया प्रकाशते ।

व्यतिरेकध्वनिं निरूपयति—व्यतिरेकेति । व्यतिरेकध्वनिरपि व्यतिरेका-लङ्कारध्वनिरपि, उभयरूपः शब्दशक्तिमूलोऽर्थशक्तिमूलश्च भवति । तत्राद्यस्य शब्दशक्तिमूलध्वनेः उदाहरणं प्राक् शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यध्वनि-निरूपणावसरे 'खं येऽत्युज्ज्वलयन्ती'त्यादिना प्रदर्शितम् ।

अर्थशक्तिमूलव्यतिरेकध्वनिमुदाहरति—द्वितीयस्येति । जाएज्जेति । वनोद्देशे वनस्यारण्यस्य कोणे क्वापि, कुब्जः खर्वः, गळितपत्रः गळितानि पत्राणि पर्णानि यस्मात् तादृशः पादपो वृक्ष एव, जायेय जायै, तदेव वरम् । कुब्जत्वेन स्तम्भादिनिर्माणयोग्यताशून्यः, गळितपत्रत्वेन अफलश्च यद्यपि तरुर्भवति तथापि स अङ्गाराय वा उलूकादीनां कोटरेषु निवासाय वा उपयुज्येत, किन्तु मानुषे लोके त्यागैकरसः त्यागे दाने एको मुख्यो रसः प्रीतिर्यस्य तादृशः दरिद्रश्च निःस्वश्च मा जायेय जन्म मा लभेयेत्यर्थः ।

अत्रेति । अत्र हि अस्मिन् पद्ये, त्यागैकरसस्य त्यागशीलस्य, दरिद्रस्य

---

1. 'व रक्तस्त्वमित्यादि' ख

जन्माभिनन्दनं च साक्षाच्छब्दवाच्यम् । तथाविधादपि पादपात् तादृशस्य पुंस उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति ॥

उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः ॥

अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छा[1]कारित्वं मन्मथोन्माथदायित्वेनैव । तत्तु चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादनुरणनरूपा लक्ष्यते ॥

---

उज्जीवनी

द्रविणरहितस्य, जन्मानभिनन्दनं जन्मनो निन्दा, त्रुटितपत्रकुब्जपादपजन्माभिनन्दनं त्रुटितानि गलितानि, पत्राणि यस्मात् तादृशस्य कुब्जस्य पादपस्य जन्मनोऽभिनन्दनं च, साक्षात् शब्दवेद्यं, अयमेव वाच्यो वाक्यार्थः । तथाविधादपि तादृशात् कुब्जात् विगलितपत्राच्च पादपात् तरोः, तादृशस्य त्यागरतेः दरिद्रस्य च, पुंसो जनस्य उपमानोपमेयत्वप्रतीतिपूर्वकम् उपमानोपमेयत्वस्य उपमानोपमेयभावस्य प्रतीतिः बोधः पूर्वं यथा भवति तथा, शोच्यतायां शोचनीयतायाम्, आधिक्यं व्यतिरेकं, तात्पर्येण व्यञ्जनया प्रकाशयति । अत्र निष्पत्रात् तरोः निःस्वस्य दानशीलस्य पुंसः शोचनीयताधिक्यव्यञ्जनाद् व्यतिरेकालङ्कारध्वनिः अर्थशक्तिमूलः ।

उत्प्रेक्षाध्वनिर्यथेति । चन्दनेषु मलयद्रुमेषु, आसक्तानां भुजगानां सर्पाणां, निःश्वासानिलेन श्वासमरुता, मूर्च्छितो वृद्धिमुपगतः एष परोगतः मलयमारुतः मलयपवनः, मधौ वसन्ते, पथिकान् पान्थान्, मूर्च्छयति मोहयति ।

अत्रेति । अत्र अस्मिन् पद्ये, मलयमारुतस्य मलयपवनस्य, पथिकमूर्च्छाकारित्वं पथिकजनमोहनकारित्वं, मन्मथोन्माथदायित्वेनैव, यतो मलयमारुतो मदनपीडां पान्थानामुपजनयति, ततस्तेषां मूर्च्छां स्वयमेव करोति तथापि चन्दनासक्तभुजगानां निश्श्वासानिलसम्पर्कस्तद्धेतुत्वेन सम्भावित इति उत्प्रेक्षा-

---

१. 'करणत्वं' ख. ग. ज.

न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासम्बद्धतैवेति शक्यते वक्तुम्। गमकत्वादन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात्। यथा—

ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ[1] ण माइ॥
[ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः।
अद्य सदृशत्वं प्राप्याङ्ग एव न माति॥]

---

उज्जीवनी।

ध्वनिः। सा चोत्प्रेक्षा साक्षादनुक्ता वाचकशब्दैरनभिहिता वाक्यार्थसामर्थ्याद् (अर्थशक्त्या) अनुरणनरूपा लक्ष्यते बोध्यते :

आशङ्कते—न चेति। एवंविधे विषये, सम्भावनाविषये इवादिशब्दप्रयोगमन्तरेण "मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः उत्प्रेक्षावाचकाः शब्दा इव शब्दोऽपि तादृशः।" इति उत्प्रेक्षावाचकत्वेनाभ्युपगतानां शब्दानां प्रयोगं विना, असम्बद्धता उत्प्रेक्षासम्बन्धो वक्तुं न शक्यत एव।

समाधत्ते—तथा वक्तुं न शक्यत इति। गमकत्वाद् इवाद्यभावेऽपि तदर्थावगतेः। अन्यत्रापि तद्भिन्नस्थलेऽपि तदप्रयोगे, इवाद्यप्रयोगे, तदर्थावगतिदर्शनात् तस्योत्प्रेक्षारूपस्यार्थस्य, अवगतेरवगमस्य दर्शनात्।

वस्तुतस्तु नेयमाशङ्कोचिता। शब्दशक्तिमूलानुरणनव्यङ्ग्यनिरूपणावसरे "यत्र च मातङ्गगामिन्यः शीलवत्यश्च प्रमदाः" इत्यत्र साक्षाद् वाचकशब्देन विरोधालङ्कारस्याप्रकाशितत्वाद् वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति वक्तुं न शक्यते। अतः अत्र विरोधालङ्कारध्वनिरिति वदता ग्रन्थकारेण अलङ्कारान्तरस्य व्यङ्ग्यत्वेऽपि वाचकशब्दप्रयोगे तस्य वाच्यालङ्कारत्वमेव, अन्यथा तु ध्वनित्वमित्यङ्गीकृतम्। प्रकृतेऽपि उत्प्रेक्षालङ्कारध्वनिरेव। इवादीनामप्रयोगात्। इदमपि अर्थशक्तिमूलानुरणनध्वन्युदाहरणप्रदर्शनपरं प्रकरणम्॥

वाचकशब्दविरहितं स्थलान्तरं प्रदर्शयति—ईसेति। नायको नायिकां वक्ति। एष पुरो दृश्यमानः, पूर्णिमाचन्द्रः पूर्णचन्द्रः, ईर्ष्याकलुषस्य मलिनस्यापि,

---

१. 'चिअ' ख. ग.

यथा वा—

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
राकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥

---

उज्जीवनी ।

तव मुखस्य सदृशत्वं साम्यं, प्राप्य, अद्य अङ्ग एव स्वकीये अवयवे एव, न माति न परिमिततां भजते, किन्तु दश दिशः पूरयतीत्यर्थः ॥

अत्र चन्द्रकृतस्य दिशां प्रपूरणस्य, नायिकामुखसादृश्यप्राप्तिर्हेतुत्वेनोत्प्रेक्षिता इति उत्प्रेक्षावाचकशब्दाभावेन उत्प्रेक्ष ध्वनेरुदाहरणमिदम् ।

मुखस्य सदृशत्वं प्राप्येवेति इवशब्दाभावेऽपि "ननु" शब्दसत्त्वात्तस्य चोत्प्रेक्षाद्योतकत्वं मन्वान उदाहरणान्तरमाह—त्रासाकुल इति ।

शिशुपालवधाख्यस्य महाकाव्यस्य पञ्चमसर्गे षड्विंशं पद्यमिदम् । द्वारकाया इन्द्रप्रस्थं प्रति प्रयाणे रैवतकगिरौ कञ्चित्कालमुषितवति श्रीकृष्णे तत्र कस्यचित् मृगस्य वर्णनात्मकमिदम् । रैवतकगिरौ जनानामपूर्वेण दर्शनेन त्रासाकुलः त्रासेन भयेन विह्वलः मृगः, निकेतान् सेनासन्निवेशगृहान्, परितः समन्तात् । परिपतन् भ्रमन्, कैश्चिदपि धन्विभिः धनुष्मद्भिः, पुंभिः पुरुषैः, न अन्वबन्धि नानुगतः । तथापि अङ्गनानां नारीणां, आकर्णपूर्णनयनेषुहतेक्षणश्रीः आकर्णं कर्णपर्यन्तं, पूर्णैः कर्णान्तविश्रान्तैः नयनैरेवेषुभिः बाणैः, हता प्रतिहता, ईक्षणश्रीः नयनशोभा यस्य तादृशः, स मृगः, क्वचिदपि कुत्रचिदपि प्रदेशे, न तस्थौ स्थिरां स्थितिं न चकारेत्यर्थः ।

अत्र मृगस्य त्रासाकुलस्य क्वचिदप्यनवस्थानस्य हेतुत्वेनाङ्गनानयनबाणहतेक्षणश्रीकत्वमुत्प्रेक्ष्यते । सा च उत्प्रेक्षावाचकशब्दाभावात् व्यङ्ग्येति उत्प्रेक्षाध्वनेरिदमप्युदाहरणं प्रदर्शितम् ।

अङ्गनानयनेषुहतेक्षणश्रीकत्वस्य हेतुत्वे प्रमाणं दर्शयति—शब्दार्थेति । शब्दार्थव्यवहारे अर्थप्रतीत्यर्थं शब्दप्रयोगात् शब्दरूपस्य पदार्थस्य, व्यवहारे

शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम् ।

श्लेषध्वनिर्यथा—

रम्या इति प्राप्तवतीः पताका
राग विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः ॥

अत्र वधूभिः सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वध्व इव वलभ्य इति श्लेषप्रतीतिरशब्दाप्यर्थसामर्थ्यान्मुख्यत्वे [1]वर्तते । यथासंख्यध्वनिर्यथा—

---

उज्जीवनी ।

**प्रयोगे प्रसिद्धिरेव प्रमाणं** लोकप्रसिद्धिः प्रमाणमिति यावत् । तथा कविसमय-प्रसिद्धेरपि प्रामाण्यं निर्बाधम् ।

श्लेषध्वनिमुदाहरति—श्लेषध्वनिर्यथेति । रम्या इति । यस्यां द्वारकायां युवानस्तरुणाः, रम्या इति रमणीया इति हेतोः, रागं रतिं वर्धयन्तीः, नमद्व-लीकाः नमन्ति नम्राणि, वलीकानि नीध्राणि यासु तादृशीः वलभी- गोपानसीः, वधूभिः समं ललनाभिः सार्धं, असेवन्त आश्रितवन्तः । युवानो वधूभिः सह वलभीः असेवन्त इत्यस्य युवानः वधूः वलभीश्चासेवन्त इत्यर्थः । विशेषणवाक्या-र्थानां वधूसाधारण्यमप्यस्ति । तथा च वध्वः रम्याः, पताकाः प्राप्तवत्यः सौभाग्यवत्यः विविक्ता विमलाः सुन्दर्य इति यावत् । अतो रागमनुरागं वर्ध-यन्त्यः । नमद्वलीकाश्च नमन्त्यो वलयः त्रिवलयो यासां तादृश्यः इति द्वितीयः स्याप्यर्थस्य प्रत्यायनात् श्लेषालङ्कारो व्यज्यते ।

उपपादयति—अत्रेति । अत्र अस्मिन् पद्ये, वधूभिः कान्ताभिः सह, वलभीर्गोपानसीः, असेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वाक्यार्थस्य वाच्यस्य बोधानन्तरं, वध्व इव वलभ्य इति वलभीनां वधूसादृश्यबोधिका श्लेषप्रतीतिः श्लेषालङ्कारस्य व्यञ्जनया बोधः । इयं प्रतीतिस्तु, अशब्दा शब्दादभिधाजन्य-प्रतिपत्त्यविषयीभूतापि, अर्थसामर्थ्यादर्थशक्तेः, मुख्यत्वेन प्रधानत्वेन विवर्तते परिणमति, अतोऽत्र श्लेषध्वनिः ।

---

१. 'विव' ख. ग.

अङ्कुरितः पल्लवितः कोरकितः [1]पुष्पितश्च सहकारः ।
अङ्कुरितः पल्लवितः कोरकितः [2]पुष्पितश्च हृदि मदनः ॥

अत्र हि यथोद्देशमनूद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते । एवमन्येऽप्यलङ्कारा यथायोगं योजनीयाः ॥

---

उज्जीवनी ।

यथासङ्ख्यध्वनिमुदाहरति—यथेति । अङ्कुरितः इति । यथा सहकारश्चूतः, अङ्कुरितः सञ्जाताङ्कुरः प्रथमं, ततः पल्लवितः सञ्जातपल्लवः, कोरकितः सञ्जातमुकुलः, ततः पुष्पितः विकसितकुसुमश्च, तथा तरुणानां हृदि चेतसि, मदनः कामः, अङ्कुरितः प्रथमं प्रादुर्भूतः, ततः पल्लवितः ईषद्वृद्धिमुपेतः अथ कोरकितः अनुभावदशामाप्तः, ततः कुसुमितः विकासरूपेणानुभवविषयीभूतश्च अभवत् ।

उपपादयति—अत्रेति । 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' अत्र वसन्तवर्णने प्रस्तुते, वर्णनीयत्वेन प्रस्तुतयोः मदनसहकारयोः एकधर्मान्वयः, अङ्कुरितत्वादीनां धर्माणामन्वय इति तुल्ययोगितालङ्कारः । तथा बहूनां क्रियाणां गुम्फनात्मकः समुच्चयश्च वाच्योऽलङ्कारः । अत्र अस्मिन् पद्ये, यथोद्देशम् उद्देशमनतिक्रम्य, अनूद्देशे तेनैव क्रमेणोद्दिश्यमाने यत् चारुत्वं सहृदयहृदयाह्लादकारित्वं, अनुरणनरूपं अनुस्वानात्मक, मदनविशेषणभूतमङ्कुरितादिशब्दगतं मदनस्य विशेषणभूतानामङ्कुरितत्व, पल्लवितत्व, कोरकितत्वकुसुमितत्वानाम् अङ्कुरितादिशब्दैः प्रतीयमानं तत् तद्रूपं, यथासङ्ख्यालङ्कारध्वन्यात्मकं मदनसहकारयोः प्रस्तुतयोः तुल्ययोगितासमुच्चयलक्षणात्, तुल्ययोगितालङ्काररूपात् समुच्चयालङ्काररूपाच्च, वाच्यादभिधेयाद् अतिरिच्यमानं अतिरिक्तम्, आलक्ष्यते प्रतीयते । एवमिति । एवमुक्तप्रकारेण, अन्येऽपि अलङ्कारा ध्वन्यमानाः, यथायोगं यथासम्भवं योजनीयाः ।

एतेन उपमादयो वाच्यार्थगता अलङ्काराः सर्वेऽपि ध्वनिकारेणाभ्युपगत इति ज्ञायते । ततश्च शब्दशक्त्या यत्रार्थान्तरं प्रकाशते, स यदि ध्वनेः प्रकारा

---

१. 'कुसुमित' ग २. 'कुसुमित' ग

एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिद-मुच्यते—

**शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।**
**तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥ २८ ॥**

ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च । तत्रेह प्रकरणात् व्यङ्ग्यत्वेनेत्यवगन्तव्यम् । व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्य-विवक्षायामेव सत्यां ध्वनावन्तःपातः इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रति[1]पाद-यिष्यते ॥

---

उज्जीवनी ।

उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यादित्याशङ्क्य "आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते । यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ।" इति शब्दशक्तिमूलस्यार्थान्तरस्यापि प्रकृतत्वे श्लेषो वाच्यालङ्कारः । तस्याप्रकृतत्वे तद्व्यङ्ग्यत्वेनाभ्युपगम्यमानम् अर्थान्तरं यद्यलङ्कारात्मकं, यदि च तद्वाचकपदरहित तदा स शब्दशक्तिमूलध्वनेर्विषय इति चोक्तम् ।

एवमिति । एवं पूर्वोक्तप्रकारेण, अलङ्कारध्वनिमार्गं व्युत्पाद्य अलङ्कार-ध्वनेः दिक्प्रदर्शनानन्तरं तस्य प्रयोजनवत्तां सफलत्वं ख्यापयितुं प्रख्यापयितुं, इदं वक्ष्यमाणं, उच्यते कथ्यते । शरीरीकरणमिति । येषामलङ्काराणां, वाच्यत्वे शक्तिजन्यबोधविषयत्वे, शरीरीकरणं अशरीराणामपि कटककुण्डला-दितुल्यतया शरीरोपकारकाणां शरीरत्वापादनं, न व्यवस्थितं, ते ध्वन्यङ्गतां ध्वनेरङ्गत्वं, गताः प्राप्ताः, परामुत्कृष्टां छायां यान्ति प्राप्नुवन्ति ।

ध्वन्यङ्गता ध्वनिं प्रति अङ्गत्वं, व्यञ्जकत्वेन व्यङ्गयत्वेन चेति उभाभ्यां प्रकाराभ्यां भवति । तत्रेह अस्मिन् स्थले प्रकरणात् व्यङ्गयालङ्कार-निरूपणात्मकात् प्रकृतात्, व्यङ्ग्यत्वेनाङ्गत्वम् । इत्यवगन्तव्यं ज्ञातव्यम् । एवम् अलङ्काराणां व्यङ्ग्यत्वेऽपि प्रतीयमानतायामपि, प्राधान्यविवक्षायां सत्यामेव प्रधानत्वेनाङ्गित्वेन, तात्पर्ये सत्येव, ध्वनौ काव्यविशेषे, अन्तःपातः

---

१. 'काशयि' ग.

अङ्गित्वेन व्यङ्ग्यतायामपि, अलङ्काराणां द्वयी गतिः—कदाचिद् वस्तुमात्रेण व्यज्यन्ते, कदाचिदलङ्कारेण।

तत्र—

**व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥ २९॥**

तस्मात्तत्र तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव काव्यं प्रवृत्तम्। अन्यथा तु तद्वाक्यमात्रमेव स्यात्॥

---

उज्जीवनी।

अन्तर्भावः। इतरथा प्राधान्येनाविवक्षिततयाङ्गित्वाभावे, गुणीभूतव्यङ्ग्यत्वमेव तस्य काव्यस्येति प्रतिपादयिष्यते वक्ष्यते।

अङ्गित्वेन प्राधान्येन, व्यङ्ग्यतायामपि प्रतीयमानतायामपि, अलङ्काराणां द्वयी गतिः व्यञ्जकत्वेन ध्वन्यङ्गस्य वस्त्वलङ्काररूपेण द्वैविध्याद् व्यङ्ग्यानामपि प्रकारद्वयमित्यर्थः। कदाचिद् वस्तुमात्रेण व्यञ्जकेन वस्तुना, व्यज्यन्ते प्रतीयन्ते। कदाचिच्च व्यञ्जकेनालङ्कारेण व्यज्यते। एतेन वस्त्वलङ्काररूपाद् व्यञ्जकद्वैविध्याद् वस्त्वलङ्काररूपव्यङ्ग्यस्यापि द्वैविध्ये अर्थशक्तिमूलध्वनेश्चातुर्विध्यमित्यर्थः।

अलङ्काराणां व्यङ्ग्यत्वे विशेषमाह—तत्रेति। व्यज्यन्त इति। यदा वस्तुमात्रेण, अलङ्कारभिन्नेन वस्तुना व्यञ्जकेनेत्यर्थः। अलङ्कृतयोऽलङ्काराः, व्यज्यन्ते, तदा तासामलङ्कृतीनां ध्वन्यङ्गता ध्वन्यात्मकत्वम्। अत्र हेतुमाह—काव्यवृत्तेरिति। काव्यवृत्तेः काव्यपदप्रवृत्तेः, तदाश्रयाद् यतः सोऽलङ्काररूपो व्यङ्ग्योऽर्थः तमाश्रित्यैव काव्यपदप्रवृत्तिः वर्तते तत इत्यर्थः।

तस्मादिति। तस्मात् ततः, तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव तथाविधस्य ध्वन्यङ्गभूतस्य व्यङ्ग्यस्यालङ्कारस्य प्रतीतिविषयत्वतात्पर्येणैव, काव्यं कविकर्म प्रवृत्तम्। अन्यथा अलंकारस्य व्यङ्ग्यत्वाभावे, तत् काव्यं वाक्यमेव केवलं वाक्यात्मकमेव, स्याद् भवेत्।

तासामेवालङ्कृतीनाम्—

**अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत् ।**
**चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥ ३० ॥**

उक्तं ह्येतत्—'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति । वस्तुमात्रव्यङ्ग्यत्वे[1] चालङ्काराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यः विषय उन्नेयः । तदेवमर्थमात्रेणालङ्कारविशेषरूपेण वार्थेनार्थान्तरस्या-

---

उज्जीवनी ।

वस्तुना व्यञ्जकेनालङ्कारस्य ध्वन्यमानतां प्रदर्श्य व्यञ्जकेनालङ्कारेणालङ्कारस्य ध्वनिमाह—तासामेवेति । अलङ्कारेति । यासामलङ्कृतीनां वस्तुमात्रेण व्यङ्ग्यानां प्राधान्ये ध्वन्यङ्गता, तासामेवालङ्कृतीनां, अलङ्कारान्तरव्यङ्ग्यभावे अलङ्कृत्यन्तरेण, व्यङ्ग्यभावे व्यङ्ग्यत्वे सति, चारुत्वोत्कर्षतः चारुत्वस्य रामणीयकस्य उत्कर्षात् । व्यङ्ग्यप्राधान्यं व्यङ्ग्यस्य तस्यालङ्कारस्य प्राधान्यम् । यदि लक्ष्यते यदि दृश्यते, तदा ध्वन्यङ्गता ध्वनिविषयत्वं भवेत् । वाच्येन वस्तुना वालङ्कारस्य व्यङ्ग्यतायामिव वाच्येनालङ्कारेण अलङ्कारान्तरस्य व्यङ्ग्यतायामपि तस्य वाच्यातिशायिचमत्कृतिजनकत्वं यद्यस्ति तर्हि सोऽपि अर्थशक्तिमूलानुरणन ध्वनेर्विषयो भवतीत्यर्थः ।

तत्र प्रमाणमाह—उक्तमिति । वाच्यव्यङ्ग्ययोः वाच्यस्य व्यङ्ग्यस्य चार्थस्य, प्राधान्यविवक्षा प्राधान्यस्य प्रधानताया विवक्षा । चारुत्वोत्कर्षनिबन्धना चारुत्वस्य चमत्कृतेः उत्कर्ष एव निबन्धनं यस्यास्तादृशी, इति एतद्, इदं पूर्वोक्तमित्यर्थः । अलङ्काराणां वस्तुमात्रव्यङ्ग्यत्वे वस्तुमात्रेणालङ्काराणां व्यङ्ग्यतायां, अनन्तरोपदर्शितेभ्यः अव्यवहितपूर्वत्वेन प्रदर्शितेभ्यः उदाहरणेभ्य एव, विषय उन्नेयः । उदाहरणानि उन्नेयानि । तत् तस्मात्, एवमुक्तप्रकारेण, अर्थमात्रेणालङ्कारविशेषरूपेण वा, अर्थेन वस्त्वलङ्कारात्मना द्विविधेन व्यञ्जकेनार्थेन, अर्थान्तरस्य वस्तुमात्रस्य, अलङ्कारस्य उपमादेर्वा प्रकाशने,

---

१. 'त्वेऽलङ्कारव्यङ्ग्यत्वे चा०' ख.

लङ्कारस्य वा प्रकाशने चारुत्वोत्कर्षनिबन्धने सति प्राधान्येऽर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः ॥

एवं ध्वनेः प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—

**यत्र प्रतीयमानोऽर्थः प्रम्लि[1]ष्टत्वेन भासते ।**
**वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥ ३१ ॥**

द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च । तत्र य एव स्फुटः शब्दशक्त्यार्थशक्त्या वा प्रकाशते स एव ध्वनेः मार्गो नेतरः ॥

---

उज्जीवनी ।

चारुत्वोत्कर्षनिबन्धने, चारुत्वातिशयनिमित्ते प्राधान्ये सति, अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिः, अर्थशक्तिमूलानुस्वानरूपं व्यङ्ग्यं यत्र तादृशो ध्वनिः, अवगन्तव्यः ज्ञातव्यः । एवं चार्थशक्तिमूलध्वनिः चतुर्विधः । व्यञ्जकस्य चार्थस्य स्वतः सम्भवित्वेन, कविप्रौढोक्तिसिद्धत्वेन, कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेनापि त्रैविध्ये द्वादशविधोऽर्थशक्तिमूलध्वनिः ।

एतावता प्रबन्धेन ध्वनेः प्रभेदो दर्शितः । इदानीं तस्य ध्वन्यमानस्यार्थस्य ध्वनिव्यपदेशविषयत्वमधिकृत्याह—एवमिति । एवं पूर्वोक्तप्रकारेण, ध्वनेः प्रतीयमानार्थप्रधानस्य काव्यस्य, प्रभेदान् प्रतिपाद्य निरूप्य, तदाभासविवेकं व्यङ्ग्यत्वेऽपि ध्वनित्वेनाभासमानस्य तस्यार्थस्य, ध्वनिव्यपदेशविषयाद् भिन्नत्वं कर्तुं भेदं प्रदर्शयितुं, उच्यते कथ्यते । यत्रेति । यत्र काव्ये प्रतीयमानो व्यङ्ग्योऽर्थः, प्रम्लिष्टत्वेन अस्फुटत्वेन, अपि किं च, वाच्यस्याभिधेयस्यार्थस्य, अङ्गतया अङ्गत्वेन वा, भासते प्रतीतिविषयो भवति, असौ व्यङ्ग्योऽर्थः, ध्वनेः न गोचरः ध्वनिविषयो न भवितुमर्हति ।

तदेवोपपादयति—द्विविधोऽपीति । प्रतीयमानः व्यङ्ग्यः अर्थोऽपि, स्फुटः स्फुटप्रकाशविषयः, अस्फुटः अस्फुटतयैव प्रकाशविषय इति एवं द्विविधः द्विप्रकारः । तत्रेति—य एव य एवार्थः स्फुटः स्पष्टः, शब्दशक्त्या शब्दात्

---

१. 'श्लि.' ख.

स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्यानुरणनरूप-व्यङ्ग्यस्य ध्वनेरगोचरः ॥

कमळाअरा ण मळिआ हंसा उड्डाविआ ण अ पिउच्छा ।
केण वि गामतडाए अब्भं उत्ताणअं छित्तं ॥

[कमलाकराः न मलिता हंसा उड्डायिता न च सहसा ।
केनापि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम् ॥]

अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रतिबिम्बदर्शनस्य वाच्याङ्गत्वमेव । एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते, तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम् । यथा—

---

## उज्जीवनी ।

शक्त्य व्यापारेण यदर्थान्तरबोधजननसामर्थ्यं तेन, अर्थशक्त्या अर्थान्तरबोधजनकत्वसामर्थ्येन वा, प्रकाशते भासते, स एव तादृश एव ध्वनेः मार्गः पन्थाः, नेतरः तद्भिन्नः ध्वनिव्यपदेश्यो न भवतीत्यर्थः । यः प्रतीयमानः स्फुटोऽपि स्पष्टतया व्यङ्ग्योऽपि, अभिधेयस्य वाच्यार्थस्य, अङ्गत्वेन सहकारित्वेनावभासते भासते, सः प्रतीयमानोऽर्थः, अनुरणनरूपव्यङ्ग्यस्य अस्य ध्वनेः अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यध्वनेः, अगोचरः अविषयः । एतेन यत्र प्रतीयमानस्यार्थस्यास्फुटत्वं, यत्र च स्फुटत्वेऽपि तस्याभिधेयाङ्गत्वं तत्र सोऽर्थो ध्वनिविषयो नेत्यर्थः । उदाहरति—कमलाअरेति । काचिन्मुग्धवधूः पितृष्वसारं वक्ति । हे पितृष्वसः । कमलाकराः कमलानां पद्मानां समूहाः, न मलिताः न खण्डिताः, हंसाश्च न उड्डायिताः, उड्डयनं कारिताः, केनापि जनेन, ग्रामतडागे ग्रामस्थिते सरसि, उत्तानितं ऊर्ध्वमुखं, अभ्रं मेघः, क्षिप्तं प्रक्षिप्तम् । अत्र सरोजले मेघस्य प्रतिबिम्बदर्शनं मुग्धवधूकर्तृकं व्यङ्ग्यम् । तच्च स्फुटमेव । तत्रापि जले मेघस्य छायां दृष्ट्वा काचिद् वधूः मेघं तत्र केनापि प्रवेशितं मन्वाना पितृष्वसारं कथयतीति वाच्यार्थस्यैवाङ्गत्वेन (उपकारकत्वेन) आभासते इत्यतः नायं ध्वनेः विषयः ।

विवृणोति—अत्रेति । अत्र हि अस्मिन् काव्ये तु, मुग्धवध्वा मुग्धाया वध्वाः, जलधरप्रतिबिम्बदर्शनस्य जले यद् जलधरप्रतिबिम्बदर्शनात्मकं तस्य प्रतीयमानस्य व्यङ्ग्यस्य, वाच्याङ्गत्वमेव वाच्यमर्थं प्रत्यङ्गत्वमेव । अन्यत्रापि

वाणीरकुडङ्गोड्डीणसउणिकोळाहलं सुणन्तीए ।
घरकम्मवावडाए बहुए सीअन्ति अङ्गाइं ॥
[वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृतायाः सीदन्त्यङ्गानि ॥]

एवंविधो हि विषयः प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्देक्ष्यते । यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैवावभासते सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्गः । यथा—

---

उज्जीवनी ।

स्थलान्तरेऽपि, एवंविधे विषये एतादृशे विषये, यत्र वाच्यस्याभिधेयस्यार्थस्य व्यङ्ग्यापेक्षया व्यङ्ग्यमर्थमपेक्ष्य, चारुत्वोत्कर्षप्रतीत्या चारुत्वस्य चमत्कृतिजनकत्वस्य य उत्कर्षः उत्कृष्टत्वं, तस्य प्रतीत्या भानेन, प्राधान्यं प्रधानत्वं अवसीयते प्रधानत्वेन वाच्य एव पर्यवस्यति, तत्र तादृशस्थले, व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य, अङ्गत्वेन प्रतीतेः अङ्गत्वेन ज्ञानविषयत्वादेव, ध्वनेः अविषयत्वं ध्वनिविषयत्वं न भवतीत्यर्थः ॥

उदाहरणान्तरमाह—वाणीरेति । वानीरकुञ्जाद् वेतसलतागृहात् । उड्डीनानां शकुनीनां पक्षिणां, कोलाहलं कलकलं शृण्वत्या आकर्णयन्त्याः, गृहकर्मणि स्वगृहे कर्तव्ये कर्मणि, व्यापृताया नियुक्तायाः, वध्वा ललनायाः, अङ्गानि सीदन्ति अवसादं प्राप्नुवन्ति ॥

अत्र दत्तसङ्केतो लतागृहं प्रविष्ट इति व्यङ्ग्योऽर्थः । तदपेक्षया वाच्यस्यैव चारुत्वोत्कर्षः प्रतीयत इति तस्यैव प्राधान्याद् व्यङ्ग्यस्याङ्गत्वम् ।

एवंविध इति । एवंविधो हि विषयः व्यङ्ग्यस्य स्फुटत्वेऽपि वाच्याङ्गत्वेन पर्यवसानं यत्र तादृशो विषयः गुणीभूतव्यङ्ग्योदाहरणत्वेन मध्यमकाव्योदाहरणत्वेन, निर्देक्ष्यते । गुणीभूतव्यङ्ग्यस्य तु लक्षणमुक्तं मम्मटभट्टेन—

व्यङ्ग्ये वाच्यानतिशायिनि सति मध्यमं गुणीभूतव्यङ्ग्यं काव्यमिति । तच्च विभक्तं—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥

इति । ध्वनिविषयमाह—यत्रेति । यत्र यस्मिन् काव्ये, प्रकरणादिप्रतिपत्त्या

उच्चिणसु पडिअकुसुमं मा धुण सेहालिअं हलिअसुह्णे ।
अह दे विसमविरावो ससुरेण सुओ वळअसद्दो ॥
[उच्चिनु पतितकुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।
एष ते विषमविरावः श्वशुरेण श्रुतो वलयशब्दः ॥]

अत्र ह्यविनयपतिना सह रममाणा सखी बहि[1]: श्रुतवलयकलकलया सख्या प्रतिबोध्यते । एतदपेक्षणीयं वाच्यार्थप्रतिपत्तये । प्रतिपन्ने च वाच्येऽर्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वात् पुनर्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भावः ॥

---

उज्जीवनी ।

प्रकरणादेः वक्तृतात्पर्यनिर्णायकस्य प्रत्यायनेन, निर्धारितविशेषो वाच्योऽर्थः निर्धारितो निर्णीतो, विशेषो यस्य (वाच्यस्यार्थस्य) तादृशो वाच्योऽभिधाविषयोऽर्थस्तु प्रतीयमानाङ्गत्वेनावभासते प्रतीयमानस्य व्यङ्ग्यस्यार्थस्याङ्गत्वेनैवावभासते अप्रधानत्वेनैव भासते स ध्वनिः, अस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यध्वनरेव मार्गः पन्थाः । उदाहरति—यथेति । उच्चिणसु इति ।

हालिकस्नुषे हालिकस्य पुत्रभार्ये, पतितं भूमौ लताया निपतितं, कुसुमं पुष्पं, उच्चिनु गृहाण, । शेफालिकां शेफालिकापुष्पलतां, वा धुनीहि मा कम्पय । हेतुमाह—एषेति । विषमविरावः विषमः विरावः, ध्वनिर्यस्य तादृशः एषोऽयं, ते वलयशब्दः, वलयानां झणत्कारः, श्वशुरेण पत्युः पित्रा श्रुत आकर्णितः ॥

ध्वनिं प्रतिपादयति—अत्रेति । अत्रास्मिन् पद्ये, अविनयपतिना सह न विद्यते विनयो यस्य तादृशेन पत्या साकं, रममाणा क्रीडन्ती, सखी काचिद् वधूः, बहिः श्रुतवलयकलकलया बहिः श्रुतः, श्रवणविषयीभूतः, वलयानां कलकलः नादः यया तादृश्या, सख्या वयस्यया, प्रतिबोध्यते ज्ञाप्यते । वाच्यार्थप्रतिपत्तये अत्र वाच्यस्यार्थस्य ज्ञानाय एतद् व्यङ्ग्यं अपेक्षणीयं आवश्यकम् । प्रतिपन्ने च वाच्यार्थे वाच्यार्थस्य प्रतिपत्त्यनन्तरं च, तस्य व्यङ्ग्यस्य, अविनयप्रच्छादनतात्पर्येण अविनयस्य आच्छादनतत्परत्वेन, अभिधीयमान त्वाद् अभिधया प्रतिपाद्यमानत्वात्, पुनः व्यङ्ग्याङ्गत्वमेव व्यङ्ग्यस्य ध्वनेरङ्गत्वमेव, इति अस्मिन्ननुरणनरूपव्यङ्ग्यध्वनौ अन्तर्भाव इत्यर्थः ।

---

१. 'हुश्रु०' ख

एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितवाच्यस्यापि तं कर्तुमाह—

**अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।**

**शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥ ३२ ॥**

स्खलद्गतेरुपचरितस्य शब्दस्याव्युत्पत्तेरशक्तेर्वा निबन्धो यः स च न ध्वनेर्विषयः ॥

यतः —

**सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।**

**यद् व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥ ३३ ॥**

तच्चोदाहृतविषयमेव ॥

*इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके द्वितीय उद्द्योतः ।

---

उज्जीवनी ।

लतागृहे केनचिद् धृष्टेन पत्या सह काचिन्नायिका स्वैरं विहरति । बहिस्तिष्ठन्ती तस्याः सखी मणितादिरणितं शृण्वती, तां ततो निवारयितुं प्रतिबोधयति । निवर्तनरूपस्य वाच्यमङ्गं भवतीति अयं संलक्ष्यक्रमव्यङ्ग्यध्वनेः विषय इत्यर्थः ।

एवं विवक्षितवाच्यध्वनिविषये व्यङ्ग्यस्य स्फुटप्रतीयमानतायामपि तस्य वाच्याङ्गत्वेन प्रतीयमानतया व्यङ्ग्यत्वेनाभासमानत्वमेव तस्य, न च स ध्वनिविषयः किन्तु गुणीभूतव्यङ्ग्यव्यपदेशविषयः इति प्रतिपाद्य सम्प्रति अविवक्षितवाच्यध्वनिविषयेऽपि तं प्रदर्शयितुमाह—एवमिति । एवं पूर्वोक्तप्रकारेण, विवक्षितवाच्यस्य ध्वनेः, तदाभासविवेके प्रस्तुते सति, अविवक्षितवाच्यस्यापि तं वाच्योत्कर्षाधायकत्वेन प्रतीयमानतायां, गुणीभूतव्यङ्ग्यव्यपदेशविषयत्वं कर्तुं प्रस्तोतुमाह इत्यर्थः ।

अव्युत्पत्तेरिति—अव्युत्पत्तेः निपुणतारहितत्वेन, अशक्तेः शक्तिराहित्येन च काव्यस्योद्भवे समुल्लासे च हेतुभूताभ्यां शक्तिव्युत्पत्तिभ्यां विना तद्रहितस्य कवेः, स्खलद्गतेः स्खलन्ती, अप्रभवन्ती, गतिः अर्थान्तरबोधनसामर्थ्यं यस्य

---

* इत्यानन्दवर्धनविरचिते सहृदयहृदयालोके काव्यालोके द्वितीय उद्द्योतः समाप्तः ।

उज्जीवनी

तादृशस्य, उपचरितस्य शब्दस्य यो निबन्धः निबन्धनं स, सूरिभिः काव्य-वासनापरिपक्वबुद्धिभिः, ध्वनेर्विषय इति न मतः नानुमन्यते ।

तस्य कारणमाह—यत इति । अङ्गिभूतस्य प्रधानभूतस्य, व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य, सर्वेष्वेव प्रभेदेषु, सकलेषु ध्वनिप्रभेदेषु, स्फुटत्वेन अम्लिष्टत्वेन, अवभासनं प्रतिभानं, यत् तत् पूर्णं ध्वनिलक्षणं पूर्णतां प्राप्तं ध्वनेर्लक्षणं, यत एवं ततः स्खलद्गतेः शब्दस्य निबन्धने ध्वनित्वं नास्ति । ध्वनेः स्फुटत्वेनावभासनमेव तल्लक्षणं, तस्य प्रमाणमित्यर्थः । अथवा ध्वनि-लक्षणं ध्वनिज्ञानं, तच्च ध्वनिज्ञानं च उदाहृतविषयमेव उदाहृता विषया यस्य तादृशमेव भवतीत्यर्थः ।

अविवक्षितवाच्य,विवक्षितान्यपरवाच्यरूपेण द्विविधस्यापि ध्वनेः प्रभेदास्तेषामुदाहरणानि च अस्मिन्नुद्योते प्रदर्शितानि । व्यङ्ग्यानां वस्त्व-लङ्कारसरूपाणामर्थानां व्यङ्ग्यत्वेनावभासमानानां स्वरूपं प्रामाण्यं च प्रतिपादितम् ।

## अथ तृतीय उद्द्योतः

एवं व्यङ्ग्यमुखेनैव ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्यञ्जकमुखेनैतत् प्रकाश्यते—

**अविवक्षितवाच्यस्य पदवाक्यप्रकाश्यता ।**

**तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥ १ ॥**

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये [1]प्रदेभे पदप्रकाशता यथा—

---

उज्जीवनी

एतावता प्रबन्धेन (द्वितीयोद्द्योतान्तेन) ध्वनेः अविवक्षितवाच्यस्य विवक्षितान्यपरवाच्यस्य च स्वरूपं, व्यङ्ग्यभेदनिबन्धनो भेदश्च प्रत्यपादि । इदानीं व्यञ्जकभेदेनापि ध्वनेर्भेदं वक्तुमुपक्रमते—एवमिति। एवं पूर्वोक्तप्रकारेण। ध्वनेः अविवक्षितवाच्यादिभेदेन भिन्नस्य । व्यङ्ग्यमुखेनैव व्यङ्ग्यस्यार्थस्य भेदमाश्रित्य । सप्रभेदे स्वरूपे, प्रदर्शिते अवान्तरभेदपुरःसरं निरूपिते सति । पुनः प्रकारान्तरेणापि । व्यञ्जकमुखेन व्यञ्जकशब्दादिमुखेन, एतत् स्वरूपं, प्रकाश्यते ।

यद्यपि काव्यशरीरात्मकस्य शब्दस्य, अर्थस्य च अर्थान्तरव्यञ्जकत्वं समानं, तथापि अर्थस्य कदाचिद् व्यङ्ग्यत्वमपि सम्भवतीति शब्दरूपव्यञ्जकमुखेन ध्वनेः भेदमाहेति भावः। तदेवाह—अविवक्षितेति। अविवक्षितवाच्यस्य लक्षणामूलस्य, तदन्यस्य तद्भिन्नस्य, अनुरणनरूपव्यङ्ग्यस्य शब्दशक्तिमूलस्य, ध्वनेश्च सर्वविषस्यापि ध्वनेः पदवाक्यप्रकाश्यता पदप्रकाश्यता वाक्यप्रकाश्यता चेत्यर्थः। क्वचिदेकेनैव पदेन, क्वचिच्च वाक्येन व्यङ्ग्योऽर्थः प्रकाशत इति यावत् ।

उदाहरति—अविवक्षितेति । अविवक्षितवाच्यस्य तदाख्यस्य ध्वनेः, अत्यन्ततिरस्कृतवाच्यार्थान्तरसङ्क्रमितवाच्यत्वाभ्यां यौ प्रभेदो तयोरन्यस्मिन्

---

१. 'स्वप्र०' च

महर्षेर्व्यासस्य—'सप्तैताः समिधः श्रियः,' यथा वा कालिदासस्य—'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्,' यथा वा[१]—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' एतेषूदाहरणेषु 'समिध' इति, 'सन्नद्ध' इति, 'मधुराणम्' इति च पदानि व्यञ्जकत्वाभिप्रायेणैव कृतानि ॥

---

उज्जीवनी ।

अत्यन्ततिरस्कृतवाच्यात्मके प्रभेदे पदप्रकाश्यतां प्रदर्शयति—यथा महर्षेर्व्यासस्येति ।

धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥

इति व्यासप्रोक्तं पद्यम् । धृतिः (धैर्यं), क्षमा, दया, शौचं, कारुण्यं, अनिष्ठुरा वाग्, मित्राणामनभिद्रोहः एताः सप्त श्रियः समिधः, इत्यन्वयः । अत्र समिच्छब्दः शक्त्या इन्धनरूपमर्थं बोधयति । इन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्' इत्यमरः । स चात्यन्तं तिरस्कृतः । अतः स शब्दो लक्षणया उद्दीपकत्वं, ततो व्यञ्जनया अन्यवैलक्षण्येन कार्यकारित्वादिकं प्रतिपादयति । अत इदं अविवक्षितवाच्यध्वनेः अत्यन्ततिरस्कृतवाच्यात्मकप्रभेदस्य पदप्रकाश्यतायामुदाहरणम् । उदाहरणान्तरमाह—यथा कालिदासस्येति । 'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायामिति ।

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः ।
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥

इति मेघदूतस्य पद्यमिदम् । सन्नद्ध इति मेघविशेषणम् । सन्नद्धशब्दस्य वर्मित इति वाच्योऽर्थः । स चात्यन्तं तिरस्कृतः । तस्यार्थस्य प्रकृतानुपयोगात् । औन्नत्यं लक्ष्योऽर्थः । निष्करुणत्वादयश्च व्यङ्ग्याः ।

पुनरप्युदाहरति—यथा वेति । 'किमिव हि मधुराणां मण्डनं नाकृतीनामिति ।

---

२. 'वा तस्यैव कि०' ज.

तस्यैवार्थान्तरसङ्क्रमितवाच्ये यथा—'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्'। अत्र रामेणेत्येतत् पदं साहसैकरसत्वादिव्यङ्ग्याभिसङ्क्रमितवाच्यं व्यञ्जकम्।

---

उज्जीवनी।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

महाकविश्रीकालिदासकृते अभिज्ञानशाकुन्तले शकुन्तलां दृष्टवतो दुष्यन्तस्येदं वचनम्। "आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्। करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।" इत्यनेन माधुर्यगुणविशिष्टरसविशेषः वाच्योऽर्थः मधुरशब्दस्य। तस्य चाकृत्याभेदान्वयबोधानुपपत्त्या तस्यार्थस्यात्यन्तं तिरस्कारः। सर्वविषयरञ्जकत्वादिः लक्ष्योऽर्थः। अतिशयिताभिलाषविषयत्वं व्यङ्ग्यम्। एतेषु त्रिषूदाहरणेषु, समिध इति, सन्नद्ध इति, मधुराणामिति च पदानि व्यञ्जकत्वाभिप्रायेण कृतानि अभिमतमर्थं व्यञ्जनया बोधयेयुः इत्यभिप्रायेण प्रयुक्तानीति पदप्रकाशता स्फुटमावेदिता॥

तस्यैवेति—तस्यैव अविवक्षितवाच्यध्वनेरेव। अर्थान्तरसङ्क्रमितवाच्ये द्वितीमे भेदे। पदप्रकाशतामुदाहरति—यथेति।

प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथेच्चैः शिरः।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्॥

भावनोपनीतां सीतां प्रति रामस्येयमुक्तिः। हे प्रिये, जानकि प्रत्याख्यानरुचेः प्रत्याख्याने रावणेन कृतस्यापहरणस्य निराकरणे रुचिर्यस्यास्तादृश्यास्ते तव, क्रूरेण भीकरेण रक्षसा रावणेन, समुचितमात्मनः क्रौर्यस्य यदुचितं तत् कृतम्। तच्च तदपि, त्वया सोढम्। यथा यतः, कुलजनः कुलजः अयं जनः, उच्चैः उन्नतं शिरो धत्ते दधाति। प्रियजीवितेन प्रियं जीवितं जीवनं यस्य तादृशेन,

यथा वा—

एमेअ जणो तिस्सा देउ कवोलोपमाए ससिबिंबम् ।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ ।।
[एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम् ।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र इव वराकः ।।]

अत्र द्वितीयश्चन्द्रशब्दोऽर्थान्तरसङ्क्रमितवाच्यः ।।

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशता यथा—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।

---

## उज्जीवनी

रामेण तु सम्प्रति अस्यामपि दशायां, प्रियायाः असंरक्षणेन, निरर्थकं निष्प्रयोजनं धनुश्चापं बिभ्रता धारयता, त्वद्व्यापदां तव आपदां, साक्षिणा द्रष्ट्रा च मयेत्यर्थः, प्रेम्णः यदुचितं तन्न कृतम् ।।

अत्र रामपदेन निष्करुणत्वं लक्ष्यते । रामेणैव वक्त्रा, मयेत्यनुक्त्वा रामेणेति स्वनामग्रहणेन रामपदं निष्करुणेन मयेत्यर्थान्तरे सङ्क्रमितं वाच्यं यस्य तादृशमित्यर्थः । तेन रामपदं साहसैकरसत्वरूपस्य व्यङ्ग्यस्य व्यञ्जकम् ।

उदाहरणान्तरमाह—यथा वेति । एमेअ इति ।

अत्र चन्द्र एवेति पाठो युक्तः । जनः अविवेकी लोकः । तस्याः अलोकसामान्यलावण्यवत्त्वेन प्रसिद्धाया नायिकायाः, कपोलोपमायां कपोलयोः उपमायां सादृश्ये वर्णनीये, शशिबिम्बं चन्द्रबिम्बं तदुपमानत्वेन सादृश्यप्रतियोगित्वेन ददाति निर्दिशति । परमार्थविचारे तु वस्तुतो विचार्यमाणे चन्द्रः योऽयमुपमानत्वेनोद्दिष्टः, स चन्द्र एवापचीयमानलावण्यविशिष्ट एव, न तु कपोलोपमानभावमर्हति ।

अत्रेति । अत्र अस्मिन् द्वितीयश्चन्द्रशब्दः स्ववाच्यमर्थं चन्द्ररूपम् अर्थान्तरं क्षयिष्णुत्वादिविशिष्टे सङ्क्रामयतीत्यस्यार्थान्तरसङ्क्रमितवाच्यस्य ध्वनेः पदप्रकाशता ।

अविवक्षितवाच्यस्य ध्वनेः अत्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशतामुदाहरति—या निशेति । गीतायां अर्जुनं प्रति श्रीकृष्णस्यायमुपदेशः । हे,

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

अनेन हि वाक्येन निशार्थो न च जागरणार्थः कश्चिद् विवक्षितः। किं तर्हि ?

तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्यास्य व्यञ्जकत्वम् ॥

तस्यैवार्थान्तरसङ्क्रमितवाच्यस्य वाक्यप्रकाशता यथा—

विसमइओ काण वि काण वि वालेइ अमि[1]अणिम्माओ।
काण वि विसामिअमओ काण वि अविसामओ कालो ॥

## उज्जीवनी।

अर्जुन, सर्वभूतानां सर्वेषां ब्रह्मादिस्थावरान्तानां, या निशा रात्रिः व्यामोहजनकत्वात् सर्वपदार्थानामविवेककरी, तस्यां संयमी जितेन्द्रियो योगी प्रबुद्धः जागर्त्ति। यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां भूतानि जाग्रति प्रसुप्तान्येव जाग्रतीत्युच्यन्ते, सा पश्यतः परमार्थतत्त्वं जानतो मुनेः निशा।

अत्र निशाजागर्तिपदाभ्यां रात्रिजागरणरूपयोर्मुख्ययोरर्थयोः तात्पर्यानुपपत्त्या अविवक्षितत्वेन अत्यन्ततिरस्कृतत्वाद्, मिथ्यादृष्टितत्त्वदृष्टिरूपयोरर्थान्तरयोर्लक्षणेन, मिथ्याज्ञानस्य हेयत्वं, तत्त्वज्ञानस्योपादेयत्वं च व्यज्यत इति अनेकपदव्यङ्ग्यत्वादस्य ध्वनेः वाक्यप्रकाशता।

अनेनेति। अनेन वाक्येन या निशेत्यादिना, निशार्थः निशापदमुख्यार्थः जागरणार्थः जागर्तिपदाभिधेयो जागरणक्रियारूपो वा मुख्योऽर्थः च कश्चित् न विवक्षितः। किं तर्हि ? तर्हि किं विवक्षितमिति चेत्, तत्त्वज्ञानावहितत्वं तत्त्वज्ञानसम्पादने अवधानवत्त्वम्। अतत्त्वपराङ्मुखत्वं मिथ्याज्ञाने पराङ्मुखत्वं च मुनेः प्रतिपाद्यते, अनेन वाक्येनेति शेषः। तिरस्कृतवाच्यस्यास्य वाक्यस्य व्यञ्जकत्वं व्यङ्ग्यार्थप्रकाशकत्वमित्यर्थः।

तस्यैवाविवक्षितवाच्यध्वनेरेव, अर्थान्तरसङ्क्रमितवाच्यस्य प्रभेदस्य वाक्यप्रकाशतामुदाहरति—यथेति। विसमइओ इति। कालः केषामपि

१. 'अमयो:' च

[विषमयित: केषामपि केषामपि प्रयात्यमृतनिर्माण: ।
केषामपि विषामृतमय: केषामप्यविषामृत: काल: ।।]

अत्र हि वाक्ये विषामृतशब्दाभ्यां दु:खसुखरूपसङ्क्रमितवाच्याभ्यां व्यवहार इत्यर्थान्तरसङ्क्रमितवाच्यस्य व्यञ्जकत्वम् ।

विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

प्रातुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि ।
पथि प्रसन्नाम्बुधरस्तडाग: कूपोऽथवा किं न जड: कृतोऽहम् ।।

---

### उज्जीवनी ।

पापात्मनां, विषमय: दु:खसाधनात्मक: । केषामपि सुकृतिनां, अमृतनिर्माण: सुखसाधनरूप:, केषामपि पुण्यपापोभयभृतां, विषामृतमय: दु:खसुखोभयसाधनात्मक:, केषामपि योगिनां पुण्यपापोभयरहितानां अविषामृतमय: सुखदु:खोभयाभावरूपश्च गच्छतीत्यर्थ: ।

अत्र विषामृतशब्दयोर्वाच्यावर्थौ अविवक्षितौ, अर्थान्तरे दु:खसुखसाधनरूपयोरर्थान्तरयो: सङ्क्रमितौ व्यञ्जकौ । तेन पापात्मान: दु:खं, पुण्यात्मान: सुखं, पापपुण्योभयवन्त: दु:खसुखोभयं, तदुभयरहितास्तदुभयाभावं चानुभवन्तीति व्यङ्ग्यम् ।।

विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवे प्रभेदे शब्दशक्तिमूलानुरणनध्वनौ पदप्रकाशतामुदाहरति —यथेति । प्रातुमिति । दारिद्र्योपहतस्य कस्यचिदुक्तिरियम् । धनै: द्रविणै: अर्थिजनस्य याचकजनस्य (लोकस्य) वाञ्छामभिलाषं, प्रातुं पूरयितुं (पूरणार्थात् प्रातेस्तुमुन्) दैवेन विधात्रा यदि नाम यद्यपि नाम, अहं न सृष्ट: अस्मि तथापि, पथि मार्गे, प्रसन्नाम्बुधर: प्रसन्नं स्वच्छं, अम्बु पय: धारयतीति तादृश:, तडाग: जलाशय:, अथवा, जड: शीतजल: कूपो वा किं न कृत: कुतोऽहं सृष्टो न भवामि । मार्गे स्थित: स्वच्छजल: तटाक:, देशाद् देशान्तरं गच्छत: पान्थलोकस्य जलार्थिन: अत्यन्तमुपकरोति । एवमेव शीतजल: कूपोऽपि जनानां जलमर्थयमानानामुपयोगाय कल्पते । विधात्रा चाहं कूपस्तडागो वा यदि सृष्टोऽभविष्यं तदानीमर्थिजन-

अत्र हि जड इति पदं निर्विण्णेन वक्त्रात्मसमानाधिकरणतया प्रयुक्त-मनुरणनरूपतया कूपसमानाधिकरणतां स्वशक्त्या प्रतिपद्यते।

तस्यैव वाक्यप्रकाशता यथा—हर्षचरिते सिंहनादवाक्येषु "वृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः।"

एतद्धि वाक्यमनुरणनरूपमर्थान्तरं शब्दशक्त्या स्फुटमेव प्रकाशयति।

---

उज्जीवनी।

स्याभिलाषपूरणेन कृतार्थोऽभविष्यम्। यतोऽहं निःस्वः सृष्टोऽस्मि ततोऽर्थिजनकामनापरिपूरणासमर्थोऽहं निर्विण्णो भवामीति भावः।

अत्र जडशब्दो व्यञ्जकः। मूढे शिशिरे चार्थे शक्तो जडशब्दः स च शब्दः निर्विण्णेन निर्वेदमुपगतवता वक्त्रा, आत्मसमानाधिकरणतया वक्तृविशेषणत्वेन प्रयुक्तः, स्वस्यैव शक्त्या शिशिररूपार्थान्तरप्रकाशनसामर्थ्येन कूपसमानाधिकरणत्वं कूपविशेषणत्वं प्रतिपद्यते प्राप्नोति। जाड्यरूपार्थप्रतिपादनेन क्षीणशक्तिरभिधा द्वितीयं शक्तमपि शिशिररूपमर्थं बोधयितुमसमर्थेति सोऽर्थो व्यञ्जनया प्रतिपाद्यत इत्यर्थः।

वाक्यप्रकाशतामुदाहर्तुमाह—तस्यैवेति। तस्यैव विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य वाक्यप्रकाशतामाह—यथेति। हर्षचरिते सिंहनादवाक्येषु इति।

प्रभाकरवर्धनाख्यस्य पितुः, राज्यवर्धनाख्यस्य ज्येष्ठभ्रातुश्च निर्याणानन्तरं, हर्षं, सिंहनादो नाम सेनापतिरेवमाह—वृत्त इति। अस्मिन् महाप्रलये महति नाशे, वृत संवृते। अधुना अद्य, धरणीधारणाय धरणीं भूमिं, धारयितुं पालयितुं त्वं शेषः त्वमेव शिष्यसे, इति प्रकृतोऽर्थः। ततः महाप्रलये चतुर्युगावसाने कल्पान्त इति यावत्। जाते सञ्जाते सति, सर्वभावध्वंसरूपे प्रलये, शेषः अनन्त एवावशिष्यत इति अप्रकृतोऽर्थोऽपि प्रकाशते। ततश्च वाक्ययोरनयोरसम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति राजानन्तयोरुपमा व्यज्यते। तच्चानेकपदानां व्यञ्जकत्वेन वाक्यप्रकाशतां प्राप्नोतीत्यर्थः।

एतद्धि वाक्यं वृत्तेऽस्मिन्निति हर्षचरितस्थं वाक्यम्। शब्दशक्त्या

अस्यैव कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता, यथा—हरिविजये

चूअंकुरावअंसं छणप्पसरमहग्घणमणहरसुरामोअम्।
असमप्पिअं वि गहिअं कुसुमशरेण महुमासलच्छिमुहम्॥[1]
[चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम्।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम्॥]

अत्र ह्यसमर्पितमपि कुसुमशरेण मधुमासलक्ष्म्या मुखं गृहीतमित्यसमर्पितमपीत्येतदवस्थाभिधायिपदमर्थशक्त्या कुसुमशरस्य बलात्कारं प्रकाशयति।

---

उज्जीवनी

अनुरणनरूपमर्थान्तरं, स्फुटमेव स्पष्टमेव प्रकाशयति।

अस्यैव विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्य, अर्थशक्तिमूले प्रभेदे पदप्रकाशतामुदाहरति—यथेति। हरिविजय इति। चूअंकुरेति।

चुताङ्कुरावतंसं चूताङ्कुरः चूतमञ्जरी अवतंसः कर्णभूषणं यस्मिन् तादृशम्। महार्घेण, क्षणस्योत्सवस्य प्रसरेणाविर्भावेन मनोहरसुरस्य कामदेवस्य आमोदः प्रमोदः यस्मिंस्तादृशम्। मधुमासलक्ष्मीमुखं मधुमासलक्ष्म्या वसन्तशोभाया मुखं प्रारम्भो वदनं च असमर्पितमपि अदत्तमपि कुसुमशरेण मन्मथेन गृहीतं (बलात्) स्वीकृतम्। वसन्तारम्भः कामिजनमनःसु कामपुद्दीपयतीति कविप्रौढोक्तिमात्रनिष्पन्नशरीरोऽर्थो व्यञ्जकः। मदनस्य बलात्कारेण नायिकामुखग्रहणरूपोऽर्थो व्यङ्ग्यः। स च असमर्पितमिति पदेन प्रकाशते। तदेव विवृणोति। अत्रेति। अत्र चूअंकुरेति पद्ये, कुसुमशरेण मदनेन मधुमासलक्ष्म्या वसन्तकान्त्या मुखं प्रारम्भो मुखं च, असमर्पितमपि, स्वयमदत्तमपि गृहीतं स्वीकृतमिति असमर्पितमपीति एतदवस्थाया अभिधायि अभिधायकं पदं अर्थशक्त्या कविप्रौढोक्तिनिष्पन्नस्यार्थस्य अर्थान्तरबोधजननसामर्थ्येन कुसुमशरस्य कामदेवस्य, बलात्कारं हठात्कारं प्रकाशयति प्रत्याययति।

---

१. 'महुरामोअं' च

अत्रैव प्रभेदे वाक्यप्रकाशता यथोदाहृतं प्राक् "सज्जेहि सुरहिमासो" इत्यादि। अत्र सज्जयति सुरभिमासो न तावदर्पयत्यनङ्गाय शरानित्ययं वाक्यार्थः कविप्रौढक्तिमात्रनिष्पन्नशरीरो मन्मथोन्माथकदनावस्थां वसन्त-समयस्य सूचयति।

स्वतः सम्भविशरीरार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

वाणिअअ हत्थिदन्ता कुत्तो अह्माण वाघकित्ती अ।
जाव लुळिआळमुही घरम्मि परिसक्कए सुह्ला॥
[वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा॥]

अत्र लुलितालकमुखीत्येतत् पदं व्याधवध्वाः स्वतःसम्भावितशरीरार्थ-

---

उज्जीवनी।

अस्यैवार्थस्य वाक्यप्रकाशतामाह—अत्रैवेति। अत्रैव कविप्रौढोक्तिमात्र-निष्पन्नार्थशक्त्युद्भवध्वनौ एव। वाक्यप्रकाशता वाक्यस्यार्थान्तरव्यञ्जकत्वं प्रागुदाहृतमित्याह—सज्जेहीति। अत्र सज्जेहीत्यत्र, सुरभिमासो वसन्तमासः, शरान् सज्जान् करोति, न तावदनङ्गाय अर्पयति ददाति इत्ययं वाक्यार्थः, कविप्रौढोक्तिमात्रनिष्पन्नशरीरः, वसन्तसमयस्य वसन्तकालस्य मन्मथोन्माथ-कदनावस्थां मन्मथोन्मथनपीडाकरीमवस्थां सूचयति प्रकाशयतीति वाक्य-प्रकाशतास्येति बोद्धव्यम्।

स्वतः सम्भविशरीरार्थशक्त्युद्भवे प्रभेदे पदप्रकाशतामुदाहरति—यथेति। वाणिअअंति।

हस्तिदन्तान् व्याघ्रकृत्तीश्च क्रेतुमागतेन केनचिद् वाणिजकेन पृष्टस्य व्याधवृद्धस्य वचनमिदम्। हे वाणिजक यावद् अस्माकं गृहे लुलिता अलकाश्चूर्णकुन्तला यस्मिन् तादृशं मुखं वदनं यस्यास्तादृशी स्नुषा पुत्रवधूः परिष्वक्कते सविलासं भ्रमति तावद् हस्तिदन्ताः मृगयार्थं वनं गत्वा हस्तिनो व्याघ्रांश्च मारयित्वा मे पुत्रेणानीयमाना हस्तिदन्ता व्याघ्रकृत्तयश्च कुतः कथं वा भवेयुः।

अत्रास्मिन् पद्ये, लुलितालकमुखीत्येतत् पदं व्याधवध्वा नवोढायाः स्वतः-

शक्त्या सुरतक्रीडासक्तिं सूचयंस्तदीयस्य भर्तुः सततसम्भोगक्षामतां प्रकाशयति।

तस्यैव वाक्यप्रकाशता यथा—

सिहिपिञ्छकण्णऊरा बहुआ वाहस्स गव्विरी भमइ।
मुत्ताफळरइअपसाहणाणं मज्झे सवत्तीणम् ॥
[शिखिपिञ्छकर्णपूरा वधूर्व्याधस्य गर्विता भ्रमति।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥

अनेनापि वाक्येन व्याधवध्वाः शिखिपिञ्छकर्णपूराया नवपरिणीतायाः कस्याश्चित् सौभाग्यातिशयः प्रकाश्यते। तत्सम्भोगैकरसो मयूरमात्रमारण-समर्थः पतिर्जात इत्यर्थप्रकाशनात्। तदन्यासां चिरपरिणीतानां मुक्ताफल-रचितप्रसाधनानां दौर्भाग्यातिशयः ख्याप्यते। तत्सम्भोगकाले स एव करिवरवधव्यापारसमर्थ आसीदित्यर्थप्रकाशनात्।

---

उज्जीवनी

सम्भविनोऽर्थस्य शक्त्या सुरतक्रीडायामासक्तिं सूचयन् व्यञ्जयन् तदीयस्य भर्तुः व्याधयूनः सततसम्भोगक्षामतां सततं सर्वदा सम्भोगेन क्षामतां क्षीणं प्रकाश-यति। एवमस्य ध्वनेः पदप्रकाशता।

तस्यैवेति। तस्यैव स्वतःसम्भविशरीरार्थशक्त्युद्भवस्यैव प्रभेदस्य वाक्यप्रकाशतामुदाहरति—यथेति। सिहीति।

शिखिपिञ्छो मयूरपिञ्छ एव कर्णपूरः कर्णाभरणं यस्याः तादृशी, व्याधस्य वधूः नवपरिणीता व्याधवधूः, मुक्ताफलरचितप्रसाधनानां मुक्ताफलैः मौक्तिकैः, रचितानि प्रसाधनानि अलङ्करणानि यासां तादृशीनां सपत्नीनां मध्ये गर्विता सगर्वं भ्रमति परिभ्रमति।

अत्र व्यङ्ग्यमर्थं तस्य वाक्यप्रकाशतां चोपपादयति—अनेनेति। अनेनापि वाक्येन शिखिपिञ्छकर्णपूराया व्याधवध्वाः, नवपरिणीताया नवोढायाः कस्याश्चित् प्रकरणप्रतिपाद्यायाः सौभाग्यातिशयः अतिशयितं सौभाग्यं प्रकाश्यते इदं वाक्यं प्रकाशयतीत्यर्थः। तत्सम्भोगैकरसः तस्याः नवपरिणीतायाः सम्भोग एव एकः रसः प्रीतिर्यस्य तादृशः पतिः, मयूरमात्रमारणसमर्थः गृहसमीपे स्थितानां मयूराणां मारणेन कृतकृत्यो जात इत्ययमर्थः प्रकाश्यते। तत् तस्मात् चिरपरिणीतानां पूर्वं परिणीतानां मुक्ताफलरचितप्रसाधनानां

ननु ध्वनिः काव्यविशेष इत्युक्तं तत् कथं तस्य पदप्रकाशता । काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः शब्दसन्दर्भविशेषः । तद्भावश्च पदप्रकाशत्वे नोपपद्यते । पदानां स्मारकत्वेनावाचकत्वात् ।

उच्यते—स्यादेष दोषः, यदि वाचकत्वं प्रयोजकं ध्वनिव्यवहारे स्यात् । नत्वेवम्, तस्य व्यञ्जकत्वेन व्यवस्थानात् । किं च काव्यानां शरीराणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधी ।

---

उज्जीवनी ।

करिवरान् हत्वा तस्माल्लब्धैः मुक्ताफलैः मौक्तिकैः रचितानि प्रसाधनानि अलङ्करणानि यासां तादृशीनां सपत्नीनां दौर्भाग्यातिशयः अतिशयितं दौर्भाग्यं ख्याप्यते बोध्यते ।

> करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ।
> मुक्ताफलानि प्रथितानि लोके, तेषां तु शुक्त्युद्भवमेव भूरि ॥

इति । गजशिरसि मुक्ताफलानि सन्तीति प्रसिद्धिः । तत्सम्भोगकाले तासां चिरपरिणीतानां सपत्नीनां सम्भोगकाले स एव व्याधः करिवरवधव्यापारसमर्थः करिवराणां वधव्यापारे वधकर्मणि सम्यगासक्तः, तासु प्रीतिमान् नासीदित्यर्थस्य व्यञ्जनात् तासां दौर्भाग्यमित्यर्थः । अत्रापि वाक्यप्रकाशता ।

ध्वनिः पदेन प्रकाशत इत्युक्तम् । तत्राशङ्कते—नन्विति । ध्वनिः ध्वनिसंज्ञितः पदार्थः । काव्यविशेषः काव्यविशेषरूपः उत्तमकाव्यात्मकः इत्युक्तम् इत्यभिहितम् । तस्य पदप्रकाशता पदेनैकेन प्रकाशः कथं स्यात् । तत्र हेतुमाह—काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः विशिष्टार्थात्मकवाक्यार्थज्ञानहेतुः शब्दसन्दर्भविशेषः शब्दसमुदायरूप इत्यत इति हेतोः तस्य ध्वनेः, पदप्रकाशता पदेनैकेन प्रकाशः कथं भवतीति । तद्भावश्च उत्तमकाव्यत्वं च पदप्रकाशत्वे, शब्दसन्दर्भरूपकाव्यव्यवहारविषयत्वं नोपपद्यते न युज्यते । पदानां पृथक् स्मारकत्वेन अर्थस्मारणमात्रार्थत्वेन अवाचकत्वात् वाचकत्वाभावात् प्रत्येकं पदानि स्वं स्वमर्थं स्मारयन्ति । आकाङ्क्षायोग्यतादिभिः वाक्यार्थबोधो

'अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम् ॥
पदानां स्मारकत्वेऽपि पदमात्रावभासिनः ।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता ॥
विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥

इति परिकरश्लोकाः ॥

---

उज्जीवनी ।

भवतीत्येव नियमः । अतः पदानां वाचकत्वं नास्तीत्याशय इति । समाधत्त— स्यादिति । ध्वनिव्यवहारे ध्वनिरिति व्यवहारे, पदस्य वाचकत्वं अभिधेयार्थ-बोधकत्वं यदि प्रयोजकं तर्हि एष दोषः स्यादपि । तु किन्तु, नैवं नैतदेवम् । व्यञ्जकत्वेन व्यङ्ग्यार्थबोधकत्वेनैव, तस्य ध्वनिव्यवहारविषयत्वस्य, व्यवस्थानात् व्यवस्थितत्वात् । संस्थानविशेषावच्छिन्नसमुदायसाध्यापि संस्थान-विशेषैरवयवसंयोगविशिष्टैः समुदायैः साध्यापि शरीराणां चारुत्वप्रतीतिः लावण्यप्रत्ययः यथा, तथा शब्दसमुदायात्मककाव्यानां चारुत्वप्रतीतिरपि अन्वयव्यतिरेकाभ्यां चारुत्वप्रतीतिः व्यञ्जकस्य पदस्य सत्वे चारुत्वं, पदस्याभावे चारुत्वाभाव इति अन्वयव्यतिरेकाभ्यां चारुत्वाधायकत्वं भागेषु पदरूपेष्ववयवेषु कल्प्यत इति पदानामपि प्रत्येकं व्यवस्थितो व्यवस्थाविषयो ध्वनिव्यवहारः ध्वनिरितिव्यवहारः न विरोधी न विरुध्यते ।

उक्तमेवार्थं विशदीकरोति—अनिष्टस्येति । श्रुतिदुष्टादिषु श्रुतिकट्वादिषु काव्यदोषेषु, अनिष्टस्य दुःश्रवस्य शब्दस्य, श्रुतिः श्रवणं, दुष्टतां दोषवत्त्वं, आपादयति प्रापयति । तद्वत् तथा, इष्टश्रुतिः इष्टस्य अभिमतस्य अर्थस्य स्मृतिः उपस्थितिः, गुणं गुणवत्तां, व्यक्तं स्पष्टम्, आपादयति । पदानामिति । तेन हेतुना, पदानां सुप्तिङ्न्तानां स्मारकत्वेऽपि अर्थोपस्थिति (स्मृति) मात्रजनकत्वेऽपि, पदमात्रावभासिनः पदमात्रेण अवभासिनः भासमानस्य प्रतीयमानस्येति यावत् । ध्वनेः ध्वनिकाव्यस्य प्रभेदेषु भेदेषु, सर्वेषु रम्यता चमत्कृत्याधायकत्वं, अस्त्येव विद्यत एव । उपमानेन द्रढयति—विच्छित्तीति । विच्छित्तिशोभिना विच्छित्त्या चमत्कारेण शोभनशीलेन एकेन भूषणेन अलङ्करणेन, कामिनीव प्रमदेव

**यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।**
**वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते ॥ २ ॥**

तत्र वर्णानामनर्थकत्वाद् द्योतकत्वमसम्भवीत्याशङ्क्येदमुच्यते—

**शषौ सरेफसंयोगो ढकारश्चापि भूयसा ।**
**विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः ॥ ३ ॥**

**त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।**
**तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः ॥ ४ ॥**

श्लोकद्वयेनान्वयव्यतिरेकाभ्यां वर्णानां द्योतकत्वं दर्शितं भवति ।

---

उज्जीवनी ।

सुकवेः भारती वाणी, पदद्योत्येन पदव्यङ्ग्येन, ध्वनिना प्रतीयमानेनार्थेन भाति शोभते ।

एतावता व्यञ्जकमुखेन संलक्ष्यक्रमव्यङ्ग्यध्वनिः निरूपितः । अथासंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि भेदानाह—यस्त्विति । अलक्ष्यक्रमव्यङ्ग्यः असंलक्ष्यक्रमव्यङ्ग्याभिधः यो ध्वनिः काव्यविशेषः, सः वर्णपदादिषु वर्णे, पदे, आदिपदात् पदावयवे च । वाक्ये पदसमूहात्मके, सङ्घटनायां प्रबन्धेऽपि च दीप्यते प्रकाशत इत्यर्थः । तत्रेति । वर्णानां पदावयवानां अनर्थकत्वात् अर्थशून्यात् । द्योतकत्वं व्यञ्जकत्वं, असंभवि न सम्भवति, इति एवं, आशङ्क्येदमुच्यते—शषाविति । भूयसा बाहुल्येन, (असकृत्) शकारषकारौ । सरेफसंयोगः रेफसंयोगेन सह वर्तत इति तादृशः । पूर्वमध उभयत्र च रेफेण सहितो वर्णः । एते शृङ्गारे शृङ्गाररसव्यञ्जने विरोधिनः । तेन वर्णा एते रसच्युतः रसात् च्यवन्ते भ्रश्यन्ति इति तादृशाः, स्युर्भवेयुः । तु किन्तु, त एव वर्णाः पूर्वोक्ताः, बीभत्सादौ रसे बीभत्से, वीरे, रौद्रे च । यदा निवेश्यन्ते निबध्यन्ते तदा तं रसं दीपयन्त्येव प्रकाशयन्त्येव । तेन वर्णाः रसच्युतो रसासेचनका भवन्तीत्यर्थः । श्लोकद्वयेन एताभ्यां द्वाभ्यां पद्याभ्यां, अन्वयव्यतिरेकाभ्यां अन्वयेन व्यतिरेकेण च सरेफसंयोगशषादिवर्णसमवधाने रसस्य द्योतनम् । यथा बीभत्सादौ इत्यन्वयः ।

पदे चालक्ष्यक्रमव्यङ्ग्यस्य द्योतनं यथा—

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि॥

अत्र हि "ते" इत्येतत् पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम्॥*

उज्जीवनी।

तादृशवर्णसमवधानाभावे रसस्य प्रकाशाभाव इति व्यतिरेकश्च। तथा तादृशशषादिवर्णसत्त्वे रसस्याप्रकाशः। यथा शृङ्गारादौ इत्यन्वयः। तादृशवर्णाभावे शृङ्गारादेः प्रकाश इति व्यतिरेकः। एवं वर्णानां द्योतकत्वं व्यञ्जकत्वं दर्शितं प्रदर्शितं भवति। एवं च बीभत्सरसद्योतनं प्रति शषादिः कारणम्। शृङ्गारादिरसद्योतनं प्रति शषाद्यभावः कारणमिति कार्यकारणभावद्वयं सिध्यति।

पदे अलक्ष्यक्रमव्यङ्ग्यस्य द्योतकत्वं (व्यञ्जकत्वं) उदाहरति—यथेति। उत्कम्पिनीति। वासवदत्तां लावाणके दग्धां सम्भाव्य शोकाविष्टस्योदयनस्योक्तिरियम्। हे प्रिये, उत्कम्पिनी कम्पयुक्ता, भयेन भीत्या परिस्खलितः गलितः, अंशुकान्त उत्तरीयवस्त्रप्रान्तः यस्यास्तादृशी, विधुरे कातरे, लोचने नयने प्रतिदिशं दिशि दिशि, क्षिपन्ती (यः कोऽपि मां रक्षेदिति बुद्ध्या) सञ्चारयन्ती, क्रूरेण अतिप्रवृद्धेन, दारुणतया निष्ठुरतया, दहनेन अग्निना, धूमान्धितेन धूमाकुलितेन सता न वीक्षितासि न दृष्टासि।

अत्रेति। अत्र अस्मिन् काव्ये, ते इत्येतत् पदं शब्दस्वरूपं रसमयत्वेन असंलक्ष्यक्रमव्यङ्ग्यतया करुणरसतां प्राप्तेन, सहृदयानां हृदये, स्फुटमेव स्पष्टतयैव, अवभासते भासते इति पदप्रकाशतास्य ध्वनेः।

---

* 'यथा वा, झगिति कनकचित्रे तत्रदृष्टे कुरङ्गे
रभसविकसितास्ते दृष्टिपाताः प्रियायाः।
पवनविलुलितानामुत्पलानां पलाश-
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति॥' (इत्यधिकतया चपाठे दृश्यते)

पदावयवेन द्योतनं यथा—

> व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
> बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य ।
> तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
> मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥

इत्यत्र त्रिभागः ।

वाक्यरूपश्चालक्ष्यक्रमव्यङ्ग्यो ध्वनिः शुद्धोऽलङ्कारसङ्कीर्णश्चेति द्विधा मतः। तत्र शुद्धस्योदाहरणं यथा रामाभ्युदये—"कृतककुपितैः" इत्यादिश्लोकः । एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं प्रदर्शयत् सर्वत एव परं रसतत्त्वं प्रकाशयति ॥

---

## उज्जीवनी ।

अत्र 'ते' इति तच्छब्दोऽनुभूतार्थकत्वात् यच्छब्दोपादानं नापेक्षते ।

पदावयवस्य द्योतकत्वमुदाहरति—पदेति । पदावयवेन पदस्यावयवेन एकदेशेन, द्योतनं रसप्रकाशनमित्यर्थः । यथेति—व्रीडायोगादिति । प्रवासं गतः कश्चिन्नायकः गृहात् प्रस्थानसमये दयिताया अवस्थां सुहृदं कञ्चित् ब्रवीति । गुरूणां श्वश्र्वादीनां, सन्निधाने सन्निधौ, व्रीडायोगात् व्रीडाया लज्जाया योगात्, नतवदनया नतमवनतं वदनं यस्यास्तादृश्या, कुचकलशयोः कुचकुम्भयोः, बद्धोत्कम्पं बद्ध उत्कम्पः येन तादृशं, मन्युं क्रोधम् । अन्तर्हृदये, निरुद्ध्य निगृह्य, यत् यस्मात् बाष्पं समुत्सृज्य निरुद्धप्रसरमश्रु विधाय, चकितहरिणीहारिनेत्रत्रिभागः चकिताया भयसम्भ्रान्तायाः, हरिण्या मृग्या इव हारी मनोज्ञः नेत्रस्य त्रिभागः कटाक्षः, मयि आसक्तः निक्षिप्तः । तत् तस्मात् तिष्ठ मा गमः इति एवमादि । किमिव नोक्तम् अनक्षरमेव स्वेङ्गितं प्रकाशितवतीत्यर्थः । अत्र नेत्रत्रिभागः इतिपदस्यैकदेशरूपः त्रिभागशब्दः कटाक्षपर्यायः प्रवासहेतुकविप्रलम्भशृङ्गारस्य व्यञ्जकः । असंलक्ष्यक्रमव्यङ्ग्यस्यास्य विप्रलम्भशृङ्गारध्वनेः पदैकदेशप्रकाशता । अस्यैव ध्वनेः वाक्यप्रकाशतां निरूपयितुम् आह—वाक्येति । वाक्यरूपः वाक्येन व्यञ्जकेन प्रतीयमानः, अलक्ष्यक्रमव्यङ्ग्यो ध्वनिः शुद्धः, अलंकारसङ्कीर्णश्चेति, द्विधा मतः द्विप्रकारो-

अलङ्कारान्तरसङ्कीर्णो यथा—"स्मरनवनदीपूरेणोढाः" इत्यादिश्लोकः। अत्र हि रूपकेण यथोक्तव्यञ्जकलक्षणानुगतेन प्रसाधितो रसः सुतरामभिव्यज्यते ॥

---

उज्जीवनी।

ऽभिमतः। तत्रेति। तत्र शुद्धालङ्कारसङ्कीर्णयोर्मध्ये, शुद्धस्यालङ्कारासङ्कीर्णस्योदाहरणं दर्शयति—यथेति। रामाभ्युदये तदाख्ये काव्ये कृतककुपितैरिति—

> कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितै-
> र्वनमपि गता यस्य प्रीत्या धृतापि तथाम्बया।
> नवजलधरश्यामाः पश्यन् दिशो भवतीं विना
> कठिनहृदयो जीवत्येव प्रिये स तव प्रियः॥

सीताविरहितस्य श्रीरामस्योक्तिरियम्। हे प्रिये, दयिते, यस्य प्रीत्या मद्गतया प्रीत्या प्रेम्णा, अम्बया मात्रा कौसल्यया तथा तेन प्रकारेण, धृतापि निवारितापि कृतककुपितैः कृत्रिमै रोषैः, बाष्पाम्भोभिः बाष्पजलधाराभिः, सदैन्यविलोकितैः विषादसहितैरीक्षणैः, वनमपि अरण्यमपि गता मया सह गतवतीत्यर्थः। स तादृशस्ते प्रियः, प्रेमास्पदभूतः रामः कठिनहृदयः कठोरहृदयः, नवजलधरश्यामाः नवैः जलधरैर्मेघैः, श्यामाः, दिश आशाः, पश्यन् अवलोकयन् भवतीं विना जीवत्येव।

अत्र या त्वं मयि प्रेम्णा राजगृहे सुखेनावस्थानं उज्झित्वा मया सह वनं गतवती, तां त्वां विना प्राणत्यागोचितेऽपि काले प्राणान् न परित्यजामि इत्यहो नैर्घृण्यं मम (रामस्य) इति वाक्यमिदं सीतारामयोर्निरतिशयां रतिं प्रकाशयद् विप्रलम्भशृङ्गारस्य व्यञ्जकं भवति। तदेवाह—एतद्धीति। एतद्धि वाक्यं, कृतककुपितैरित्यादि। परिपोषप्राप्तं विभावानुभावव्यभिचारिभावैः परिपोषं प्राप्तं परस्परानुरागं अन्योन्यालम्बनां रतिं प्रदर्शयत् व्यञ्जयत्, सर्वत एव सर्वस्मादेव, परमुत्तमं रसतत्त्वं प्रकाशयति।

द्वितीयमुदाहर्तुमाह—अलङ्कारसङ्कीर्णेति। यथेति। स्मरनवनदीपूरेणोढा इति।

अलक्ष्यक्रमव्यङ्ग्यः सङ्घटनायां भासते ध्वनिरित्युक्तं तत्र सङ्घटना-स्वरूपमेव तावन्निरूप्यते—

**असमासा समासेन मध्यमेन च भूषिता ।**
**तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता ॥ ५ ॥**

---

उज्जीवनी ।

स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभि-
र्यदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥

अमरुकशतके षष्टितमं पद्यमिदम् । प्रियाः (पु) च प्रियाः (स्त्री) च प्रिया इत्येकशेषः । प्रेयांसः प्रेयस्यश्चेत्यर्थः । स्मरनवनदीपूरेण स्मर एव मदन एव यो नवो नदीपूरः रागाख्यो नदीप्रवाहस्तेन ऊढा नीताः । पुनर्गुरुसेतुभिः गुरुजनैरेव सेतुभिः ऊढा बलान्नीताः, यद् यस्मात् विधृता निवारिताश्च भवन्तीति शेषः । तस्मात् आराद् समीपे, अपूर्णमनोरथाः अपूर्णाः पूर्णताम-प्राप्ताः मनोरथाः कामा येषां तादृशा भवन्ति । तदपि तथापि, लिखित-प्रख्यैः चित्रसदृशैः, अङ्गैः शरीरैः, परस्परमन्योन्यं, उन्मुखा अभिमुखाः नयननलिनीनालाकृष्टं नयनैर्नेत्रैरेव, नलिनीनालैः, आनीतं आहृतम् । रसं आभिलाषिकीं रतिं पिबन्ति स्वदन्ते ।

अत्र हि रूपकेण नयनयोर्नलिनीनालरूपणात्मकेन रूपकालङ्कारेण, यथोक्तव्यञ्जकलक्षणानुगतेन अलङ्कारस्य व्यञ्जकत्वे या व्यवस्था पूर्वमुक्ता तदनुसारेण, प्रसाधितः परिपोषं प्राप्तः, रसः विप्रलम्भशृङ्गारः, सुतरां सम्यगेव, अभिव्यज्यते । अत्र प्रेयोमिथुनेषु चक्रवाकमिथुनत्वारोपं रूपकमपि द्योत्यते ।

सङ्घटनां निरूपयितुमुपक्रमते—अलक्ष्यक्रमव्यङ्ग्यो ध्वनिः सङ्घटनायां भासत इत्युक्तम् । तत्र सङ्घटनायाः स्वरूपमेव तावन्निरूप्यत इति । असमासेति । असमासा समासरहिता । मध्यमेन समासेन अल्पसमासेन भूषिता च अलङ्कृता च । तथा दीर्घसमासा चेति सङ्घटना त्रिविधा उदिता उक्ता कैश्चिदिति कर्तृनिर्देशः ।

केश्चित्—तां केवलमनूद्येदमुच्यते ।

**गुणानाश्रित्य तिष्ठति माधुर्यादीन् व्यनक्ति सा ।**

**रसान्—**

सा सङ्घटना रसादीन् व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति । अत्र च विकल्प्यं गुणानां सङ्घटनायाश्चैक्यं व्यतिरेको वा । व्यतिरेकेऽपि द्वयी गतिः । गुणाश्रया सङ्घटना, सङ्घटनाश्रया वा गुणा इति ।

तत्रैक्यपक्षे सङ्घटनाश्रयगुणपक्षे च गुणानात्मभूतानाधेयभूतान् वाश्रित्य तिष्ठन्ती सङ्घटना रसादीन् व्यनक्तीत्ययमर्थः ।

---

उज्जीवनी ।

पूर्वकारिकायां ध्वनिर्योऽसंलक्ष्यक्रमव्यङ्ग्यः स वर्णे पदे पदावयवे, वाक्ये, प्रबन्धे, सङ्घटनायां च प्रकाशत इत्युक्तम् । शषौ सरेफसंयोगाविति कारिकाद्वयेन, के के वर्णाः कस्य कस्य रसस्यानुकूलाः, कस्य कस्य प्रतिकूला इति प्रदर्शितम् । तत्र सङ्घटना नाम योजनेति मतम् । तत्तद्रसानुगुणानां वर्णानां योगे पदानि भवन्ति । तेषां पदानां समस्यमानतारूपा योजना सङ्घटनेत्युच्यते । सा च त्रिधा—समासं विना पृथक्पदत्वरूपा, द्वित्राणां पदानां योजना, बहूनां पदानां योजना चेति त्रिविधा सङ्घटना भवति । तां सङ्घटनां केवल गुणेभ्यः पृथग्भावेन अनूद्य इदमुच्यते सङ्घटनायाः स्वरूपमुच्यत इत्यर्थः ।

गुणानिति । माधुर्यादीन् माधुर्यौजःप्रसादाख्यांस्त्रीन् गुणानाश्रित्य, तिष्ठन्ती वर्तमाना, सा सङ्घटना, रसान् शृङ्गारादीन् व्यनक्ति व्यञ्जयति । शृङ्गारादिरसानुगुणेषु वर्णेषु विद्यमानो माधुर्यादिर्गुणः, तादृशवर्णसमुदायरूपेषु पदेषु व्यस्ततया समस्ततया वा तत्तद्रसानुगुण्येन तिष्ठन्ती योजना, सङ्घटनेत्युच्यते । तदेवोक्तं सा सङ्घटना रसादीन् व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति ।

अत्रेदं विचार्यते—अत्र चेति । अस्मिन् प्रकरणे गुणानां माधुर्यादीनां, सङ्घटनायाः पदघटनायाश्च, ऐक्यं अभेदः, व्यतिरेकस्तदभावो भेदो वा इति विकल्प्यं, गुणानां सङ्घटनायाश्चाभेदो भेदो वेति विकल्प्यत इत्यर्थः । व्यतिरेकेऽपि भेदपक्षेऽपि, द्वयी गतिः प्रकारद्वयमाशङ्क्यते । गुणाश्रया गुण आश्रयो यस्या सा सङ्घटना । सङ्घटनाश्रयाः सङ्घटना आश्रयो येषां ते सङ्घटनाश्रया गुणाः ।

यदा तु नानात्वपक्षे गुणाश्रयसङ्घटनापक्षः तदा गुणानाश्रित्य तिष्ठन्ती गुणपरतन्त्रस्वभावा न तु गुणरूपैवेत्यर्थः। किं पुनरेवं विकल्पनस्य प्रयोजनमिति ? अभिधीयते—यदि गुणाः सङ्घटना चेत्येकं तत्त्वं सङ्घटनाश्रया वा गुणाः, तदा सङ्घटनाया इव गुणानामनियतविषयत्वप्रसङ्गः।

गुणानां हि माधुर्यप्रसादप्रकर्षः करुणविप्रलम्भशृङ्गारविषय एव। रौद्राद्भुतादिविषयमोजः। माधुर्यप्रसादौ रसभावतदाभासविषयावेवेति विषयनियमो व्यवस्थितः, सङ्घटनायास्तु स विघटते। तथाहि शृङ्गारेऽपि दीर्घसमासा दृश्यते, रौद्रादिष्वसमासा चेति।

---

उज्जीवनी।

गुणानाश्रित्य सङ्घटना तिष्ठति। अथवा सङ्घटनायां गुणास्तिष्ठन्तीति। तत्र, एवं पूर्वपक्षे सति, ऐक्यपक्षे गुणसङ्घटनयोरेकत्वपक्षे, सङ्घटनाश्रयगुणपक्षे सङ्घटनायां गुणो वर्तत इत्येवंरूपे भेदपक्षे च, आत्मभूतान् सङ्घटनाया आधारस्याधेयभूतान् वा गुणानाश्रित्य तिष्ठन्ती सङ्घटना रसादीन् व्यनक्तीत्यर्थः कारिकाया वक्तव्यः।

यदा तु नानात्वपक्षे गुणसङ्घटनयोर्भेदेऽङ्गीक्रियमाणे सति, गुणाश्रयसङ्घटनापक्षः सङ्घटना गुणमाश्रित्य तिष्ठतीति पक्षश्चाभिमतः, तदा गुणानाश्रित्य तिष्ठन्ती गुणपरतन्त्रस्वभावा गुणाधीना। तु किन्तु, गुणरूपैव गुणात्मिकैव न भवति। अस्मिन् पक्षे सङ्घटनाधीनान् आधारभूतानाश्रित्य तिष्ठन्तीति सङ्घटना रसान् अभिव्यनक्तीति कारिकार्थः।

आशङ्कते—"किं पुनरेवं विकल्पनस्य प्रयोजन"मिति। समाधत्ते—अभिधीयते इति। अभिधीयते कथ्यते। गुणाः सङ्घटना चेत्येकं तत्त्वं यदि गुणपदवाच्यत्वं, सङ्घटनापदवाच्यत्वं च यद्येक वस्तु, वा अथवा सङ्घटनाश्रया गुणाः, सङ्घटनामाश्रित्यैव गुणाः स्वरूपं लभन्ते। तदा सङ्घटनाया यथा अनियतविषयत्वं तथा गुणानामपि तथात्वमापद्येत।

गुणानां माधुर्यौजःप्रसादानां नियतविषयत्वमस्त्येव। तदेवाह—माधुर्येति। माधुर्यप्रसादप्रकर्षः माधुर्यप्रसादयोः प्रकर्षः, करुणविप्रलम्भशृङ्गारविषय एव। माधुर्यं करुणादिषु द्रुतिकारणम्। प्रसादश्च सर्वरससाधारणो

तत्र शृङ्गारे दीर्घसमासा यथा—"मन्दारकुसुमरेणुपिञ्जरितालका' इति। यथा वा—

अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखं[1] ते।
करतलनिषण्णमबले वदनमिदं कं न तापयति ॥ इत्यादौ।

तथा रौद्रादिष्वसमासा दृश्यते। तथा—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः' इत्यादौ। तस्मान्न गुणाः सङ्घटनास्वरूपाः, न च सङ्घटनाश्रया गुणाः ॥

---

उज्जीवनी।

गुणः, करुणादिषु चित्तविकारहेतुः। रौद्राद्भुतादिविषयमोजः, रौद्राद्भुतादिषु ओजोगुणः दीप्तिजनकः। माधुर्यं प्रसादश्च रसभावतदाभासविषयौ प्रकर्षमनुपगतौ माधुर्यप्रसादौ रसभावतदाभासेषु च नियतावेव। इति एवं स विषयनियमो विघटते नियतविषयत्वं सङ्घटनाया नास्तीत्यर्थः। तदेव दर्शयति—तथाहीति। अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा" इति। यद्यपि अलङ्कारशास्त्रकाराः शृङ्गाररसस्य असमासा, मध्यमसमासा वा सङ्घटनैवेति विषयनियमः अस्तीति मन्यन्ते, तथापि शृङ्गारे दीर्घसमासा सङ्घटना, रौद्रादिषु च रसेषु असमासा च सङ्घटना दृश्यत इति स नियमो ग्रन्थकृता नाभ्युपगम्यत इत्याशयः।

तत्र शृङ्गारे दीर्घसमासां सङ्घटनां प्रदर्शयति—दीर्घसमासे यथेति। मन्दारेति। मन्दारस्य कल्पद्रुमस्य कुसुमानां रेणुभिः परागैः, पिञ्जरिता पिङ्गलवर्णाः, अलका यस्यास्तादृशी मन्दारकुसुमरेणुपिञ्जरितालका इति दीर्घसमासा संघटनापि शृङ्गाररसस्य आलम्बनविभावप्रतिपादनपरः प्रबन्धभागो यत दृश्यते, ततः शृङ्गारे संघटनाया विषयनियमो नास्तीति भावः।

समग्रमुदाहरणं दर्शयति—यथा वेति। अनवरतेति। प्रणयकुपितां नायिकामनुनेतुं नायकस्योक्तिरियम्। अबले, अनवरतमनारतं, नयनजलस्य अश्रुणः, लवानां कणानां निपतनेन पतनेन, परिमुषिता प्रमृष्टा पत्रलेखा

---

1. 'खान्तम्।' च

ननु यदि सङ्घटना गुणानां नाश्रयस्तत् किमालम्बना एते परिकल्प्यन्ताम् । उच्यते—प्रतिपादितमेवैषामालम्बनम् ।

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥ इति ।

अथवा भवन्तु शब्दाश्रया एव गुणाः, न चैषामनुप्रासतुल्यत्वं, यस्मादनुप्रासादयोऽनपेक्षिता[1]र्थशब्दधर्मा एव प्रतिपादिताः ॥

---

उज्जीवनी

यस्मिंस्तादृशम् । करतलनिषण्णं करतले निषण्णं न्यस्तम् । इदं ते वदनं आननं कं कं जनं न तापयति न पीडयति, इत्यादौ ईर्ष्याविप्रलम्भशृङ्गारे दीर्घसमासा सङ्घटना दृश्यते ।

रौद्रादिष्वपि सङ्घटनाया अनियतविषयत्वं दर्शयति—तथेति । रौद्रादिष्वपि रौद्रवीरबीभत्सेषु अपि, उदाहरति—यथेति । यो य इति । द्वितीयोद्द्योते ओजोगुणनिरूपणावसरे उदाहृतमिदम् । फलितमाह—तस्मादिति । तस्मात्, गुणाः माधुर्यौजःप्रसादाख्याः सङ्घटनास्वरूपाः सङ्घटनात्मिका वा, सङ्घटनाश्रयाः सङ्घटनारूपे आश्रये अधिकरणे, आधेयरूपा वा न भवन्तीत्यर्थः ।

गुणानां यथार्थमाश्रयं दर्शयति—नन्विति । सङ्घटना गुणानामाश्रयो न भवति यदि एते गुणाः, किमालम्बनाः किमाश्रित्य तिष्ठन्तीति परिकल्प्यन्तामिति प्रश्नः । समाधत्ते—उच्यत इति । एतेषां माधुर्यादीनां गुणानामालम्बनं, प्रतिपादितमेव पूर्वं द्वितीयोद्द्योते उक्तमेव । उक्तमेवानुवदति—तमर्थमिति ।

पक्षान्तरमाह—अथवेति । गुणा माधुर्यादयः शब्दाश्रयाः शब्दाः रसानुगुणवर्णघटितं पदं आश्रयो येषां तादृशा भवन्तु । यद्यपि ते पदाश्रयास्तथापि अनुप्रासादितुल्यत्वं अनुप्रासाद्यात्मकशब्दालङ्कारसाम्यम् । एषां गुणानां नेत्यर्थः । हेतुमाह—यस्मादिति । अनुप्रासादयः शब्दालङ्कारा अनपेक्षितार्थशब्दधर्मा एव अनपेक्षितः अर्थोऽभिधेयो यस्य तादृशस्य अर्थानपेक्षस्य

---

१. 'र्थविस्ताराः श०' च.

गुणास्तु व्यङ्ग्यविशेषावभासिवाच्यप्रतिपादनसमर्थशब्दधर्मा एव । शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रयत्वमिव शौर्यादीनाम् ॥

ननु यदि शब्दाश्रया गुणास्तत्सङ्घटनारूपत्वं तदाश्रयत्वं वा तेषां प्राप्तमेव । न ह्यसङ्घटिताः शब्दाः अर्थविशेषप्रतिपाद्यरसाद्याश्रितानां गुणानामवाचकत्वादाश्रया भवन्ति । नैवम्, वर्णपदव्यङ्ग्यत्वस्य रसादीनां प्रतिपादितत्वात् ।

---

## उज्जीवनी

शब्दस्य धर्मा एवेति प्रतिपादिता उक्ताः । गुणास्तु व्यङ्ग्यविशेषावभासिवाच्य-प्रतिपादनसमर्थशब्दधर्माः व्यङ्ग्यार्थविशेषमवभासयितुं शीलमस्येति तादृशस्य वाच्यस्य वाच्यार्थस्य प्रतिपादने बोधने समर्थो यः शब्दस्तद्वृत्तिधर्मा एव ।

ननु गुणानामाश्रयो रस इत्युक्तम् । कथं तेषां शब्दनिष्ठत्वमुच्यमानं सङ्गच्छते । उच्यते—शौर्यादीनामात्मगुणानां अन्याश्रयत्वेऽपि, आत्माश्रयत्वेऽपि शरीराश्रयत्वं शरीरावच्छेदेनैव, अहं शूर इत्याद्यनुभवः तथा गुणानाम-न्याश्रयत्वेऽपि काव्यात्मभूतरसाश्रयत्वेऽपि, शब्दधर्मत्वं शब्दरूपं काव्यमाश्रित्यैव माधुर्यादयः प्रकाशन्ते ।

आशङ्कते—नन्विति । गुणा रसधर्माः शब्दाश्रयाः यदि रसधर्मत्वेऽपि तदवच्छेदकं शब्दरूपं शरीरमाश्रित्यैवावतिष्ठन्त इत्यङ्गीकारे, तेषां गुणानां, सङ्घटनारूपत्वं सङ्घटनात्मकत्वं, वा अथवा तदाश्रयत्वं सङ्घटनाश्रयत्वम् प्राप्तमेव । अत्र हेतुमाह—नहीति । हि यतः, असङ्घटिताः सङ्घटनां विना पृथगवस्थिताः शब्दाः, अर्थविशेषप्रतिपाद्यरसाद्याश्रितानां अर्थविशेषेण तात्पर्या-र्थात्मकेन प्रतिपाद्यं प्रतिपादनविषयीभूतं रसादि रसभावादिरूपं व्यङ्ग्यमर्थ-माश्रित्य वर्तमानानां गुणानां माधुर्यादीनां, अवाचकत्वात् अभिधया प्रतिपाद्य-मानत्वाभावात् आश्रया न भवन्ति । असंघटितानां शब्दानां अर्थान्तरव्यञ्जक-त्वाभावात् सङ्घटिता एव ते अर्थविशेषं प्रकाशयन्तीति यावत् । समाधत्ते—नैवमिति । रसादीनां रसभावादीनां वर्णपदव्यङ्ग्यत्वस्य केवलवर्णैः केवल-पदैश्चापि व्यञ्जनस्य प्रतिपादितत्वाद् उक्तत्वादित्यर्थः ।

अभ्युपगते वा वाक्यव्यङ्ग्यत्वे रसादीनां न नियता काचित् सङ्घटना तेषामाश्रयत्वं प्रतिपद्यत इत्यनियतसङ्घटनाः शब्दा एव गुणानां व्यङ्ग्य-विशेषानुगता आश्रयाः। ननु माधुर्ये यदि नामैवमुच्यते, तदुच्यताम्, ओजसः पुनः कथमनियतसङ्घटनशब्दाश्रयत्वम्!

न ह्यसमासा सङ्घटना कदाचिदोजस आश्रयतां प्रतिपद्यते। उच्यते—यदि न प्रसिद्धिमात्रग्रहदूषितं चेतस्तदत्रापि न न ब्रूमः। ओजसः कथमसमास-सङ्घटना नाश्रयः। यतो रौद्रादीन् हि प्रकाशयतः काव्यस्य दीप्तिरोज इति प्राक् प्रतिपादितम्॥

---

## उज्जीवनी।

अभ्युपगत इति। रसादीनां रसभावादीनां व्यङ्ग्यानामर्थानां, वाक्य-व्यङ्ग्यत्वे सङ्घटितैः शब्दैः वाक्यरूपत्वं प्राप्तैः व्यङ्ग्यभावे अभ्युपगते अङ्गीकृते सत्यपि, सङ्घटितानामेव शब्दानां अर्थान्तरव्यञ्जकत्वेऽङ्गीक्रियमाणेऽपि, नियता काचित् सङ्घटना सङ्घटना नियतरूपा, तेषां रसानां, आश्रयत्वं न प्रतिपद्यते आश्रयत्वं न प्राप्नोति इति हेतोः' अनियतसङ्घटनाः सङ्घटना-नियमरहिताः शब्दा एव व्यङ्ग्यविशेषानुगता व्यङ्ग्यविशेषमनुगताः शब्दा एव। आश्रयाः गुणानां माधुर्यादीनां धर्माणामित्यर्थः।

"अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथे"ति 'वृत्तिदैर्घ्यं गुम्भ उद्धत आजसि इति च अन्यैरलङ्कारशास्त्रकारैः सङ्घटनानियमेऽङ्गीक्रियमाणेऽपि लक्ष्येषु बहुशः नियमस्यास्य भेददर्शनात् ध्वन्यालोककर्तुरयं नियमोऽनभिमत एवेति ज्ञायते।

आशङ्कते—नन्विति। माधुर्ये माधुर्याख्ये गुणे, एवं सङ्घटनानियमो नाङ्गीक्रियत इति यदि नामोच्यते यदि कथ्यते, तदुच्यतां कथ्यताम्। ओजसः पुनः ओजोगुणस्य तु, अनियतसङ्घटनाश्रयत्वं कथम्? अनियतायाः सङ्घटनायाः सङ्घटनानियमाभावस्य आश्रयत्वमाश्रयभावः आश्रयत्वेनावस्थानं कथं सङ्गच्छते। हेतुमाह—नहीति। असमासा समासरहिता सङ्घटना, कदाचिदपि ओजस आश्रयतां आश्रयत्वं न प्रतिपद्यते न प्राप्नोति। अत ओजसि, सङ्घटनानियम आवश्यक एव इति पूर्वपक्षः। समाधत्ते—उच्यत

तच्चौजो यद्यसमासायामपि सङ्घटनायां स्यात् तत् को दोषो भवेत्। न चाचारुत्वं सहृदयहृदयसंवेद्यमस्ति। तस्मादनियतसङ्घटनशब्दाश्रयत्वे गुणानां न काचित् क्षतिः। तेषां तु चक्षुरादीनामिव यथास्वं विषयनियमितस्य स्वरूपस्य न कदाचिद् व्यभिचारः।

तस्मादन्ये गुणाः अन्या च सङ्घटना। न च सङ्घटनामाश्रिता गुणा इत्येकं दर्शनम्। अथवा सङ्घटनारूपा एव गुणाः। यत्तूक्तं सङ्घटनावद् गुणानामपि

---

उज्जीवनी।

इति। प्रसिद्धिमात्रदूषितं दीर्घसमासरूपा सङ्घटना ओजस आश्रय इति प्रसिद्धिमात्रेण चेतो यदि दूषितं दोषवत् कृतं ते चेतो यदि न भवति, अत्रापि ओजस्यपि न न ब्रूमः सङ्घटनानियमो नास्तीति न वदामः।

यद्यप्येवं तथापि, ओजस ओजोगुणस्य, असमासा सङ्घटना, कथमाश्रयो न भवति। तदेवोपपादयति—यत इति। रौद्रादीन् रसान् प्रकाशयतो व्यञ्जयतः काव्यस्य शब्दसन्दर्भस्य दीप्तिः ओज ओजोगुण इति प्राक् पूर्वं, प्रतिपादितं प्रदर्शितम्। तच्चौजः तादृश ओजोगुण असमासायामपि सङ्घटनायां, यदि स्याद् यदि भवेत्, तत् को दोषो भवेत् कस्यापि दोषस्य नावसर इत्यर्थः। लक्ष्येषु ओजोव्यञ्जकवाक्यप्रयोगस्थलेषु, समासाभावेऽपि यदि सहृदयानां रसास्वादो भवति तर्हि दीर्घसमाससङ्घटनाया नियतत्वं कथं पदमुपगच्छति इति यावत्। तत्र तादृशस्थलेषु सहृदयहृदयसंवेद्यं सहृदयानां हृदयैर्वेदनीयं अचारुत्वं चारुत्वाभावः, नास्ति नैवानुभूयते। तस्माद् गुणानां, अनियत-सङ्घटनाश्रयत्वे सङ्घटनानियमानङ्गीकारे, न काचित् क्षतिः न कोऽपि दोषः। गुणानां नियतविषयत्वमाह—तेषां त्विति। तेषां तु गुणानां तु चक्षुरादीनामिव चक्षुरादीन्द्रियाणामिव, यथास्वं स्वस्वविषयानुसारेण, विषयनियमितस्य स्वरूपस्य, तत्तद्रसव्यञ्जकवर्णाश्रितानां गुणानां व्यभिचारः कदाचिदपि न भवतीत्यर्थः। तस्मादन्ये गुणाः, अन्या च सङ्घटना, गुणानां सङ्घटनायाश्च मिथो भेद एवेत्यर्थः।

गुणाश्च सङ्घटनामाश्रिता न पदानां, सङ्घटनामाश्रित्य गुणा न वर्तन्त इत्येकं दर्शनं मतम्। मतान्तरमाह—अथवेति। अथवा मतान्तरे तु सङ्घटना-रूपा एव गुणा, गुणसङ्घटनयोरभेद इति यावत्।

अनियतविषयत्वं प्राप्नोति । लक्ष्ये व्यभिचारदर्शनाद् इति । तत्राप्येतदुच्यते—यत्र लक्ष्ये परिकल्पितविषयव्यभिचारस्तद्विरूपमेवास्तु । कथमचारुत्वं तादृशे विषये सहृदयानां नावभातीति चेत् ? कविशक्तितिरोहितत्वात् । द्विविधो हि दोषः—कवेरव्युत्पत्तिकृतोऽशक्तिकृतश्च । तत्राव्युत्पत्तिकृतो दोषः शक्तितिरस्कृतत्वात् कदाचिन्न लक्ष्यते । यस्त्वशक्तिकृतो दोषः स झटिति प्रतीयते परिकरश्लोकश्चात्र—

> अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
> यस्त्वशक्तिकृतस्तस्य स झटित्येव भासते ॥

तथाहि—महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतत्वाद् ग्राम्यत्वेन न प्रतिभासते । यथा—कुमारसम्भवे देवीसम्भोगवर्णनम् ।

---

उज्जीवनी ।

गुणानामनियतविषयत्वमाशङ्कते—यत्तूक्तमिति । गुणानामपि माधुर्यादीनामपि, सङ्घटनावत् सङ्घटनाया इव, अनियतविषयत्व व्यञ्जकवर्णविषयक नियमाभावः प्राप्नोति । हेतुमाह—लक्ष्य इति । लक्ष्ये क्वचिद् व्यभिचारदर्शनाद् । तत्तद्रसाननुकूलवर्णघटितत्वेऽपि कुत्रचिद् तत्तद्गुणवत्त्वदर्शनात् । समाधत्ते—तत्रापि एतदुच्यत इति । यत्र क्वचिदेकत्र लक्ष्ये, परिकल्पितविषयव्यभिचारः विषयस्य व्यभिचरितत्वं परिकल्पितं तत् तादृशं लक्ष्यं विरूपमेवास्तु । तत्र वैरूप्यम् अस्तु नाम । तादृशे विषये यत्र वैरूप्यं भासते तत्र सहृदयानां अचारुत्वं चमत्काराभावः. नावभासते न प्रतिभासत इति चेत्, कविशक्तितिरोहितत्वादिति समाधत्ते । तदेव विशदीकरोति—द्विविध इति । दोषः द्विविधः, कवेः अव्युत्पत्तिकृतः व्युत्पत्तिराहित्याज्जातः । अशक्तिकृतश्च प्रतिभाशून्यतयासञ्जातश्चेति । तत्र दोषयोर्मध्ये अव्युत्पत्तिकृतो दोषः कवेरव्युत्पन्नत्वेन जायमानो दोषः । कदाचित् शक्तितिरस्कृतत्वात् कवेः प्रतिभाविशेषेण परिह्रियमाणत्वात्, न लक्ष्यते न भासते । यस्तु अशक्तिकृतः प्रतिभाशून्यत्वकृतः दोषः, स तु झटित्येव, प्रतीयते अवभासते । स एवार्थः परिकरश्लोकेन प्रदर्श्यते—अव्युत्पत्तीति । अव्युत्पत्तिकृतः व्युत्पत्तिशून्यतायाः सञ्जातः दोषः कवेः शक्त्या प्रतिभया, संव्रियते आच्छाद्यते, तु किन्तु, यः अशक्तिकृतः शक्त्यभावात्

एवमादौ च विषये यथौचित्यात्यागस्तथा दर्शितमेवाग्रे। शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यां अवसीयते। तथाहि शक्तिरहितेन कविना एवंविधे विषये शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेन प्रतिभासते। नन्वस्मिन् पक्षे 'यो यः शस्त्रं बिभर्ति' इत्यादौ किमचारुत्वम्? अप्रतीयमानमेवारोपयामः। तस्माद् गुणव्यतिरिक्तत्वे गुणरूपत्वे च सङ्घटनायाः अन्यः कश्चिन्नियमहेतुर्वक्तव्य इत्युच्यते ॥

## तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ॥ ६ ॥

---

उज्जीवनी।

प्रतिभाराहित्येन कृतः स दोषः झटिति काव्यश्रवणसमय एव, अवभासते प्रतीयते। तदेवोपपादयति—तथाहीति। महाकवीनां उत्तमदेवताविषयकं प्रसिद्धं यत् सम्भोगशृङ्गारवर्णनं तस्य निबन्धनादेः अनौचित्यरूपमौचित्यरहितत्वं, शक्तितिरस्कृतत्वात् कविप्रतिभाविलासेनाच्छाद्यमानत्वात् ग्राम्यत्वेन काव्यदोषत्वेन न प्रतिभासते न प्रतीयते। तथा कुमारसम्भवे कालिदासमहाकविविरचिते कुमारसम्भवाख्ये महाकाव्ये देवीसम्भोगवर्णनम्। एवमादौ विषये यथौचित्यात्यागः औचित्यस्य त्यागाभावः तथाग्रे आदौ दर्शितमेव उक्तमेव। शक्तितिरस्कृतत्वं च पूर्वोक्तस्यानौचित्यस्य कविप्रतिभातिरोहितत्वं च, अन्वयव्यतिरेकाभ्यां अवसीयते। कविप्रतिभातिरोहितत्वसत्वे अनौचित्यभानाभावः, तदभावेऽनौचित्यभानमिति, अन्वयेन व्यतिरेकेण च शक्तितिरस्कृतत्वस्य अचारुत्वाभावं प्रति कारणत्वमवसेयमिति यावत्। तथाहि शक्तिरहितेन कविना प्रतिभाशून्येन काव्यकर्त्रा, एवंविधे विषये अनुचिते विषये, उपनिबध्यमानो वर्ण्यमानः, शृङ्गारः शृङ्गाराख्यो रसः, स्फुटमेव नियमेनैव, दोषत्वेन प्रतिभासते प्रतीयते। नन्विति—अस्मिन् पक्षे गुणसङ्घटनयोरभेदपक्षे, सङ्घटनाया नियतत्वानभ्युपगमेऽपि 'यो यः शस्त्रं बिभर्ती-त्यादौ—

> यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
> यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
> यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
> क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥

तत्र वक्ता कविः कविनिबद्धो वा रसभावरहितो रसभावसमन्वितो वा; रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा, कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पाः।

वाच्यं च ध्वन्यात्मरसाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्। तत्र यदा कविरपगतरसभावो वक्ता तदा रचनायाः कामचारः। यदापि कविनिबद्धो वक्ता रसभावरहितस्तदा स एव।

---

उज्जीवनी।

इत्यत्र रौद्रस्य व्यङ्ग्यत्वेन प्रधानतायामसमासायां सङ्घटनायां चाचारुत्वं किमस्तीति प्रश्ने जायमाने 'अप्रतीयमानमेवारोपयामः, इति वचनेन अचारुत्वं नैव प्रतीयत इति समाधानं प्रदर्शितम्। तस्माद् हेतोः गुणव्यतिरिक्तत्वे सङ्घटनाया गुणाद् भेदे गुणरूपत्वे वा अभेदे वा, नियमहेतुः नियमस्य हेतुः अन्यः कश्चिद् वक्तव्य इत्युच्यते। रसस्तु पूर्वोक्तरीत्या नियमहेतुत्वं नार्हतीत्याशयः।

नियमे हेतुमाह—तन्नियम इति। तन्नियमे तस्याः संघटनाया नियमे वक्तृवाच्ययोः वक्तुर्वाच्यस्य च औचित्यं हेतुः कारणमित्यर्थः॥

वक्तुर्भेदानाह— तत्रेति। वक्ता कविः, कविनिबद्धो नायकादिः इति द्वैविध्यम्। कविनिबद्धश्च वक्ता, रसभावरहितः रसभावशून्यः, रसभावसमन्वितश्चेति द्विविधः। रसोऽपि शृङ्गारादिरपि नायकाश्रयः, कविनिबद्धवक्त्राश्रयः, तद्विपक्षाश्रयः तस्य नायकस्य विपक्षं शत्रुमाश्रित्य वर्तमानः इति द्वेधा। कथानायकश्च धीरोदात्तादिभेदभिन्नः, धीरोदात्त, धीरोद्धत, धीरललित, धीरशान्तादिभेदेन भिन्नः, पूर्वः कथानायकः, तदनन्तरः प्रतिनायकः, उपनायको वा इति विकल्पा भेदाः सम्भवन्ति। वाच्यस्य भेदानाह—वाच्यं चेति। ध्वन्यात्मरसाङ्गं ध्वन्यात्मनो व्यङ्ग्यरूपार्थस्य प्राधान्येन ध्वनिरूपस्य रसस्य शृङ्गारादेः अङ्ग, व्यञ्जकत्वेनावस्थितं, रसाभासाङ्ग, रसाभासस्याङ्गं, अभिनेयार्थं नाटकादिरूप, अनभिनेयार्थं काव्यात्मकं वा, उत्तमप्रकृत्याश्रयं उत्तमप्रकृतिरुत्तमनायकादिः आश्रयः यस्य तादृशम्। तदितराश्रयं तद्भिन्ननायकाश्रयं वेति बहुप्रकारम्। बहवः अनेके प्रकारा भेदा यस्य तादृशं

यदा तु कविः कविनिबद्धो वा वक्ता, रसभावसमन्वितो रसश्च प्रधाना-श्रितत्वात् ध्वन्यात्मभूतः, तदा नियमेनैव तत्रासमासामध्यमसमासे एव सङ्घटने। करुणविप्रलम्भशृङ्गारयोस्त्वसमासैव सङ्घटना। कथमिति चेद्; उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः। एवं च दीर्घसमासा सङ्घटना समासानामनेकप्रकार-सम्भावनया कदाचिद्रसप्रतीतिं व्यवदधातीति तस्यां नात्यन्तमभिनिवेशः शोभते।

विशेषतोऽभिनेयार्थे काव्ये, ततोऽन्यत्र च विशेषतः करुणविप्रलम्भशृङ्गार-योः। तयोर्हि सुकुमारत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरी

---

उज्जीवनी।

वाच्यमिति यावत्। तत्रेति। यस्मिन् काव्ये, कविः अपगतरसभावः अपगतः रसः भावश्च यस्य तादृशः, कवयिता वक्ता, प्रबन्धा यदा भवति तदा। रचनायाः सङ्घटनायाः कामचारः यथेष्टमाचरणम्। नियमो नास्तीत्यर्थः, कविनिबद्धो वक्ता वा नायकादिः, वक्तापि वक्तृत्वेन कल्पितः कविना। यदा रसभावादिरहितः रसभावादिशून्यः, तदापि स एव कामचार एव सङ्घटनायाः। यदा तु कविः कविनिबद्धो वा वक्ता वा रसभावसमन्वितः रसभावादियुक्तः, रसश्च प्रधानाश्रितत्वात् व्यङ्ग्यत्वेन प्रधानमर्थमाश्रित्य वर्तमानत्वाद्, ध्वन्यात्मभूतः ध्वनिरूपतां प्राप्तः, तदा तत्र असमासामध्यमसमासे एव सङ्घटने नियमेनैव आश्रयणीये इति नियमोऽस्त्येवेत्यर्थः। अयं च शृङ्गाररसविषय एव नियमः। करुणविप्रलम्भयोस्तु करुणस्य विप्रलम्भशृङ्गारस्य च, असमासैव सङ्घटना। तदेवोपपादयति—कथमिति। उच्यत इति। रसः शृङ्गारादिः यदा प्राधान्येन प्रधानतया प्रतिपाद्यः प्रतिपादनविषयीभूतः, तदा तस्याम-वस्थायां, तत्प्रतीतौ व्यङ्ग्यस्यार्थस्य प्रत्यायने, व्यवधायकाः प्रतिबन्धकाः विरोधिनश्च रसाननुगुणाश्च, सर्वात्मनैव सर्वथैव, परिहार्याः परिहरणीयाः। एवं च दीर्घसमासासङ्घटनायां दीर्घसमासाश्रितानां सङ्घटनानां, अनेक-प्रकारसम्भावनया, समासानां वैविध्यसन्देहात्, कदाचिद् रसप्रतीतिः रसाव-बोधनं व्यवदधाति प्रतिबध्नाति, इति हेतोः, तस्यां दीर्घसमासायां सङ्घटनायां अत्यन्तमभिनिवेशः कवेर्नैर्भर्यं न शोभते नैवाह्लादकमित्यर्थः। अभिनेयार्थे काव्ये दृश्यकाव्ये नाटकादौ, विशेषतः सङ्घटनानियमे अभिनिवेशः सुतरा-

भवति। रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासा सङ्घटना कदाचिद् धीरोद्धतनायकसम्बन्धव्यापाराश्रयेण दीर्घसमासापि वा तदाक्षेपाविनाभावि-रसोचितवाच्यापेक्षया न विगुणा भवतीति सापि नात्यन्तं परिहार्या।

सर्वासु च सङ्घटनासु प्रसादाख्यो गुणो व्यापी। स हि सर्वरससाधारणः सर्वसङ्घटनासाधारणश्चेत्युक्तम्। प्रसादातिक्रमे ह्यसमासापि सङ्घटना करुणविप्रलम्भशृङ्गारौ न व्यनक्ति। तदपरित्यागे च मध्यमसमासापि न न प्रकाशयति।

---

उज्जीवनी

मनुचितः। ततोऽन्यत्र करुणविप्रलम्भशृङ्गारयोः मधुरतरस्य करुणस्य, मधुरतमस्य विप्रलम्भशृङ्गारस्य च अङ्गिभावेन प्राधान्यं यत्र काव्ये प्रतीयते, तत्र विशेषतः अत्यन्तमनुचित एव नियम इति भावः। हि यतः, तयोः करुण-विप्रलम्भशृङ्गारयोः सुकुमारतरत्वाद् अत्यन्तं सौकुमार्यात्, अस्वच्छतायां स्वल्पायामपि अल्पेऽपि मालिन्ये, शब्दार्थयोः शब्दस्यार्थस्य च, प्रतीतिर्मन्थरो भवति रसप्रतीतिः मन्थरीभवति मान्द्यमुपैति। रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ रौद्रादिषु रसेषु प्रतिपाद्यमानेषु मध्यमसमासा सङ्घटनापि न दोषावहा। कदाचित् धीरोद्धतनायकसम्बन्धव्यापाराश्रयेण धीरोद्धतस्य नायकस्य सम्बन्धः वर्णनविषयत्वं यस्मिंस्तादृशस्य व्यापारस्याश्रयेण, तादृशे कविव्यापारे, दीर्घसमासापि वा सङ्घटना, तदा-क्षेपाविनाभाविरसोचितवाच्यापेक्षया तस्या दीर्घसमासायाः सङ्घटनायाः अविनाभावो तन्नियतः यो रसः रौद्रादिः, तदुचितो यो वाच्यस्तदपेक्षया विगुणा हीनगुणा न भवतीति हेतोः सापि अत्यन्तं न परिहार्या अत्यन्तपरिहारो नावश्यकर्तव्य इत्यर्थः। प्रसादाख्यो यो गुण स सर्वासु सङ्घटनासु व्यापी व्याप्यावतिष्ठत इत्यर्थः। तत्र हेतुमाह—स हीति। स हि प्रसादस्तु सर्वरस-साधारणः सर्वेषु मधुरेषु ओजस्विषु तदितरेषु च रसेषु साधारण्येन वर्तमानः सर्वसङ्घटनासाधारणश्च सर्वासु च सङ्घटनासु असमासामध्यमसमासादीर्घ समासासु च सङ्घटनासु समान इति पूर्वमेवोक्तम्। प्रसादगुणनिरूपणावसरे प्रदर्शितमित्यर्थः। माधुर्यौजोभ्यां प्रसादस्य विशेषमाह-प्रसादेति। प्रसादाति-क्रमे प्रसादगुणस्य परित्यागे यद्यप्यसमासा सङ्घटना करुणविप्रलम्भयोरौचित्यं

तस्मात् सर्वत्र प्रसादोऽनुसर्तव्यः। अत एव च 'यो यः शस्त्रं बिभर्ति' इत्यादौ यद्योजसः स्थितिर्नेष्यते तत् प्रसादस्यैव गुणो न माधुर्यम्। न चारुत्वं; अभिप्रेतरसप्रकाशनात्। तस्माद् गुणाव्यतिरिक्तत्वे गुणव्यतिरिक्तत्वे वा संघटनाया यथोक्तादौचित्याद् विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम्॥

तस्याश्च रसाभिव्यक्तिनिमित्तभूताया योऽयमनन्तरोक्तो नियमहेतुः स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानमप्यविरुद्धम्॥

**विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।**
**काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा॥ ७॥**

---

उज्जीवनी।

न जहाति। तथापि प्रसादगुणहानौ करुणविप्रलम्भौ न व्यनक्ति। अन्वयमाह—तदिति। तदपरित्यागे तस्य प्रसादस्य परित्यागाभावे प्रसादगुणपरिग्रहे। मध्यमसमासापि सङ्घटना न प्रकाशयतीति न वक्तव्यम्। प्रसादगुणसत्त्वे मध्यमसमासापि सङ्घटना रसव्यञ्जिका इत्यन्वयः। प्रसादगुणाभावे असमासापि सङ्घटना न रसव्यञ्जिकेति व्यतिरेकः। एवं प्रसादगुणस्य सर्वरससाधारण्य सिध्यतीत्यर्थः। पर्यवसितमाह—तस्मादिति। तस्माद् उक्ताद्धेतोः, प्रसादः प्रसादाख्यो गुणः, सर्वत्रानुवर्तव्यः अनुसरणीयः। अत एवेति। अत एव प्रसादस्य सर्वरससाधारण्यादेव 'यो यः शस्त्रं बिभर्ति' इत्यत्र ओजस्विनि काव्ये यद्यपि सङ्घटनानियममङ्गीकुर्वाणैरलङ्कारशास्त्रकारैः, ओजस ओजोगुणस्य, स्थितिरवस्थानं, नेष्यते तत् तथापि, तत्र प्रसादाख्य एव गुणाः प्रसादगुण एव काव्यचारुत्वहेतुः, न माधुर्यं माधुर्याख्यो गुणस्तत्र नाभ्युपगम्यते। तेन यत्र अचारुत्वं च नास्ति। अभिप्रेतस्याभिमतस्य रसस्य प्रकाशनात् प्रसादेन सर्वरससाधारणेनैव रसव्यञ्जकत्वनिर्वाहात्। तस्मात् सङ्घटनाया गुणाव्यतिरिक्तत्वे गुणाभेदे गुणव्यतिरिक्तत्वे वा गुणभिन्नत्वे वा, यथोक्तादौचित्याद् वक्तुर्वाच्यस्य वा औचित्यानुसारेण विषयनियमोऽस्त्येव। इति हेतोः, तस्या अपि सङ्घटनाया अपि रसव्यञ्जकत्वं रसप्रकाशकत्वम्। रसाभिव्यक्तिनिमित्तभूताया रसाभिव्यक्तेः व्यञ्जनस्य कारणभूतायाः, तस्याश्च संघटनायाश्च योऽयमनन्तरोक्तो

वक्तृवाच्यगतौचित्ये सत्यपि विषयाश्रयमन्यदौचित्यं सङ्घटनां नियच्छति। यतः काव्यस्य प्रभेदा मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धम्। सान्दानितकविशेषककलापककुलकानि। पर्यायबन्धः, परिकथा, खण्डकथा—सकलकथे, सर्गबन्धोऽभिनेयार्थमाख्यायिका—कथे इत्येवमादयः। तदाश्रयेणापि सङ्घटना विशेषवती भवति। तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवे-स्तदाश्रयमौचित्यम्। तच्च दर्शितमेव॥ अन्यत्र कामचारः।

---

उज्जीवनी।

नियमहेतुः वक्तृवाच्याद्यौचित्यरूपो विषयनियमस्य कारणं स एव औचित्यात्मक एव गुणानां माधुर्यादीनां नियतो विषयः नियतहेतुर्विषय इति गुणाश्रयेण व्यवस्थानं, संघटनाया गुणात्मनैव अवस्थानमपि अविरुद्धम्। सङ्घटनाया गुणाश्रितत्वेनावस्थानं न विरुध्यत इत्यर्थः।

औचित्यान्तरमाह—विषयेति। विषयः शब्दसन्दर्भात्मकः आश्रयः यस्य तादृशम्। अन्यदपि औचित्यं औचित्यान्तरमपि तां सङ्घटनां नियच्छति नियमयति। हि यतः सा सङ्घटना काव्यप्रभेदाश्रयतः काव्यस्य प्रभेदानाश्रित्य भेदवती स्थिता भिन्नैवावतिष्ठत इत्यर्थः। वक्तृवाच्यगतौचित्ये वक्तुः वाच्यस्य चानुरोधेन यदौचित्यं तस्मिन् सत्यपि विद्यमानेऽपि विषयाश्रयं काव्यप्रभेदाना-श्रित्य विद्यमानमौचित्यमपि सङ्घटनां नियच्छति सङ्घटनाया नियमे कारणं भवतीत्यर्थः। काव्यप्रभेदानाह—यत इति। मुक्तकं मुक्तमेव मुक्तकं—संज्ञायां कन्। पद्यान्तरनिरपेक्षेण एकेन पद्येन समाप्तिबोधकक्रियान्वये वाक्यार्थस्य पूर्णतायां मुक्तकमित्युच्यते। तदुक्तं साहित्यदर्पणे— (P. 458)

> छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम्।
> द्वाभ्यां तु युग्मकं सान्दानितकं त्रिभिरिष्यते॥
> कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्॥

तत्र मुक्तकं संस्कृत (भाषा) मयं, प्राकृत (भाषा) मयं, अपभ्रंशमयं च वर्तते।

द्वाभ्यां पद्याभ्याम् एकविशिष्टार्थबोधकं काव्यं युग्मकम्। तथा त्रिभिः पद्यैः सान्दानितकं, चतुर्भिः कलापकं, पञ्चभिः पद्यैः कुलकं चेति काव्यभेदा

मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा हि अमरुकस्य कवेः मुक्तकाः शृङ्गाररसस्यन्दिनः प्रसिद्धा एव। सान्दानितकादिषु तु विकटनिबन्धनौचित्यात् मध्यमसमासादीर्घसमासे एव रचने। प्रबन्धाश्रयेषु यथोक्तप्रबन्धौचित्यमेवानुसर्तव्यम्।

पर्यायबन्धे पुनरसमासामध्यमसमासे एव सङ्घटने। कदाचिदर्थौचित्याश्रयेण दीर्घसमासायामपि सङ्घटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या। परिकथायां कामचारः। तत्रेतिवृत्तमात्रोपन्यासेन नात्यन्तं रसबन्धाभिनिवेशात्॥

---

उज्जीवनी।

वर्तन्ते। एवं पर्यायबन्धः, परिकथा, खण्डकथा, सकलकथा, सर्गबन्धः, अभिनेयार्थम्, आख्यायिका, कथा इत्येवमादयश्च भेदाः सन्ति। तदाश्रयेणापि काव्यविशेषाश्रयेणापि सङ्घटना विशेषवती भिन्ना भवति। तत्रेति। मुक्तकेषु रसबन्धाभिनिवेशिनः रसस्य निबन्धने अभिनिवेशिनः तत्परस्य कवेः, तदाश्रयं वक्त्राद्याश्रयमौचित्यमेव सङ्घटनायां नियामकम्। तच्च दर्शितमेव अनुपदमेव प्रदर्शितमित्यर्थः। अन्यत्र कवे रसबन्धाभिनिवेशो यत्र नास्ति तत्र कामचार, नियमो नानुसरणीयः।

मुक्तकेषु प्रसिद्धं विशेषमाह—मुक्तकेष्विति। प्रबन्धेष्विव, यथा कवीनां प्रबन्धेषु रसबन्धेऽभिनिवेशः, तथा मुक्तकेष्वपि कवीनां दृश्यत एव। उदाहरति—यथेति। अमरुकस्य कवेः मुक्तकाः मुक्तकात्मकाः श्लोकाः। शृङ्गाररसस्यन्दिनः, शृङ्गाररसस्य व्यञ्जकाः, प्रबन्धायमानाः प्रबन्धवद् भासमानाः प्रसिद्धा एव प्रख्याता एव। सान्दानितकादिषु, कलापकेषु कुलकेषु च काव्यभेदेषु विकटनिबन्धनौचित्यात् विकटनिबन्धनस्य उद्धतरचनाया उचितत्वेन, मध्यमसमासा दीर्घसमासा च रचने सङ्घटने नाननुकूले। प्रबन्धाश्रयेषु प्रबन्धान्तर्गतेषु तु, तेषु सन्दानितकादिषु यथोक्तप्रबन्धस्य यदौचित्यं तदेवानुसर्तव्यम्। पर्यायबन्धे पुनः एकवर्णनीयोद्देशेन प्रवृत्ते खण्डकाव्ये तु, असमासा मध्यमसमासा च सङ्घटना। तत्र प्रायेण शृङ्गाररसस्य प्राधान्येन प्रतीयमानत्वादित्यर्थः। तथापि कदाचिदर्थस्य प्रतिपाद्यमानस्य औचित्याश्रयेण औचित्यमाश्रित्य दीर्घसमासायां सङ्घटनायां अङ्गीक्रियमाणायामपि, परुषा

खण्डकथासकलकथयोस्तु प्राकृतप्रसिद्धयोः, कुलकादिनिबन्धनभूयस्त्वात् दीर्घसमासायामपि न विरोधः। वृत्त्यौचित्यं तु यथारसमनुसर्तव्यम्। सर्गबन्धे तु रसतात्पर्ये यथारसमौचित्यं अन्यथा तु कामचारः। द्वयोरपि मार्गयोः सर्गबन्धविधायिनां दर्शनाद् रसतात्पर्यं साधीयः। अभिनेयार्थे तु सर्वथा रसबन्धेऽभिनिवेशः कार्यः। आख्यायिकाकथयोस्तु गद्यनिबन्धनबाहुल्यात् गद्ये च छन्दोबन्धभिन्नप्रस्थानत्वादिह नियमे हेतुरकृतपूर्वोऽपि मनाक् क्रियते।

---

उज्जीवनी।

ग्राम्या च वृत्तिः शृङ्गाररसाननुकूलवर्णरचना परिहर्त्तव्या न स्वीकर्त्तव्या। परिकथायां धर्मादिपुरुषार्थमेकमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनपरायां कामचारः। सङ्घटनानियमो नास्तीत्यर्थः। हेतुमाह—तत्रेति। तत्र परिकथायां, इतिवृत्तमात्रोपन्यासेन इतिवृत्तमात्रवर्णनेन, नात्यन्तमहत्त्वेनैव, रससम्बन्धाभिनिवेशात् रससम्बन्धे रसाभिव्यञ्जकतायां, अभिनिवेशात् तात्पर्यात्। खण्डकथा एकदेशवर्णनात्मिका, सकलकथा सकलेतिवृत्तवर्णनारूपा, तयोस्तु प्राकृतप्रसिद्धयोः, प्राकृतभाषामय्योः, कुलकादिनिबन्धनभूयस्त्वात् भूयसांशेन कुलकादीनां निबन्धनात्, दीर्घसमासायामपि सङ्घटनायां न विरोधः। वृत्तेरौचित्यं तु यथारसमनुसर्तव्यं रसविरोधिवृत्तेरनुचितत्वादित्यर्थः। सर्गबन्धे महाकाव्ये तु, रसतात्पर्ये यत्र रसनिबन्धने तात्पर्यं कवेः, तत्र, यथारसमौचित्यं रसोचितमौचित्यम्। अन्यथा रसतात्पर्याभावे, तु कामचारः सङ्घटनायाम्। सर्गबन्धविधायिनां महाकाव्यकर्तॄणां, द्वयोरपि मार्गयोः रसतात्पर्यस्य तदभावस्य च दर्शनात्, रसतात्पर्यमेव साधीयः युक्ततरम्। अभिनेयार्थे तु दृश्यकाव्ये तु, रसबन्धे रसनिबन्धने कवेरभिनिवेशः कार्यः। तत्परत्वमावश्यकमित्यर्थः। आख्यायिकाकथयोस्तु, कथायामाख्यायिकायां च

> कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
> क्वचिदत्र भवेदार्या क्वचिद् वक्त्रापवक्त्रके।
> आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्॥

एतद्यथोक्तमौचित्यमेव तस्याः नियामकम् ।
सर्वत्र गद्यबन्धेऽपि छन्दोनियमवर्जिते ॥ ८ ॥

यदेतदौचित्यं वक्तृवाच्यगतं सङ्घटनाया नियामकमुक्तमेतदेव गद्ये छन्दोनियमवर्जितेऽपि विषयापेक्षं नियमहेतुः ॥

तथा ह्यत्रापि यदा कविः कविनिबद्धो वा वक्ता रसभावरहितः, तदा कामचारः । रसभावसमन्विते तु वक्तरि पूर्वोक्तमेवानुसर्तव्यम् । तत्रापि च विषयौचित्यमेव । आख्यायिकायां तु भूम्ना मध्यमसमासादीर्घसमासे एव सङ्घटने । गद्यस्य विकटबन्धाश्रयेण छायावत्त्वात् । तत्र च तस्य प्रकृष्यमाणत्वात् । कथायां तु विकटबन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमौचित्यमनुसर्तव्यम् ॥

---

उज्जीवनी ।

यथा कादम्बर्यादिः ॥

आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्तनम् ।
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित् ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ॥

यथा हर्षचरितादिः । आख्यायिकायां कथायां च गद्यनिबन्धनबाहुल्यात् तयोर्गद्यकाव्यत्वात् । गद्ये च छन्दोभिन्नप्रस्थानत्वात् वृत्तनिबन्धनविरहात् । इह अस्मिन् ग्रन्थे, नियमे हेतुः सङ्घटनानियमकारणम् । अकृतपूर्वोऽपि पूर्वमकृतोऽपि, मनागल्पतया, क्रियते विधीयत इति यावत् ।

एतदिति । तस्याः सङ्घटनायाः, यथोक्तं यथा इदानीमुक्तं, औचित्यमेव, छन्दोनियमवर्जिते वृत्तनियमशून्ये, सर्वत्र गद्यबन्धेऽपि गद्यकाव्ये सर्वत्रापि, नियामकं नियमहेतुः । तदेवाह—यदिति । यदेतत् पूर्वोक्तं, वक्तृवाच्यगतं, औचित्यमनौचित्यभावः, संघटनायाः समस्यमानपदात्मिकायाः, नियामकं नियमे कारणम् । उक्तमभिहितम् । एतदेवौचित्यं विषयापेक्षं, छन्दोनियमवर्जितेऽपि छन्दोनियमरहितेऽपि, गद्ये गद्यप्रबन्धे, नियमहेतुः सङ्घटनानियमकारणम् । उपपादयति—तथाहीति । अत्रापि गद्यप्रबन्धेऽपि, कविः कविनिबद्धो

रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता ।
रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत् ॥ ९ ॥

अथवा पद्यवद् गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं सर्वत्र संश्रिता रचना भाति । तत्तु विषयापेक्षं किञ्चिद् विशेषवद् भवति । न तु सर्वाकारम् । तथा हि गद्यबन्धेऽप्यतिदीर्घसमासा रचना विप्रलम्भशृङ्गारकरुणयोराख्यायिकायामपि शोभते । नाटकादावप्यसमासैव न रौद्रवीरादिवर्णने ।

---

उज्जीवनी ।

वक्ता, वा, यदा रसभावरहितः रसभावादिशून्यः तदा कामचारः सङ्घटनायाः । वक्तरि कविरूपे, कविनिबद्धवक्तृरूपे वा, रसभावसमन्विते तु रसभावादिसहिते तु, पूर्वोक्तमेव नियामकत्वं, अनुसर्तव्यमनुसरणीयम् । तत्रापि औचित्यविषये, विषयौचित्यमेव प्रतिपाद्यस्यौचित्यमेव, मुख्यतयाङ्गीकर्तव्यमित्यर्थः । आख्यायिकायां तु आख्यायिकारूपे गद्यप्रबन्धे तु, भूम्ना बाहुल्येन, मध्यमसमासा, दीर्घसमासा च संघटना एव स्वीक्रियते । गद्यस्य विकटबन्धाश्रयेण विकटं बन्धं रचनामाश्रित्यैव, छायावत्त्वाद् कान्तिमत्त्वात् । तत्र च गद्ये च तस्य, विकटबन्धस्य, प्रकृष्यमाणत्वाद् उत्कृष्टत्वात् । कथाया भेदमाह कथायामिति । कथायां गद्यकाव्ये तु, गद्यस्य विकटबन्धप्राचुर्येऽपि विकटबन्धस्य प्रचुरतायामपि, रसबन्धोक्तं रसबन्धे यदौचित्यमुक्तं तदेवानुसर्त्तव्यम् ।

रसबन्धेति । रसबन्धोक्तमौचित्यं, सर्वत्र गद्यप्रबन्धे संश्रिता आश्रिता, रचना संघटना, भाति प्रकाशते । तत्तु विषयापेक्षं विषयाश्रितमौचित्यं तु किञ्चिद् विभेदवत् अल्पीयान् भेदो वर्त्तत इत्यर्थः । तदेवाह—अथवेति । सर्वत्र गद्यप्रबन्धेऽपि आख्यायिकादावपि, पद्यवत् पद्यप्रबन्ध इव, औचित्यमुचिततां, संश्रिता आश्रित्य तिष्ठन्ती रचना, संघटना भवति । तत्तु औचित्यं तु, विषयापेक्षं किञ्चिद्विभेदवत् । न तु सर्वाकारं महान् भेदो नास्तीत्यर्थः । तदेव विशदीकरोति—तथाहीति । गद्यबन्धे गद्यप्रबन्धेऽपि, आख्यायिकायां आख्यायिकारूपे, विप्रलम्भशृङ्गारकरुणयोः विप्रलम्भशृङ्गारे करुणे च अतिदीर्घसमासा रचना संघटना न शोभते । तथा नाटकादावपि दृश्यकाव्यादावपि, रौद्रवीरादिवर्णने रौद्रस्य वीरादेर्वा रसस्य वर्णने, असमासैव संघटना न नियता, विषयापेक्षं तु

विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च । तथा ह्याख्यायिकायां नात्यन्तमसमासा, स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनाया दिगनुसर्तव्या ॥ ९ ॥

*इदानीमलक्ष्यक्रमव्यङ्ग्यो ध्वनिः प्रबन्धात्मा रामायणमहाभारतादौ प्रकाशमानः प्रसिद्ध एव । तस्य तु यथाप्रकाशनं तत् प्रतिपाद्यते—

**विभावभावानुभावसञ्चार्यौचित्यचारुणः ।**
**विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य च ॥ १० ॥**

---

उज्जीवनी ।

औचित्यं, रसबन्धे यदौचित्यं तस्मात् प्रमाणात् क्वचिदुत्कृष्टं क्वचिदपकृष्टं वा भवतीति अल्पो भेदः । तथाहि आख्यायिकायाम् अत्यन्तमसमासा अत्यन्तं समासरहिता, नाटकादौ तु दृश्यकाव्ये तु, स्वविषयेऽपि तस्मिन्नेव विषये, नातिदीर्घसमासा अत्यन्तं दीर्घसमासप्रचुरा न शोभते, इति संघटनायाः संघटनाविषयिणी दिग् अनुसरणीया, तदेवमेषा दिक् प्रदर्शितेति यावत् ।

एतावता प्रबन्धेन असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः पदवाक्यतादिप्रकाशता प्रस्तावे, गुणानां संघटनायाश्च स्वरूपं भेदांश्च प्रतिपाद्य प्रबन्धप्रकाशतां प्रकाशयितुं उपक्रममाण आह—इदानीमिति । असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः पदादिषु प्रकाशमान उक्तः स ध्वनिः, तदनन्तरं प्रबन्धात्मा प्रबन्धगतत्वेन प्रकाशमानः स ध्वनिः रामायणमहाभारतादौ प्रबन्धे प्रकाशत इति प्रसिद्धः प्रख्यात एव । तु किन्तु, तस्य ध्वनेः तद् यथाप्रकाशनं प्रकाशनस्य प्रकारः भेदात्मकं, प्रतिपाद्यते निरूप्यत इत्यर्थः ।

प्रकाशनस्य प्रकाशनेवाह—विभावेति । प्रबन्धस्य प्रबन्धात्मकस्य, कविव्यापारस्य, रसादीनां व्यञ्जकत्वे, रसाद्यभिव्यञ्जकतायां, निबन्धनं निदानमित्यर्थः । क्रमेणाह—विभावानुभावेति । (१) विभावस्य आलम्बनोद्दीपात्मकस्य, भावस्य देवादिविषयाया रतेः, विभावानुभावाभिव्यक्तस्य

---

* "इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी ।
सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः ॥" (इत्यधिकतया च पाठे दृश्यते)

इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम् ।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः ॥ ११ ॥

सन्धिसन्ध्यङ्गघटनं, रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ १२ ॥

उद्दीपनप्रशमने यथावसरमन्तरा ।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥ १३ ॥

अलङ्कृतीनां शक्तावप्यानुरूपेण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ १४ ॥

प्रबन्धोऽपि रसादीनां व्यञ्जक इत्युक्तं, तस्य व्यञ्जकत्वे निबन्धनम् ।

---

उज्जीवनी ।

व्यभिचारिणः । अनुभावस्य कटाक्षविक्षेपादेः, सञ्चारिणः व्यभिचारिभावस्य च, औचित्येन उचिततया योजनेन, चारुणः सहृदयहृदयाह्लादकस्य, वृत्तस्य स्वतः सम्भविनः, उत्प्रेक्षितस्य कविकल्पितस्य वा, कथाशरीरस्य कथावस्तुनः, विधिः एकं निबन्धनम् । (२) इतिवृत्तवशायातां इतिवृत्तवशेन इतिवृत्ताधीनतया, आयातामुपस्थिताम् । अननुगुणां आनुगुण्यरहितां, स्थितिमवस्थानम् । त्यक्त्वा विहाय, उत्प्रेक्ष्यापि कल्पितत्वेनापि अन्तरा मध्ये, अभीष्टरसोचितकथोन्नयः अभीष्टस्याभिमतस्य, रसस्योचितायाः कथायाः उन्नयः द्वितीयं निबन्धनम् । (३) सन्धिसन्ध्यङ्गघटनं सन्धीनां सन्ध्यङ्गानां चायोजनम्, रसाभिव्यक्त्यपेक्षया रसानामभिव्यक्तेरानुगुण्येन कर्तव्यम् । तु किन्तु । केवलया शास्त्रस्थितिसपादनेच्छया शास्त्रमर्यादायाः सम्पादनाभिलाषमात्रेण न कर्तव्यमित्यर्थः । (४) अन्तरा मध्ये, यथावसरं अवसरोचिततया, उद्दीपनप्रशमने उद्दीपनं प्रशमनं च विधेयम् । (५) आरब्धविश्रान्तेः आरब्धस्य प्रबन्धस्य विश्रान्तिपर्यन्तं, अङ्गिनः प्रधानस्य रसस्य अनुसन्धान अनुवृत्तता । (६) शक्तावपि शक्तिसत्त्वेऽपि, अलङ्कृतीनां अलङ्काराणां आनुरूप्येण औचित्येन योजनमायोजनम् । एतानि निबन्धनानीत्यर्थः ।

प्रथमं तावद् विभावभावानुभावसञ्चार्यौचित्यचारुणः कथाशरीरस्य विधिर्यथायथं प्रतिपिपादयिषितरसभावाद्यपेक्षया य उचितो विभावो भावोऽनुभावः सञ्चारी वा तदौचित्यचारुणः कथाशरीरस्य विधिर्व्यञ्जकत्वे निबन्धनमेकम्। तत्र विभावौचित्यं तावत् प्रसिद्धं; भावौचित्यं तु प्रकृत्यौचित्यात्।

प्रकृतिर्हि उत्तममध्यमाधमभावेन दिव्यमानुषादिभावेन च विभेदिनी। तां यथायथमनुसृत्यासङ्कीर्णः स्थायीभाव उपनिबध्यमान औचित्यभाग् भवति। अन्यथा तु केवलमानुषाश्रयेण दिव्यस्य, केवलदिव्याश्रयेण वा केवलमानुषस्योत्साहादय उपनिबध्यमाना अनुचिता भवन्ति। यथा च केवलमानुषस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापाराः उपनिबध्यमानाः सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति। तत्र त्वनौचित्यमेव हेतुः।

---

## उज्जीवनी

प्रबन्धोऽपीति। पदपदैकदेशवर्णरचनाप्रबन्धादीनामपि रसव्यञ्जकत्वमुक्तम्। तत्र रसादीनां रसभावादीनां व्यञ्जकः प्रबन्धोऽपि इति यदुक्तं तत्र तन्निष्ठं तद्व्यञ्जकत्वं प्रसिद्धमित्यतो विशेषतो वर्णनं नापेक्ष्यते। अतो व्यञ्जनायाः प्रकारभेदानाह—व्यञ्जकत्वे निबन्धनमिति। प्रथममिति। प्रथमं तावत् विभावानां, भावानां, अनुभावानां सञ्चारिणां चौचित्येन चारुणः सुन्दरस्य, कथाशरीरस्य कथावस्तुनः, विधिः विधानं, यथायथं यथान्यायं, प्रतिपिपादयिषितान् प्रतिपादयितुमिष्टान् रसभावादीननुसृत्य य उचितो विभावः आलम्बनोद्दीपनात्मा, भावः, अनुभावः, सञ्चारी, व्यभिचारिभावो वा, तदौचित्येन सहृदयहृदयाह्लादकस्य कथाशरीरस्य विधिर्व्यञ्जकत्वे निबन्धनमाद्यम्। तत्र विभावौचित्यं विभावानामौचित्यं तावत् प्रसिद्धम्। सकलसहृदयविदितमेव। भावौचित्यं तु भावानामौचित्यं तु प्रकृत्यौचित्यात्। प्रकृतेरौचित्यात्। प्रकृतिः केत्याह—प्रकृतिर्हीति उत्तममध्यमाधमभावेन उत्तमत्वमध्यमत्वाधमत्वरूपविभाजकधर्मानुसारेण उत्तमा, मध्यमा, अधमेति, दिव्यमानुषादिभावेन दिव्यत्वमानुषत्वादिधर्मपुरस्कारेण, दिव्या, मानुषी, इत्यादिरूपेण च प्रकृतिर्विभेदवती भिन्नेत्यर्थः। तां प्रकृतिं यथायथं यथोचितमनुसृत्य, असङ्कीर्णः अननुकूलैर्भावैरसंसृष्टः स्थायीभावो रत्यादिः, उपनिबध्यमानः निबन्धनविषयीभूतः औचित्यभाग् भवति औचित्यं भजते। अन्यथा तु तादृशनिबन्धनाभावे

ननु नाकलोकगमनादयः सातवाहनप्रभृतीनां श्रूयन्ते । तदलोकसामान्य प्रभावातिशयवर्णने किमनौचित्यं सर्वोर्वीभरणक्षमाणां क्षमाभुजामिति । नैतदस्ति; न वयं ब्रूमो, यत् प्रभावातिशयवर्णनं राज्ञाम्; किन्तु केवलमानुषाश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यं औचित्यं न योजनीयम् । दिव्यमानुषायां तु कथायां उभयौचित्ययोजनमविरुद्धमेव । यथा पाण्डवादिकथायाम् ।

---

उज्जीवनी ।

तु, दिव्यस्य नायकस्य, केवलमानुषाश्रयेण केवलमानुषप्रकृतिगतत्वेन उपनिबध्यमाना उत्साहादयः, एवं केवलमानुषस्य नायकस्य केवलदिव्याश्रयेण केवलदिव्यनायकगतत्वेन उपनिबध्यमाना उत्साहादयो भावाश्च, अनुचिता औचित्यरहिता भवन्ति । तथा च केवलमानुषस्य राजादेः नायकस्य वर्णने वर्णनावसरे सप्तार्णवलङ्घनादिलक्षणाः सप्तसमुद्रलङ्घनादिरूपाः व्यापाराः, उपनिबध्यमाना वर्ण्यमानाः, सौष्ठवभृतोऽपि सौष्ठवं बिभ्रतोऽपि नियमेन नीरसा एव रसशून्या एव भवन्तीति नियतमिदम् । तत्र रसशून्यतायां हेतुः कारणम् अनौचित्यमेव औचित्यशून्यत्वमेव ।

आशङ्कते—नन्विति । सातवाहनप्रभृतीनां सातवाहनादीनां राज्ञां, नाकलोकगमनादयः पाताललोकगमनादयः व्यापाराः श्रूयन्ते तान् कविभिरुपवर्णितान् शृणुम इत्यर्थः । तत् तस्मात्, सर्वोर्वीभरणक्षमाणां सर्वस्या अप्युर्व्याः भूमेर्भरणे समर्थानां क्षमाभुजां राज्ञां, अलोकसामान्यप्रभावातिशयवर्णने अनितरसाधारणस्य प्रभावातिशयस्य वर्णने क्रियमाणे, किमनौचित्यं कीदृशमनौचित्यमिति । समाधत्ते—नैतदस्ति । नैतदस्ति एतन्नोचितम् । यद् यतः, राज्ञां भूपतीनां, प्रभावातिशयवर्णनं अतिशायितप्रभावस्य वर्णनमुपनिबन्धनं अनुचितमिति न वयं ब्रूमः वदामः । किन्तु केवलमानुषाश्रयेण केवलं मानुषं नायकत्वेनाङ्गीकृत्य या, उत्पाद्यवस्तुकथा उत्पाद्यस्येतिवृत्तस्य कथनात्मकः कविव्यापारः क्रियते, तस्यां कथायां, दिव्यमौचित्यं दिव्यनायकविषयकमौचित्यं न योजनीयम् ।

दिव्यमानुषायां तु कथायां दिव्यत्वं मानुषत्वं च येषां नायकानामस्ति, तत्र उभयौचित्ययोजनं उभयविधस्यापि औचित्यस्य निबन्धनं अविरुद्धमेव ।

सातवाहनादिषु तु येषु यावदपदानं श्रूयते, तेषु तावन्मात्रमनुगम्यमानमनुगुणत्वेन प्रतिभासते। व्यतिरिक्तं तु तेषामुपनिबध्यमानमनुचितम्। तदयमत्र परमार्थः—

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा॥

अत एव च भरते प्रख्यातवस्तुविषयत्वं, प्रख्योदात्तनायकत्वं, नाटकस्यावश्यकर्त्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति। यस्तूत्पाद्यवस्तु नाटकादि कुर्यात् तस्याप्रसिद्धानुचितनायकस्वभाववर्णने महान् प्रमादः॥

---

उज्जीवनी।

तन्निबन्धने विरोधो नास्तीत्यर्थः। पाण्डवादिकथायां यथा दिव्यमानुष्योभयाश्रितमौचित्यं न विरुद्धमिति दृष्टान्तत्वेनोपन्यासः कृतः। सातवाहनादिषु सातवाहनप्रभृतिषु राजसु यावदपदानं वृत्तं कर्म यावत् श्रूयते श्रवणविषयो भवति, तेषु नायकेषु तावन्मात्रमनुगम्यमानं उपनिबध्यमानं, अनुगुणत्वेन आनुरूप्येण प्रतिभासते भासते। व्यतिरिक्तं तु तद्भिन्नं तु, तेषामेव सातवाहनप्रभृतीनामेव उपनिबध्यमानमनुचितमित्यर्थः। तत् तस्मात्, अत्रास्मिन् विषये, अयं, परमार्थः इदं तत्त्वम् अनौचित्यादृते इति। रसभङ्गस्य रसस्य शृङ्गारादेः भङ्गस्य, अनौचित्यादृते अनौचित्यभिन्नं, अन्यत् कारणं नास्ति। अनौचित्यमेव रसभङ्गस्य कारणमिति यावत्।

अत एवेति। अतएवानौचित्यस्य रसभङ्गहेतुत्वादेव, भरते भरतमुनिप्रणीते नाट्यशास्त्रे, नाटकस्य दृश्यकाव्यस्य, प्रख्यातवस्तुविषयत्वं प्रख्यातं प्रसिद्धं, वस्तु इतिवृत्तं, विषयः प्रतिपाद्यरूपं यस्मिंस्तादृशस्य भावः। प्रख्यातोदात्तनायकत्वं च प्रख्यातः प्रसिद्धः उदात्तः धीरोदात्तरूपः नायकः, यस्मिंस्तादृशस्य भावः। अवश्यकर्तव्यत्वेन अवश्यं कर्तव्यमिति उपन्यस्तमुक्तम्। तेन हि प्रख्यातनायकवर्णनेन हि, औचित्यानौचित्यविषये इदमुचित, इदमनुचितमिति विषये, कविः प्रबन्धकर्ता न व्यामुह्यति। कवेः व्यामोहो नैव भवतीत्यर्थः। यस्तु कविः उत्पाद्यवस्तु उत्पाद्यं स्वकल्पितं, वस्तु इतिवृत्तं, यस्मिंस्तादृशं नाटकादि कुर्यात्। तस्य कवेः, अप्रसिद्धानुचितनायकस्वभाववर्णनो अप्रसिद्धस्य

ननु यद्युत्साहादि भाववर्णने कथञ्चिद् दिव्यमानुष्याद्यौचित्यपरीक्षा क्रियते तत् क्रियताम्; रत्यादौ तु किं तया प्रयोजनम्? रतिर्हि भारतवर्षोचितेनैव व्यवहारेण, दिव्यानामपि वर्णनीयेति स्थितिः। नैवम्? तत्रौचित्यातिक्रमेण सुतरां दोषः। तथा ह्यधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारोपनिबन्धने का भवेन्नोपहास्यता।

[1]त्रिविधं प्रकृत्यौचित्यं भारते वर्षेऽप्यस्ति शृङ्गारविषयम्। यत्तु[2] दिव्यमौचित्यं तत्रानुपकारकमेवेति चेत्— न वयं दिव्यमौचित्यं शृङ्गारविषय-

---

उज्जीवनी।

अनुचितस्य चानौचित्यवतः नायकस्य स्वभाववर्णने, महान् प्रमादः महतो अनवधानता।

औचित्यमेव पुनरप्याह—नन्विति। उत्साहादिभाववर्णने उत्साहादीनां भावानां, वीररसस्थायीभावादीनां वर्णने प्रस्तुते, सति, दिव्यमानुष्याद्यौचित्य-परीक्षा देवताविषयकं मनुष्यविषयकं च यदौचित्यं तस्य परीक्षणं, कथञ्चिदपि यदि क्रियते, तत् क्रियतां तत् कथञ्चिदपि अनुमन्यत इत्यर्थः। रत्यादौ तु शृङ्गारस्थायीभावादौ तु, तया दिव्यमानुषाद्यौचित्यपरीक्षया किं प्रयोजनम्? न किमपि प्रयोजनमिति यावत्। तस्य हेतुमाह—रतिरिति। हि यतः, रतिः नायिकानायकयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषः। दिव्यानामपि दिव्यनायकानामपि, भारतवर्षोचितेनैव व्यवहारेण भारतभूमौ य उचितो व्यवहारस्तेनैव वर्णनीया वर्णयितुमुचिता इति स्थितिर्वर्तते। एवमाशङ्कायां समाधत्ते—नैवमिति। देवानां मनुष्याणां च शृङ्गारविषये औचित्यभेदो नाङ्गीकर्तव्य इति यदुक्तं तन्नेत्यर्थः। तत्र शृङ्गारे, औचित्यातिक्रमेण औचित्यलङ्घनेन, सुतरामत्यन्तं दोषो भवतीत्यर्थः तदेवोपपादयति—तथाहीति। उत्तमप्रकृतेरुत्तमनायकस्य, अधमप्रकृतेर्यदुचित तेन प्रकारेण, शृङ्गारस्य रतेः, उपनिबन्धने वर्णने का उपहास्यता परिहासविषयता कीदृशी न भवेत्। सर्वप्रकारेणापि परिहास्यतैव भवेदित्यर्थः। भारते वर्षेऽपि भारतभूखण्डेऽपि, शृङ्गारविषयं रतेरास्वाद्यतायां त्रिविधमौचित्यमस्ति।

---

१. 'वि०' च २. 'तु अन्यद् दि०' च

मन्यत् किञ्चिद् ब्रूमः। किं तर्हि ? भारतवर्षविषये यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते। न च राजादिषु प्रसिद्धग्राम्य-शृङ्गारोपनिबन्धनं प्रसिद्धं नाटकादौ, तथैव देवेषु तत्परिहर्त्तव्यम्।

नाटकादेरभिनेयार्थत्वादभिनयस्य च सम्भोगशृङ्गार[1]विषयस्यासभ्य-त्वात्तत्र परिहार इति चेत्—न, यद्यभिनयैवंविषयस्यासभ्यता[2] तत्काव्यस्यैवं-विषयस्य सा केन निवार्यते ? तस्माद् अभिनेयार्थेऽनभिनेयार्थे वा काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णनं तत्पित्रोः सम्भोगवर्णनमिव सुतरामसभ्यम्[3]। तथैवोत्तमदेवतादिविषयम्॥

न च सम्भोगशृङ्गारस्य सुरतलक्षण एवैकः प्रकारः, यावदन्येऽपि प्रभेदाः परस्परप्रेमदर्शनादयः सम्भवन्ति, ते कस्मादुत्तमप्रकृतिविषये न वर्ण्यन्ते ?

---

उज्जीवनी

तु किन्तु, दिव्यं देवतागतं यदौचित्यं तत् तत्र मनुष्येषु अनुकारकमेव निष्फलमेवेति चेत् आशङ्क्यते, तदा समाधत्ते—नेति। शृङ्गारविषयं शृङ्गाररसविषयं दिव्यमौचित्यं अन्यत् किञ्चित् वयं न ब्रूमः न कथयामः। एवं यदि न, तर्हि किमुच्यत इति चेत्, इदमुच्यत इत्यर्थः। भारतवर्षविषये भारते वर्षे, उत्तमनायकेषु राजादिषु मनुष्यप्रकृतिषु, प्रसिद्धग्राम्यशृङ्गारो-पनिबन्धनं प्रसिद्धस्य ग्राम्यशृङ्गारस्य वर्णनं नाटकादौ दृश्यकाव्ये न च प्रसिद्धं न शोभत इत्यर्थः। तथैव तद् ग्राम्यशृङ्गारवर्णनं देवेषु दिव्यनायकेषु परिहर्तव्यं त्याज्यम्। नाटकादेरिति। दृश्यकाव्यस्य अभिनेयार्थत्वात् अभिनयविषयता, अभिनयस्य च सम्भोगशृङ्गारविषयस्य असभ्यतया ग्राम्यत्वेन तत्र नाटकादिषु परिहार इति चेत् इति शङ्कते चेत् आह—नेति। एवंविषयस्य सम्भोगशृङ्गारस्य अभिनयात्मकस्य असभ्यता यदि, ग्राम्यत्वं चेत्, तत् तर्हि, एवंविषयस्य सम्भोगशृङ्गारविषयस्य काव्यस्य अभिनेयस्य सा असभ्यता केन वार्यते केनापि वारयितुं न शक्यते। तस्मात् कारणात्, अभिनेयार्थे दृश्ये नाटकादौ, अनभिनेयार्थे च श्रव्ये च काव्ये उत्तमप्रकृतेः राजादेः—राजादेरुत्तमनायकस्य, उत्तमप्रकृतिभिः नायिकाभिः सह उत्तम-नायिकाभिः साकं यत् ग्राम्यसम्भोगवर्णनं तत् पित्रोः मातापित्रोः सम्भोग-

---

१. 'राविषयत्वात्' च २. 'ह्य' च ३. 'ह्य०, च

तस्मादुत्साहवद्रतावपि प्रकृत्यौचित्यमनुसर्तव्यम्। तथैव विस्मयादिषु। यत्त्वेवंविधे विषये महाकवीनामप्यसमीक्ष्यकारिता लक्ष्ये दृश्यते स दोष एव। स तु शक्तितिरस्कृतत्वात् तेषां न लक्ष्यत इत्युक्तमेव। अनुभावौचित्यं तु भरतादौ प्रसिद्धमेव।

इयत्तूच्यते—भरतादि[1]विरचितां स्थितिं चानुवर्तमानेन, महाकविप्रबन्धांश्च पर्यालोचयता, स्वप्रतिभां चानुसरता, कविनावहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः। औचित्यवतः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ग्रहो व्यञ्जक इत्यनेनैतत् प्रतिपादयति—

उज्जीवनी।

वर्णनमिव सुतरामत्यन्तं असभ्यमेव। उत्तमदेवतादिविषयमपि तादृशं सम्भोगवर्णनमपि तथैवासभ्यमेव। न चेति। सम्भोगशृङ्गारस्य सुरतलक्षण एक एव प्रकार इति नियमो नास्ति। अन्येऽपि परस्परप्रेमदर्शनादयः प्रभेदाः प्रकाराः सम्भवन्ति। ते च प्रभेदाः उत्तमप्रकृतिविषये उत्तमनायकविषये कस्मान्न वर्ण्यन्ते? वर्णयितुमुचिता एवेत्याशयः। तस्मात् उत्साहवद् वीररसस्थायिभावे, इव रत्यादावपि शृङ्गाररसस्थायिन्यपि प्रकृत्यौचित्यमनुसर्तव्यम्। तथैव तेनैव प्रकारेण विस्मयादिष्वपि अद्भुतरसस्थायिभावेऽपि औचित्यमनुवर्तव्यम्। तु किन्तु। एवंविधे विषये प्रकृत्याद्यौचित्यविषये, लक्ष्ये महाकविप्रबन्धेषु, महाकवीनामसमीक्ष्यकारिता अविमृश्यकारित्वं दृश्यत इति यत् स दोष एव। स तु दोषोऽपि, तेषां महाकवीनां, शक्तितिरस्कृतत्वात् शक्त्या भावनाविशेषमहिम्ना आवृतत्वात्, न लक्ष्यते न ज्ञायत इत्युक्तमेव पूर्वम्। अनुभावगतमौचित्यं तु भरतादौ नाट्यशास्त्रादौ प्रसिद्धमेव प्रख्यातमेव।

एतावता फलितमाह—इयदिति। इयत्तु एतावत्तु, उच्यते कथ्यते। भरतादिविरचितां भरतादिभिः भरतमुनिना अन्यैरपि नाट्यशास्त्रकर्तृभिः, विरचितां निर्मितां, स्थितिं मर्यादां चानुवर्तमानेन अनुसरता, महाकविप्रबन्धांश्च महाकवीनां कालिदासप्रभृतीनां प्रबन्धान् पर्यालोचयता परिशीलयता च, स्वप्रतिभां स्वकीयां नवनवोन्मेषशालिनीं प्रज्ञां चानुसरता कविना काव्य-

1. 'दिस्थि०' च

यदितिहासादिषु कथासु रसवतीषु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं तदेव ग्राह्यं नेतरत् । वृत्तादपि च कथाशरीरादुत्प्रेक्षिते विशेषतः प्रयत्नवता भवितव्यम् । तत्र ह्यनवधानात् स्खलतः कवेः अव्युत्पत्तिसम्भावना महती भवति ।

परिकरश्लोकश्चात्र—

> कथाशरीरमुत्पाद्यवस्तु कार्यं यथा तथा ।
> यथा रसमयं सर्वमेव तत्प्रतिभासते ॥

तत्र चाभ्युपायः सम्यग् विभावाद्यौचित्यानुरणनम् । तच्च दर्शितमेव । किञ्च—

> सन्ति सिद्धरसप्रख्या ये च रामायणादयः ।
> कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥

तेषु हि कथाश्रयेषु तावत् स्वेच्छैव न योज्या ॥

---

### उज्जीवनी ।

कर्त्रा, अवहितचेतसा अवहितं चेतो यस्य तादृशेन भूत्वा, विभावादीनां च य औचित्यभ्रंशः औचित्यभङ्गः, तत्परित्यागे त्यागे, पर उत्कृष्टः प्रयत्नो यत्नः कर्तव्यो विधातव्यः । वृत्तस्य सम्भवतः, उत्प्रेक्षितस्य कविकल्पितस्य वा, कथाशरीरस्य कथावस्तुनः, औचित्यवतः अनौचित्यरहितस्य, ग्रहः स्वीकारः, व्यञ्जकः रसव्यञ्जकः इत्येतेन पद्येन, एतत् प्रतिपादयति इदं प्रतिपादितं भवतीत्यर्थः । यद् इतिहासादिषु रामायणादिषु, रसवतीषु, विविधासु नानारूपासु कथासु सतीष्वपि विद्यमानासु अपि, तत्र इतिहासादिषु, विभावाद्यौचित्यवत् विभावभावादिविषयौचित्ययुक्तं यत् कथाशरीरं कथावस्तु तदेव ग्राह्यं स्वीकार्यम् । अन्यत् न स्वीकार्यमित्यर्थः । वृत्तात् प्रवृत्तात् कथा—शरीरात् कथावस्तुनः, उत्प्रेक्षिते कविकल्पिते, विशेषतः अत्यन्तं प्रयत्नवता भवितव्यम् । कविनेति शेषः । तत्र हि उत्प्रेक्षिते कथाशरीरे अनवधानात् अवधानशून्यतया, स्खलतः भ्रश्यतः, कवेः महती अव्युत्पत्तिसम्भावना कविरयमव्युत्पन्नः इति प्रत्यय एव सहृदयानां जायते ॥

यदुक्तम्—"कथामार्गे न चाल्पोऽप्यतिक्रमः।" स्वेच्छापि यदि योज्या तद्रसविरोधिनी न योज्या।

इदमपरं प्रबन्धस्य रसाभिव्यञ्जकत्वे निबन्धनम् इतिवृत्तवशायातां कथञ्चिद्रसाननुगुणां स्थितिं त्यक्त्वा पुनरुत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयो विधेयः। यथा कालिदासप्रबन्धेषु। यथा च सर्वसेनविरचिते हरिविजये।

---

उज्जीवनी।

अत्रायं परिकरश्लोकः—कथेति। उत्पाद्यवस्तु उत्पाद्यं कविकल्पितं वस्तु इतिवृत्तं यस्य तादृशं कथाशरीरं तथा तथा तेन तेन प्रकारेण, कार्यं कर्तव्यम्। यथा येन प्रकारेण, सर्वं तत् कथाशरीरं रसमयं रसात्मकं प्रतिभासते प्रकाशते। तत्र च तस्मिन् विषये, सम्यक् समीचीनेन प्रकारेण, विभावाद्यौचित्यानुसरणं विभावादीनां यदौचित्यं तस्यानुसरणमेवाभ्युपाय उपायः, तच्च पूर्वं दर्शितमेव प्रतिपादितमेव।

किञ्चेति। सिद्धाः परिपुष्टा रसा येषु तादृशाः, अत एव प्रख्याः प्रख्याताश्च, ये रामायणादयः, कथाश्रयाः कथामात्राश्रयभूताः, इतिहासाः, तैः सह रसविरोधिनी रसानां परस्परविरोधापादयित्री, स्वेच्छा न योज्या नयोजनीया। तदेवाह—तेष्विति। कथाश्रयेषु तेषु रामायणादिषु प्रबन्धेषु हि स्वेच्छा तावन्न योज्या। उक्तार्थे प्रमाणमाह—यदुक्तमिति। रामाभ्युदयनाटके यशोवर्मणेति शेषः। कथामार्गे कथायां अल्पोऽपि अतिक्रमः क्रमोल्लङ्घनं न कार्यमित्यर्थः। यदि तु स्वेच्छापि योज्या योजनीया मन्यते कविना, तद्रसविरोधिनी तस्यां मूलकथायां यो रसस्तद्विरोधिनी स्वेच्छा न योज्येत्यर्थः।

द्वितीयं निबन्धनमाह—इदमिति। प्रबन्धस्य रसाभिव्यञ्जकत्वे रसव्यञ्जकतायां, इदमपरं अन्यन्निबन्धनम्। इतिवृत्तवशायातां इतिवृत्तवशेनायातां सञ्जाताम्। कथञ्चिद् रसाननुगुणां रसानुगुण्यरहितां, स्थितिं मर्यादां, त्यक्त्वा पुनः पुनरपि, अन्तरा मध्ये, उत्प्रेक्ष्यापि स्वकल्पितत्वेनापि, अभीष्टरसोचितकथोन्नयः अभीष्टस्य रसस्य उचितायाः कथाया उन्नयः विधेयः कार्य इत्यर्थः, उदाहरति—यथेति। कालिदासप्रबन्धेष्विति कालिदासीये रघुवंशमहाकाव्ये राज्ञामजादीनामुद्वाहवर्णनमितिहासे नोपनिबद्धमपि रसाविरोधित्वेन निरूपितम्। उदाहर-

यथा च मदीय एवार्जुनचरिते महाकाव्ये। कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत् तदेमां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित् प्रयोजनमितिहासादेव तत्सिद्धेः।

रसादिव्यञ्जकत्वे प्रबन्धस्य चेदमन्यन्मुख्यं निबन्धनं यत् सन्धीनां, मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्यानां तदङ्गानां चोपक्षेपादीनां घटनं रसाभिव्यक्त्यपेक्षया, यथा रत्नावल्यां; न तु केवलं शास्त्रस्थितिसम्पादनेच्छया॥

---

उज्जीवनी।

णान्तरमाह—यथा चेति। सर्वसेनविरचिते हरिविजये कान्तां सत्यभामामनुनेतुं पारिजातहरणादिकमितिहासेष्वविद्यमानमपि निबद्धम्।

पुनरप्युदाहरति—यथा चेति। मदीय आनन्दवर्धनाचार्यविरचिते अर्जुनचरिताख्ये महाकाव्ये, अर्जुनस्य पाताललोकविजयादिकमितिहासाप्रसिद्धमुपनिबद्धम्। अतश्च काव्यमुपनिबध्नता काव्यनिर्मात्रा सर्वात्मना सर्वप्रकारेण रसपरतन्त्रेण रसपरवशेन भवितव्यम्। केनापि प्रकारेण रसविरोधिनी स्वेच्छा न विधातव्येति यावत्। तत्रेतिवृत्ते कथाशरीरे रसाननुगुण रसप्रतिकूलां स्थितिं पश्येत् कविः, तदा इमां स्थितिं भङ्क्त्वापि उल्लङ्घ्यापि, स्वतन्त्रतया स्वेच्छया, रसानुगुणं रसानुकूलं कथान्तरमुत्पादयेत् कल्पयेत्। तत्र हेतुमाह—नहीति। कवेः काव्यकर्तुः इतिवृत्तमात्रनिर्वहणेन कथाशरीरस्य तेनैव रूपेण अनुसरणेन हि न किञ्चित् प्रयोजनम्। इतिहासादेव तस्येतिवृत्तस्य सिद्धेः।

तृतीयं निबन्धनमाह—रसादिव्यञ्जकत्व इति। प्रबन्धस्य रसाभिव्यञ्जकत्वे च, इदमन्यत् तृतीयं निबन्धनं मुख्यं प्रधानम्। यत्, मुख,प्रतिमुख,गर्भाविमर्श,निर्वहणा,ख्यानां पञ्चानां सन्धीनां, उपक्षेपादीनां च सन्ध्यङ्गानां, घटनमायोजनमपि, रसाभिव्यक्त्यपेक्षया रसाभिव्यक्तिरूपफलोद्देशेनैव कर्तव्यमिति शेषः।

यथेति। यथा रत्नावल्यां नाटिकायां सन्धीनां सन्ध्यङ्गानां च रसानुगुण्येनायोजनं कृतम्। नत्विति। तु किन्तु, केवलं शास्त्रस्थितेः शास्त्र-

यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धाननुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम् ।

इदं चापरं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तं, यदुद्दीपनप्रशमने यथावसरमन्तरा रसस्य, यथा रत्नावल्यामेव ! पुनरारब्धविश्रान्ते रसस्याङ्गिनोऽनुसन्धिश्च यथा तापसवत्सराजे ।

---

उज्जीवनी ।

मर्यादायाः सम्पादनेच्छया परं सन्धीनां सन्ध्यङ्गानां च योजनं न कार्यम् । यथेति । सन्ध्यङ्गानामायोजनस्य प्रयोजनं तूक्तं भरतमुनिना—

> इष्टस्यार्थस्य रचना वृत्तान्तस्यातपक्षयः ।
> रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥
> आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् ।
> अङ्गानां षड्विधं ह्येतद् दृष्टं शास्त्रे प्रयोजनम् ॥

यथेति । वेणीसंहारे वीररसप्रधाने नाटके विलासाख्यस्य प्रतिमुखसन्धेरङ्गस्य "समीहा रतिभोगार्था विलास इति कथ्यते" इति लक्षणलक्षितस्य, द्वितीयेऽङ्के भानुमतीदुर्योधनयोरायोजनं केवलं शास्त्रस्थितिसम्पादनेच्छया कृतमिति नेदं रसानुगुणमिति ज्ञेयम् ।

चतुर्थं निबन्धनमाह—इदमिति । प्रबन्धस्य रसव्यञ्जकत्वे निमित्तं, इदमपरमन्यत् । यद् रसस्य, अन्तरा मध्ये, यथावसरं अवसरमनतिक्रम्य, उद्दीपनप्रशमने उद्दीपनं प्रशमनं च कार्यम् । उदाहरति—यथा रत्नावल्यामिति । प्रथमाङ्के. राजानं अनङ्गपूजावसरे दृष्टवत्याः सागरिकायाः (रत्नावल्याः) 'कहं अअं स राआ उदअणो, जस्स अहं तादेण दिण्णा' इति वचनेन, उचित एवावसरे पूर्वरतेरुद्दीपनं कृतम् । ततश्च वासवदत्ताया भीत्या तस्मात् प्रदेशात् सागरिकाया निष्क्रमणोपन्यासमुखेन उचितेऽवसरे रतेः प्रशमनमपि कृतम् । एवमुद्दीपनप्रशमने रसानुकूले एवेति भावः । पुनरिति । आरब्धविश्रान्तेः आरब्धा विश्रान्तिः उपशमः यस्य तादृशस्य, अङ्गिनः प्रधानभूतस्य रसस्य पुनरनुसन्धिः अनुसन्धानं, च, रसाभिव्यञ्जकत्वे निमित्तं भवति । उदाहरति—

प्रबन्धविशेषस्य नाटकादेः रसव्यक्तिनिमित्तमिदं चापरमवगन्तव्यं यदलङ्कृतीनां शक्तावपि आनुरूप्येण योजनम् । शक्तो हि कविः कदाचिद-लङ्कारनिबन्धने तदाक्षिप्ततयैवानपेक्षितरसबन्धः प्रबन्धमारभते, तदुपदेशार्थ-मिदमुक्तम् । दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु । किञ्च—

**अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।**
**ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ॥ १५ ॥**

अस्य विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्योऽपि यः प्रभेद उदाहृतो द्विप्रकारः सोऽपि प्रबन्धेषु केषुचिद्द्योत्यते । तद्यथा—मधुमथनविजये पाञ्चजन्योक्तिषु ॥

---

उज्जीवनी ।

यथेति । तापसवत्सराज इति । वत्सराजस्योदयनस्य वासवदत्तालम्बना रतिः अन्तरा विप्रलम्भादिना शान्तेव प्रतीयमानापि, अन्ते सम्यगनुसंहिता दृश्यते ।

पञ्चमं निबन्धनमाह—प्रबन्धेति । नाटकादेः प्रबन्धविशेषस्य दृश्यकाव्यविशेषस्य, रसव्यक्तिनिमित्तं रसादीनां अभिव्यक्तौ निबन्धनं इदमपरं चावगन्तव्यम् । यदलङ्कृतीनामुपमादीनामलङ्काराणां, शक्तावपि कवेस्तन्नि-रूपणे शक्तिमत्त्वेऽपि आनुरूप्येण रसानुगुण्येन योजनमेवोचितमित्यर्थः । किमर्थमिदमुच्यत इत्याह—शक्त इति । शक्तः भावनाविशेषसम्पन्नः कविर्हि कविस्तु, कदाचिद्, अलङ्कारनिबन्धने अलङ्काराणां प्रयोगे प्रस्तुते सति, तदाक्षिप्ततयैव तैरलङ्कारैः आकृष्टतयैव, अनपेक्षितरसबन्धः रसबन्धमनपेक्ष्यैव, प्रबन्धं काव्यविशेषं कर्तुमारभते, तदुपदेशार्थं इदमभिहितमिति यावत् । प्रबन्धेषु अलङ्कारनिबन्धनैकरसः अलङ्काराणां निबन्धने एको मुख्यः रसः प्रीतिर्येषां तादृशाः । अनपेक्षितरसाः अनपेक्षितो रसो रत्यादिर्यैस्तादृशाः, कवयः काव्यकर्तारः दृश्यन्ते, यत एवंभूताः कवयो दृश्यन्ते । तत एव एवं वक्तव्यमापतितमित्यर्थः ।

एतावता असंलक्ष्यक्रमव्यङ्ग्यध्वनेः प्रबन्धद्योत्यत्वं प्रदर्श्य, संलक्ष्यक्रम-व्यङ्ग्येऽपि तद् दर्शयितुमाह—किञ्चेति । अनुस्वानेति । अनुस्वानोपमात्मापि

यथा वा ममैव कामदेवस्य सहचरसमागमे विषमबाणलीलायाम्। यथा च गृध्रगोमायुसंवादादौ महाभारते ॥ १५ ॥

---

उज्जीवनी ।

अनुरणनध्वनिरूपः अस्य ध्वनेः विवक्षितान्यपरवाच्यध्वनेः, यः प्रभेदः शब्दशक्त्युद्भवत्वेन, अर्थशक्त्युद्भवत्वेन च द्विप्रकारः य उदाहृतः, सोऽपि अनुरणनध्वनिरूपः संलक्ष्यक्रमोऽपि केषुचित् प्रबन्धेषु, न तु सर्वेषु भासते प्रकाशते।

तदेवाह—अस्येति। विवक्षितान्यपरवाच्यध्वनेः अनुरणनरूपव्यङ्ग्योऽपि संलक्ष्यक्रमव्यङ्ग्यात्मा यः प्रभेदः द्विप्रकारः द्विरूप उदाहृतः सोऽपि केषुचित् प्रबन्धेषु द्योतते प्रकाशते। उदाहरति—यथेति। मधुमथनविजये इति। पाञ्चजन्योक्तिष्विति। मधुमथनविजयाख्यस्य ग्रन्थस्यानुपलम्भात् लोचनोद्धृतस्य प्राकृतपद्यस्य बालप्रियाकारोक्तप्रकारेण पाठमादृत्योच्यते—

लीलादाढग्गुद्धरिअ सअलमहीमण्डलस्य चिअअस्स।
कीसमुणालहरणं वि तुज्झ गुरु आइ अंगम्मि॥

छाया— लीलादंष्ट्राग्रोद्धृतसकलमहीमण्डलस्यैवाद्य।
कस्मान्मृणालाभरणमपि तव गुरु भवत्यङ्गे॥

मधुमथनविजयाख्ये प्रबन्धे रुक्मिणीविरहितस्य वासुदेवस्य अवस्थां वर्णयन्ती पाञ्चजन्योक्तिरियम्। लीलया दंष्ट्राग्रेण दंष्ट्रयोरग्रभागेन उद्धृतं सकलं महीमण्डलं यस्य तादृशस्यैव तव (वासुदेवस्य) अङ्गे अवयवेषु, मृणालाभरणमपि मृणालैः रचितं भूषणमपि कस्मात् कारणात् गुरु भवति।

अनया पाञ्चजन्यस्योक्त्या, रुक्मिण्या विरहितस्य वासुदेवस्य रुक्मिण्याभिलाष आविष्क्रियते। स चाभिव्यक्तोऽभिलाषः प्रकृतरसस्वरूपे पर्यवस्यति।

उदाहरणान्तरमाह—यथा वेति। ममैव (ग्रन्थकर्तुः) विषमबाणलीलायां, कामदेवस्य मदनस्य, सहचरसमागमे सहचरैः सह वसन्तयौवनमलयानिलैः सह समागमे।

अत्रापि लोचनोद्धृतस्य पद्यस्यास्फुटत्वात् बालप्रियोक्तपाठ आदृतः।

उज्जीवनी ।

हुम्मि अवहत्थिअरे हो णिरंकुसो अह विवेअरहिओ वि ।
सविणे वि तुमम्मि पुणो भत्ति ण पसुमरामि ।।

छाया— भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि
स्वप्नेऽपि तव पुनर्भक्तिं न प्रस्मरामि ।।

कामदेवं प्रति तत्सहचरस्य यौवनस्येदं वचनम् । अपहस्तितरेखः अपहस्तिता अतिक्रान्ता रेखा मर्यादा येन तादृशोऽपि यौवनरूपः कामसहचरः, निरङ्कुशः अप्रतिरुद्धगतिः । अथ किञ्च, विवेकरहितोऽपि विवेकशून्योऽपि (यद्यपि) भवामि । (तथापि) स्वप्नेऽपि तव भक्तिं त्वद्विषयिणीं भक्तिं रत्याख्यं भावं (देवविषया रतिर्भाव इत्युच्यते) न प्रस्मरामि न विस्मरामीत्यर्थः । इत्यादयो यौवनस्य सहचरोक्तयः तत्तत्स्वभावव्यञ्जिकाः । स च स्वभावः प्रकृतरसपर्यवसायी ।

अन्यदप्युदाहरणमाह—यथा चेति । गृध्रगोमायुसंवादादौ महाभारत इति ।

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ।
न चेह जीवितः कश्चित् कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ।।

महाभारते शान्तिपर्वणि—आपद्धर्मणि त्रिपञ्चाशदधिकशततमे अध्याये मृतं बालं सन्ध्यासमये श्मशाने समानीतं दृष्ट्वा रात्रावन्धतया दिवस एव मृतमांसभक्षणसमर्थस्य गृध्रस्य तद्बन्धुजनविसर्जनपरमिदं वचनम्—हे जनाः ।

गृध्रगोमायुसङ्कुले गृध्रैः मांसादनैः पक्षिभिः गोमायुभिः शृगालैश्च सङ्कुले व्याप्ते, कङ्कालबहुले कङ्काला बहुला यस्मिंस्तादृशे, घोरे भयानके, सर्वप्राणिभयङ्करे सर्वेषां प्राणिनां भयजनके, अस्मिन् श्मशाने स्थित्वा अलं अत्रेदानीमवस्थानं नोचितमित्यर्थः । इह संसारे, कालधर्ममुपागतो मृतः, प्रियः स्निग्धः, यदि वा द्वेष्यः शत्रुः, वा अन्यो वा कश्चिदपि न जीवितः । प्राणिनां जन्तूनां, ईदृशी परावृत्तिरहिता गतिः स्वभावः । इदं शान्तरसपर्यवसायि । तथा तत्रैव—

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः ।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ १६ ॥**

अलक्ष्यक्रमो ध्वनेरात्मा रसादिः सुब्विशेषैस्तिङ्विशेषैः, वचनविशेषैः, सम्बन्धविशेषैः कारकशक्तिभिः, कृद्विशेषैः, तद्धितविशेषैः, समासैश्चेति, च शब्दान्निपातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते ॥

---

उज्जीवनी ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ।
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं मूढास्त्यजध्वमविशङ्किताः ॥

रात्रौ मृतमांसभक्षणसमर्थस्य गोमायोः, मृतबालस्य बन्धुजनान् श्मशानान्नि-वर्तयितुमभिलषतः सृगालस्य वचनमिदम् । हे मूढाः । अयमादित्यः स्थितः सूर्यो नास्तं गतः । अतो रात्रिचरेभ्यो भयमधुना नास्ति इति भावः । साम्प्रतं स्नेहं कुरुत, मृते बालक इति शेषः । अयं मुहूर्तः सन्ध्यासमयात्मकः बहुविघ्नः बहुः विघ्नो यत्र तादृशः । कदाचन कदाचिद्, अयं बालो जीवेदपि । अविशङ्किताः शङ्कारहिताः यूयं, कनकवर्णाभं सुवर्णस्याभेवाभा यस्य तादृशम् । अप्राप्तयौवनं अप्राप्तं न प्राप्तं यौवनं यूनो भावः येन तादृशं; बालं कुमारम् । अमुं एनं, गृध्रवाक्याद् गृध्रवाक्यमादृत्य, कथं त्यजध्वं; अयं प्रबन्धोऽपि शान्तरसप्रकाशकः ।

पुनरपि असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकानाह—सुबिति । क्वचित् स्थलविशेषेषु सुप्तिङ्वचनसम्बन्धः, सुपः स्वौजसादयः, तिङः तिप्तसादयः, विभक्तयः, वचनानि एकवचनादयः, सम्बन्धाः षष्ठ्यर्थाः, स्वत्वादयः, तैः, तथा कारकशक्तिभिः कर्तृकर्मकरणाधिकरणसम्प्रदानापादानस्वरूपाभिः कृत्तद्धितसमासैश्च कृद्भिः धातुभ्यो निष्पन्नैः, तद्धितैः नामभ्यो निष्पन्नैश्च प्रत्ययैः, समासैश्च । अलक्ष्यक्रमः अलक्ष्यक्रमव्यङ्ग्यो ध्वनिः द्योत्यः प्रकाशं नीयते । तदेवाह—अलक्ष्येति । ध्वनेः ध्वनिकाव्यस्य, अलक्ष्यक्रमः, रसादिरात्मा रसभावादिरूपोऽर्थः, सुब्विशेषैः, तिङ्विशेषैः, वचनविशेषैः, सम्बन्धविशेषैः,

यथा—

> न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः ।
> सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
> धिक्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
> स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

अत्र हि श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वं दृश्यते । तत्र 'मे यदरयः' इत्यनेन सुप्सम्बन्धानामभिव्यञ्जकत्वम् । 'तत्राप्यसौ तापस' इत्यत्र तद्धितनिपातयोः । 'सोऽप्यत्रैव निहन्ति राक्षसकुलम्, जीवत्यह रावणः,' इत्यत्र तिङ्कारकशक्तीनाम् । धिक् धिक् शक्रजितं इत्यादौ श्लोकार्धे कृत्तद्धित-

---

उज्जीवनी

कारकशक्तिभिः, कृद्विशेषैः, तद्धितविशेषैः, समासैश्च द्योत्य इति सम्बन्धः । च शब्दात् प्रयुक्तैः काव्योपात्तैः, निपातैः उपसर्गैः, कालादिभिश्च अभिव्यज्यमानो व्यज्यमानश्च अलक्ष्यक्रमो दृश्यत इत्यर्थः ।

उदाहरति—न्यक्कार इति । हनुमन्नाटके, चतुर्दशेऽङ्के रामेण राक्षस वधे क्रियमाणे रावणस्य स्वात्मानं प्रत्युक्तिरियम् । अरयः शत्रवः सन्तीति यद् अयमेव मे मम, न्यक्कारः निन्दा, तत्रापि अरिषु असौ तापसः तपस्वी रामः । सोऽपि अत्रैव (लङ्कायां) मत्समीप एव राक्षसानां कुलं वंशमेव सर्वं निहन्ति नितरां मारयति । रावणः अयं जनश्च जीवति । अहो ! आश्चर्यम् ! शक्रजितं इन्द्रजितं धिग्, धिग्, इन्द्रजिन्निन्द्य इत्यर्थः ! प्रबोधितवता कुम्भकर्णेन वीरस्य कुम्भकर्णस्य प्रबोधनेन वा किं, न किमपि फलं सञ्जातमित्यर्थः । स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः स्वर्गस्य ग्रामटिकायाः अल्पग्रामस्य विलुण्ठनेन नाशनेन, वृथाच्छूनैः वृथापुष्टैः एभिः विंशतिसङ्ख्याकैः भुजैरपि किं किं फलमिति यावत् ।

उपपादयति—अत्रेति । अत्रश्लोके हि 'न्यक्कार' इत्यत्र पद्ये एषां सर्वेषामपि सुप्तिङादीनां व्यञ्जकानां व्यञ्जकत्वं भूयसा बाहुल्येन दृश्यते । तथा हि—तत्र 'मे यदरय' इत्यत्र मे इति ङस् विभक्तिः (सुप्) वध्यघातकरूप-सम्बन्धार्थिका । अरय इति बहुवचनम् । तत्राप्यसौ तापस इत्यत्र

समसोऽसर्गाणाम् । एवंविधस्य व्यञ्जकभूयस्त्वे च घटमाने काव्यस्य सर्वातिशायिनी बन्धच्छाया समुन्मीलति । यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावस्तत्रापि काव्ये कापि बन्धच्छाया किमुत यत्र तेषां बहूनां समवायः ।

यथात्रानन्तरोदितश्लोके । अत्र हि रावण इत्यस्मिन् पदेऽर्थान्तरसङ्क्रमितवाच्येन ध्वनिप्रभेदेनालङ्कृतेऽपि पुनरनन्तरोक्तानां व्यञ्जकप्रकाराणामुद्भासनम् । दृश्यन्ते च महात्मनां प्रतिभाविशेषभाजां बाहुल्येनैवंविधा बन्धप्रकाराः । यथा महर्षेर्व्यासस्य—

---

## उज्जीवनी

तद्धितप्रत्ययस्य तापसशब्दगतस्य, अपि शब्दस्य निपातस्य । 'सोऽप्यत्रैव निहन्ति, राक्षसकुलं, जीवत्यहो ! रावणः इत्यत्र निहन्ति, जीवति इति तिङः, अत्रेतिस्थलविशेषात्मकाधिकरणशक्तेः, राक्षसकुलमिति कर्मत्वस्य च, धिग्धिक्छक्रजितमिति श्लोकार्धे शक्रजितमिति क्तप्रत्ययस्य, प्रबोधितवतेति क्तवतुप्रत्ययस्य च, ग्रामटिकेति स्वार्थिकतद्धितस्य, स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैरिति समासस्य, प्रबोधितवतेत्यत्र, विलुण्ठतेत्यत्र च प्रव्योरुपसर्गयोश्च व्यञ्जकत्वं वर्तते । एवंविधस्यैतादृशस्य काव्यस्य कविकर्मणः, व्यञ्जकभूयस्त्वे व्यञ्जकानां बाहुल्ये घटमाने सति, सर्वातिशायिनी अन्यसर्वप्रबन्धातिशायिनी बन्धच्छाया प्रबन्धशोभा समुन्मीलति उल्लसति । यत्र हि काव्ये, व्यङ्ग्यावभासिनः व्यङ्ग्यमर्थं प्रकाशयतः एकस्यैव तावत् पदस्य आविर्भावः व्यञ्जकत्वेनावस्थितिः तत्रापि तस्मिन्नपि काव्ये प्रबन्धे, कापि अनिर्वचनीया बन्धच्छाया बन्धस्य शोभा वर्तते तर्हि यत्र काव्ये तेषां व्यञ्जकानां बहूनां समवायो योगः तत्र किमुत किमु वक्तव्यमित्यर्थः । यथात्रानन्तरोदिते न्यक्कार इति श्लोके । अत्र हि अस्मिन् पद्ये, रावण इत्यस्मिन् पदे, अर्थान्तरसङ्क्रमितवाच्येन ध्वनिप्रभेदेनालङ्कृतेऽपि, पुनः पुनरपि, अनन्तरोक्तानां अनन्तरमुक्तानां, व्यञ्जकप्रकाराणां व्यञ्जकानां बहूनां प्रकाराणां उद्भासनं प्रकाशनं कृतम् । प्रतिभाविशेषभाजां प्रतिभाविशेषशालिनां, महात्मनां महाकवीनां, एवंविधा एतादृशा बन्धप्रकारा प्रबन्धविशेषा दृश्यन्ते बाहुल्येन ।

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वः श्वः पापीयदिवसा पृथिवी गतयौवना ॥

अत्र हि कृत्तद्धितवचनैरलक्ष्यक्रमव्यङ्ग्यः, 'पृथिवी गतयौवना' इत्यनेन चात्यन्ततिरस्कृतवाच्यो ध्वनिः प्रकाशितः ।

एषां च सुबादीनामेकैकशः समुदितानां च व्यञ्जकत्वं महाकवीनां प्रबन्धेषु प्रायेण दृश्यते ॥

सुबन्तस्य व्यञ्जकत्वं यथा—

तालैः शिञ्जद्वलयसुभगैः कान्तया नर्तितो मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥

---

उज्जीवनी ।

उदाहरणान्तरमाह—यथेति । महर्षेर्व्यासस्येति । अतिक्रान्तेति । अतिक्रान्तमत्यन्तं शून्यं जातं, सुखं येषु तादृशाः, प्रत्युपस्थितदारुणाः प्रत्यु-पस्थितानि अन्तिके वर्तमानानि दारुणानि दुःखानि येषु तादृशाः कालाः, अतीते काले, सुखं नासीद्, वर्तमानेऽपि सुखं नास्तीत्यर्थः । श्वः श्वः पापीय-दिवसा श्वः श्वः भाविनि दिने, दिने, पापसम्बन्धिनः दिवसा यस्यां तादृशी पृथिवी भूमिः, गतयौवना गतं यौवनं यस्याः तादृशी भवति । अत्र कालत्रयेऽपि सुखाभाववर्णनेन निर्वेदस्थायिभावः शान्तो रसोऽभिव्यज्यते । गतयौवनेत्यनेन पृथिव्यामचेतनायां चेतनधर्मस्य यौवनस्यासम्भवेन उपभोगाक्षमत्वं लक्ष्यते । ततश्च हेयत्वं व्यज्यत इति अत्यन्ततिरस्कृतवाच्यध्वनिः । अत्र अतिक्रान्तः, प्रत्युपस्थितः, गतः इति च क्तप्रत्ययैः, पापीयेति छप्रत्ययेन, काला इति बहुवचनेन च अलक्ष्यक्रमव्यङ्ग्यो ध्वनिः प्रकाशितः । पृथिवी गतयौवनेत्यनेन च अत्यन्ततिरस्कृतवाच्यो ध्वनिश्च प्रकाशितः ॥

स्फुटतरप्रतिपत्त्यर्थं पुनरपि सुबादीनां एकैकशः पृथक्त्वेन, समुदितानां समुदायानां च व्यञ्जकत्वं महाकवीनां प्रबन्धेषु प्रायेण दृश्यत इति वदन् सुबन्तस्य व्यञ्जकत्वं प्राह—यथेति । तालैरिति । महाकविश्रीकालिदासकृते मेघसन्देशे स्थितमिदं पद्यम् ।

तिङन्तस्य यथा—

> अवसर रोत्तुं चिअ णिम्मिआइँ मा पुंस मे हअच्छीइं ।
> दंसणमेत्तुम्मत्तेहिं जेहिं हिअअं तुह ण णाअम् ॥

यथा वा—

> मा पन्थं रुन्धीओ अवेहि बालअ अहोसि अहिरीओ ।
> अम्हे अ णिरिच्छाओ सुण्णघरं रक्खिअव्वं णो ॥

---

उज्जीवनी ।

> तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
> र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ॥

इति पूर्वार्धमस्य पद्यस्य । अत्र तालैरिति भिसन्तस्य पदस्य बहुवचनेन तालेषु नानाविधं वैदग्ध्यं प्रकाशमानं यक्षस्य तत्पत्न्यालम्बना विरहहेतुका विप्रलम्भरतिरुद्दीप्यते ।

तिङन्तस्य व्यञ्जकत्वमाह—यथेति ।

> अपसर रोदितुमेव निर्मिते मां पुंसय मे हते अक्षिणी ।
> दर्शनमात्रोन्मत्ताभ्यां याभ्यां तव हृदयमेवंरूपं न ज्ञातम् ॥

इति संस्कृतम् । कुपिता काचिन्नायिका नायकं वक्ति—हे धूर्त ! रोदितुमेव रोदनायैव निर्मिते धात्रा सृष्टे मे मम, हते अक्षिणी नेत्रे, मां पुंसय मा उच्छूने कुरु, पुंस अभिवर्धने चुरादिः । दर्शनमात्रोन्मत्ताभ्यां दर्शनमात्रेण उन्मादं प्राप्तवद्भ्यां याभ्यां मम नेत्राभ्यां, एवंरूपमेतादृशं, तव ते, हृदयं न ज्ञातम् । अतोऽपसर मम समीपं नोपसर इत्यर्थः । अत्र अपसर इति तिङन्तेन नायकविषयस्य नायिकाया रोषस्य अमर्षणीयता, दैवस्य दुर्लङ्घ्यता व्यज्यते ।

तिङन्तस्योदाहरणान्तरमाह—यथावेति । मेति ।

> मा पन्थानं रुधोऽपेहि बालक अप्रौढ अहो असि अह्रीकः ।
> वयं परतन्त्रा यतः शून्यगृहं मामकं रक्षणीयं वर्तते ॥

सम्बन्धस्य यथा—

अण्णत्त बच्च बालअ ! ह्लाअन्तिं किं मं पुलोएसिएअम् ॥
भो जायाभीरुआणं तडं विअ ण होई ॥

कृतकप्रयोगेषु प्राकृतेषु तद्धितविषये व्यञ्जकत्वमावेद्यत एव । अवज्ञातिशये कः । समासानां च वृत्त्यौचित्येन विनियोजने । निपातानां व्यञ्जकत्वं यथा—

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥

इत्यत्र चशब्दः ॥

---

उज्जीवनी ।

इति छाया । पन्थानं रुन्धन्तं कञ्चित् पान्थं प्रति काचिदुक्तिः त्वं तावदनभिज्ञोऽसि, सज्जनसङ्कुले मार्गे स्वकीयमाशयं प्रकाशयसि, अस्ति मे गृहं जनशून्यं सङ्केतस्थानं, तत्रैवागच्छेति अपेहि इति तिङन्तेन व्यज्यते ।

सम्बन्धस्य व्यञ्जकत्वमाह—यथेति । अण्णत्तेति ।

अन्यत्र व्रज बालक ! स्नान्तीं किं मां प्रलोकयस्येतत् ॥
भो जायाभीरुकाणां तटमेव न भवति ॥ इति च च्छाया ॥

वाप्यां स्नान्तीं काञ्चित् सानुरागमालोकयन्तं कञ्चित् युवानं प्रति तस्याः अनुरक्ताया उक्तिरियम् । बालक ! स्नान्तीं मां किमर्थं पश्यसि । अन्यत्र व्रज गच्छ । इदं च तटं जायाभीरुकाणां जायाभ्यो बिभ्यतां अवस्थानाय नोचितम् । अत्र जायाभीरुकाणामिति षष्ठ्यर्थसम्बन्धस्य प्रच्छन्नकामिनीगतेर्ष्यातिशयः व्यज्यते । कप्रत्ययेन, अवज्ञातिशयश्च ।

तदेवाह—कृतकेति । कृतकप्रयोगेषु कृतः कस्य (कप्रत्ययस्य) प्रयोगः येषु तादृशेषु प्राकृतेषु, तद्धितविषये व्यञ्जकत्वं, आवेद्यत एव ज्ञाप्यत एव । अवज्ञातिशयद्योतकोऽत्र क प्रत्ययः । वृत्त्यौचित्येन उपनागरिकेत्यादिवृत्तेरौचित्यानुसारेण समासानां नियोजने समासानामपि व्यञ्जकत्वमस्तीत्यर्थः ।

निपातानां व्यञ्जकत्वमाह—यथेति । अयमिति । विक्रमोर्वशीये चतुर्थेऽङ्के पुरूरवस उक्तिरियम् । तया प्रियया उर्वश्या सह, मे मम एकपदे

यथा वा—

> मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
> मुखमंसविवर्ति पक्ष्मलाक्ष्याः, कथमप्युन्नमितं न चुम्बितं तु॥

अत्र तु शब्दः। निपातानां प्रसिद्धमपीह द्योतकत्वं रसापेक्षयोक्तमिति द्रष्टव्यम्॥

उपसर्गाणां व्यञ्जकत्वं यथा—

> नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
> प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः॥

---

## उज्जीवनी।

अकस्मात्, अयं दुःसहः सोढुमशक्यः, विरह उपनतः प्राप्तश्च। अहोभिर्दिवसैः, नववारिधरोदयाद् नवानां नवीनानां, वारिधराणां मेघानां, उदयादाविर्भावाद् निरातपत्वरम्यैः निर्गत आतपो येभ्यस्तादृशस्य भावो निरातपत्वं, तेन रम्यैः रमणीयैः, भवितव्यं च। अत्र प्रियाविरहसमय एव वर्षाकालः सम्प्राप्त इति क्रियायौगपद्यं चकारेण निपातेन व्यज्यते।

उदाहरणान्तरमाह—**यथा वेति।** मुहुरिति। अभिज्ञानशाकुन्तले तृतीयाङ्के दुष्यन्तस्योक्तिरियम्। मुहुः पुनः पुनः, अङ्गुलिसंवृताधरोष्ठं अङ्गुल्या संवृत आवृत अधरोष्ठः यस्मिंस्तादृशम्। प्रतिषेधाक्षरविक्लवाभिरामं प्रतिषेधाक्षरेण निषेधवचनेन विक्लवं वैक्लव्ययुक्तं अभिरामं मनोज्ञं, अंसविवर्त्ति अंसे विवर्त्तितुं शीलमस्येति तादृशम्। पक्ष्मलाक्ष्या। पक्ष्मले अक्षिणी यस्यास्तादृश्याः, मुखं वदनम्। कथमपि महता प्रयासेन, उन्नमितं ऊर्ध्वं कृतम्। तु किन्तु। न चुम्बितं; तु शब्दोऽत्र पश्चात्तापातिशयद्योतकः; चुम्बनलाभो यद्यभविष्यत्तर्हि कृतार्थोऽभविष्यमिति व्यङ्ग्यस्य प्रकाशकः। अत्रेति। अत्रास्मिन् पद्ये। तु शब्दः व्यञ्जक इत्यर्थः। शब्दशास्त्रकारा निपातानां वाचकत्वं नेच्छन्ति। सर्वथा तेषां द्योतकत्वमेव। एवं नियतं निपातानां द्योतकत्वं प्रसिद्धम्। तथापि अत्र निपातानां द्योतकत्वकथनं रसाद्यपेक्षया रसद्योतकत्वख्यापनार्थं उक्तमिति द्रष्टव्यम्॥

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥

इत्यादौ ।* द्वित्राणां चोपसर्गाणां एकत्र पदे यः प्रयोगः सोऽपि रसव्यक्त्यनुगुणतयैव निर्दोषः । यथा

---

उज्जीवनी ।

उपसर्गाणां व्यञ्जकत्वं आह—यथेति । नीवारा इति । अभिज्ञानशाकुन्तले प्रथमाङ्के दुष्यन्तकृतं आश्रमवर्णनपरं पद्यमिदम् । तरूणां वृक्षाणां, अधोऽधस्तात्, शुकगर्भकोटरमुखभ्रष्टाः शुका गर्भे येषां तादृशा ये, कोटराणि विवराणि तेषां मुखेभ्यो भ्रष्टाः पतिताः नीवाराः सन्तीति शेषः । क्वचित् आश्रमस्य कस्मिंश्चित् प्रदेशे, उपला दृषदः, प्रस्निग्धाः प्रकर्षेण स्निग्धा मसृणाः । इङ्गुदीफलभिदः इङ्गुदीफलानि भिन्दन्तीति तादृशानि सूच्यन्त एव । विश्वासोपगमाद् विश्वासस्य उपगमाद् प्राप्तेः, अभिन्नगतयः अभिन्ना अस्खलिता गतिः सञ्चारः येषां तादृशाः । मृगाः हरिणाः, शब्दं सहन्ते रथशब्दं श्रुत्वापि न बिभ्यति । तोयाधारपथाश्च तोयाधारस्य जलाशयस्य पन्थानश्च । वल्कलशिखानिष्यन्दरेखाङ्किताः वल्कलानां शिखाभ्यः अग्रेभ्यः, प्रसृमराभिः निष्यन्दानां रेखाभिः अङ्किताः चिह्निताः, दृश्यन्त इत्यर्थः । अत्र प्रेत्युपसर्गः प्रस्निग्धा इत्यत्र इङ्गुदीफलानामत्यन्तसारस्य, तेन आश्रमस्य सौन्दर्यातिशयं च प्रकाशयति । उपसर्गाणां 'उपसर्गाः क्रियायोगे' इति शास्त्रानुसारेण, धातोः पूर्वं प्रयुक्तानां प्रादीनां द्वित्राणां द्वयोस्त्रयाणां वा एकत्र पदे एकस्मिन् पदे यः प्रयोगः सोऽपि रसव्यक्त्यनुगुणतयैव, निर्दोषः दोषरहितो भवति । यथेति । प्रभ्रश्यदिति ।

---

* "मदमुखरकपोलमुन्मयूरं
प्रविरलवामनवृक्षसन्निवेशम् ।
वनमिदमवगाहमानभीमं
व्यसनमिवोपरि दारुणत्वमेति ॥ इत्यादौ प्रशब्दस्यौपच्छन्दसिकरूपे व्यञ्जकत्वमधिकं द्योत्यते" (इत्यधिकतया दृश्यते) । च

'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्राग् जन्तून्' इत्यादौ। यथा वा—मनुष्यवृत्या समुपाचरन्तं इत्यादौ *निपातानामपि तथैव, यथा—अहो! बतासि स्पृहणीयवीर्यः' इत्यादौ यथा वा—

ये जीवन्ति न मान्ति ये स्ववपुषि प्रीत्या प्रनृत्यन्ति च
प्रस्यन्दि प्रमदाश्रवः पुलकिता दृष्टे गुणिन्यूर्जिते!

---

उज्जीवनी।

प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्राग्
जन्तूंस्तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन्।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं
शश्वत् सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु॥

मयूरकविकृते सूर्यशतके चतुर्थमिदं पद्यम्। अत्र समुद्वीक्ष्येति सम्, उद्, वीत्येतेषामुपसर्गाणामेकत्र पदे प्रयोगः सूर्यस्य जन्तुविषयकमनुकम्पातिशयं द्योतयति। ते जन्तूनां सूर्यविषयकरतिर्भावोऽभिव्यज्यते। तदानुगुण्येनात्र त्रयाणामुपसर्गाणां योगो न दोषाय।

यथावेति। मनुष्यवृत्त्या समुपाचरन्तमित्यत्र।

मनुष्यवृत्त्या समुपाचरन्तं, स्वबुद्धिसामान्यकृताभिमानाः।
योगीश्वरैरप्यसुबोधमीश त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः॥

अत्रापि समुपाचरन्तमिति, सम्, उप, आ इत्येतेषामुपसर्गाणां योगः, ईश्वरस्य लोकानुग्रहतात्पर्यातिशयो व्यज्यते। निपातानामपि द्वयोस्त्रयाणां वा एकत्र पदे योगः रसभावादिव्यञ्जनानुगुणतया न दोषमावहति—यथेति। अहो इति।

सुराः समभ्यर्थयितार एते, कार्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः॥

कुमारसम्भवे तृतीयसर्गस्थमिदं पद्यम्। अत्र 'अहो' 'बत' निपातयोर्द्वयोर्योगः, मदनस्य सकललोकविस्मयजनकवीरत्वं प्रकाशयति। अतो न दोषाय।

उदाहरणान्तरमाह—यथावेति। य इति। ऊर्जिते गुणिनि, पूर्णगुणशालिनि, जने दृष्टे, अवलोकिते सति, ये जना जीवन्ति, सुखेन प्राणधारणं

---

* "यः स्वप्ने समुपानतस्य इत्यादौ च" च. (इत्यधिकतया दृश्यते)

हा धिक्कष्टमहो ! कं यामि शरणं तेषां जनानां कृते
नीतानां प्रलयं शठेन विधिना साधुद्विषः पुष्यता ॥

इत्यादौ

पदपौनरुक्त्यं च व्यञ्जकत्वापेक्षयैव कदाचित् प्रयुज्यमानं शोभामावहति ।
यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथाप्रणयमस्य न पारयन्ति ॥

इत्यादौ

---

उज्जीवनी ।

कुर्वन्ति, स्ववपुषि स्वदेहे, न मान्ति अपरिमितप्रमोदभाजः भवन्ति, प्रीत्या मोदेन, प्रनृत्यन्ति प्रकर्षेण नृत्यन्ति । प्रस्यन्दि प्रमदाश्रवः प्रकर्षेण स्यन्दीनि स्यन्दमानानि प्रमदाश्रूणि हर्षाश्रूणि येषां तादृशाः । पुलकिताः सञ्जातपुलकाश्च भवन्ति । साधुद्विषः साधून् सज्जनान्, द्विषतः, पुष्यता पोषयता, शठेन क्रूरेण विधिना दैवेन, प्रलयं नाशं, नीतानां प्रापितानां, तेषां जनानां कृते सज्जनानां तेषामर्थे कं शरणं यामि रक्षितारं कं प्रयामि । अहो ! हा धिक् कष्टं दशेदृशी महते क्लेशाय भवति । अत्र हा, धिगिति, निपातद्वयं निर्वेदं व्यनक्तीति अतो न दोषावहम् ।

पदस्य पौनरुक्त्यं पुनरुक्तिरपि कदाचित् प्रयुज्यते चेत् तदपि व्यञ्जकत्वस्य व्यञ्जनायां आनुगुण्येन शोभामावहति शोभाधायकं भवति । अन्यथा दोष एव । उदाहरति—यदिति । वञ्चनाहितमतिः वञ्चनायामाहिता मतिर्येन तादृशः, खलजनः दुष्टो जनः कार्योन्मुखः कार्ये स्वकीये औन्मुख्यं वहन् सन् बहुचाटुगर्भं बहूनि चाटूनि प्रियवचनानि गर्भे यस्य तादृशं कृतकं कृत्रिमं ब्रवीति कथयति इति यत् तत् साधवः सज्जनाः न विदन्ति इति न न जानन्तीति वक्तुं न शक्यते तथापि विदन्ति जानन्ति । किन्तु अस्य खलजनस्य, प्रणयं कृतकां प्रीतिं, वृथा कर्तुं व्यर्थं विधातुं, न पारयन्ति न शक्नुवन्ति । द्वौ नञौ अत्र न न

कालस्य व्यञ्जकत्वं यथा—

समविसमणिव्विसेसा समन्तओ मन्दमन्दसंआरा ।
अइरा होहिन्ति पहा मणोरहाणं पि दुल्लङ्घा ॥

[समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः ।
अचिराद्भविष्यन्तिपन्थानो मनोरथानामपि दुर्लङ्घ्याः ॥ इति छाया]

अत्र ह्यचिराद्भविष्यन्ति पन्थान इत्यत्र भविष्यन्तीत्यस्मिन् पदे प्रत्ययः कालविशेषाभिधायी रसपरिपोषहेतुः प्रकाशते । अयं हि गाथार्थः प्रवासविप्रलम्भशृङ्गारविभावतया विभाव्यमानो रसवान् ।

यथात्र प्रत्ययांशो व्यञ्जकस्तथा क्वचित् प्रकृत्यंशोऽपि दृश्यते । यथा—

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः
सा धेनुर्जरती चरन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिताम्
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥

---

उज्जीवनी ।

विदन्तीति प्रकृतमर्थं वेदनं द्रढयतः । तथापि विदन्तीति पुनरुक्तिः वेदनस्य प्रकृष्टदार्ढ्यातिशयव्यञ्जनात् कामपि कामनीयकमावहति ।

कालस्य व्यञ्जकत्वमाह—यथेति । समेति । समाश्च विषमाश्च (मार्गा ?) निर्विशेषाः तुल्या येषु तादृशाः । समन्ततः मन्दमन्दसञ्चाराः मन्दमन्दोऽत्यन्तं मन्दः सञ्चारो येषु तादृशाः पन्थानः मार्गाः, अचिरादचिरेण, मनोरथानामपि दुर्ल्लङ्घ्याः लङ्घनयोग्यताशून्या भविष्यन्ति ।

अत्र हि अस्मिन् पद्ये, अचिराद् भविष्यन्ति पन्थानः इत्यत्र भविष्यन्तीति अस्मिन्लृडात्मकतिङन्ते पदे कालविशेषबोधकः प्रत्ययस्तिङ्प्रत्ययः रसपरिपोषस्य प्रवासविप्रलम्भशृङ्गारपरिपोषस्य हेतुः कारणं प्रकाशते । अयं गाथार्थः गाथाया अर्थः प्रवासविप्रलम्भशृङ्गारस्य, विभावत्वेन कारणत्वेन, विभाव्यमानः सहृदयैरास्वाद्यमानः रसवान् काव्यमिदं रसवदित्यर्थः । तस्य च विप्रलम्भशृङ्गारस्य प्रत्ययः व्यञ्जक इत्यर्थः । नायकस्य प्रवासारम्भे नायिका तं वदति ॥

अत्र श्लोके दिवसैरित्यस्मिन् पदे प्रकृत्यंशोऽपि द्योतकः। सर्वनाम्नां च व्यञ्जकत्वं यथानन्तरोक्ते श्लोके।

अत्र च सर्वनाम्नामेव व्यञ्जकत्वं हृदि व्यवस्थाप्य कविना क्वेत्यादिशब्दप्रयोगो नकृतः। अनया दिशा सहृदयैरन्येऽपि व्यञ्जकविशेषाः स्वयमुत्प्रेक्षणीयाः। एतच्च सर्वं पदवाक्यरचनाद्योतनोक्त्यैव गतार्थमपि वैचित्र्येण व्युत्पत्तये पुनरुक्तम्॥

---

उज्जीवनी

अत्र प्रकृत्यांशो यथा व्यञ्जकस्तथा प्रकृत्यंशस्यापि क्वचिद् व्यञ्जकत्वं दृश्यत इत्याह—यथेति। तद्गेहमिति। द्वारकातः प्रतिनिवृत्तस्य सुदाम्नो मन्दिरमवलोक्य कस्यचिदिदं वचनमिति सुधासागर उक्तम्। तत् पूर्वदृष्टं गेहं गृहं, नतभित्ति नता अवनता भित्तिर्यस्य तादृशम्। इद तु पुरो दृश्यमानं दिवः स्वर्गात्, लब्धावगाह लब्धः अवगाहो यस्य तादृशं, जातमित्यर्थः। सा पूर्वदृष्टा जरती जरठा धेनुर्गौः। एताः इदानीं तु घनाभाः मेघनिभाः, करिणां राजानां घटाः श्रेणयः, चरन्ति। सः पूर्वश्रुतः, क्षुद्रः अल्पः, मुसलध्वनिः मुसलस्य धान्यावहननशब्दाः। इदं तु इदानीं तु कलं मधुरस्वरं, योषितां अङ्गनानां, सङ्गीतकं गीतध्वनिः, आश्चर्यमिदम्। अयं द्विजः सुदामाख्यः, श्रीकृष्णसुहृद्-दिवसैः कतिपयैः दिवसैरेव, न तु मासैर्वर्षैर्वा, इयतीं भूमिं, एतावतीं सम्पत्सीमां समारोपितः प्रापितः॥

अत्रेति। अत्र श्लोके दिवसैरित्यस्मिन् पदे प्रकृत्यंशोऽपि तृतीया प्रकृतिभूतदिवसशब्दोऽपि द्योतकः। अत्यल्पेनैव समयेन महत् परिवर्तनं जातमिति तस्यासम्भाव्यतां दिवसशब्दः प्रकाशयति। अनन्तरोक्ते श्लोके यथा 'तद् गेहं नतभित्ति' इति श्लोके इव सर्वनाम्नां च तदिदमित्यादि सर्वनामशब्दानां, विभक्तिप्रकृतीनां च सम्भूय व्यञ्जकत्वं दृश्यत इत्यर्थः। तदिति च सर्वनामपदं, नतभित्तीति प्रकृतेः साहाय्येन गेहस्यामङ्गलाधारतां, दौर्भाग्याश्रयतां च व्यनक्ति। अत्र च अस्मिन् पद्ये, सर्वनाम्नां तदादीनां वक्तृबुद्धिविषयतावच्छेदकोपलक्षितधर्मावच्छिन्नादौ शक्तिमतामेव व्यञ्जकत्वं, पूर्वानुभूतस्य वस्तुनः स्मरणरूपो योऽर्थस्तस्य द्योतकत्वमस्ति। अत 'क्व सूर्यप्रभवो वंशः, क्व चाल्पविषया मतिः' अत्यन्तवैषम्यद्योतनाय क्व शब्दो न प्रयुक्तः। अनया

ननु चार्थसामर्थ्याक्षेप्या रसादय इत्युक्तम् । तथा च सुबादीनां व्यञ्जकत्व वैचित्र्यकथनमनन्वितमेव । उक्तमत्र पदानां व्यञ्जकत्वोक्त्यवसरे । किञ्चार्थ-विशेषाक्षेप्यत्वेऽपि रसादीनां तेषामर्थविशेषाणां व्यञ्जकशब्दाविनाभावित्वाद् यथा—प्रदर्शितं व्यञ्जकस्वरूपपरिज्ञानं विभज्योपयुज्यत एव ॥

---

उज्जीवनी ।

दिशा अनेनैव मार्गेण, सहृदयैः व्यञ्जकविशेषाः पूर्वोक्ताः प्रकृतिप्रत्ययादयः स्वयमुत्प्रेक्षणीयाः ॥

ननु पदस्य वाक्यस्य रचनायाश्च अर्थान्तरप्रकाशकत्वे कथिते तदन्तर्गता-नामेवैषां प्रत्ययादीनां व्यञ्जकतायाः पृथग् वचनमनुचितमिति चेत् तेषां वचनेनैव गतार्थत्वेऽपि वैचित्र्येण व्युत्पत्तये वैचित्र्यज्ञानाय पुनरपि उक्तमिति ज्ञेयम् ॥

नन्विति । रसादयः रसभावादयः असंलक्ष्यक्रमव्यङ्ग्याः अर्थसामर्थ्याक्षेप्या अर्थस्य यत् सामर्थ्यं अर्थान्तरबोधानुकूलत्वं तेन आक्षेप्याः प्रत्येया इति उक्तम-भिहितम् । एवं स्थिते सुबादीनां प्रत्ययानां प्रकृत्यादीनां च व्यञ्जकत्वे व्यञ्ज-नयार्थान्तरबोधकत्वे यद् वैचित्र्यं तस्य कथनमनन्वितमेवानुपपन्नमेव । पदानां व्यञ्जकत्वकथनावसरे चेदमुक्तम् । वाक्यमेव वाचकमिति येषां मतं तन्मते पदानामर्थस्मारकत्वेनैवोपयोगात् अवाचकत्वादर्थान्तरव्यञ्जकत्वं कथमित्या-शङ्कायां, पदानां ध्वनिव्यवहारप्रयोजकं न तन्निष्ठं वाचकत्वं अतो वाचकत्वा-भावेऽपि पदानां व्यञ्जकत्वमव्याहतमिति पूर्वमुक्तमित्यर्थः । तथैव प्रत्यया-दीनामपि व्यञ्जकत्वमभ्युपेयत एव । किञ्चेति । रसादीनामर्थविशेषेणाक्षेप्य-त्वेऽपि तेषामर्थविशेषाणां व्यञ्जकशब्दाविनाभावित्वाद् व्यञ्जकशब्दैः नियतत्वात् (व्यापकत्वाद्) व्यञ्जकशब्दैर्विना व्यङ्ग्यस्यार्थस्यानुपस्थितेः यथापूर्वं प्रदर्शितं व्यञ्जकस्वरूपपरिज्ञानं व्यञ्जकानां स्वरूपस्य विज्ञानं विभज्य पृथग् उपयुज्यत एवापेक्ष्यत एव ॥

अन्यत्र भामहविवरणे, शब्दविशेषाणां चारुत्वं चमत्कृतिजनकत्वं यद् विभागेनोपदर्शितं विभज्य प्रदर्शितं, तदपि चारुत्वं च तेषां शब्दादीनां व्यञ्जकत्वेनैव व्यञ्जकत्वद्वारेणैव, अवस्थितं स्थितमित्यवगन्तव्यं वेदितव्यम् ॥

शब्दविशेषाणां तत्र चान्यत्र च चारुत्वं यद् विभागेनोपदर्शितं तदपि तेषां व्यञ्जकत्वेनैवावस्थितमित्यवगन्तव्यम् ।

यत्रापि तत् सम्प्रति न प्रतिभासते तत्रापि व्यञ्जके रचनान्तरे यद् दृष्टं सौष्ठवं तेषां प्रवाहपतितानां तदेवाभ्यासादपोद्धृतानामप्यवभासत इत्यवसातव्यम् । कोऽन्यथा तुल्ये वाचकत्वे शब्दानां चारुत्वविषयो विशेषः स्यात् ।

अन्य एवासौ सहृदयसंवेद्य इति चेत्, किमिदं सहृदयत्वं नाम ? किं रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वं, उत, रसभावादिमयकाव्यस्वरूपपरिज्ञाननैपुण्यम् । पूर्वस्मिन् पक्षे तथाविधसहृदयव्यवस्थापितानां शब्दविशेषाणां चारुत्वनियमो न स्यात् । पुनः समयान्तरेणान्यथापि व्यवस्थापनसम्भवात् । द्वितीयस्मिंस्तु पक्षे रसज्ञतैव सहृदयत्वमिति । तथाविधैः

---

## उज्जीवनी

यत्रेति । यत्र यस्मिन् काव्येऽपि, तद् व्यञ्जकत्वं, सम्प्रति वाचकत्वावस्थायां, न प्रतिभासते न प्रकाशते, तत्रापि तस्मिन् काव्येऽपि व्यञ्जके रचनान्तरे यत्र रचना अर्थान्तरव्यञ्जिका, तत्र यत् सौष्ठवं चारुत्वं, दृष्टं तेषां शब्दानां, प्रवाहपतितानां अन्यत्र प्रयुक्तानां रसव्यञ्जनावसरे तदेव चारुत्वं, अभ्यासात् पूर्वपरिचयाद्, अपोद्धृतानां अपि पृथगवस्थितानामपि, अवभासते भासते, इत्यवसातव्यम् । अन्यथा नैवं चेत् शब्दानां वाचकत्वे अर्थबोधकत्वे तुल्ये सति, चारुत्वविषयः चारुत्वं निमित्तीकृत्य विशेषः भेदः कः स्यात् कीदृशो भवेत् । असौ चारुत्वविषयो विशेषः अन्य एव भवदुक्तादन्य एव सहृदयसंवेद्यः सहृदयैः परं विज्ञेयः इति उच्यते चेत् तदा इदं सहृदयत्वं किं नामेति विचारणीयम् रसभावादीननपेक्ष्य स्थितं यत् काव्यं तदाश्रितानां तदाश्रित्यावस्थितानां समयविशेषाणां सङ्केतविशेषाणामनभिज्ञत्वमज्ञातृत्वं सहृदयत्वमित्येकः पक्षः । अथवा रसभावादिमयानां काव्यानां परिज्ञाने नैपुण्यं निपुणता सहृदयत्वमित्यपरः । पूर्वस्मिन् पक्षे प्रथमे पक्षे तथाविधेन सहृदयेन रसभावादिविज्ञानशून्येन व्यवस्थापितानां कृतव्यवस्थानां शब्दविशेषाणां चारुत्वनियमो न स्यात् चारुत्वस्य व्यवस्था न भवेत् । पुनः समयान्तरेण, अन्येन सङ्केतेन, अन्यथा प्रकारान्तरेणापि, व्यवस्थापनस्य सम्भवात् । द्वितीयस्मिंस्तु पक्षे सहृदयत्वस्य द्वितीयनिर्वचनाङ्गीकारपक्षे, रसज्ञतैव रसाद्य-

सहृदयैः संवेद्यो रसादिसमर्पणसामर्थ्यमेव नैसर्गिकं शब्दानां विशेष इति व्यञ्जकत्वाश्रय्येव तेषां मुख्यं चारुत्वम्। वाचकत्वाश्रयाणां तु प्रसाद एवार्थपेक्षायां तेषां विशेषः। अर्थानिपेक्षायां तु अनुप्रासादिरेव ॥

एवं रसादीनां व्यञ्जकस्वरूपमभिधाय तेषामेव विरोधिरूपं लक्षयितुमिदमुपक्रम्यते—

**प्रबन्धे मुक्तके वापि रसादीन् बन्धुमिच्छता।**
**यत्नः कार्यः सुमतिना परिहारे विरोधिनाम् ॥ १७ ॥**

प्रबन्धके मुक्तके वापि रसभावनिबन्धनं प्रत्याहृतमनाः कविः विरोधिपरिहारे परं यत्नमादधीत। अन्यथा त्वस्य रसमयः श्लोक एकोऽपि सम्यङ् न सम्पद्यते ॥

कानि पुनस्तानि विरोधीनि, यानि यत्नतः कवेः परिहर्तव्यानीत्युच्यते—

---

भिज्ञत्वमेव सहृदयत्वमित्युक्तं भवति तथाविधैः रसाद्यभिज्ञैः सहृदयैः, संवेद्यः सवेदनागोचरः शब्दानां विशेषः सौष्ठवं नैसर्गिकं स्वाभाविकं, रसादिसमर्पण सामर्थ्यमेव रसादीनां समर्पणे अभिव्यञ्जने यत् सामर्थ्यं तदेव इति तेषां शब्दानां मुख्यं प्रधानं, चारुत्वं सौष्ठवम्। व्यञ्जकत्वाश्रय्येव व्यञ्जकत्वमाश्रित्यावतिष्ठमानमेव, वाचकत्वाश्रयाणां तु वाचकत्वेनावस्थितानां तु, तेषां शब्दानां, अर्थापेक्षायां वाच्यार्थापेक्षत्वे, प्रसाद एव प्रसादगुण एव, विशेषः। अर्थानिपेक्षायां अर्थापेक्षाविरहे तु, अनुप्रासादिरेव अनुप्रासादिशब्दालङ्कारत्वमेव।

एवमिति। एवं पूर्वोक्तप्रकारेण, रसादीनां, व्यञ्जकस्वरूपं यानि पदादीनि व्यञ्जकानि तेषां स्वरूपं अभिधाय उक्त्वा, तेषामेव रसादीनां, विरोधिरूपं ये विरोधिनस्तेषां रूपं स्वरूपं, लक्षयितुं निरूपयितुं, इदं वक्ष्यमाणं उपक्रम्यते आरभ्यते। प्रबन्ध इति। प्रबन्धे मुक्तके वापि रसादीन् रसभावादीन्, बन्धुं निबन्धुमिच्छता अभिलषता, कविना, सुमतिना सहृदयेन, विरोधिनां मिथो विरोधवतां परिहारे अपनयने, यत्नः प्रयत्नः, कार्यः विधेयः, तदेवाह— प्रबन्धके मुक्तके वापि रसानां भावादीनां च निबन्धन प्रति आदृतमादरवद् मनो यस्य तादृशः कविः, विरोधिनां रसानां, सामानाधिकरण्येन निरूपणं

विरोधिरससम्बन्धिविभावादिपरिग्रहः ।
विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम् ॥ १८ ॥

अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।
परिपोषं गतस्यापि पौनःपुन्येन दीपनम् ।
रसस्य स्याद् विरोधाय वृत्त्यनौचित्यमेव च ॥ १९ ॥

प्रस्तुतरसापेक्षया विरोधी यो रसस्तस्य सम्बन्धिनां विभावभावानुभावानां परिग्रहो रसविरोधहेतुरेकः सम्भावनीयः। तत्र विरोधिरसविभावपरिग्रहो यथा—शान्तरसविभावेषु तद्विभावतयैव निरूपितेष्वनन्तरमेव शृङ्गारादि, विभाववर्णने। विरोधिरसभावपरिग्रहो यथा—प्रियं प्रति प्रणयकलहकुपितासु

---

उज्जीवनी।

परिहर्तुं परं महान्तं यत्नमादधीत कुर्वीत। अन्यथा तादृशयत्नानादरे तु। अस्य कवेः एकोऽपि श्लोकः, सम्यग् रसमयः न सम्पाद्यते तत् काव्यं रसवन्न भवेदित्यर्थः॥

परिहरणीयत्वेनाभिमतानां रसविरोधिनां निरूपणायाह—कानीति। कवेः काव्यकर्तुः, यानि यत्नतः प्रयत्नात् परिहर्तव्यानि परिहरणीयानि, तानि पुनः विरोधीनि रसविरोधीनि निबन्धनानि कानि इत्युच्यते, परिहर्तव्यानि मिथो रसविरोधीनि निबन्धनानि निरूप्यन्त इत्यर्थः। विरोधीति। विभावभावानुभावेत्यादिना प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनानि यान्युक्तानि तद्विरुद्धानि परिहर्तव्यानीति इदानीं प्रतिपाद्यते। विरोधिरससम्बन्धिनां विभावादीनां परिग्रहः वर्णनं अन्वितस्यापि अन्यस्य वस्तुनः इतिवृत्तस्य विस्तरेण दीपनं प्रकाशनम्। अकाण्डे अस्थान एव रसस्य विच्छित्तिः विच्छेदः; अकाण्डे अस्थाने प्रकाशनम् च। परिपोषं पुष्टिं गतस्य प्राप्तस्यापि रसस्य पौनःपुन्येन मुहुर्मुहुः दीपनं प्रकाशनं, वृत्त्यनौचित्यं च वृत्तीनामनौचित्यं च रसस्य विरोधाय स्यात्। तदेवाह—प्रस्तुतं रसमपेक्ष्य प्रस्तुतस्य रसस्येति यावत्। विरोधी विरुद्धः यो रसः रसभावादिः, तस्य सम्बन्धिनां विभावानां, भावानामनुभावानां च परिग्रहः वर्णनीयत्वेनाङ्गीकारः, रसविरोधस्य एको हेतुः सम्भावनीयः,

कामिनीषु वैराग्यकथाभिरनुनये। विरोधिरसानुभावपरिग्रहो यथा—प्रणयकुपितायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने॥

अयं चान्यो रसभङ्गहेतुर्यत् प्रस्तुतरसापेक्षया वस्तुनोऽन्यस्य कथञ्चिदन्वितस्यापि विस्तरेण कथनम्। यथा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद् वर्णयितुमुपक्रान्ते कवेर्यमकाद्यलङ्कारनिबन्धनरसिकतया महता प्रबन्धेन पर्वतादिवर्णने। अयं रसभङ्गहेतुरवगन्तव्यो, यदकाण्ड एव विच्छित्तिः रसस्याकाण्ड[1] एव प्रकाशनम्। तत्रानवसरे विरामो रसस्य यथा नायकस्य कस्यचित्, स्पृहणीयसमागमया नायिकया कयाचित् परां परिपोषपदवीं प्राप्ते शृङ्गारे, विदिते च परस्परानुरागे समागमोपायचिन्तोचितं व्यवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने।

---

उज्जीवनी।

विरोधिरसविभावपरिग्रहो यथा—शान्तरसस्य विभावेषु शान्तरसविभावत्वेनैव निरूपितेषु सत्सु, अनन्तरमेव शृङ्गारादिविभावानां वर्णनं रसविरोधहेतुरित्यर्थः। तथा विरोधिरसभावपरिग्रहो यथा—कामिनीषु प्रणयिनीषु प्रियं प्रति प्रणयकलहेन कुपितासु वैराग्यकथाभिस्तासां अनुनयवर्णनमपि रसविरोधि! विरोधिरसानां येऽनुभावास्तेषां परिग्रहो यथा—प्रणयकुपितायां प्रियायां प्रणयिन्यामप्रसीदन्त्यां प्रसादरहितायां कोपावेशेन परवशस्य नायकस्य रौद्ररसस्य येऽनुभावास्तेषां वर्णनमपि रसभङ्गहेतुः॥

प्रस्तुतरसापेक्षया अन्यस्य वस्तुनः इतिवृत्तस्य कथञ्चिदन्वितस्याप्यनुगतस्यापि विस्तरेण कथनमिति यद् अयं चान्यो रसभङ्गहेतुः। यथा—कस्यचिद् नायकस्य विप्रलम्भशृङ्गारे वर्णयितुमुपक्रान्ते सति यमकाद्यलङ्काराणां काव्यान्तर्गडुभूतानां निबन्धनरसिकस्य कवेर्महता प्रबन्धेन पर्वतादीनां वर्णनम्।

अयं चापरो रसविरोधहेतुः अवगन्तव्यो ज्ञातव्यः।

यद् रसस्य अकाण्डे विच्छित्तिरकाण्डे दीपनं च। अनवसरे रसस्य विरामो यथा—कस्यचिन्नायकस्य स्पृहणीयः समागमो यस्यास्तादृश्या कयाचिद् नायिकया परां परिपोषपदवीं प्राप्ते शृङ्गारे, तयोः परस्परानुरागे च विदिते सति,

---

१. 'ण्डे च प्रथनम्।' च

अनवसरे च प्रकाशनं रसस्य यथा प्रवृत्ते प्रवृत्त[1]विविधवीरसंक्षये कल्पसंक्षयकल्पे सङ्ग्रामे[2]रामदेवप्रायस्यापि तावन्नायकस्यानुपक्रान्तविप्रलम्भ-शृङ्गारस्य निमित्तमुचितमन्तरेणैव शृङ्गारकथायामवतारवर्णने । न चैवंविधे विषये दैवव्यामोहितत्वं कथापुरुषस्य परिहारो यतो रसबन्ध एव कवेः प्राधान्येन प्रवृत्तिनिबन्धनं युक्तम् । इतिवृत्तवर्णनं तदुपाय एवेत्युक्तं प्राक् "आलोकार्थी यथा दीपशिखायां यत्नवान् जनः" इत्यादिना ॥

अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धेन च कवीनामेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्यङ्ग्यतात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेन । पुनश्चाय-मन्यो रसभङ्गहेतुरवधारणीयो यत् परिपोषं गतस्यापि रसस्य पौनःपुन्येन

---

उज्जीवनी ।

समागमाय तयोः सङ्गमनाय, उचितस्योपायस्य परिचिन्तनात्मकं कर्म विहाय, स्वतन्त्रतया व्यापारान्तरस्य वर्णनम् । रसस्यानवसरे प्रकाशनं; यथा—प्रवृत्तो विविधानां वीराणां संक्षयो यस्मिंस्तादृशे कल्पान्तसदृशे सङ्गरे प्रवृत्ते सति, श्रीरामसदृशस्यापि नायकस्य अनुपक्रान्तः विप्रलम्भशृङ्गारो यस्य तादृशस्य, उचितं निमित्तं कारणं विनैव शृङ्गारकथायामवतारस्य वर्णनम् । यतः कवेः, रसानुगतशब्दविन्यास एव प्राधान्येन काव्यनिर्माणे प्रवृत्तस्य प्रवृत्तिविषयतामर्हति, तत एवंविधे विषये, अकाण्डे विरोधिरसस्य दीपने, कथापुरुषस्य दैवव्यामोहितत्वं न परिहाराय कल्पते । इतिवृत्तस्य वर्णनं तु रसादेरुपाय एव । तदेवोक्तं पूर्वम्—'आलोकार्थी यथा दीपशिखायां यत्नवान् जनः' इति ।

अत एवेति—यत एव रसबन्ध एव मुख्यः कवेर्व्यापारविषयः अत एव च इतिवृत्तमात्रे प्राधान्येन वर्ण्यमाने अङ्गाङ्गिभावरहितानां परस्परबन्धशून्यानां रसभावादीनां निबन्धनेन कवीनामेवंविधानि स्खलितानि भवन्तीति हेतोः, एषां रसादिरूपव्यङ्ग्यतत्परत्वमेव उचितमिति तदर्थमस्माभिः यत्न आरब्धः न तु ध्वनिप्रतिपादनमात्रेऽभिनिवेशेन । पुनश्चान्योऽयं रसभङ्गहेतुः, अवधारणीयः

---

१. 'द्व०' च   २. 'मे दे०' च

दीपनम् । उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमानः परिम्लानकुसुमकल्पः कल्पते । तथा वृत्तेर्व्यवहारस्य यदनौचित्यं तदपि रसभङ्गहेतुरेव । यथा—नायकं प्रति नायिकायाः कस्याश्चिदुचितां भङ्गिमन्तरेण स्वयं सम्भोगाभिलाषकथने ।

यदि वा भरतप्रसिद्धानां कैशिक्यादीनां काव्यालङ्कारान्तरप्रसिद्धानामुपनागरिकाद्यानां वा यदनौचित्यमविषये निबन्धनं तदपि रसभङ्गहेतुः । एवमेषां रसविरोधिनामन्येषां चानया दिशा स्वयमुत्प्रेक्षितानां परिहारे सत्कविभिरवहितैर्भवितव्यम् । परिकरश्लोकश्चात्र—

मुख्या व्यापारविषयाः सुकवीनां रसादयः ।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः ॥
नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः ।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥

---

### उज्जीवनी ।

अवगन्तव्यः, यत् परिपोषं गतस्यापि रसस्य पुनःपुनरुद्दीपनम् । उपभुक्तो हि आस्वादविषयीभूतस्तु रत्यादिः स्वसामग्रीभिः परिपोषं प्राप्तः पुनःपुनरपि स्पृश्यमानः परिम्लानकुसुमवदरमणीयो भवति । तथा वृत्तेर्व्यवहारस्य यदनौचित्यं सोऽपि रसभङ्गस्य हेतुरेव, यथा—नायिकायाः कस्याश्चिदुचितां भङ्गिमन्तरेण नायकं प्रति स्वयमेव सम्भोगाभिलाषस्य कथनम् । अथवा वृत्तयः भरतनाट्यशास्त्रप्रसिद्धाः कैशिक्यादयः तासां काव्यालङ्कारग्रन्थान्तरे प्रसिद्धानामुपनागरिकाद्यानां वा यदनौचित्यं, अविषये निबन्धनं तदपि रसभङ्गाय कल्पते । एवमेषां पूर्वोक्तानां रसविरोधिनां अन्येषां च अनेनैव मार्गेण स्वयमुत्प्रेक्षितानां च परिहारे सत्कविभिरवधानवद्भिर्भवितव्यम् । परिकरश्लोकमाह—मुख्या इति । सुकवीनां सत्कवीनां व्यापारविषयाः वर्णनविषयाः मुख्या ये रसादयः रसभावादयः तेषां निबन्धने तैः कविभिः सदैव सर्वदैव, अप्रमादिभिः अनवधानतारहितैः भाव्यम् । तु किन्तु, यो नीरस रसशून्यः प्रबन्धः प्रबन्धव्यापारविषयः शब्दः स कवेः प्रबन्धः महान् अपशब्दः, तेन, तेन हेतुना, स कविः, अन्येन केनापि अस्मृतलक्षणः अस्मृतमगृहीतं लक्षणं नामधेयं यस्य तादृशः अकविरेव स्याद् भवेत् ।

पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः
तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा ॥
वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः ।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः ॥

**विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।**
**बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ २० ॥**

स्वसामग्र्या लब्धपरिपोषे तु विवक्षिते रसे विरोधिनां विरोधिरसाङ्गानां बाध्यानामङ्गभावं वा प्राप्तानां सतामुक्तिरेषा । बाध्यत्वं हि विरोधिनां शक्याभिभवत्वे सति नान्यथा ।

तथा च तेषामुक्तिः प्रस्तुतरसपरिपोषायैव सम्पद्यते । अङ्गभावं प्राप्तानां च तेषां विरोधित्वमेव निवर्तते । अङ्गभावप्राप्तिर्हि तेषां स्वाभाविकी

---

उज्जीवनी ।

पूर्वे प्राचीनाः कालिदासादयः कवयः विशृङ्खलगिरः विशृङ्खला गीर्येषां तादृशाः क्वचित् स्खालित्यसम्भवेऽपि प्राप्तकीर्तयः प्राप्ता कीर्तिर्येषां तादृशा एव भवन्ति । तथापि तान् समाश्रित्य तान् प्रमाणीकृत्य, मनीषिणा धीमता, एषा नीतिः रसविरोधिपरिहारात्मिका, न त्याज्या नोपेक्षणीया । किं चास्माभिः प्रदर्शितोऽयं नयः, वाल्मीकिव्यासमुखाः वाल्मीकिव्यासादयः प्रख्याताः प्रसिद्धाः, ये कवीश्वराः तदभिप्रायबाह्यः अयं तदभिप्रायाविषयः नयः न; तेषामपि कवीश्वराणां अभिमतोऽयं न्याय एवास्माभिरपि स्वीकृत इत्यर्थः ॥ विरोधिनां रसानां क्वचिददोषत्वं दर्शयति– विवक्षित इति । तु किन्तु, विवक्षिते वक्तृतात्पर्यविषयीभूते रसे लब्धप्रतिष्ठे प्रतिष्ठां प्राप्ते सति, बाध्यानामङ्गभावं वा प्राप्तानां विरोधिनां रसानामुक्तिर्वर्णनम् । अच्छला न दोषमावहति ॥

स्वसामग्र्येति । विवक्षिते रसे स्वसामग्र्या स्वविभावादिभिः, लब्धपरिपोषे विरोधिरसानां यान्यङ्गानि विभावादीनि तेषां बाध्यानां, अङ्गभावमङ्गत्वं वा प्राप्तानां सतां, उक्तिर्निरूपणात्मिका अदोषा । विरोधिरसानां बाध्यत्वं हि शक्याभिभवत्वे शक्यः अभिभवः न्यग्भावो यस्य तादृशस्य भावस्तत्वं, तस्मिन् सति भवति । अन्यथा बाध्यत्वं न स्यात् । तथा च तेषां बाध्यानां

समारोपकृता वा। तत्र येषां नैसर्गिकी तेषां तावदुक्तावविरोध एव। यथा विप्रलम्भशृङ्गारे तदङ्गानां व्याध्यादीनाँ, तेषां च तदङ्गानामेवादोषो नात-दङ्गानाम्। तदङ्गत्वे च सम्भवत्यपि मरणस्योपन्यासो न [1]ज्यायान्।

आश्रयविच्छेदे रसस्यात्यन्तविच्छेदप्राप्तेः। करुणस्य तु तथाविधे विषये परिपोषो भविष्यतीति चेत् न; तस्याप्रस्तुतत्वात्। प्रस्तुतस्य च विच्छेदात्। यत्र तु करुणरसस्य काव्यार्थत्वं तत्राविरोधः। शृङ्गारे वा मरणस्यादीर्घ-कालप्रत्यापत्तिसम्भवे कदाचिदुपनिबन्धो नात्यन्तविरोधी। दीर्घकालप्रत्यापत्तौ तु तस्यान्तरा प्रवाहविच्छेद एवेत्येवंविधेतिवृत्तोपनिबन्धनं रसबन्धप्रधानेन कविना परिहर्तव्यम् ॥

---

उज्जीवनी।

रसाङ्गानां उक्तिः प्रकृतरसं परिपोषयेदेव। अङ्गभावमङ्गत्वं प्राप्तानां तु रसानामुक्तौ तेषां विरोधित्वं विरोधो निवर्तत एव। उदाहरति—यथेति। विप्रलम्भशृङ्गारे विवक्षिते लब्धप्रतिष्ठे च सति व्याध्यादीनां विरोधिरसा-ङ्गानां, तदङ्गानामेव प्रकृतरसाङ्गभावं प्राप्तुमुचितानाम् एव, अदोषो दोषराहित्यम्। नातदङ्गानां प्रकृतरसाङ्गानां प्राप्तुमनर्हाणाम् तु तेषामुक्तौ दोष एव। तदङ्गत्वे विप्रलम्भशृङ्गाराङ्गत्वे सम्भवत्यपि मरणोपन्यासो न ज्यायान् नोचितः।

आश्रयस्यालम्बनस्य विच्छेदे नाशे सति, रसस्य अत्यन्तमेव विच्छेदो भवेदेव। तथाविधे विषये मरणवर्णने क्रियमाणे शृङ्गारस्य विच्छेदेऽपि शोकस्थायिभावाभिव्यक्तस्य करुणस्य परिपोषो भविष्यतीति वक्तुमपि न युक्तम्। करुणस्याप्रकृतत्वात् शृङ्गारस्य च विच्छेदात्। यत्र तु काव्ये करुणरसस्य काव्यार्थत्वेन प्राधान्यं, तत्र मरणवर्णने दोषो नास्ति। शृङ्गारेऽपि वर्णितस्य मरणस्य अचिरेणैव केनाप्यदृष्टेन पुनरुज्जीवनं सम्भवति, तादृशस्थले कदाचिदुपनिबन्धनं तस्य नात्यन्तविरोधाय कल्पते। पुनरुज्जीवनं दीर्घकाल-व्यवहितं यदि भवति तदा तस्य शृङ्गाररसस्य यः प्रवाहस्तस्य मध्ये विच्छेद

---

[1] 'न्याय्यः।' च

तत्र लब्धप्रतिष्ठे तु विवक्षिते रसे विरोधिरसाङ्गानां बाध्यत्वेनोक्तावदोषो यथा—

काकार्यं शशलक्ष्मणः क च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥

यथा वा—पुण्डरीकस्य महाश्वेतां प्रति प्रवृत्तनिर्भरानुरागस्य द्वितीयमुनिकुमारोपदेशवर्णने । स्वाभाविक्यामङ्गभावप्राप्तौ अदोषो यथा—

---

उज्जीवनी ।

एव भवेदिति रसनिबन्धनमेव प्रधानं मन्यमानेन काव्यकर्त्रा एवंविधस्येतिवृत्तस्य उपनिबन्धनं परिहर्तव्यमेव परिहरणीयमेव ॥

वक्तृतात्पर्यविषयीभूते रसे परिपोषं प्राप्ते सति तत्र विरोधिरसानां यान्यङ्गानि तेषां बाध्यत्वेन सन्निवेशे दोषाभावमुदाहरति—यथेति । क्वेति । विक्रमोर्वशीये चतुर्थेऽङ्के उर्वशीं दृष्ट्वा पुरूरवस इदं वचनम् । अकार्यं मुनिकन्यायां आसक्तिरूपं क, शशलक्ष्मणश्चन्द्रस्य कुलं च क ? अत्र शान्तरसव्यभिचारिणो वितर्कस्य प्रतीतिः । सा अतिशयितरूपलावण्या उर्वशी, भूयोऽपि पुनरपि, दृश्येत दृष्टिगोचरा भवेत् । अत्र शृङ्गारसञ्चारिणा औत्सुक्येन वितर्को बाध्यते । नः अस्माकं श्रुतं शास्त्रलक्षणं, दोषाणां प्रमादादीनां, प्रशमायोपशमनाय । अत्र शान्तसञ्चारिणा मत्या शृङ्गारसञ्चार्यौत्सुक्यं बाध्यते । अहो! आश्चर्यं ! तस्या उर्वश्या मुखं वदनं, कोपेऽपि कान्तमनोज्ञम् । स्मरणेनात्र मतेर्बाधनम् । अपकल्मषाः अपगतं कल्मषं पापकर्म येभ्यस्तादृशाः, कृतधियः पण्डिताः किं वक्ष्यन्ति । अत्र शङ्कया शान्तव्यभिचारिण्या स्मृतिर्बाध्यते । सा उर्वशी स्वप्नेऽपि दुर्लभा दुष्प्रापा । दैन्येन शङ्काया बाधः । हे चेतः । स्वास्थ्यं स्वस्थतां, उपैहि प्राप्नुहि । अत्र धृत्या दैन्यस्य बाधः । कः खलु धन्यो युवा तरुणः पास्यति । अत्र शृङ्गारसञ्चारिण्या चिन्तया, शान्तरससञ्चारिण्या धृतेर्बाधः । अत्र, उत्तरोत्तरसञ्चारिणा पूर्वपूर्वस्य बाध्यत्वेनोपवर्णनात् विरुद्धरसाङ्गानामुक्तिर्न दोषमावहति ।

उदाहरणान्तरमाह— यथावेति । कादम्बर्यां पुण्डरीकस्य महाश्वेतां प्रति

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ।। इत्यादौ ।
समारोपितायामप्यविरोधो यथा—पाण्डुक्षाममित्यादौ ।
यथा वा—"कोपात् कोमललोलबाहुलतिकापाशेन" इत्यादौ ।

---

उज्जीवनी ।

प्रवृत्तो निर्भरो गाढोऽनुरागः, द्वितीयमुनिकुमारकस्य कपिञ्जलस्योपदेशः, तस्य वर्णने कपिञ्जलकर्तृकेनोपदेशवचनेन प्रतीतानां, शृङ्गाररसविरोधिशान्तरसस्याङ्गभूतानां निर्वेदादीनां बाध्यत्वेनोपवर्णनाद् अनुरागस्य दार्ढ्यमेवेति न दोषः ।

स्वाभाविक्यां स्वभावत एव विरोधिरसाङ्गानां प्रकृतरसाङ्गभावो यत्र भवति, तादृशमुदाहरति—भ्रमिमिति । द्वितीयोद्द्योते व्याख्यातमिदं पद्यम् । अत्र विप्रलम्भशृङ्गाररसविरोधिनः करुणस्याङ्गानां भ्रम्यादीनां स्वभावतो विप्रलम्भशृङ्गाराङ्गभावं प्राप्तानामुक्तिरपि न दोषाय ।

अङ्गभावप्राप्तावारोपितायामपि विरोधिरसाङ्गानां विरोधाभावमुदाहरति—यथेति । पाण्डुक्षाममिति ।

पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ।।

नायिकां प्रति सख्या उक्तिरियम् । हे सखि! तव वदनं मुखं पाण्डु शुभ्रं, क्षामं कृशं च, हृदयं सरसं सानुरागं, अन्नरससहितं च, वपुश्च शरीरं, च, अलसं आलस्ययुक्तं, पाण्डु वदनं, सरसं हृदयं, अलसं शरीरं च, (कर्तृ) हृदन्तः हृदयमध्ये क्षेत्रियरोगं क्षेत्रान्तरे देहान्तरे चिकित्स्यं देहपर्यन्तस्थायीति यावत् । नितान्तमावेदयति सूचयति । अत्र राजयक्ष्मादिरोगाणां करुणरसानुभावत्वेन विरुद्धत्वेऽपि विप्रलम्भशृङ्गारे समारोपात् अङ्गभावप्राप्त्या तेषामुक्तिर्न दोषाय ।।

वस्तुतस्तु पाण्डुत्वादीनां करुणविप्रलम्भोभयरससाधारणतया विरोधाभावेन अङ्गभावारोपो न सम्भवतीति, उदाहरणान्तरमाह—कोपादिति । व्याख्यातमिदं प्राग् द्वितीयोद्द्योते । अत्र प्रकृतस्य विप्रलम्भशृङ्गारस्य विरोधी

इयं चाङ्गभावप्राप्तिरन्या, यदाधिकारिकत्वात् प्रधान एकस्मिन् वाक्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोर्द्वयोरङ्गभावगमनं तस्यामपि न दोषः।

यथोक्तं 'क्षिप्तो हस्तावलग्न' इत्यादौ। कथं तत्राविरोध इति चेत्, द्वयोरपि तयोरन्योन्यपरत्वेन व्यवस्थानात्।

अन्यपरत्वेऽपि विरोधिनोः कथं विरोधनिवृत्तिरिति चेत्, उच्यते—विधौ विरुद्धसमावेशस्य दुष्टत्वं नानुवादे। यथा—

---

उज्जीवनी।

यो रौद्ररसस्तस्याङ्गानां कोपादीनां विप्रलम्भाङ्गत्वसमारोपादङ्गभावप्राप्त्या निर्दोषत्वम्। अङ्गभावप्राप्तेरन्यां विधामाह—इयमिति! आधिकारित्वात् प्रकृतत्वात्, वाक्यार्थे, वाक्यतात्पर्यविषयीभूते एकस्मिन् प्रधानेऽर्थे, परस्परविरोधिनोः रसयोर्भावयोर्वा, द्वयोरप्यङ्गत्वोक्तिस्तस्यामपि अङ्गभावप्राप्तावपि न दोषः इति इयं चान्या अङ्गभावप्राप्तिस्तृतीया भवति। उदाहरति—यथोक्तमिति। क्षिप्त इति।

> क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
> गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
> आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
> कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥

अमरुकशतकस्थमिद पद्यम्। य आर्द्रापराधः आर्द्रः तत्कालकृतः अपराधः यस्य तादृशः कश्चित् कामीव कामुक इव हस्तावलग्नः हस्ते लग्नः। साश्रुनेत्रोत्पलाभिः अश्रुणा सहिते नेत्रोत्पले यासां तादृशीभिः त्रिपुराणां कामिनीभिः क्षिप्तः तिरस्कृतः (प्रक्षिप्तः) प्रसभं बलाद् अंशुकान्तं अंशुकस्य वस्त्रस्य प्रान्तं, आददानः गृह्णन् अभिहतस्ताडितः। तथा केशेषु गृह्णन् अपास्तः दूरीकृतः चरणनिपतितः चरणयोर्निपतितः, सम्भ्रमेण भयेन, नेक्षितः नावलोकितः, आलिङ्गन् अवधूतो, निराकृतश्च सत्रिपुरदाहकालभवः, शाम्भवः शम्भुसम्बन्धी, शराग्निः बाणाग्निः वा युष्माकं दुरितं पापं, दहतु भस्मीकरोतु। अत्र त्रिपुररिपुप्रभावातिशयस्य प्रधानवाक्यार्थस्य परस्परविरोधिनो

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः । इत्यादौ ।

अत्र हि विधिप्रतिषेधयोरनूद्यमानत्वेन समावेशे न विरोधः तथेहापि भविष्यति। श्लोके ह्यस्मिन् ईर्ष्याविप्रलम्भशृङ्गारकरुणवस्तुनोर्न विधीयमानत्वम्। त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वात् तदङ्गत्वेन च तयोर्व्यवस्थानात्।

न च रसेषु विध्यनुवादव्यवहारो नास्तीति शक्यं वक्तुम्; तेषां वाक्यार्थत्वेनाभ्युपगमात्। वाक्यार्थस्य वाच्यस्य च यौ विध्यनुवादौ तौ, तदाक्षिप्तानां रसानां केन वार्येते। यैर्वा साक्षात् काव्यार्थता रसादीनां नाभ्युपगम्यते, तैस्तेषां तन्निमित्तता तावदवश्यमभ्युपगन्तव्या। तथाप्यत्र श्लोके न विरोधः—

---

उज्जीवनी।

शृङ्गारकरुणावङ्गभावं प्राप्ताविति न दोषाय भवतः। तत्राविरोधः विरोधरहितत्वं कथमिति चेत् द्वयोरपि तयोः शृङ्गारकरुणयोःअन्यपरत्वेन प्रधानवाक्यार्थाङ्गत्वेन व्यवस्थानात् व्यवस्थितत्वात्। अन्यपरत्वेऽपि कथं विरोधिनोस्तयोर्विरोधो निवर्तत इति चेदुच्यते—विरुद्धसमावेशस्य विरुद्धयो रसयोरेकत्रोपनिबन्धनस्य, विधौ विधिविषये दुष्टत्वं दोषः। अनुवादे तु उद्देश्यतायां तु न दोषः। उदाहरति—यथेति। एहीति। पञ्चतन्त्रे पद्यमिदं दृश्यते। धनिनो धनिका नराः, एहि आगच्छ, गच्छ, पत, उत्तिष्ठ, वद, मौनं समाचर, इति आशाग्रहग्रस्तैः आशारूपेण ग्रहेण, ग्रस्तैः आक्रान्तैः, अतिथिभिः याचकैः सह क्रीडन्ति।

अत्र क्रीडाङ्गत्वेनोक्तयोः विरुद्धस्वभावयोरपि आगमनगमनयोः, पतनोत्थानयोः, वचनमौनाचरणयोश्च क्रीडातिशयकारित्वात् विरोधो नास्त्येव।

अत्रास्मिन् पद्ये विधिप्रतिषेधयोः 'एहि, गच्छे'त्यादिपदप्रतिपाद्ययोरर्थयोरागमनगमनयोरनूद्यमानत्वेन विधेयतया, प्रधानभूतायाः क्रीडाया उद्देश्यत्वेन समावेशे यथा दोषो नास्ति तथा, इहापि क्षिप्तो हस्तावलग्न' इत्यत्रापि भविष्यति। अस्मिन् पद्ये हि ईर्ष्याविप्रलम्भशृङ्गारस्य करुणस्य च वस्तुनः,

यस्मादनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधीयमानांशाद् भावविशेषप्रतीतिरुत्पद्यते ततश्च न कश्चिद्विरोधः। दृश्यते हि विरुद्धोभयसहकारिणः कारणात् कार्यविशेषोत्पत्तिः॥ विरुद्धफलोत्पादनहेतुत्वं हि युगपदेकस्य कारणस्य विरुद्धं न तु विरुद्धोभयसहकारित्वम्। एवंविधविरुद्धपदार्थविषयः कथमभिनयः प्रयोक्तव्य इति चेत्, अनूद्यमानैवंविधवाच्यविषये या वार्ता सात्रापि भविष्यति। एवं विध्यनुवादनयाश्रयेणात्र श्लोके परिहृतस्तावद्विरोधः।

---

उज्जीवनी

विधीयमानत्वं विधेयत्वं नास्ति। त्रिपुररिपोः शिवस्य यः प्रभावातिशयस्तस्य वाक्यार्थत्वात् तदङ्गत्वेन, ईर्ष्याविप्रलम्भकरुणयोर्व्यवस्थानात् व्यवस्थितेः। विरुद्धयोर्द्वयोर्युगपद् विधीयमानताया एव अनुपपद्यमानत्वात्।

ननु विधीयमानत्वानूद्यमानत्वव्यवहारो वाच्य एव भवति, न तु व्यङ्ग्ये इत्याशङ्काया अयुक्ततामाह—न चेति। रसेषु प्रतीयमानेषु रत्यादिषु विध्यनुवादव्यवहारः उद्देश्यविधेयभावः, नास्तीति वक्तुं न शक्यम्। तत्र हेतुमाह—तेषामिति। तेषां रसादीनामपि वाक्यार्थत्वेन वाक्यजन्यबोधविषयार्थत्वेनाभ्युपगमादङ्गीकारात्। वाक्यार्थस्य वाक्यजन्यप्रतीतिविषयस्य, वाच्यस्य वाक्यार्थस्य च वाक्यालङ्कारे। यौ विध्यनुवादौ विधिरनुवादश्च तावेव, तदाक्षिप्तानां वाक्यार्थाक्षिप्तानां रसानां, निवारयितुं न शक्येते। ये तु रसादीनां रसभावादीनां काव्यार्थत्वं साक्षादव्यवधानेन वा नाभ्युपगम्यते न स्वीक्रियते, तैः, तेषां रसभावादीनां तन्निमित्तता वाच्यार्थभूतविभावादिसहकारित्वं तावदवश्यमङ्गीकरणीयमेव। तथापि निमित्तत्वाङ्गीकारेऽपि, अत्र 'क्षिप्तो हस्तावलग्न' इति श्लोके विरोधो नास्ति। कुत इति चेदुच्यते यस्मादिति। यस्मात् यतः, अनूद्यमानानि उद्देश्यत्वेन विषयीभूतानि यान्यङ्गानि निमित्तानि कारणानि विभावादीनि यस्य तादृशम्। यदुभयरसवस्तु करुणविप्रलम्भोभय रसवत्वात्मकं वस्तु सहकारिकारणं यस्य तादृशात्, विधीयमानांशादृशम्भवशरवह्निकृतदुरितदाहरूपात् भावविशेषप्रतीतिः ईश्वरविषयकरतिरूपस्य भावस्य प्रतीतिर्जायते, ततश्च कश्चिदपि विरोधो नास्ति। विरुद्धोभयसहकारिणः विरुद्धं उभयं सहकारि यस्य तादृशात् कारणात् कार्यविशेषस्योत्पत्ति-

किञ्च नायकस्याभिनन्दनीयोदयस्य कस्यचित् प्रभावातिशयवर्णने तत्प्रतिपक्षाणां यः करुणो रसः स परीक्षकाणां न वैक्लव्यमादधाति, प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यत इत्यतस्तस्य कुण्ठशक्तिकत्वात्तद्विरोधविधायिनो न कश्चिद्दोषः। तस्माद् वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधी यो रसः स रसविरोधीति वक्तुं न्याय्यः, न त्वङ्गभूतस्य कस्यचित्।

अथवा वाक्यार्थीभूतस्यापि कस्यचित् करुणरसविषयस्य तादृशेन शृङ्गार-वस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते। यतः प्रकृति-

---

उज्जीवनी।

दृश्यत एव। शीतस्पर्शवज्जलं, उष्णस्पर्शवत्तेजश्च, परस्परविरुद्धं तथापि तयोरुभयोः सहकारेण, तण्डुलादौ विक्लेदादिः कार्यविशेषो जायत इत्यर्थः। वस्तुतस्तु इदमेव विरुद्धम्। यदेकस्य कारणस्य युगपदेकस्मिन्नेव क्षणे विरुद्धा-नेककार्योत्पादनहेतुत्वम्। न तु विरुद्धयोरुभयोः सहकारित्वम्। नन्वस्तु विरुद्धाभ्यामुभाभ्यां कारणाभ्यां कार्यस्यैकस्योत्पत्तिः, तथापि विरुद्धपदार्थ-विषयोऽभिनयः कथं प्रयोक्तुं शक्यते इति चेत्, अनूद्यमानस्यैवंविधस्य "एहि, गच्छे" त्यादि वाक्यजन्यबोधविषयस्यागमनगमनरूपस्य वाच्यस्य विषये या वार्ता प्रवृत्तिः सा अत्रापि 'क्षिप्त' इत्यत्रापि भविष्यति। एवं पूर्वोक्तप्रकारेण, विध्यनुवादनयमाश्रित्य, अत्र श्लोके "क्षिप्तो हस्तावलग्न" इत्यत्र विरोधः परिहृतो भवति।

प्रकारान्तरेणापि रसविरोधपरिहारं प्रदर्शयितुमाह—किञ्चेति। अभिनन्दनीयोदयस्य अभिनन्दनीयः अनुमोदनीयः उदय उत्कर्षो यस्य तादृशस्य, कस्यचिन्नायकस्य, प्रभावातिशयवर्णनं वीररसानुभावादीनां वर्णने प्रस्तुते सति तत्प्रतिपक्षाणां तद्विरोधिनां प्रतिनायकानां यः वर्ण्यमानः करुणो रस आस्वाद-विषयः शोकाख्यः स्थायी स परीक्षकाणां विवेकवतां सहृदयानां वैक्लव्यमरुचि न आदधाति न करोति। प्रत्युत तद्विपरीततया प्रीत्यतिशयनिमित्ततां प्रीत्यतिशयस्यानन्दातिरेकस्य, निमित्ततां कारणत्वं प्रतिपद्यते प्राप्नोति। इत्यतः इति हेतोः, कुण्ठशक्तिकत्वात् कुण्ठा प्रतिरुद्धा शक्तिर्यस्य तादृशस्य भावात्। तस्य करुणस्य, तद्विरोधविधायिनः तस्य प्रधानभूतस्य वीरस्य विरोधं कुर्वतः, कश्चिदपि दोषो नास्ति। पर्यवसितमाह—तस्मादिति। तस्मात् उक्ताद् हेतोः

मधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः स्मर्यमाणैः विलासै-रधिकतरं शोकावेगमुपजनयन्ति । यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ इत्यादौ ।

तदत्र त्रिपुरयुवतीनां शाम्भवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति स्म तथा व्याहृतवानित्यनेनापि प्रकारेणास्त्येव निर्विरोधत्वम् । तस्माद् यथा यथा निरूप्यते तथा तथात्र दोषाभावः ।

---

उज्जीवनी ।

वाक्यार्थीभूतस्य प्रधानतया वाक्यजन्यबोधविषयस्य रसस्य भावस्य वा यो विरोधी स रसविरोधीति वक्तुमुचितम् । अङ्गभूतस्य कस्यचिद् यो विरोधी स तु विरोधीति वक्तुं न युक्तम् ॥

'क्षिप्तो हस्तावलग्न' इत्यत्र प्रकारान्तरेणापि विरोधपरिहारमाह—अथवेति । वाक्यार्थीभूतस्यापि प्रधानवाक्यार्थस्यापि करुणरसविषयस्य कस्यचिद् वस्तुनः, तादृशेन वाक्यार्थीभूतेनैव शृङ्गारवस्तुना सह भङ्गिविशेषाश्रयेण विच्छित्तिविशेषमाश्रित्य संयोजनं वर्णनं रसस्य परिपोषायैव जायते, रसपोषं जनयत्येवेति यावत् । तत्र कारणम् प्रदर्शयति—यत इति । यतः यस्मात् कारणात् प्रकृतिमधुराः प्रकृत्या स्वत एवाह्लादकाश्चित्तद्रुतिहेतवः पदार्थाः, शोचनीयतां शोच्यतां प्राप्ताः, प्रागवस्थाभाविभिः पूर्वानुभूतैः, स्मर्यमाणैः स्मृतिविषयीभवद्भिश्च विलासैः सहकारिभिः, अधिकतरमत्यन्त-मधिकं शोकावेशं उपजनयन्ति । उदाहरति—यथेति । अयमिति । महाभारते स्त्रीपर्वणि चतुर्विंशेऽध्याये रणभूमिपतितं भूरिश्रवसश्छिन्नं हस्तमादाय तद्वधूप्रलापोक्तिरियम् । अयं इदानीं पुरो भूमौ निपतितो दृश्यमान एतादृशीं दुर-वस्थां प्राप्तः स पूर्वानुभूतरशनोत्कर्षणादिस्मृतिविषयः करः हस्तः, रशनोत्कर्षी रशनायाः काञ्च्या आकर्षकः, पीनयोः स्तनयोः विमर्दकारी, नाभि ऊरू, जघनं च स्प्रष्टुं शीलमस्येति तादृशो भवति । अत्र नायिकाविषयः नायकाश्रयः शृङ्गारः स्मृतिविषयः वाक्यार्थस्यैव करुणरसस्य पोषक एव भवति । तत् तस्मात्, अत्र 'क्षिप्तो हस्तावलग्न' इत्यादौ त्रिपुरस्त्रीणां शाम्भवः, शराग्निः बाणाग्निः आर्द्रापराधः सद्य एव कृतापराधः, कामी कामुको यथा व्यवहरति

इत्थं च —

> क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
> पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ॥
> भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
> दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

इत्येवमादीनां सर्वेषामेव निर्विरोधत्वमवगन्तव्यम् ॥

एवं तावद्रसादीनां विरोधिरसादिभिः समावेशासमावेशयोर्विषयविभागो दर्शितः ।

इदानीं तेषामेकप्रबन्धनिवेशने न्याय्यो यः क्रमस्तं प्रतिपादयितुमुच्यते—

---

उज्जीवनी ।

स्म प्रावर्तत, तथा तेन प्रकारेण व्यवहृतवानिति अनेनापि प्रकारेण भङ्गया प्रतिपादनेन निर्विरोधत्वं अस्त्येव शृङ्गारकरुणयोर्विरोधो नास्त्येवेत्यर्थः । तस्मात् यथा यथा निरूप्यते निरूपणे भङ्गिभेदा आश्रीयन्ते तथा तथा अत्र दोषाभाव उपपादयितुं शक्यते । इत्थं चेति । क्रामन्त्य इति । राजानं प्रति कवेरुक्तिरियम् । राजन् ! अधुना इदानीं त्वद्वैरिनार्यः तव शत्रुस्त्रियः, क्षतकोमलाङ्गुलिगलद्रक्तैः क्षताभ्यो विद्धाभ्यः, कोमलाङ्गुलिभ्यः गलद्रक्तं येषु तादृशैः, पातितयावकैः इव पातितः दत्तः यावकः येषु तादृशैरिव, पादैश्चरणैः, सदर्भाः सदर्भाङ्कुराः स्थलीः प्रदेशान्, क्रामन्त्यः अतिक्रामन्त्यः, गलद्बाष्पाम्बुधौताननाः गलता बाष्पाम्बुना अश्रुणा धौतं क्षालितं आननं यासां तादृशाः, भीता भययुक्ताः, भर्तृकरावलम्बितकराः भर्तुः पत्युः, करेण हस्तेन, अवलम्बितः करो यासां तादृश्यः । अत एव पुनरपि भूयोऽपि, उद्यद्विवाहाः उद्यन् जायमानः विवाहः यासां तादृश्य इव । दावाग्निं वनवह्निं विवाहाग्निं च परितः भ्रमन्ति परिक्रामन्ति । अत्र राजविषयरतिभावः प्रधानम् । करुणविप्रलम्भयोस्तु तदङ्गभावेन विरोधपरिहारः । एवमुक्तप्रकारेण, रसादीनां रसभावादीनां, विरोधिरसादिविरुद्धैः रसैर्भावैर्वा समावेशासमावेशयोः यत्र समावेशो युक्तः, यत्रानुचित इति विषयविभागः दर्शितः प्रदर्शितः ॥

**प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।**
**एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता ॥ २१ ॥**

प्रबन्धेषु महाकाव्यादिषु नाटकादिषु विप्रकीर्णतयाङ्गाङ्गिभावेन बहवो रसा उपनिबध्यन्त इत्यत्र प्रसिद्धौ सत्यामपि यः प्रबन्धानां छायातिशययोग-मिच्छति तेन तेषां रसानामन्यतमः कश्चिद्विवक्षितो रसोऽङ्गित्वेन विनिवेशयि-तव्य इत्ययं युक्ततरो मार्गः ।

ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु सत्सु कथमेकस्याङ्गिता न विरुध्यत इत्याशङ्क्येदमुच्यते—

---

उज्जीवनी

विरोधिनां रसादीनां एकस्मिन् प्रबन्धे निवेशनस्य क्रममाह—इदानी-मिति । इदानीं रसादीनां मिथो विरोधस्य तत्परिहारक्रमस्य च निरूपणानन्तरं तेषां रसभावादीनां एकस्मिन् प्रबन्धे निवेशने न्याय्य उचितः यः क्रमस्तं प्रतिपादयितुं उच्यते—प्रसिद्धेऽपीति । प्रबन्धानां काव्यनाटकादीनां नानारसनिबन्धने नानारसानां बहूनां रसादीनां समावेशने प्रसिद्धेऽपि, तेषां काव्यनाटकादीनां उत्कर्षं प्रकर्षं, इच्छताभिलषता कविना एको रसोऽङ्गीकर्तव्यः अङ्गित्वेनैको रसः कल्पनीयः तदेवाह—प्रबन्धेष्विति । प्रबन्धेषु महाकाव्येषु, नाटकादिषु वा विप्रकीर्णतया परितो विकीर्णत्वेन, बहवः अनेके रसाः शृङ्गारादयः । अङ्गाङ्गिभावेन उपनिबध्यन्त इति प्रसिद्धौ सत्यामपि प्रसिद्धे, यः कविः प्रबन्धानां काव्यनाटकादीनां छायातिशययोगं शोभातिशयस्य योगं, इच्छति अभिलषति । तेन कविना तेषां रसानां शृङ्गारादीनाम् । अन्यतमो बहुष्वेकः, विवक्षितः वक्तृतात्पर्यविषयः, कश्चिदेको रसः अङ्गित्वेन प्रधानत्वेन, निवेशयितव्यः विधातव्य इत्ययं मार्ग एवात्यन्तं युक्तः ।

सत्सु बहुषु रसेषु एकस्याङ्गित्वे विरोधमाशङ्क्य परिहरति नन्विति । बहुषु रसान्तरेषु अन्येषु रसेषु प्राप्तपरिपोषेषु परिपोषं प्राप्तवत्सु, एकस्य रसस्य, अङ्गित्वं प्राधान्यं कथं न विरुध्यत इत्याशङ्क्य तत्परिहाराय इदमुच्यत

रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः ।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासितः ॥ २२ ॥

प्रबन्धेषु प्रथमतरं प्रस्तुतः सन् पुनरनुसन्धीयमानत्वेन स्थायी यो रसस्तस्य सकलप्रबन्धव्यापिनो रसान्तरैरन्तरालवर्तिभिः समावेशो यः स नाङ्गितामुपहन्ति ।

एतदेवोपपादयितुमुच्यते —

कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते ।
तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥ २३ ॥

सन्ध्यादिमयस्य प्रबन्धशरीरस्य यथा कार्यमेकमनुयायि व्यापकं कल्प्यते, न च कार्यान्तरैर्न सङ्कीर्यते, न च तैः सङ्कीर्यमाणस्यापि तस्य प्राधान्यमपचीयते, तथैव रसस्याप्येकस्य सन्निवेशे क्रियमाणे विरोधो न कश्चित् । प्रत्युत प्रत्युदितविवेकानां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्तते ।

---

उज्जीवनी ।

इत्याह —रसान्तरेति । प्रस्तुतस्य प्राधान्येन विवर्णयिषितस्य रसस्य शृङ्गारादेः रसान्तरसमावेशः रसान्तराणामन्येषां रसानां समावेशः निबन्धनम् । स समावेशः स्थायित्वेनावभासितः भासमानस्य अस्य प्रस्तुतरसस्य, अङ्गितामङ्गित्वं नोपहन्ति न निरुणद्धि । तदेवाह प्रबन्धेष्विति । प्रबन्धेषु महाकाव्यनाटकादिषु प्रथमतरमादावेव, प्रस्तुतः सन् वर्णनविषयीभूतः सन्, पुनःपुनरनुसन्धीयमानत्वेन मुहुर्मुहुरनुसन्धीयमानविषयत्वेन, स्थायी स्थिरतरो यो रसस्तस्य सकलबन्धव्यापिनः समस्तमपि प्रबन्धं व्याप्यावतिष्ठमानस्य, अन्तरालवर्तिभिः मध्यवर्तिभिः, रसान्तरैर्यः समावेशः, स प्रस्तुतरसस्याङ्गित्वं नोपहन्ति । एतदिति । एतदेवोक्तमेव । उपपादयितुं विशदीकर्तुं उच्यते कथ्यते । कार्यमिति । प्रबन्धस्य काव्यनाटकादेः, व्यापि सर्वप्रबन्धव्यापनशीलं, एकं कार्यं, कथावस्तु, विधीयते क्रियते । तथा रसस्यापि, व्यापकस्य विधौ, विरोधो न विद्यते नास्तीत्यर्थः । सन्ध्यादीति । सन्ध्यादिमयस्य, मुखादिपञ्चसन्धिसमन्वितस्य, प्रबन्धशरीरस्य प्रबन्धात्मकशरीरस्य, कार्यमेकम् । व्यापकं व्याप्यावस्थितं

ननु येषां रसानां परस्परविरोधः, यथा—वीरशृङ्गारयोः, शृङ्गार-हास्ययोः, रौद्रशृङ्गारयोः, वीराद्भुतयोः, वीररौद्रयोः, रौद्रकरुणयोः, शृङ्गाराद्भुतयोर्वा तत्र भवत्वङ्गाङ्गिभावः। तेषां तु स कथं भवेद्, येषां परस्परं बाध्यबाधकभावः। यथा—शृङ्गारबीभत्सयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तशृङ्गारयोः वा इत्याशङ्क्येदमुच्यते—

**अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे ।**
**परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥ २४ ॥**

अङ्गिनि रसान्तरे शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति अविरोधी विरोधी वा रसः परिपोषं न नेतव्यः। तत्राविरोधिनो रसस्याङ्गिरसापेक्षयात्यन्त-माधिक्यं न कर्तव्यमित्ययं प्रथमः परिपोषपरिहारः। उत्कर्षसाम्येऽपि तयोर्विरोधासम्भवात्।

---

उज्जीवनी।

यथा कल्प्यते, तच्च कार्यान्तरैः, अन्यैः कार्यैः, न सङ्कीर्यते न सङ्कीर्णो भवति, तैः कार्यान्तरैः सङ्कीर्यमाणस्यापि तस्य कार्यस्य प्रस्तुतस्य, प्राधान्यं नापचीयते न क्षीयते, तथैव तत्सादृश्येनैव, एकस्य रसस्य, रसान्तरैः सङ्कीर्यमाणस्यापि, सन्निवेशे क्रियमाणे न कश्चिद् विरोधः। प्रत्युत, प्रत्युदित-विवेकानां विवेकशालिनां, अनुसन्धानवतां स्मृतिमतां, सचेतसां सहृदयानाम्। तथाविधे विषये प्रह्लादातिशयो लोकोत्तरचमत्कारातिशयः, प्रवर्तते सहृदया-नामानन्दातिशयो जायत इति यावत्।

विरुद्धयोरपि रसयोः परस्परविरोधेन सन्निवेशप्रकारं प्रदर्शयितुमाह—नन्विति। वीरशृङ्गारयोः, शृङ्गारहास्ययोः रौद्रशृङ्गारयोः, वीराद्भुतयोः, वीररौद्रयोः, रौद्रकरुणयोः, शृङ्गाराद्भुतयोर्वा परस्परं विरोधरहितयोः समावेशे अङ्गाङ्गिभावो यद्यपि सुवचस्तथापि येषां परस्परं बाध्यबाधक-रूपोऽत्यन्तविरोधस्तेषां तु रसानां कथमविरोधः सम्पादयितुं शक्यते। यथा—शृङ्गारबीभत्सयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तशृङ्गारयोर्वा इत्याशङ्कायां समाधीयते—अविरोधीति। रसान्तरे अन्यस्मिन् रसे अङ्गिनि प्रधाने सति, अविरोधी मिथो विरोधशून्यः, विरोधी वा रसः, परिपोषं पुष्टिं,

यथा—एक्कंतो रुअइ पिआ अण्णत्तो समरतूरणिग्घोसो ।
णेहेण रणरसेण अ भडस्स दोलाइअं हिअअम् ॥

यथा वा—

कण्ठाच्छित्वाक्षमालावलयमिह करे हारमावर्तयन्ती
कृत्वा पर्यङ्कबन्धं विषधरपतिना मेखलाया गुणेन ।
मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा
देवी सन्ध्याभ्यसूयाहसितपशुपतिस्तत्र दृष्टा तु वोऽव्यात् ॥

इत्यत्र ॥

---

उज्जीवनी ।

न नेतव्यः न प्रापणीयः, तथा चेत् अविरोधिता विरोधपरिहारः स्यादेव । तदेवाह—अङ्गिनि रसान्तरे, शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति, अविरोधी विरोधी वा रसः, परिपोषं न नेतव्यः इति । तत्र परिपोषप्रकारेषु, अविरुद्धस्य रसस्य, अङ्गिरसापेक्षया, अत्यन्तमाधिक्यं न करणीयमित्ययं परिपोषस्य परिहारः प्रथमः । एवं कृते तयोरुत्कर्षस्य समानत्वेऽपि विरोधो न सम्भवति । यथेति । एक्कंतो इति ।

एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥

अत्र प्रिया रोदितीत्यनेन रतेरुत्कर्षः । अन्यतः समरतूर्यनिर्घोषश्रवणेन भटस्य उत्साहोत्कर्षः अत्राविरुद्धयोः शृङ्गारवीरयोः अन्यतरस्याधिक्याकरणात् तयोः उत्कर्षस्य समत्वात् विरोधो न सम्भवति ।

उदाहरणान्तरमाह—कण्ठादिति । पार्वतीस्तुतिपरमिदं पद्यम् । कण्ठात् गलात्, हारं मालां, छित्वा करे, अक्षमालावलयमिव, जपमालावलयमिव, आवर्तयन्ती चालयन्ती, मेखलायाः काञ्च्या गुणेन रज्ज्वा, एव विषधरपतिना सर्पराजेन, पर्यङ्कबन्धं आसनबन्धविशेषं कृत्वा, मिथ्या व्याजेन, मन्त्रस्याभिजापेन जपेन, स्फुरन् चलन्, योऽधरपुटः तेन व्यञ्जितः प्रकाशितः, अव्यक्तः हासः यस्यास्तादृशी, सन्ध्यायां सपत्न्यां अभ्यसूयया हसितः परिहसितः पशु-

अङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्येणानिवेशनं, निवेशने वा क्षिप्रमेवाङ्गिरसव्यभिचार्यनुवृत्तिरिति द्वितीयः ।

अङ्गत्वेन पुनः पुनः प्रत्यवेक्षा परिपोषं नीयमानस्याप्यङ्गभूतस्य रसस्येति तृतीयः । अनया दिशान्येऽपि उत्प्रेक्षणीयाः । विरोधिनस्तु रसस्याङ्गिरसापेक्षया कस्यचित् न्यूनता सम्पादनीया । परिपोषरहितस्य रसस्य कथं रसत्वमिति चेद्—उक्तमत्राङ्गाङ्गिरसापेक्षयेति । अङ्गिनो हि रसस्य यावान् परिपोषः तावांस्तस्य न कर्तव्यः, स्वतस्तु सम्भवी परिपोषः केन वार्यते ।

---

उज्जीवनी ।

पतिःशिवः यया तादृशी, देवी पार्वती, तत्र, यत्र शिवः सन्ध्यामुपास्त तस्मिन् देशे, दृष्टा अवलोकिता, वो युष्मान्, अव्यात् पालयतु ॥

अत्राविरुद्धयोर्हास्यशृङ्गारयोः, उत्कर्षस्य साम्येनैकत्र वर्णनेऽपि विरोधो न सम्भवति ।

अङ्गिरसविरुद्धानां अङ्गिनो रसस्य ये विरोधिनस्तेषां व्यभिचारिणां सञ्चारिभावानां, प्राचुर्येण बाहुल्येन, अनिवेशनं निवेशाभावः, कार्यः । निवेशनेऽपि वा, क्षिप्रमेव शीघ्रमेव, अङ्गिनो रसस्य व्यभिचारिणां भावानामनुवृत्तिः अनुवर्तनमिति द्वितीयः परिपोषपरिहारः ॥

परिपोषं पुष्टिं, नीयमानस्यापि प्राप्यमाणस्यापि अङ्गभूतस्य रसस्य, अङ्गत्वेन पुनः पुनः मुहुर्मुहुः प्रत्यवेक्षा परीक्षणं कर्तव्यमिति तृतीयः परिपोषपरिहारः । अनया दिशा अनेन मार्गेण, अन्येऽपि परिपोषपरिहारप्रकाराः उत्प्रेक्षणीया अवगन्तव्याः । एतावता अविरोधिनो रसयोरेकत्र समावेशेऽपि प्रधानेतरस्य रसस्य परिपोषपरिहारेणाविरोधमुपपाद्य, विरोधिनो रसयोरेकत्र निबन्धने विरोधपरिहारप्रकारमाह—विरोधिनस्त्विति । यो विरोधी रसस्तस्य कस्यचिद् अङ्गिरसापेक्षया न्यूनता सम्पादनीया । यथा शान्ते रसेऽङ्गिनि सति शृङ्गारस्य न्यूनता, शृङ्गारे रसेऽङ्गिनि शान्तस्य वा न्यूनता सम्पादनीया । विरुद्धोभयरससमावेशस्थले, अङ्गिरसापेक्षयान्यस्य रसस्य परिपोषपरिहार एवाभिलषितः । अङ्गिनः प्रधानस्य हि रसस्य यावान् यादृशः परिपोषः,

एतच्चापेक्षिकं प्रकर्षयोगित्वमेकस्य रसस्य बहुरसेषु प्रबन्धेषु रसाना-मङ्गाङ्गिभावमभ्युपगच्छताप्यशक्यप्रतिक्षेपमित्यनेन प्रकारेणाविरोधिनां च रसानामङ्गाङ्गिभावेन समावेशे प्रबन्धेषु स्यादविरोधः । एतच्च सर्वं येषां रसो रसान्तरस्य व्यभिचारी भवति इति दर्शनं तन्मतेनोच्यते । मतान्तरेऽपि रसानां स्थायिनो भावा उपचाराद् रसशब्देनोक्तास्तेषामङ्गत्वं निर्विरोधमेव ॥

एवमविरोधिनां विरोधिनां च प्रबन्धस्थेनाङ्गिना रसेन समावेशे साधारण-मविरोधोपायं प्रतिपाद्येदानीं विरोधिविषयमेव तं प्रतिपादयितुमिदमुच्यते—

**विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।**
**स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ २५ ॥**

ऐकाधिकरण्यविरोधी, नैरन्तर्यविरोधी चेति द्विविधो विरोधी, तत्र प्रबन्धस्थेन स्थायिना अङ्गिना रसेनौचित्यापेक्षया विरुद्धैकाश्रयो यो

---

उज्जीवनी ।

तावान् तादृशः परिपोषः अङ्गस्य रसस्य न कर्तव्यः । स्वतः सम्भवी परिपोषस्तु केन वार्यते ? वारयितुं न शक्यमित्यर्थः । बहुरसेषु अनेकरसेषु प्रबन्धेषु, रसानामङ्गाङ्गिभावं यो नाभ्युपगच्छति तेनापि अङ्गरसापेक्षया एकस्य प्रकर्षयोगित्वं प्रकर्षवत्त्वं प्रतिक्षेप्तुं न शक्यमित्यतः **अनेन प्रकारेण,** अविरोधिनां विरोधिनां वा रसानामङ्गाङ्गिभावेन प्रबन्धेषु समावेशे निबन्धने विरोधो न भवेत् । एतत् पूर्वमुक्तं, सर्वं च सर्वमपि, येषां मते नानारससमवधाने कश्चिद् रसो रसान्तरस्य व्यभिचारिभावो भवतीति दर्शनं तन्मतानुसारेणेति ज्ञातव्यम् । मतान्तरेतु अङ्गरसानां व्यभिचारित्वाभ्युप-गन्तृमते तु, रसानामङ्गभूतानां स्थायिनो ये भावास्त एव रसशब्देन लक्ष्यन्त इति तेषां स्थायिभावत्वं प्राप्तानाम् अङ्गत्वं निर्विरोधमेव, अङ्गत्वे विरोधो नास्त्येवेति यावत् ॥

एवमुक्तेन प्रकारेण प्रबन्धस्थेन एकप्रबन्धसन्निवेशितेन अङ्गिना प्रधानेन रसेन सह, अविरोधिनां विरोधिनां च रसानां समावेशे विरोध्यविरोध्युभय-रससाधारणो विरोधपरिहारोपायः प्रतिपादितः । इदानीं विरोधिनामेव रसानामविरोधोपायप्रतिपादनायेदमुच्यते—विरुद्धेति ।

विरोधी यथा वीरेण भयानकः स विभिन्नाश्रयः कार्यः। तस्य वीरस्य यः आश्रयः कथानायकः, तद्विपक्षविषये सन्निवेशयितव्यः।

तथा सति च तस्य विरोधिनोऽपि यः परिपोषः स निर्दोषः। विपक्षविषये हि भयातिशयवर्णने नायकस्य नयपराक्रमादिसम्पत् सुतरामुद्योतिता भवति। एतच्च मदीयेऽर्जुनचरितेऽर्जुनस्य पातालावतरणप्रसङ्गे वैशद्येन प्रदर्शितम्।

---

उज्जीवनी।

यस्तु आस्वाद्यमानः स्थायी विरुद्धैकाश्रयः विरुद्ध एक आश्रयो यस्य तादृशः स स्थायी विभिन्नाश्रयः विभिन्नः आश्रयः यस्य तथाविधः कार्यः करणीयः। अतस्तस्य स्थायिनः पोषेऽपि परिपोषवर्णनेऽपि, अदोषता स्यात् दोषः परिहृतो भवति। विशदीकरोति विरुद्ध इति। विरोधो द्विविधः—ऐकाधिकरण्यविरोधः, एकाधिकरणवृत्तित्वविरोध, एकः, नैरन्तर्यस्य अव्यवधानतायाः विरोधो द्वितीयः। प्रबन्धस्थेन प्रबन्धस्थितेन, स्थायिना स्थिरतरेण, अङ्गिना प्रधानेन, रसेनास्वाद्यमानेन रत्यादिना, औचित्यापेक्षया, विरुद्धैकाश्रयः विरुद्ध एकस्मिन्नाश्रये स्थातुमनुचितत्वात् यो विरोधी विरोधवान्, स आश्रयभेदेन सन्निवेशयितव्यः। यथा—वीरेण रसेन विरोधी भयानको रसः, स विभिन्नाश्रयः कर्तव्य इत्यर्थः। तस्य वीरस्य य आश्रयः कथानायकः, तद्विपक्षविषये भयानकः सन्निवेशयितव्यः। तथा सति भयानकस्य प्रतिनायके निवेशने सति वीररसविरोधिनोऽपि तस्य भयानकस्य यः परिपोषः स निर्दोषः, हि यस्मात् विपक्षविषये भयातिशयस्य वर्णने क्रियमाणे, नायकस्य नयपराक्रमादिसम्पत्, सुतरामत्यन्तमुद्द्योतिता प्रकटीकृता भवति। अस्योदाहरणं तु आनन्दवर्धनाचार्यविरचिते अर्जुनचरिते, अर्जुनस्य पातालावतरणवर्णनावसरे वैशद्येन प्रदर्शितम्।

> समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो
> महानुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम्॥

अत्र वीररसस्थायिन उत्साहस्य अर्जुन आश्रयः। भयानकरसस्यायिनो भयस्य तु तद्विरोधिनोऽसुराश्चाश्रयतां गता इति विरोधपरिहारः।

एवमैकाधिकरण्यविरोधिन: प्रबन्धस्थेन स्थायिना रसेनाङ्गभावगमने निर्विरोधत्वं यथा तथा प्रदर्शितम्। द्वितीयस्य तु तत् प्रतिपादयितुमुच्यते—

**एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।**
**रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा॥ २६॥**

यः पुनरेकाधिकरणत्वे निर्विरोधो नैरन्तर्ये तु विरोधी स रसान्तरव्यवधानेन प्रबन्धे निवेशयितव्यः। यथा शान्तशृङ्गारौ नागानन्दे निवेशितौ॥

शान्तश्च तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो रसः प्रतीयत एव। तथा चोक्तम्।

---

उज्जीवनी

एवं प्रबन्धस्थितेन स्थायिना रसेनाङ्गिना रसेन ऐकाधिकरण्यविरोधिन एकाधिकरणवृत्तित्वरूपविरोधवतः अङ्गभावगमने अङ्गत्वप्रापणे निर्विरोधत्वं विरोधाभावो यथा भवेत् तथा प्रदर्शितम्। द्वितीयस्य तु नैरन्तर्यविरोधिनस्तु तद् विरोधराहित्यं प्रतिपादयितुमाह—एकाश्रयत्व इति। एकाश्रयत्वे एकाधिकरणवृत्तित्वे दैशिकसामानाधिकरण्य इति यावत्। निर्दोषः दोषरहितः, नैरन्तर्ये कालिकसामानाधिकरण्ये, विरोधवान् अव्यवधानेन एककालवृत्तित्व-रूपविरोधमापन्नः व्यङ्ग्यः प्रतीयमानो रसो रत्यादिः सुमेधसा सुहृदयेन रसान्तरव्यवधिना अन्यस्य रसस्य व्यवधानेन कल्पयितव्यः। तदेवाह—य इति। यः पुनः एकाधिकरणत्वे सामानाधिकरण्ये निर्विरोधः विरोधरहितः, नैरन्तर्ये तु अव्यवधानेन निवेशने तु विरोधी, सः प्रबन्धे रसान्तरव्यवधानेन रसान्तरमन्तराकृत्य निवेशयितव्यः। उदाहरति—यथेति। नागानन्दे एकस्मिन् प्रबन्धे शान्तस्य शृङ्गारस्य चान्तरा रसान्तरयोजनेन विरोधः परिहृतो वेदितव्यः। नागानन्दे स्वशरीरमपि परार्थे प्रददद् जीमूतवाहनो नायको धीरशान्तः तस्मिन् शान्तश्च मुख्यो रसः। तद्गतः मलयवत्यालम्बनः शृङ्गारश्च तत्र प्रतीयते। विद्याधरचक्रवर्तिन पतिमवाप्तुकामाया मलयवत्या देवतायतने भगवतीमुपवीणयन्त्याः मधुरां गीतिमाकर्ण्य जीमूतवाहनस्य विस्मयः सञ्जायते। वदति च—'अहो! गीतमहो! वादित्रमि'ति। एवं विस्मयस्थायि भावस्य अद्भुतरसस्य अन्तरानिवेशनेन शान्तशृङ्गारयोः विरोधः परिहृतो भवति।

यच्च काममुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावता सार्वलोकसामान्यमहानुभावश्चित्तवृत्तिविशेषः प्रतिक्षेप्तुं शक्यः । न च वीरे तस्यान्तर्भावः कर्तुं शक्यः । तस्याभिमानमयत्वेन व्यवस्थापनात् । अस्य चाहङ्कारप्रशमैकरूपतया स्थितेः । तयोश्चैवंविधविशेषसद्भावेऽपि यद्यैक्यं परिकल्प्यते तद्वीररौद्रयोरपि तथा प्रसङ्गः । दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहङ्काररहितत्वेन शान्तरसप्रभेदत्वम् ;—

---

## उज्जीवनी ।

तृष्णाक्षयसुखस्य तृष्णायाः क्षयेण यत् सुखं तस्य यः परिपोषः तल्लक्षणस्तद्रूपः शान्तो रसश्च प्रतीयत एव व्यज्यत एव । तथा चोक्तम्—यच्चेति । लोके काममुखं कामरूपस्य पुरुषार्थस्य यच्च सुखं, दिव्यं दिवि स्वर्गे भवं, अग्निहोत्रादिकर्मानुष्ठानेन लभ्यं महत् यच्च सुखं ऐहिकं आमुष्मिकं च सुखम् । एते द्वे अपि सुखे तृष्णाक्षयसुखस्य तृष्णाया रागस्य क्षयेण नाशेन यत् परम सुखं तस्य षोडशीमपि कलां षोडशभागमपि नार्हतः । कर्मचितं कामसुखं पुण्यचितं स्वर्गसुखं च निर्वेदचितात् मोक्षादधिकं न भवतीत्यर्थः । स एव काव्ये नाट्ये चोपनिबध्यमानः शान्तरस इति कथ्यते ।

शङ्कते—यदि नामेति । तस्य शान्तरसस्य सर्वजनानुभवगोचरता सर्वेषामपि जनानां अनुभवविषयत्वं यदि नाम नास्ति, यद्यपि शान्तस्य रसत्वं केचिन्नाभ्युपगच्छन्तीति यावत् । समाधत्ते—नेति । एतावता केषाञ्चिदनभ्युपगममात्रेण, अलोकसामान्यः लोकोत्तरः महानुभवश्च, चित्तवृत्तिविशेषः निर्वेदाख्यः, प्रतिक्षेप्तुं निषेद्धुं न शक्यः । ननु उत्साहस्थायिभावे वीररस एव, तस्य शान्तस्यान्तर्भावोऽस्तु इति चेन्न; तस्य वीरस्य, अभिमानमयत्वेन अहङ्कारात्मकत्वेन व्यवस्थापनात् । अस्य च शान्तस्य च अहङ्कारप्रशमरूपतया तच्छान्तिरूपत्वे स्थितेः व्यवस्थितत्वात् । तयोश्च वीरशान्तयोः, एवंविधविशेषसद्भावेऽपि, अभिमानमयत्वेन शमप्रधानत्वेन च यो विशेषः भेदः तस्य सद्भावेऽपि सत्त्वेऽपि यदि एकत्वं परिकल्प्यते, तत् तर्हि वीररौद्रयोरपि तथा

इतरथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः । तदेवमस्ति शान्तो रसः । तस्य चाविरुद्धरसव्यवधानेन प्रबन्धे विरोधिरससमावेशे सत्यपि निर्विरोधत्वम् । यथा प्रदर्शिते विषये ।

एतदेव स्थिरीकर्तुमिदमुच्यते—

**रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।**
**निवर्तते हि रसयोः समावेशे विरोधिता ॥ २७ ॥**

रसान्तरव्यवहितयोरेकप्रबन्धयोर्विरोधिता निवर्तत इत्यत्र न काचिद्भ्रान्तिः । यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्तते ।

---

## उज्जीवनी

प्रसङ्गः एकत्वप्रसङ्गः । त्रिवर्गसाधनोपायत्वेन तयोः साम्यात् । एवं चेत् दयावीरादीनां, आदिपदेन दानवीरस्य ग्रहणम् । चित्तवृत्तिविशेषाणां, सर्वाकारं सर्वप्रकारेण निरहङ्काररहितत्वेन अहङ्कारशून्यत्वेन शान्तप्रभेदत्वं शान्तरसात्मकत्वं, इतरथा अन्यथा अहङ्कारमयत्वे तु वीररसात्मकत्वं इति एवं व्यवस्थाप्यमाने व्यवस्थाकरणे कश्चिदपि विरोधो नास्तीत्यर्थः । तदेवं उक्तव्यवस्थाकरणेन शान्तो रसोऽस्ति सिध्यति । तस्य च शान्तरसस्य विरोधिरससमावेशे सत्यपि, प्रबन्धे, अविरोधिरसव्यवधानेन अविरुद्धस्य कस्यचिद् रसस्य सन्निकर्तुरिव न्तराले व्यवस्थापनेन निर्विरोधत्वं विरोधपरिहारो भवतीत्यर्थः । यथा—प्रदर्शिते विषये नागानन्दादौ ॥

एतदेव स्थिरीकर्तुं स्थिरीकरणाय इदमुच्यते—रसान्तरेति । एकवाक्यस्थयोरपि एकस्मिन् वाक्ये स्थितयोरपि रसयोः विरुद्धयोर्द्वयो रसयोः, रसान्तरितयोः रसान्तरेण अन्येन केनचिदविरोधिना रसेन अन्तरितयोः समावेशे निबन्धने विरोधिता विरोधो निवर्तते परिहृतो भवति । तदेवाह रसेति । एकप्रबन्धस्थयोरपि एकस्मिन् प्रबन्धे स्थितयोरपि, रसान्तरव्यवहितयोः रसान्तरेण व्यवधानवतोः विरोधिता निवर्तत इत्यत्र न काचिद् भ्रान्तिः नायं भ्रमः किन्तु प्रमैव । हेतुमाह—यस्मादिति । यस्मात् कारणात्, एकवाक्य-

यथा—

भूरेणुदिग्धान् नवपारिजात, मालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्, सुराङ्गनाश्लिष्टभुजान्तरालाः
सशोणितैः क्रव्यभुजां स्फुरद्भिः, पक्षैः खगानामुपवीज्यमानान्
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानांल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥

इत्यादौ । अत्र हि शृङ्गारबीभत्सयोस्तदङ्गयोर्वा वीररसव्यवधानेन समावेशो न विरोधी ।

---

उज्जीवनी ।

स्थयोरपि रसयोः, उक्तया नीत्या पूर्वोपदर्शितनयेन विरुद्धता विरोधो निवर्तते । उदाहरति—यथेति । भूरेणुदिग्धानिति । वीरा युधि पञ्चत्वं गताः शूराः । विमानपर्यङ्कतले विमानमध्यस्थितस्य पर्यङ्कस्य तले निषण्णा आसीनाः तदानीं व्योमन्यवस्थानसमये, ललनाङ्गुलीभिः ललनानां स्वर्वेश्यानां अङ्गुलीभिः निर्दिश्यमानान् प्रदर्श्यमानान्, पतितान् रणभूमौ निपतितान्, स्वदेहान् स्वशरीराणि, कुतूहलाविष्टतया कौतुकावेशेन, अपश्यन् अद्राक्षुः । भूरेणुदिग्धा-नित्यादिपद्यद्वये द्वितीयान्तानि पदानि स्वदेहविशेषणानि । प्रथमान्तानि च वीरविशेषणनि । भूरेणुदिग्धान् भुवो रेणुभिः धूलिभिः, दिग्धान् लुप्तान्, निजान् देहान्, नवानां नूतनानां पारिजातमालानां, रजोभिः परागैः, वासितं सुरभीकृतं बाहुमध्यं उरः येषां तादृशाः वीरा अपश्यन् । ततः सुराङ्गनाश्लिष्ट-भुजान्तरालाः सुराङ्गनाभिर्देवस्त्रीभिः आश्लिष्टं भुजयोरन्तरालं वक्षःस्थलं येषां तादृशाः सन्तस्ते वीराः भुवि शिवाभिः फेरुनारीभिः, परिरभ्यमाणान् आलिङ्ग्यमानान् निजान् देहानपश्यन्नित्यन्वयः । ततश्च सशोणितैः सरुधिरैः, क्रव्यभुजां मांसाशिनां, खगानां गृध्रादिपक्षिणां स्फुरद्भिश्चलद्भिः दक्षैः पतत्रैः, उपवीज्यमानान् देहान्, चन्दनवारिसेकैः चन्दनवारीणां सेको येषु तादृशैः सुगन्धिभिः शोभनगन्धयुक्तैः, कल्पलतादुकूलैः कल्पलतारूपैः पट्टवस्त्रैः, संवीजिताः देवनारीभिः परिचर्यमाणाः वीरा अपश्यन्नित्यन्वयः ।

**विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत् ।**
**विशेषतस्तु शृङ्गारे सुकुमारतमा ह्यसौ ॥ २८ ॥**

यथोक्तलक्षणानुसारेण विरोधाविरोधौ सर्वेषु रसेषु प्रबन्धेऽन्यत्र च निरूपयेत् सहृदयः । विशेषतस्तु शृङ्गारे । स हि रतिपरिपोषात्मकत्वात् रतेश्च स्वल्पेनापि निमित्तेन भङ्गसम्भवात् सुकुमारतमः सर्वेभ्यो रसेभ्यो मनागपि विरोधिसमावेशं न सहते ।

**अवधानातिशयवान् रसे तत्रैव सत्कविः ।**
**भवेत्तस्मिन् प्रमादो हि झटित्येवोपलक्ष्यते ॥ २९ ॥**

---

उज्जीवनी ।

अत्र भूरेणुदिग्धानित्यनेन जुगुप्सास्थायिभावको बीभत्सः, नवपारिजातेत्यनेन शृङ्गारश्च नैरन्तर्ये विरोधिनावित्यतो मध्ये वीररससमावेशेन विरोधरहितौ सञ्जातौ । अत्र अस्मिन् पद्यसमुदाये शृङ्गारबीभत्सयोः शृङ्गारस्य बीभत्सस्य च, तदङ्गयोः शृङ्गारस्य बीभत्सस्य च अङ्गभूतौ यौ व्यभिचारिभावौ तयोर्वा, वीररसव्यवधानेन वीररसेन व्यवहितयोः समावेशः न विरोधी न विरुद्धः ।

विरोधमिति । इत्थं पूर्वोक्तप्रकारेण । सर्वत्र रसयोर्विरोध, अविरोधं, तत्परिहारं च निरूपयेत् । तु किन्तु, शृङ्गारे रसे, विशेषतः विशेषेण, विरोधपरिहारो निरूपणीयः । हि यतः, असौ शृङ्गारः सुकुमारतमः सौकुमार्यवान् ।

तदेवाह—यथोक्तेति । यथोक्तलक्षणानुसारेण पूर्वोक्तप्रकारेण, सर्वेषु रसेषु, शृङ्गारबीभत्सादिषु, विरोधाविरोधौ विरोधमविरोधं च प्रबन्धे, अन्यत्र वाक्ये च सहृदयो निरूपयेत् लक्षयेत् । शृङ्गारे तु विशेषतः । स हि शृङ्गारो हि रतिपरिपोषात्मकत्वात् रतेः परिपोषरूपत्वात्, रतेश्च स्वल्पेनापि अल्पेनापि निमित्तेन कारणेन, भङ्गसम्भवात् भङ्गस्य हानेः सम्भवात् सर्वेभ्यो रसेभ्यः सुकुमारतमः अतिशयितसौकुमार्यः शृङ्गारो रसः विरोधिसमावेशं विरोधिरसस्याक्रमणं मनागपि अल्पमपि न सहते ।

ततः किं कर्तव्यमित्याह—अवधानेति । अतः सत्कविः तत्रैव रसे शृङ्गारे, एव रसे, अवधानातिशयवान् भवेत् अतिशयितमवधानं कुर्यात् । हि यतः,

तत्रैव च रसे सर्वेभ्योऽपि रसेभ्यः सौकुमार्यातिशययोगिनि कविरवधानवान् प्रयत्नवान् स्यात्। तत्र हि प्रमाद्यतस्तस्य सहृदयमध्ये क्षिप्रमेवावज्ञानविषयता भवति। शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात् सर्वरसेभ्यः कमनीयतया प्रधानभूतः।

एवं च सति—

**विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा।**
**तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति॥ ३०॥**

शृङ्गारविरुद्धरसस्पर्शः शृङ्गाराङ्गानां यः स न केवलमविरोधलक्षणयोगे सति न दुष्यति, यावद्विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियमाणो न दुष्यति—

---

उज्जीवनी।

तस्मिन् अतिशयितसौकुमार्यवति शृङ्गारे रसे, प्रमादः अनवधानता, झटित्येव शीघ्रमेव उपलक्ष्यते प्रकटीभवति।

तदेवाह—तत्रैवेति। सर्वेभ्योऽपि रसेभ्यः सौकुमार्यातिशययोगिनि अतिशयितसौकुमार्यवति, तत्रैव च रसे शृङ्गारे कविः अवधानवान् प्रमादराहित्ये प्रयत्नवान् भवेत्। तत्र हि शृङ्गारे रसे हि क्षिप्रमेव अवज्ञानविषयता भवति। स हि कविः अवज्ञानविषयो भवति। निन्दापात्रं भवतीत्यर्थः। तस्य प्राधान्ये हेतुमाह—शृङ्गारेति। शृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात् सार्वलौकिकानुभववेद्यतया सर्वरसेभ्यः सर्वेभ्योऽपि रसेभ्यः कमनीयतया लोकोत्तरानन्दजनकत्वेन प्रधानभूतः। एवं च सति शृङ्गारस्य सर्वरसश्रेष्ठतया। विनेयानिति। विनेयान् उन्मुखीकर्तुं शिष्याणाम् आभिमुख्यसम्पादनार्थं, काव्यशोभार्थमेव वा काव्यस्य शोभातिशयमाधातुं वा, तदङ्गानां शृङ्गाररसाङ्गभूतानां, तद्विरुद्धरसस्पर्शः तस्य शृङ्गारस्य विरुद्धो यो रसः आस्वाद्यमानः स्थायी तस्य स्पर्शः सम्बन्धः न दुष्यति न दोषमावहति।

तदेवोपपादयति—शृङ्गारेति। शृङ्गाराङ्गानां शृङ्गाररसस्य यान्यङ्गानि तेषाम्। शृङ्गारविरुद्धरसस्पर्शः शृङ्गाररसविरुद्धस्य रसस्य संस्पर्शः यः सः

शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशान् गृह्णन्ति। सदाचारोपदेशरूपा हि नाटकादिगोष्ठी विनेयजनहितार्थमेव मुनिभिरवतारिता।

किं च शृङ्गारस्य सकलजनमनोहराभिरामत्वात् तदङ्गसमावेशः काव्ये शोभातिशयं पुष्यतीत्यनेनापि प्रकारेण विरोधिनि रसे शृङ्गाराङ्गसमावेशो न विरोधी। ततश्च—

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥

इत्यादिषु नास्ति रसविरोधदोषः

---

## उज्जीवनी

अविरोधलक्षणयोगे सति केवलं सामानाधिकरण्यविरोधस्य नैरन्तर्यविरोधस्य यः परिहारमार्गो निर्दिष्टस्तदनुसरणमात्रेणैव न दुष्यति विरोधपरिहारो भवतीति न वक्तव्यम्। किन्तु विनेयानामौन्मुख्यसम्पादनाय काव्यशोभाधानाय च क्रियमाणो विरोधिरसस्पर्शोऽपि न दुष्यति। विनेयाः सुकुमारमतयश्छात्राः, शृङ्गाररसस्य यान्यङ्गानि तैरुन्मुखीकृताः सन्तः। विनयोपदेशान् तेषां विनयनाय क्रियमाणानुपदेशान्, सुखं सुखेन, गृह्णन्ति स्वीकुर्वन्ति। मुनिभिः भरतादिभिः, सदाचारोपदेशरूपा सतां शिष्टैराचरितानां आचाराणां उपदेशात्मिका हि नाटकादिगोष्ठी, विनेयजनहितार्थमेव विनेयानां विनेतव्यानां, जनानां हितायैव आभिमुख्यसम्पादनायैव अवतारिता।

प्रकारान्तरमाह—किञ्चेति। शृङ्गाररसस्य सकलजनानां मनोहरत्वात् मनोहारितया अभिरामत्वात् सुन्दरत्वाच्च काव्ये तदङ्गानां समावेशो निबन्धनं, शोभातिशयं शोभाया आधिक्यं पुष्यतीत्यनेनापि प्रकारेण विरोधिनि रसे शृङ्गाररसाङ्गानां समावेशो न विरोधी। उदाहरति—ततश्चेति। सत्यमिति। रामा रमण्यः, मनोरमा रम्या इति सत्यम्। विभूतयः ऐश्वर्याण्यपि रम्या इति सत्यम्। किन्तु परन्तु, जीवितं हि मत्ताङ्गनापाङ्गभङ्गलोलं मत्ताङ्गनायाः तरुण्याः, अपाङ्गभङ्गवत् कटाक्षवत् लोलं चञ्चलम्, अस्थिरमिति यावत्। अत्र रामा विभूतयश्च पुरुषनिष्ठस्य शृङ्गारस्य विभावः।

**विज्ञायेत्थं रसादीनामविरोधविरोधयोः ।**
**विषयं सुकविः काव्यं कुर्वन् मुह्यति न क्वचित् ॥२१ ॥**

इत्थमनेनानन्तरोक्तेन प्रकारेण रसादीनां रसभावतदाभासानां परस्परं विरोधस्याविरोधस्य च विषयं विज्ञाय सुकविः काव्यविषये प्रतिभातिशययुक्तः काव्यं कुर्वन् न क्वचित् मुह्यति ।

एवं रसादिषु विरोधाविरोधनिरूपणस्योपयोगित्वं प्रतिपाद्य व्यञ्जकवाच्यवाचकनिरूपणस्यापि तद्विषयस्य तत् प्रतिपाद्यते—

**वाच्यानां वाचकानां च यदौचित्येन योजनम् ।**
**रसादिविषयेणैतत् कर्म मुख्यं महाकवेः ॥ ३२ ॥**

वाच्यानामितिवृत्तविशेषाणां वाचकानां च तद्विषयाणां रसादिविषयेणौचित्येन यद् योजनमेतन्महाकवेर्मुख्यं कर्म । अयमेव हि महाकवेर्मुख्यो व्यापारो

---

उज्जीवनी ।

जीवितस्य लोलत्वं शान्तरसस्य विभावः । एवं शान्ते शृङ्गाररससमावेशः शोभामाधत्त इति एवमादिषु रसविरोधदोषो नास्त्येव ।

विज्ञायेति । इत्थं एवं प्रकारेण, रसादीनां रसभावादीनां अविरोधविरोधयोः अविरोधस्य विरोधस्य च विषयं विज्ञाय सम्यग् ज्ञात्वा काव्यं कुर्वन् कविः क्वचिदपि कुत्रापि न मुह्यति । उपपादयति—इत्यमिति । इत्थं अनन्तरोक्तेनानेन प्रकारेण, रसादीनां रसभावादीनां च परस्परं विरोधस्य अविरोधस्य च विषयं ज्ञात्वा काव्यनिर्माणे उद्युक्तः प्रतिभातिशयवान् सुकविः, काव्यं यदि करोति तस्य क्वचिदपि मोहो न भवति ।

काव्यं कर्तुं प्रवृत्तस्य सुकवेः रसादिषु विरोधाविरोधयोः विज्ञानमावश्यकम् । तच्च तन्निरूपणाधीनमिति एतावता प्रबन्धेन तन्निरूपितम् । ततः व्यञ्जकस्य व्यञ्जनयार्थान्तरप्रत्यायकस्य वाच्यस्यार्थस्य विभावादेः, वाचकस्य शब्दस्य सुप्तिङादेश्च, रसादिविषयकस्य यन्निरूपणं तदपि तदुपयोगीति प्रतिपादयति—वाच्यानामिति । वाच्यानामभिधेयानां, वाचकानां शब्दानां च रसादिविषयेणौचित्येन यद् योजनं, एतद् योजनात्मकं कर्म, महाकाव्यकर्तुर्मुख्यं भवति ।

यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् ॥

एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेवेति प्रतिपादयितुमाह—

**रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।**
**औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्थिताः[1] ॥ ३३ ॥**

व्यवहारो हि वृत्तिरित्युच्यते । तत्र रसानुगुण औचित्यवान् वाच्याश्रयो यो व्यवहारस्ता एता कैशिक्याद्या वृत्तयः । वाचकाश्रयाश्चोपनागरिकाद्याः । वृत्तयो हि रसादितात्पर्येण संनिवेशिताः कामपि नाटचस्य काव्यस्य च च्छायामावहन्ति ।

---

उज्जीवनी ।

तदेवाह—वाच्यानां प्रतिपाद्यानामितिवृत्तविशेषाणां, वाचकानां चेतिवृत्तविशेषप्रतिपादकानां, रसादिविषयं रसाद्यानुगुण्याधायकं, यदौचित्यमुचितता तदनुसारेण यद् योजनं निबन्धनं तदेतन्महाकवेर्मुख्यं कर्म करणीयम् । पर्यवसितमाह—अयमेवेति । रसादीनेव रसभावादीनेव, मुख्यतया प्राधान्येन काव्यार्थीकृत्य काव्यस्यार्थं कृत्वा, तद्व्यक्त्यनुगुणत्वेन तस्य रसादेः या व्यक्तिः व्यञ्जनं तदानुगुण्येन शब्दानां वाचकानां, अर्थानां वाच्यानां चोपनिबन्धनमिति यद् अयमेव महाकवेर्मुख्यो व्यापारः ।

एतच्चेति । एतद् यदिदानीमुक्तं रसादितात्पर्येण रसभावादिप्रतीतीच्छया, काव्यनिबन्धनं काव्यकरणं, तद् भरतादावपि भरतमुनिप्रणीते नाटचशास्त्रे, अलङ्कारशास्त्रग्रन्थेषु च सुप्रसिद्धमेवेति प्रतिपादयितुमाह—

रसादीति । अर्थशब्दयोः अर्थस्य वाच्यस्य, शब्दस्य वाचकस्य च, रसाद्यनुगुणत्वेन रसभावाद्यानुगुण्येन, औचित्यवान् यो व्यवहारः निबन्धनं काव्ये, ता एता वृत्तयो द्विविधाः स्थिताः उपपादयति—व्यवहार इति । व्यवहारो हि रसाद्यानुगुण्येन अर्थानां शब्दानां च सन्निवेशे हि वृत्तिरिति

---

१. 'स्मृ०' च

रसादयो हि द्वयोरपि तयोर्जीवभूताः । इतिवृत्तादि तु शरीरभूतमेव ।

अत्र केचिदाहुः—"गुणगुणिव्यवहारो रसादीनामितिवृत्तादिभिः सह युक्तः, न तु जीवशरीरव्यवहारः । रसादिमयं हि वाच्यं प्रतिभासते, न तु रसादिभिः पृथग्भूतम्" इति । अत्रोच्यते–यदि रसादिमयमेव वाच्यं यथा गौरत्वमयं शरीरम् । एवं सति यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं प्रतिभासते सर्वस्य, तथा वाच्येन सहैव रसादयोऽपि सहृदयस्यासहृदयस्य च प्रतिभासेरन् । न चैवम्; तथा चैतत् प्रतिपादितमेव प्रथमोद्द्योते ॥

---

उज्जीवनी ।

अलङ्कारशास्त्रकारैरुच्यते । तत्र रसानुगुण उचितः, वाच्याश्रयो वाच्यमाश्रित्य स्थितः यो व्यवहारः ता एता कैशिक्याद्याः कैशिकी आरभटी, सात्त्वती, भारती इत्याद्याः कथ्यन्ते । वाचकाश्रयाः वाचकं शब्दमाश्रित्य स्थिताश्च उपनागरिकाद्याः उपनागरिका, परुषा, ग्राम्याख्याः, वृत्तय उच्यन्ते । वृत्तयः, उपनागरिकाद्याः, कैशिक्याद्याश्च । रसादितात्पर्येण रसादिप्रतीतीच्छया सन्निवेशिताः, नाटयस्य दृश्यकाव्यस्य, काव्यस्य श्रव्यकाव्यस्य च छायां शोभामावहन्ति । द्वयोरपि तयोर्वृत्त्योः रसादयो जीवभूता हि भवन्ति । इतिवृत्तादि तु शरीरभूतमेव आश्रयभूतमेव ।

अत्र केषाञ्चिन्मतमाह—अत्रेति । गुणेति । रसादीनां, इतिवृत्तादिभिः सह गुणगुणिव्यवहारः इतिवृत्तरूपे वाच्यार्थात्मके गुणिनि रसादीनां गुणत्वेनावस्थितिः युज्यते । न तु रसस्यात्मत्वं, वाच्यस्येतिवृत्तस्य शरीरत्वं च । वाच्यं च रसादिमयमेव, रसाद्यात्मकमेव प्रतिभासते प्रकाशते । रसादिभिः रसभावादिभिः पृथग्भूतं तु न भासते । अयुतसिद्धयोर्गुणगुणिनोरिव रसादिरूपस्य व्यङ्ग्यस्य वाच्यार्थस्य च पृथगवस्थानं नानुभूयते, इत्याशयः । तत्परिहारायाह—अत्रोच्यत इति । गौरत्वमयं शरीरमिति व्यवहारे सति गौरत्वस्य गुणत्वं, शरीरस्य गुणित्वं च भासते । शरीरे प्रतिभासमाने गुणिनि भासमाने, गौरत्वं गुणोऽपि नियमेन प्रतिभासते । तथा रसादिमयं वाच्यमिति व्यवहारानुरोधेन वाच्यव्यङ्ग्ययोरपि गुणगुणिभावेऽङ्गीक्रियमाणे, वाच्ये गुणिनि प्रतिभासमाने वाच्येन सहैव रसादयो गुणा अपि सहृदयस्यासहृदयस्य च

स्यान्मतम्; रत्नानामिव जात्यत्वं प्रतिपत्तृविशेषत: संवेद्यं वाच्यानां रसादिरूपत्वमिति । नैवम्; यतो यथा जात्यत्वेन प्रतिभासमाने रत्ने, रत्नस्वरूपानतिरिक्तत्वमेव तस्य लक्ष्यते, तथा रसादीनामपि विभावानुभावादिरूपवाच्याव्यतिरिक्तत्वमेव लक्ष्येत ।। न चैवम्;

हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः । अत एव च विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात् क्रमोऽवश्यंभावी । स तु लाघवान्न प्रकाश्यत 'इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादयः' इत्युक्तम् ।

---

उज्जीवनी ।

काव्यवासनापरिपक्वबुद्धेस्तथाभूतस्यापि प्रतिभासेरन् । न चैवं तयोः सहभावेन प्रतीतेः अभावान्न तयोर्गुणगुणिभावो युक्त इति भावः । एतच्च प्रथमोद्द्योते—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ।।

इति कारिकया प्रतिपादितम् ।

आशङ्कते—स्यान्मतमिति । रत्नानां मणीनां जायमानं उत्कृष्टं यथा प्रतिपत्तृविशेषतः प्रमातृविशेषेणैव ज्ञायते । न तु तदनभिज्ञैः, तथा वाच्यानां रसाद्यात्मकत्वं च सहृदयमात्रसंवेद्यमिति मतमस्तु । समाधत्ते—नैवमिति । जात्यत्वेन उत्कृष्टत्वेन, प्रतिभासमाने ज्ञायमाने रत्ने, रत्नस्वरूपानतिरिक्तत्व रत्नाभिन्नत्वमेव, तस्य प्रतिपत्तृविशेषस्य लक्ष्यते दृश्यते, तथा रत्यादीनामपि विभावानुभावादिरूपं यद्वाच्यं तदनतिरिक्तत्वं तदभेद एव लक्ष्येत । एवं न लक्ष्यते च । कारणमाह–नहीति । विभावानुभावव्यभिचारिण एव रसा इति । विभावानुभावादिरूपवाच्याभिन्नत्वं रसादीनामिति कस्यचिदपि अनुभवो नास्ति, तत एव, रसादीनां प्रतीतिरवगमरूपा, विभावादिप्रतीत्यविनाभाविनी विभावादिप्रतीतिसमनन्तरं नियमेन जायमाना, तत्प्रतीत्योः वाच्यव्यङ्ग्य-प्रतीत्योः, कार्यकारणभावेन पौर्वापर्यक्रमसिद्धकार्यकारणभावेन, व्यवस्थानात् क्रमः पूर्वापरभावः अवश्यंभावी । स तु क्रमः लाघवात् शैघ्र्यात् न प्रकाश्यते न लक्ष्यते । अत एव रसादयः अलक्ष्यक्रमा एव सन्तः अलक्ष्यः क्रमः येषां तादृशा एव भवन्तः व्यङ्ग्या इति चोक्तम् ।

ननु शब्द एव प्रकरणाद्यवच्छिन्नो वाच्यव्यङ्ग्ययोः सममेव प्रतीतिमुपजनयतीति किं तत्र क्रमकल्पनया। न हि शब्दस्य वाच्यप्रतीतिपरामर्श एव व्यञ्जकत्वे निबन्धनम्। तथा हि गीतादिशब्देभ्योऽपि रसाभिव्यक्तिरस्ति। न च तेषामन्तरा वाच्यपरामर्शः। अत्रापि ब्रूमः—प्रकरणाद्यवच्छेदेन व्यञ्जकत्वं, शब्दानामित्यनुमतमेवैतदस्माकम्। किन्तु, तद्व्यञ्जकत्वं, तेषां कदाचिद् स्वरूपविशेषनिबन्धनं, कदाचिद् वाचकशक्तिनिबन्धनम्। तत्र येषां वाचकशक्तिनिबन्धनं तेषां यदि वाच्यप्रतीतिमन्तरेणैव स्वरूपप्रतीत्या निष्पन्नं तद्भवेन्न तर्हि वाचकशक्तिनिबन्धनम्। अथ तन्निबन्धनं तन्नियमेनैव वाच्यवाचकभावप्रतीत्युत्तरकालत्वं व्यङ्ग्यप्रतीतेः प्राप्तमेव॥

स तु क्रमो यदि लाघवान्न लक्ष्यते तत् किं क्रियते। यदि च वाच्यप्रतीतिमन्तरेणैव प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात् तदनवधारितप्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नानां प्रतिपत्तॄणां

---

उज्जीवनी।

पुनरप्याशङ्कते—नन्विति। शब्दः काव्यात्मकशब्द एव, प्रकरणाद्यवच्छिन्नः प्रकरणस्य वक्तृबोद्धव्यादेश्च वैशिष्ट्यात्, वाच्यव्यङ्ग्ययोः वाच्यस्य व्यङ्ग्यस्य चार्थस्य प्रतीतिमवगमनं, सममेव समकालमेव, उपजनयतीति, तत्र तस्मिन् स्थले, क्रमकल्पनया किं क्रमकल्पनमनुचितमित्यर्थः। तत्रयुक्तिमाह—नहीति, शब्दस्य वाचकस्य, यो वाच्यप्रतीतिपरामर्शः, वाच्यस्यार्थस्य प्रतीतेः संस्पर्श एव व्यञ्जकत्वे निबन्धनमिति नियमो नास्ति। दृष्टान्तमाह—तथाहीति। गीतादिशब्देभ्योऽपि अर्थप्रतीतिपरामर्शं विनापि रसाभिव्यक्तिर्दृश्यते। तेषां च गीतादिशब्दानां रसादेश्चान्तरा मध्ये वाच्यपरामर्शो नास्ति। अतो वाच्यव्यङ्ग्ययोः समकालत्वमिति पूर्वपक्षः। समाधत्ते—अत्रापीति। प्रकरणाद्यवच्छेदेन प्रकरणादिवैशिष्ट्येन, शब्दानां व्यञ्जकत्वमिति यत् तदनुमतमेवास्माकम्। किन्तु तत् शब्दगतं व्यञ्जकत्वं कदाचित्, तेषां शब्दानां स्वरूपविशेषनिबन्धनं स्वरूपविशेषमाश्रित्य अर्थान्तरं व्यनक्ति। कदाचिच्च वाचकशक्तिनिबन्धनं वाचकस्य शब्दस्य व्यङ्ग्यार्थान्तरबोधने या शक्तिः (नानार्थस्थले) तदधीनं भवति तस्य शब्दस्य व्यञ्जकत्वमित्यर्थः। तत्र येषां शब्दानां व्यञ्जकत्वं वाचकशक्तिनिबन्धनं तेषां वाच्यप्रतीतिं

काव्यमात्रश्रवणादेवासौ भवेत् । सहभावे च वाच्यप्रतीतेरनुपयोगः; उपयोगे वा न सहभावः—

येषामपि स्वरूपविशेषप्रतीतिर्निमित्तं व्यञ्जकत्वं यथा गीतादिशब्दानां तेषामपि स्वरूपप्रतीतेः व्यङ्ग्यप्रतीतेश्च नियमभावी क्रमः । तत्तु शब्दस्य क्रिया पौर्वापर्यमनन्यसाध्यतत्फलघटनास्वाशुभाविनीषु वाच्येनाविरोधिन्यभिधेयान्तरविलक्षणे रसादौ न प्रतीयते ।

---

उज्जीवनी

वाच्यार्थबोधमन्तरेण विनैव स्वरूपप्रतीत्या शब्दस्वरूपज्ञानेन (श्रावणप्रत्यक्षेण) निष्पन्नं तद् व्यञ्जकत्वं यदि भवेत् तर्हि तन्न व्यञ्जकत्वं वाचकशक्तिनिबन्धनम् । अथ यदि तन्निबन्धनं वाचकशक्तिनिबन्धनं तद् व्यञ्जकत्वम् । नियमेनैव निश्चितमेव, वाच्यवाचकप्रतीत्युत्तरकालत्वं वाच्यार्थप्रतीत्युत्तरकालत्वं व्यङ्ग्यप्रतीतेः प्राप्तमेव । तयोः पौर्वापर्यस्यानुभूयमानत्वात् ।

तर्हि कुतो न प्रतीयते पूर्वापरभाव इत्याशङ्कायामाह—स इति । स क्रमस्तु लाघवात् शैघ्र्यात्, न लक्ष्यते न ज्ञायते । एवं चेत् किमस्माभिः कर्तुं शक्यम् । ननु वाच्यप्रतीतिं विनैव शब्दमात्रेणैव प्रकरणादिवैशिष्ट्यात् रसादिप्रतीतिर्भवतु इत्याशङ्कायामाह—तदिति । तत् तर्हि, प्रकरणादिज्ञानशून्यानां, तस्य श्रूयमाणस्य शब्दस्य वाच्यवाचकभावे स्वयं व्युत्पत्तिरहितानां च प्रतिपत्तॄणां शब्दविषयकश्रावणप्रत्यक्षवतां काव्यमात्रस्य शब्दमात्रस्य श्रवणादेव असौ रसभावादिप्रतीतिः स्यात् । एवं वाच्यव्यङ्ग्ययोरपि समकालमुत्पत्तौ वाच्यप्रतीतिरनुपयोगिनी । यद्युपयोगो वाच्यप्रतीतेरभ्युपगम्यते तर्हि सहभावो न भवत्येव । किं च गीतादिशब्दानां वाच्यपरामर्शं विना व्यञ्जकत्ववतामपि यथा गीतशब्दस्वरूपविशेषप्रतीतिरेव व्यञ्जकत्वे निबन्धनं, तथा स्वरूपविशेषश्रवणमात्रेण व्यञ्जकानामपि शब्दानां स्वरूपज्ञानस्य शब्दश्रवणस्य व्यङ्ग्यप्रतीतेश्च, नियमभावी नियतः क्रमः पूर्वापरभावः अस्त्येव । तु किन्तु, शब्दस्य अर्थबोधकस्य तत् क्रियापौर्वापर्यं क्रियायाः अर्थबोधनव्यापारस्य, अनन्यसाध्यतत्फलघटनासु, न विद्यतेऽन्यत् साध्यं रसादिप्रतीतिभिन्नं यासां तादृशीषु तत्फलासु, तदेव रसादिप्रतीतिजननमेव फलं यासां तादृशीषु च घटनासु सङ्घटनासु, आशुभाविनीषु शीघ्रभाविनीषु सतीषु, वाच्येन

क्वचित्तु लक्ष्यत एव । यथानुरणनरूपव्यङ्ग्यप्रतीतिषु । तत्रापि कथमिति चेदुच्यते—अर्थशक्तिमूलानुरणनरूपव्यङ्ग्ये ध्वनौ तावदभिधेयस्य तत्सामर्थ्याक्षिप्तस्य चार्थस्याभिधेयान्तरविलक्षणतयात्यन्तविलक्षणे ये प्रतीती तयोरशक्यनिह्नवो निमित्तनिमित्तिभाव इति स्फुटमेव तत्र पौर्वापर्यम् । यथा प्रथमोद्द्योते प्रतीयमानार्थसिद्धयर्थमुदाहृतासु गाथासु ॥

तथाविधे च विषये वाच्यव्यङ्ग्ययोरत्यन्तविलक्षणत्वाद् यैवैकस्य प्रतीतिः सैवेतरस्येति न शक्यते वक्तुम् । शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये तु ध्वनौ ।

---

उज्जीवनी ।

अभिधेयेन, अविरोधिनि विरोधशून्ये, अभिधेयान्तरविलक्षणे अभिधयाप्रतिपाद्यमानादन्यस्माद् अर्थाद् व्यतिरिक्ते रसादौ रसभावादौ न प्रतीयते न लक्ष्यते । विद्यमानोऽपि वाच्यव्यङ्ग्यबोधनक्रियायाः क्रमो लाघवान्न लक्ष्यत इति यावत् ।

क्वचिदिति । क्वचित्तु स्थलविशेषे तु स क्रमः लक्ष्यत एव । यथा अनुरणनरूपव्यङ्ग्यप्रतीतिषु अनुस्वानाभ (संलक्ष्यक्रम) व्यङ्ग्यप्रतीतिषु । तदेवाह—तत्रापीति । अर्थशक्तिमूलानुरणनव्यङ्ग्यो यो ध्वनिः तत्र तावत्, अभिधेयस्य वाच्यस्यार्थस्य तत्सामर्थ्याक्षिप्तस्य तस्य वाच्यार्थस्य यत् सामर्थ्यं अर्थान्तरप्रतीतिजनकत्वरूपं तदाक्षिप्तस्य तदुपस्थितस्य चार्थस्य, अभिधेयान्तरविलक्षणतया अन्यस्मादभिधेयात् भेदेन प्रतीयमानतया, अत्यन्तविलक्षणे ये प्रतीती वाच्यस्य व्यङ्ग्यस्य चेति द्वे प्रतीती, तयोः वाच्यव्यङ्ग्यप्रतीत्योः निमित्तनिमित्तिभावः कार्यकारणभावः अशक्यनिह्नवः न शक्यो निह्नवः यस्य तादृशः निह्नोतुमशक्य इत्यर्थः । इति तत्र अर्थशक्तिमूलानुरणनव्यङ्ग्ये पौर्वापर्यं क्रमात्मकं स्फुटं स्पष्टमेव । उदाहरणं दर्शयति—यथेति । प्रथमोद्द्योते प्रतीयमानस्य व्यङ्ग्यस्यार्थस्य सिद्धये उदाहृतगाथासु स्पष्टं प्रतिपादितमित्यर्थः । तथाविधे तादृशे विषये वाच्यस्य व्यङ्ग्यस्य चार्थयोः, अत्यन्तविलक्षणत्वात् अत्यन्तं भिन्नत्वात् या एव एकस्य अर्थस्य प्रतीतिः सैवेतरस्यार्थस्य प्रतीतिरिति

'गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु' इत्यादावर्थ-द्वयप्रतीतौ शाब्द्यामर्थद्वयस्योपमानोपमेयभावप्रतीतिरुपमावाचकपदविरहे सत्यर्थसामर्थ्यादाक्षिप्तेति तत्रापि सुलक्षमभिधेयव्यङ्ग्यालङ्कारप्रतीत्योः पौर्वापर्यम् ॥

पदप्रकाशशब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽपि ध्वनौ विशेषणपदस्यो भयार्थसम्बन्धयोग्यस्य योजकंपदमन्तरेण योजनमशब्दमप्यर्थादवस्थितमित्य-त्रापि पूर्ववदभिधेयतत्सामर्थ्याक्षिप्तालङ्कारमात्रप्रतीत्योः सुस्थितमेव पौर्वापर्यम् ।—

---

वक्तुं न शक्यते । शब्दशक्तिमूलानुरणनध्वनौ यो विशेषस्तमाह—शब्दशक्तीति—गाव इति ।

> दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
> पूर्वाह्णे विप्रकीर्णा दिशिदिशि विरमत्यह्नि संहारभाजः ।
> दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
> गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥

मयूरकविकृते सूर्यशतके नवममिदं पद्यम् । व्याख्यातमिदं द्वितीयोद्द्योते ॥

इत्यादौ नानार्थशब्दप्रयोगस्थले । शाब्द्यां शब्दादभिधयैव प्रतिपाद्य-मानायाम् । अर्थद्वयप्रतीतावर्थावगतौ, वाक्यभेदाद् असम्बद्धार्थाभिधायकत्वं मा भूदिति तयोः गोपदार्थभूतयोः धेनुकिरणयोः उपमानोपमेयभावप्रतीतिः सादृश्यज्ञानम् । उपमावाचकपदविरहे सति उपमावाचकानामिवादीनां अन्यतमस्याप्यभावे सति, अर्थसामर्थ्याक्षिप्तः अर्थसामर्थ्यात् नानार्थस्य शब्दस्य, अभिधयैवार्थान्तरबोधजननशक्तिमत्वात् आक्षिप्त उपमालङ्कारो व्यज्यत इत्यर्थः । तादृशस्थले अभिधेयाऽलङ्कारः श्लेषः व्यङ्ग्यश्चोपमेति तयोरुभयोः प्रतीतौ पौर्वापर्यं सुलक्षमेवेति ।

पदप्रकाशशब्दशक्तिमूलानुरणनव्यङ्ग्ये च ध्वनौ 'क्रूरोऽथवा किं न जडः कृतोऽहम्' इत्यत्र विशेषणपदस्य आत्मसमानाधिकरणतया प्रयुक्तस्य जडपदस्य, उभयार्थसम्बन्धयोग्यस्य शीतस्पर्शवज्जलसामानाधिकरण्येनापि प्रयोगयोग्यस्य, योजकं उभयार्थसम्बन्धद्योतकं इवादिपदं विना यद् योजनं तद् अशाब्दं शब्द-

आर्थ्येऽपि च प्रतिपत्तिस्तथाविधे विषये उभयार्थसम्बन्धयोग्यशब्दसामर्थ्य-प्रसावितेति शब्दशक्तिमूला कल्प्यते । अविवक्षितवाच्यस्य तु ध्वनेः प्रसिद्धस्वविषयवैमुख्यप्रतीतिपूर्वकमेवार्थान्तरप्रकाशनमिति नियमभावी क्रमः । तत्राविवक्षितवाच्यत्वादेव वाच्येन सह व्यङ्ग्यस्य क्रमप्रतीतिविचारो न कृतः ।

तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योर्निमित्तनिमित्ति भावान्नियमभावी क्रमः । स तूक्तयुक्त्या क्वचिल्लक्ष्यते क्वचिन्न लक्ष्यते ।

---

उज्जीवनी ।

जन्यप्रतीत्यविषयमपि, अर्थादवस्थितं अर्थसिद्धमिति हेतोः, अत्रापि ध्वनौ पूर्ववद् वाक्यप्रकाशे ध्वनाविव, अभिधेयेनार्थेन तत्सामर्थ्येन अर्थसामर्थ्येन च आक्षिप्तयोरभिव्यक्तयोरेव प्रतीत्योः पौर्वापर्यं सुस्थितमेव सम्यग् लक्ष्यत एव । तथाविधे विषये 'कूपोऽथवा किं न जडः कृतोऽहम्' इत्यादौ आर्थ्येऽपि अर्थसिद्धापि, प्रतिपत्तिः अन्यस्यार्थस्य प्रतीतिः उभयोरप्यर्थयोः यः सम्बन्धः, तद्योग्यस्य शब्दस्य सामर्थ्येन अर्थान्तरप्रकाशनसमर्थतया प्रसाविता उद्भाविितेति हेतोः शब्दशक्तिमूलेति कल्प्यते । तु किन्तु अविवक्षितवाच्यस्य ध्वनेः लक्षणामूलध्वनेः, 'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इति पूर्वोदाहृते अन्धशब्दमुख्यार्थस्य उपहतचक्षुष्कत्वस्य आदर्शेऽन्वयानुपपत्त्या प्रसिद्धो यः स्वविषयः स्ववाच्यार्थः, तस्य या वैमुख्यप्रतीतिः पदार्थान्तरेण साकमन्वयस्यानुपपद्यमानतारूपबाधप्रतीतिः तत्पूर्वकमेव तदनन्तरमेवार्थान्तरप्रकाशनं भवतीति क्रमो नियमभावी नियत एव । अत्र व्यङ्ग्यस्य वाच्येनार्थेन सह प्रतीतिविषयतायां क्रमः पौर्वापर्यं अस्ति न वेति विचारो न कृतस्तत्रहेतुस्तु अविवक्षितवाच्ये ध्वनौ वाच्यस्य अविवक्षितत्वमेवेति भावः ।

तस्मादभिधानस्य शब्दस्य, अभिधेयस्यार्थस्य च यथा क्रमो वर्तते, तथा वाच्यस्य व्यङ्ग्यस्य ये प्रतीती तयोरपि नियमभावी क्रमः अस्त्येव । स तु क्रमस्तु उक्तयुक्त्या एतावता प्रतिपादितया युक्त्या, क्वचिद् लक्ष्यते क्वचिच्च न लक्ष्यते ।

प्रथमोद्द्योते यथार्थः शब्दो वेत्यनेन सहृदयहृदयाह्लादजनकस्य शब्दस्यार्थस्य व्यञ्जकत्वं, तस्यार्थान्तरस्य व्यङ्ग्यत्वं चोक्तम् । द्वितीये च व्यङ्ग्यमुखेन ध्वनेर्भेदश्च प्रतिपादितः । तृतीये चेयता प्रबन्धेन

तदेवं व्यञ्जकमुखेन ध्वनिप्रकारेषु निरूपितेषु कश्चिद् ब्रूयात्किमिदं व्यञ्जकत्वं नाम व्यङ्ग्यार्थप्रकाशनम्; नहि व्यञ्जकत्वं व्यङ्ग्यत्वं चार्थस्य, व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यत्वम्; व्यङ्ग्यापेक्षया च व्यञ्जकत्वसिद्धिरन्योन्य संश्रयादव्यवस्थानम्। ननु वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सिद्धिः प्रागेव प्रतिपादिता, तत्सिद्ध्यधीना च व्यञ्जकसिद्धिरिति कः पर्यनुयोगावसरः। सत्यमेवैतत्;

प्रागुक्तयुक्तिभिः वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिः कृता, स त्वर्थो व्यङ्ग्यतयैव कस्माद्व्यपदिश्यते, यत्र च प्राधान्येनावस्थानं तत्र वाच्यतयैवासौ व्यपदेष्टुं युक्तः, तत्परत्वाद् वाक्य[1]स्य। अतश्च तत्प्रकाशिनो वाक्यस्य

---

उज्जीवनी।

व्यञ्जकमुखेन ध्वनेर्भेदश्च प्रतिपादितः। तृतीये चैयता प्रबन्धेन व्यञ्जकमुखेन भेदश्चाख्यातः। तत्र विमतनिराकरणपूर्वकं व्यञ्जकत्वं निर्वक्तुमुपक्रमते— तदेवमिति। एवमेतावतोक्तप्रकारेण व्यञ्जकमुखेन ध्वनेः प्रकारेषु निरूपितेषु प्रतिपादितेषु सत्सु कश्चित् प्रतिवादी ब्रूयात्। किमिदं व्यञ्जकमिति प्रश्नः। व्यङ्ग्यस्यार्थस्य प्रकाशनात्मकं व्यञ्जकत्वमिति यदुच्यते तत् किमिति प्रष्टुराशयः। अर्थस्य व्यञ्जकत्वं व्यङ्ग्यत्वं च नहि सम्भवति। हेतुमाह—व्यञ्जकेति। अर्थस्य व्यङ्ग्यत्वं तावत् तदा ज्ञायेत यदा तद्बोधकस्य व्यञ्जकत्वं ज्ञातं भवति। तथा तस्य व्यञ्जकत्वज्ञानमपि तत्प्रतिपाद्यस्यार्थस्य व्यङ्ग्यत्वे ज्ञाते सत्येव भवतीति अन्योन्याश्रयात् व्यङ्ग्यत्वस्य व्यञ्जकत्वस्य च सिद्धौ अव्यवस्थितिरेव। अस्मिन् विषये प्रश्नस्यैवावकाशो नास्तीत्याह— नन्विति। प्रागेव पूर्वमेव। ध्वन्यभाववादिमतनिराकरणेन वाच्यव्यतिरिक्तस्य वाच्याद्भिन्नस्य व्यङ्ग्यस्य सिद्धिः प्रतिपादिता। ततस्तस्य यः प्रकाशकः तस्य व्यञ्जकत्वं यतः सिद्ध्यति ततः पर्यनुयोगस्य प्रश्नस्य अवसरः क इति प्रश्नः, प्रश्न एव न प्रसरतीत्यर्थः। पुनरपि शङ्कते—सत्यमिति। पूर्वप्रकरणेन वाच्यातिरिक्तः कश्चित् पदार्थः अस्तीत्येव सिद्धम्। तदङ्गीकुर्मः, किन्तु स वाच्यातिरिक्तः अर्थः, व्यङ्ग्यतयैव व्यङ्ग्यः इति नामधेयेनैव कुतो

---

१. 'चकत्व०' च

वाचकत्वमेव व्यापारः । किं तस्य व्यापारान्तरकल्पनया ? तस्मात् तात्पर्यविषयो योऽर्थः स तावन्मुख्यतया वाच्यः । या त्वन्तरा तथाविधे विषये वाच्यान्तरप्रतीतिः सा तत्प्रतीतेरुपायमात्रं पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः ।

अत्रोच्यते—यत्र शब्दः स्वार्थमभिदधानोऽर्थान्तरमवगमयति तत्र यत्तस्य स्वार्थाभिधायित्वं, यच्च तदर्थान्तरावगमहेतुत्वं तयोरविशेषो विशेषो वा । न तावदविशेषः, यस्मात्तौ द्वौ व्यापारौ भिन्नविषयौ भिन्नरूपौ च प्रतीयेते एव ।—

---

उज्जीवनी ।

व्यपदिश्यते । तस्य व्यङ्ग्यपदव्यपदेश्यत्वं कथं वक्तुं शक्यमित्यर्थः । यत्र यस्मिन् स्थले तस्य द्वितीयस्यार्थस्य प्राधान्येनावस्थानं स्थितिः, ततोऽसौ द्वितीयोऽर्थो वाच्यतयैव व्यपदेष्टुं वाच्य इत्येव वक्तुं युक्तः । वाक्यस्य वाक्यप्रयोगस्य, तत्परत्वात् तदर्थबोधजननतात्पर्येणैव क्रियमाणत्वात् । अतश्च, तत्प्रकाशिनः तमर्थं प्रकाशयतः, वाक्यस्य वाचकत्वमेव व्यापार इति ब्रूमः । तस्य तदर्थबोधनस्य व्यापारान्तरकल्पनया किं? व्यापारान्तरकल्पनं नावश्यकमिति यावत् । तस्मादुक्तयुक्त्या तात्पर्यविषयो योऽर्थः, वक्तृविवक्षाधीनो योऽर्थः स तावत् मुख्यतया प्राधान्येन वाच्यः । तथाविधे विषये, अन्तरा मध्ये । या वाच्यान्तरप्रतीतिः साक्षात् सङ्केतितस्यार्थस्य प्रतीतिः सा, तत्प्रतीतिः तात्पर्यविषयीभूतस्य मुख्यस्यार्थस्य प्रतीतेः उपायमात्रं द्वारमेव । यथा वाक्यार्थप्रतीतेः पदार्थप्रतीतिरुपायो भवति तथेत्यर्थः ।

समाधत्ते—अत्रोच्यत इति । यत्रेति । यत्र स्थलविशेषे । स्वार्थं स्वाभिधेयं सङ्केतितमर्थम् । अभिदधानः अभिदधत् अर्थान्तरमन्यमर्थं, अवगमयति बोधयति । तत्र स्थलविशेषे, तस्य शब्दस्य, यत् स्वार्थाभिधायित्वं [स्वार्थाभिधायकत्वं], यच्च तदर्थान्तरावगमहेतुत्वं, तस्य शब्दस्य यद् अर्थान्तरं अन्योऽर्थः, अर्थान्तरावगमकत्वं चेति शब्दरूपे एकस्मिन् धर्मिणि धर्मद्वयमस्तीत्युच्यते तयोर्धर्मयोः अविशेषः अभेदः, विशेषो वा भेदो वा इति प्रश्नः । तत्राद्यः अभेदपक्षो न भवति । यस्माद् यतः तौ द्वौ व्यापारौ अभिधायकत्वगमकत्वात्मकौ भिन्नविषयौ भिन्नः विषयः ययोः तौ भिन्नरूपौ

तथा हि वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थविषयः गमकत्वलक्षणस्त्वर्थान्तरविषयः। न च स्वपरव्यवहारो वाच्यव्यङ्ग्ययोरपह्नोतुं शक्यः। एकस्य सम्बन्धित्वेन प्रतीतेरपरस्य सम्बन्धिसम्बन्धित्वेन च। वाच्यो ह्यर्थः साक्षाच्छब्दस्य सम्बन्धी, तदितरस्त्वभिधेयसामर्थ्याक्षिप्तः सम्बन्धिसम्बन्धी।—

यदि च स्वसम्बन्धित्वं साक्षात् तस्य स्यात् तदार्थान्तरत्वव्यवहार एव न स्यात्। तस्माद्विषयभेदः तावत् तयोर्व्यापारयोः सुप्रसिद्धः, रूपभेदोऽपि प्रसिद्ध एव। न हि यैवाभिधानशक्तिः सैवावगमनशक्तिः। अवाचकस्यापि

---

### उज्जीवनी।

भिन्नं रूपं ययोः तादृशौ च प्रतीयेते एव। विषयभेदात् रूपभेदाच्च तयोः व्यापारयोरैक्यं नास्त्येव। तदेव समर्थयति—तथाहीति। शब्दस्य वाचकत्वलक्षणः वाचकत्वात्मकः अभिधायकत्वरूपः व्यापारः यः सः स्वार्थविषयः स्वस्य अर्थो विषयो यस्य तादृशः शब्दनिष्ठस्याभिधायकत्वव्यापारस्य साक्षात् सङ्केतितो योऽर्थः (स्वार्थः) स एव विषयः। गमकत्वलक्षणस्तु व्यापारः अर्थान्तरविषयः गमकत्वव्यापारस्य न स्वार्थो विषयः किन्तु अर्थान्तरमन्योऽर्थ एव विषय इति विषयभेदात् तयोरभेदो नेत्यर्थः। वाच्यव्यङ्ग्ययोः वाच्यस्य व्यङ्ग्यस्य च, स्वपरव्यवहारः स्वः पर इति च व्यवहारः। अपह्नोतुं न शक्यः। वाच्यस्य स्वत्वं, व्यङ्ग्यस्य परत्वं च न निह्नोतुं शक्यमित्यर्थः। किं च एकस्य स्वार्थस्य सम्बन्धित्वेन प्रतीतिः, अपरस्य व्यङ्ग्यस्य तु सम्बन्धिसम्बधित्वेन च प्रतीतिः। हि यतः, वाच्योऽर्थः, शब्दस्य साक्षात् सम्बन्धी, अव्यवधानेन शब्दश्रवणसमनन्तरकालिकबोधविषयः। तदितरः द्वितीयोऽर्थस्तु, अभिधेयसामर्थ्याक्षिप्तः अभिधेयस्य शक्यार्थस्य, सामर्थ्येन अर्थान्तरबोधजनकत्वशक्त्या आक्षिप्तः सन् सम्बन्धिसम्बन्धी परस्परसम्बन्धवान् भवति। तस्य द्वितीयस्यार्थस्य, साक्षादेव स्वसम्बन्धित्वं शब्देन साक्षात् सम्बन्धः यदि स्यात् यदि भवेत् तर्हि तस्य द्वितीयस्यार्थस्य अर्थान्तरव्यवहार एव न स्यात्। तस्मात् तयोः व्यापारयोः वाचकत्वगमकत्वयोः, विषयभेदः तावत् सुप्रसिद्धः। एवं तयोर्व्यापारयोः रूपभेदः स्वरूपभेदोऽपि प्रसिद्ध एव। अभिधानशक्तिः अभिधायकत्वव्यापारः अवगमनशक्तिः अवगमकत्वव्यापारः,

गीतशब्दादेः, रसादिलक्षणार्थावगमदर्शनात्। अशब्दस्यापि चेष्टादेरर्थविशेष-प्रकाशनप्रसिद्धेः। तथा हि 'व्रीडायोगान्नतवदनया' इत्यादिश्लोके चेष्टाविशेषः सुकविनार्थप्रकाशनहेतुः प्रदर्शित एव।—

तस्माद्भिन्नविषयत्वाद्भिन्नरूपत्वाच्च स्वार्थाभिधायित्वं, अर्थान्तरावगमहेतुत्वं च शब्दस्य यत् तयोः स्पष्ट एव भेदः। विशेषश्चेन्न तर्हीदानीमवगमनस्याभिधेयसामर्थ्याक्षिप्तस्यार्थान्तरस्य वाच्यत्वव्यपदेश्यता। शब्दव्यापारगोचरत्वं तु तस्यास्माभिरिष्यत एव, तत्तु व्यङ्ग्यत्वेनैव न वाच्यत्वेन। प्रसिद्धाभिधानान्तरसम्बन्धयोग्यत्वेन च तस्यार्थान्तरस्य प्रतीतेः शब्दान्तरेण स्वार्थाभिधायिना यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता॥

---

उज्जीवनी।

तयोरपि अभेदो न सम्भवति। गीतशब्दादेः अभिधानशक्तिरहितस्य रसादिरूपार्थावगमकत्वदर्शनात्। तथा चेष्टादेःशब्दभिन्नस्यापि अर्थविशेषस्य प्रकाशनं दृश्यत एव। उदाहरणेन समर्थयति—तथाहीति।

> व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
> बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य।
> तिष्ठेत्युक्तं किमिव न तया यत् समुत्सृज्य बाष्पं
> मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः॥

इति श्लोके चेष्टाविशेषः वदननमनादिः अर्थप्रकाशनहेतुः शृङ्गाररसप्रकाशनस्य हेतुत्वेन सुकविना प्रकाशित एव॥ तस्माद् यद् शब्दस्य स्वार्थाभिधायित्वं अर्थान्तरावगतिहेतुत्वं चेति व्यापारद्वयं, तयोर्व्यापारयोर्भिन्नविषयत्वात् विषयभेदात्। भिन्नरूपत्वात् स्वरूपभेदाच्च भेदः स्पष्ट एव। वाचकत्वव्यञ्जकत्वयोर्विशेषे (भेदे) ऽङ्गीक्रियमाणे यो विशेषस्तमाह—विशेष इति। विशेषश्चेत् व्यापारयोर्विशेषो भेदश्चेत्। इदानीमस्यामवस्थायां, अवगमनस्यावगमनात्मकव्यापारविषयस्य, अभिधेयसामर्थ्याक्षिप्तस्य अभिधेयस्याभिधाव्यापारविषयस्यार्थस्य, सामर्थ्येनाक्षिप्तस्यार्थान्तरस्य द्वितीयस्यार्थस्य, वाच्यत्वव्यपदेश्यता वाच्यव्यपदेशविषयत्वं न हि सम्भवतीति योजना। तस्यापि द्वितीयस्यार्थस्य प्रथमार्थबोधको यः शब्दः तद्व्यापारविषयत्वं तु यद्यप्यस्माकमभिमतं, तथापि तद्,

न च पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययोः; यः पदार्थप्रतीतिरसत्यैवेति कैश्चिद्विद्वद्भिरास्थितम्। यैरप्यसत्यत्वमस्या नाभ्युपेयते, तैर्वाक्यार्थपदार्थयोर्घटतदुपादानकारणन्यायोऽभ्युपगन्तव्यः। यथा हि घटे निष्पन्ने तदुपादानकारणानाम्,

---

उज्जीवनी।

व्यङ्ग्यत्वेनैव न तु वाच्यत्वेन, अर्थान्तरस्य व्यङ्ग्यत्वमेवाभ्युपगच्छाम इत्यर्थः। तत्र युक्तिमाह—प्रसिद्धेति। प्रसिद्धं वाचकत्वेन प्रसिद्धं यदभिधानान्तरं, शब्दान्तरं तस्य सम्बन्धः, वाचकस्य शब्दस्य, वाच्यस्यार्थस्य च यः साक्षात् सम्बन्धो वाच्यवाचकभावरूपस्तद्योग्यत्वेन, चोऽप्यर्थे। तस्यार्थान्तरस्य द्वितीयस्यार्थस्य प्रतीतेरनुभवात्॥

इदमत्रावधेयम्—वाचकत्वव्यञ्जकत्वात्मकयोरुभयोः व्यापारयोः विषयभेदेन स्वरूपभेदेन च मिथोऽभेदो न भवितुमर्हति। भेदेऽप्यङ्गीक्रियमाणे यत्र शब्दः स्वार्थबोधनानन्तरमर्थान्तरमपि बोधयति तत्र द्वितीयस्यार्थस्य तच्छब्दव्यापारगोचरत्वेऽपि व्यङ्ग्यत्वेनैव व्यपदेशः, न वाच्यत्वेन। यतः व्यङ्ग्यत्वेनाभिमतस्य तस्यार्थस्य अभिधायकमभिधानान्तरं प्रसिद्धम्। यथा 'गङ्गायां घोष' इत्यादौ, गङ्गाशब्दः स्रोतसो वाचकः, शैत्यपावनत्वादेर्व्यञ्जकश्च। शैत्यपावनत्वादिरूपोऽर्थश्च यदा शैत्यपावनत्वादिशब्देन बोध्यते तदा सोऽर्थ, वाच्यः। वाचकश्च शैत्यपावनत्वादिशब्दः। एवं च स्वार्थाभिधायिना स्वस्य गङ्गाशब्दस्य योऽर्थः स्रोतोरूपः तस्याभिधाव्यापारेण बोधको यो गङ्गाशब्दस्तेन शब्दान्तरेण शैत्यपावनत्वादेः यद् विषयीकरणं तत्र प्रकाशनोक्तिः, व्यञ्जकत्वोक्तिरेव युक्ता। तथा च शैत्यपावनत्वादिशब्देन बोध्यमानः शैत्यपावनत्वादिरूपोऽर्थो वाच्यः। 'गङ्गायां घोष' इत्यादौ गङ्गाशब्देन बोध्यमानः शैत्यपावनत्वादिः अर्थो व्यङ्ग्य इति विवेकः।

व्यङ्ग्यत्वेनाभिमतस्यार्थस्य तात्पर्याख्यैव वृत्त्या बोधो भवत्वित्याशङ्क्याह—नचेति। वाक्यस्थितानि पदानि स्वस्वमर्थं पृथगभिदधते। तत आकाङ्क्षायोग्यतासान्निध्यादिवशात् तात्पर्याख्यया वृत्त्या [तत्प्रतीतीच्छयोच्चारितत्वं तात्पर्यम्] वाक्यर्थबोधो भवति। तत्र तात्पर्यं व्यापारः। वाक्यं वाचकम्। वाक्यार्थस्तात्पर्यार्थ इति च सिद्ध्यति। एवं पदार्थबोधानन्तरं

न पृथगुपलम्भस्तथैव वाक्ये तदर्थे वा प्रतीते पदतदर्थानां तेषां तदा विभक्ततयोपलम्भे वाक्यार्थबुद्धिरेव दूरीभवेत्। न त्वेष वाच्यव्यङ्ग्ययोर्न्यायः, न हि व्यङ्ग्ये प्रतीयमाने, वाच्यबुद्धिर्दूरीभवति, वाच्यावभासाविनाभावेन तस्य प्रकाशनात्। तस्मात् घटप्रदीपन्यायस्तयोः—

---

उज्जीवनी

तात्पर्यवृत्त्या यथा वाक्यार्थबोधो भवति, तथा वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थ-बोधप्रतिपिपादयिषारूपेण तात्पर्येण व्यापारेण व्यङ्ग्यार्थप्रतीतिर्भवतु, किं व्यञ्जनयेति पूर्वपक्षः समाधत्ते—यत इति। पदार्थप्रतीतिः पदानामर्थवाचकता असत्यैवेति कैश्चिद् विद्वद्भिः वैयाकरणैः आस्थितमिति प्रतिज्ञातम्। पदानामर्थ स्मारकत्वमेव, न तु वाचकत्वं, किन्तु वाक्यं वाचकं; तस्यैव प्रवृत्तिनिवृत्तियो-ग्यत्वात् इति तन्मतम्। मतान्तरेणाह—यैरपीति। यैरपि मीमांसकैरपि, अस्याः पदार्थप्रतीतेः असत्यत्वं नाभ्युपेयते नाङ्गीक्रियते, तैः तन्मतानुयायिभिः वाक्यार्थपदार्थयोः, घटतदुपादानकारणन्यायः कार्यकारणभावः अभ्युपगन्तव्यः अङ्गीकरणीयः।

तदेवोपपादयति—यथेति। घटे अवयविनि निष्पन्ने उत्पन्ने, तदुपादान-कारणानां तदवयवानाम्। पृथगुपलम्भः पृथक्तया भानं नास्ति, तथैव वाक्ये पदसमूहात्मके, तदर्थे वा, वाक्यार्थे वा, प्रतीते प्रतीतिविषयीभूते सति पदतदर्थानां पदानां पदार्थानां च, तेषां वाक्यवाक्यार्थावयवानां तदा वाक्य-वाक्यार्थबोधानन्तरं, विभक्ततया पार्थक्येन, उपलम्भे वाक्यार्थबुद्धिरेव वाक्यार्थज्ञानमेव, दूरीभवेत् न स्यादित्यर्थः। वाच्यव्यङ्ग्ययोस्तु वाच्यार्थस्य व्यङ्ग्यार्थस्य च, एष न्यायो न भवति, कार्यकारणभावात्मको नास्तीत्यर्थः। हेतुमाह—नहीति। व्यङ्ग्ये व्यङ्ग्यार्थे, प्रतीयमाने व्यङ्ग्यार्थप्रतीतिकाले, वाच्यबुद्धिः वाच्यस्यार्थस्य बोधो न दूरीभवति न नश्यति। किन्तु वाच्यावभासा-विनाभावेन वाच्यस्यार्थस्य योऽवभासः प्रतीतिः तद्व्याप्तत्वेन तस्य व्यङ्ग्यार्थस्य प्रकाशनात्। स्वमतमाह—तस्मादिति। तस्माद् यस्माद् वाक्यार्थपदार्थयोः घटतदुपादानकारणन्यायो न युक्तः, तस्मात् तयोः पदार्थवाक्यार्थयोः घटप्रदीपन्यायः अभ्युपगन्तव्यः। उपपादयति—यथैवेति। प्रदीपद्वारेण प्रदीप-प्रकाशद्वारा घटप्रतीतौ उत्पन्नायां घटप्रत्यक्षे जाते, प्रदीपप्रकाशः यथा न निवर्तते

यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायां न प्रदीपप्रकाशो निवर्तते, तद्वद्व्यङ्ग्यप्रतीतौ वाच्यावभासः। यत्तु प्रथमोद्द्योते 'यथा पदार्थद्वारेण' इत्याद्युक्तं तदुपायत्वमात्रात् साम्यविवक्षया नन्वेवं युगपदर्थद्वययोगित्वं वाक्यस्य प्राप्तं तद्भावे च तस्य वाक्यतैव विघटते, तस्या ऐकार्थ्यलक्षणात्; नैष दोषः।

गुणप्रधानभावेन तयोर्व्यवस्थानात्। व्यङ्ग्यस्य हि क्वचित् प्राधान्यं, वाच्यस्योपसर्जनभावः; क्वचित् वाच्यस्य प्राधान्यं, अपरस्य गुणभावः। तत्र व्यङ्ग्यप्राधान्ये ध्वनिरित्युक्तमेव; वाच्यप्राधान्ये तु प्रकारान्तरं

---

उज्जीवनी।

न दूरीभवति, तद्वत् तथैव व्यङ्ग्यप्रतीतौ व्यङ्ग्यार्थबोधे, समुत्पन्ने वाच्यावभासः वाच्यस्य प्रतीतिरपि न दूरीभवतीत्यर्थः। तु किन्तु, प्रथमोद्द्योते यदुक्तं "यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते। वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः।" इति। तदुपायत्वमात्रात् साम्यविवक्षया यथा वाक्यार्थबोधे पदार्थबोध उपायो भवति, तथा व्यङ्ग्यार्थबोधे वाच्यार्थबोधोऽपि इति तयोरुपायत्वेन साम्यं विवक्षितमित्यर्थः॥

वाच्यव्यङ्ग्ययोरवभासे घटप्रदीपन्यायाङ्गीकारे दोषमाशङ्कते—नन्विति। एवं वाच्यव्यङ्ग्यावभासे घटप्रदीपन्याये स्वीक्रियमाणे, वाक्यस्य युगपद् एकदा, अर्थद्वययोगित्वं अर्थद्वयबोधकत्वं प्राप्तं, तद्भावे युगपदर्थद्वयवाचकत्वे च तस्य तत्प्रतिपादकशब्दसमूहात्मकस्य, वाक्यतैव विघटते वाक्यत्वमेव न घटते। तस्या वाक्यतायाः, ऐकार्थ्यलक्षणत्वात् ऐकार्थ्यं एकविशिष्टार्थबोधकत्वं लक्षणं स्वरूपं यस्याः तादृशत्वरूपत्वात्। एवमर्थभेदे वाक्यभेदरूपदोषापत्तेः युगपदर्थद्वयबोधकत्वमनुपपन्नमिति यावत्। समाधत्ते—नेति। एष दोषः वाक्यभेदरूपो दोषः नास्ति न विद्यते। तयोर्द्वयोरप्यर्थयोः गुणप्रधानभावेन गुणत्वेन प्रधानत्वेन च व्यवस्थानात् व्यवस्थितत्वात्। व्यङ्ग्यस्य व्यङ्ग्यार्थस्य, क्वचित् प्राधान्यं ध्वनिस्थले, वाच्यस्य तु तत्र उपसर्जनभावः, गुणीभावः। तथा क्वचित् गुणीभूतव्यङ्ग्ये वाच्यस्यार्थस्य प्राधान्यं, अपरस्य व्यङ्ग्यस्य गुणभावः अप्रधानता। तत्र यत्र व्यङ्ग्यस्य प्राधान्यं, तत्र ध्वनिरित्युक्तमेव। तत्र तस्य ध्वनिव्यपदेशः। वाच्यप्राधान्ये तु वाच्य-

निर्देक्ष्यते । तस्मात्—स्थितमेतत् व्यङ्ग्यपरत्वेऽपि काव्यस्य, न व्यङ्ग्यस्याभिधेयत्वमपि तु व्यङ्ग्यत्वमेव ॥

किञ्च व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद् भवद्भिः नाभ्युपगन्तव्यमतत्परत्वाच्छब्दस्य । तदस्ति तावद् व्यङ्ग्यः, शब्दानां कश्चिद्विषय इति । यत्रापि तस्य प्राधान्यं तत्रापि किमिति तस्य स्वरूपमपह्नूयते । एवं तावद् वाचकत्वादन्यदेव व्यञ्जकत्वम्; इतश्च वाचकत्वाद् व्यञ्जकत्वस्यान्यत्वं, यद्वाचकत्वं शब्दैकाश्रयत्वम् इतरत्तु शब्दाश्रयमर्थाश्रयं च शब्दार्थयोः द्वयोरपि व्यञ्जकत्वस्य प्रतिपादितत्वात् ।

---

## उज्जीवनी ।

स्यार्थस्य प्रधानतायां तु प्रकारान्तरं निर्देक्ष्यते प्रकारान्तरत्वनिर्देशः करिष्यते इति । तस्मात् स्थितमेतत्, एतत् सिद्धमित्यर्थः । काव्यस्य कविप्रयुक्तशब्दसन्दर्भस्य, व्यङ्ग्यपरत्वेऽपि व्यङ्ग्यार्थतात्पर्येण प्रयुक्ततायामपि, व्यङ्ग्यस्यार्थस्याभिधेयत्वमभिधाव्यापारविषयत्वं नास्त्येव ! किन्तु व्यञ्जनाव्यापारविषयत्वमेव ।

किञ्चेति । व्यङ्ग्यस्यार्थस्य प्राधान्येनाविवक्षायां प्राधान्येन विवक्षा यत्र नास्ति तत्र गुणीभूतव्यङ्ग्ये, भवद्भिः वाच्यत्वं तावन्नाभ्युपगन्तव्यं, अतत्परत्वाच्छब्दस्य, यदर्थविषयकबोधजनकत्वतात्पर्येण शब्दः प्रयुज्यते स एव तस्य वाच्योऽर्थ इति नियमात्, प्रधानत्वेन तात्पर्याविषयस्य व्यङ्ग्यार्थस्य वाच्यत्वं भवद्भिर्नाङ्गीकर्तुं शक्यत इति यावत् । तावता किमायातमित्याह—तदिति । तत् तस्मात्, शब्दानां व्यङ्ग्याख्यः कश्चिद् विषयः नास्तीत्यायातम् । तस्य व्यङ्ग्यस्य यत्रापि प्राधान्यं तत्रापि तस्य व्यङ्ग्यस्य स्वरूपं किमिति अपह्नूयते किमर्थं व्यङ्ग्यस्य निह्नवः क्रियते । एवमुक्तप्रकारेण व्यञ्जकत्वं वाचकत्वादन्यदेव भिन्नमेव । इतश्च प्रकारान्तरेणापि वाचकत्वाद्, व्यञ्जकत्वस्यान्यत्वं भेदः । यदिति । वाचकत्वं शब्दैकाश्रयं शब्दमेकमेवाश्रित्य वर्तते । इतरत्तु व्यञ्जकत्वं तु, शब्दाश्रयमर्थाश्रयं च । यत्रार्थः शब्दो वेत्यनेन शब्दार्थयोर्द्वयोरपि व्यञ्जकत्वस्य प्रतिपादितत्वात् । एवं वाचकत्वं व्यञ्जकत्वं च मिथो भिन्नमेवेति व्यवस्थितम् ॥

गुणवृत्तिस्तूपचारेण लक्षणया चोभयाश्रयापि भवति। किन्तु ततोऽपि व्यञ्जकत्वं स्वरूपतो विषयतश्च भिद्यते। रूपभेदस्तावदयम्। यदमुख्यतया व्यापारो गुणवृत्तिः प्रसिद्धा। व्यञ्जकत्वं तु मुख्यतयैव शब्दस्य व्यापारः। न ह्यर्थाद् व्यङ्ग्यत्रयप्रतीतिर्या वाच्या तस्या अमुख्यत्वं मनागपि लक्ष्यते॥

अयं चान्यः स्वरूपभेदः— यद् गुणवृत्तिरमुख्यत्वेन व्यवस्थितं वाचकत्वमेवोच्यते। व्यञ्जकत्वं तु वाचकत्वादत्यन्तं विभिन्नमेव। एतच्च प्रतिपादितम्।

---

उज्जीवनी।

अथ गुणवृत्तेर्व्यञ्जनाया भेदं प्रतिपादयितुमाह—गुणवृत्तिरिति। उपचारेण सादृश्याख्यसम्बन्धेन प्रवृत्तिरुपचारस्तेन सादृश्यसम्बन्धनिबन्धनतया, लक्षणया तदितर (कार्यकारणभावादि) सम्बन्धनिबन्धनतया च द्विविधा गुणवृत्तिर्लक्षणाव्यापारः। शुद्धा गौणी चेति द्विविधाया लक्षणाया अमुख्यव्यापारात्मकत्वात् गुणवृत्तिरिति व्यवहारः। सा च उभयाश्रयापि लक्षणापि शब्दमर्थं चेति उभयमाश्रित्यैव वर्तते। किन्तु ततोऽपि लक्षणाया अपि, व्यञ्जकत्वं व्यञ्जनाव्यापारः, स्वरूपतः स्वरूपभेदेन विषयतो विषयभेदेन च भिद्यते भिन्नैव भवति। रूपभेदं प्रदर्शयति—रूपेति। अयं वक्ष्यमाणप्रकारः रूपभेदः स्वरूपभेदः, गुणवृत्तिर्लक्षणा, अमुख्यतया मुख्यार्थबाधे सति मुख्यार्थसम्बद्धस्यार्थस्य अप्रधानतया प्रवर्तमानो व्यापारः। तु किन्तु, व्यञ्जकत्वं व्यञ्जना, मुख्यतया प्राधान्येन प्रवर्तमानः, शब्दस्य व्यापारः। अर्थात् वाच्याद् या व्यङ्ग्यत्रयप्रतीतिः वस्त्वलङ्काररसादिरूपाणां त्रयाणामर्थानां प्रतीतिः, तस्याः अर्थत्रयप्रतीतेः मनागपि अत्यल्पमपि अमुख्यत्वं लक्ष्यते दृश्यते॥

प्रकारान्तरेणापि स्वरूपभेदमाह—अयमिति। अयं वक्ष्यमाणोऽन्यः स्वरूपभेदः स्वरूपभेदप्रकार इत्यर्थः। यद् यतः, गुणवृत्तिः लक्षणा, अमुख्यत्वेन व्यवस्थितं वाचकत्वमेव। शब्दो यदा मुख्यतया साक्षात् सङ्केतितमर्थं, बोधयति तदा तद् वाचकत्वं शब्दनिष्ठं मुख्यम्। यदा तु अमुख्यतया वाच्यार्थसम्बद्धमर्थान्तरं बोधयति तदा तद् वाचकत्वं अमुख्यम् इति चोच्यते। ततो मुख्यामुख्ययोरुभयोरप्यर्थयोर्मुख्यत्वामुख्यत्वरूपं वाचकत्वमेव व्यापारः। व्यञ्जकत्वं तु व्यञ्जनाव्यापारस्तु, वाचकत्वादभिधाव्यापाराद् अत्यन्त विभिन्नमेव अत्यन्तं भिद्यत एवेत्यर्थः। एतदपि पूर्वं प्रतिपादितम्। अन्यमपि भेदमाह— अयं चापरो रूपभेद इति। गुणवृत्तौ लक्षणायाम्। यदा अर्थो वाच्यः, अर्थान्तरं

अयं चापरो रूपभेदो यद्गुणवृत्तौ यदार्थोऽर्थान्तरमुपलक्षयति तदोपलक्षणीयार्थात्मना परिणत एवासौ सम्पद्यते। यथा "गङ्गायां घोष" इत्यादौ।—

व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरं द्योतयति तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत्। यथा—'लीलाकमलपत्राणि गणयामास पार्वती' इत्यादौ। यदि च यत्रातिरस्कृतस्वप्रतीतिरर्थोऽर्थान्तरं लक्षयति तत्र लक्षणाव्यवहारः क्रियते। तदेवं सति लक्षणैव मुख्यः शब्दव्यापार इति प्राप्तम्। यस्मात् प्रायेण वाक्यानां वाच्यव्यतिरिक्ततात्पर्यविषयार्थावभासित्वम्॥

---

उज्जीवनी।

तत्सम्बद्धमन्यमर्थं उपलक्षयति अधिकतया बोधयति, तदासौ वाच्योऽर्थः, उपलक्षणीयात्मना अधिकतया बोधितस्यार्थस्य स्वरूपेण परिणतः सम्पद्यते। यदा 'गङ्गायां घोष' इत्यादौ प्रवाहरूपो वाच्योऽर्थः, तीररूपेण परिणत एव वाक्यार्थबोधविषयो भवति। इयमेव जहत्स्वार्थेत्युच्यते। व्यञ्जकत्वमार्गे तु व्यञ्जनायां यदा अर्थो वाच्यः अन्यस्यार्थान्तरस्य प्रकाशको व्यञ्जकः, प्रतीयते प्रकाशते। यथा दीपः स्वात्मानं प्रकाशयन्नेव पदार्थान्तरं प्रकाशयति तथेत्यर्थः। उदाहरति—यथेति। लीलेति। तत्र लीलापत्रगणनादिरूपोऽर्थः स्वयं प्रकाशमान एव व्रीडादिरूपमर्थान्तरं प्रकाशयति। ननु 'गङ्गायां घोष' इत्यादौ लक्षणलक्षणास्थले वाच्यस्याविवक्षितत्वेन तत्तिरस्कारपूर्वकमर्थान्तरस्य प्रतीतिर्लक्षणया भवतीति मते, तया व्यञ्जनाया गतार्थत्वं यद्यपि न सम्भवति तथापि उपादानलक्षणास्थले वाच्यार्थपरित्यागेनार्थान्तरस्य लक्ष्यतायां तत्रत्यथा लक्षणया व्यञ्जनायाश्चरितार्थत्वं भवतु इत्याशङ्कते—यत्रेति। स्थलविशेषे 'कुन्ताः प्रविशन्ति' इत्यादौ अतिरस्कृतस्वप्रतीतिः अतिरस्कृता स्वस्य (वाच्यार्थस्य) प्रतीतिर्येन तादृशो वाच्यार्थः अर्थान्तरं अन्यमर्थं, लक्षयति प्रतिपादयति, तत्र लक्षणाव्यवहार एव खलु क्रियते, न व्यञ्जनाव्यवहारः। यद्येवं तर्हि मुख्यः शब्दव्यापारः, एव लक्षणेति प्राप्तम्। तत्र हेतुमाह—यस्मादिति। यस्माद् यतः, प्रायेण भूम्ना, वाक्यानां शब्दसमूहात्मकानां, वाच्यव्यतिरिक्ततात्पर्यविषयार्थावभासित्वं वाच्यादर्थाद् व्यतिरिक्तस्य भिन्नस्य तात्पर्यविषयस्य वक्तृविवक्षाधीनस्य अर्थस्यावभासनं प्रकाशनं नियमेन दृश्यते।

ननु त्वत्पक्षेऽपि पदार्थो व्यङ्ग्यत्रयं प्रकाशयति, तदा शब्दस्य कीदृशो व्यापारः। उच्यते—प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविध व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपह्नूयते। विषयभेदोऽपि गुणवृत्तिव्यञ्जकत्वयोः स्पष्ट एव।

यतो व्यञ्जकत्वस्य रसादयोऽलङ्कारविशेषाः, व्यङ्ग्यरूपावच्छिन्नं वस्तु चेति त्रयं विषयः।[१] तत्र रसादिप्रतीतिर्गुणवृत्तिरिति न केनचिदुच्यते, न च शक्यते वक्तुम्। व्यङ्ग्यालङ्कारप्रतीतिरपि तथैव। वस्तुचारुत्वप्रतीतये

---

उज्जीवनी।

किं च त्वत्पक्षेऽपि सिद्धान्तितमतेऽपि, अर्थो वाच्यः, यदा व्यङ्ग्यत्रयं वस्त्वलङ्काररसात्मकं, प्रकाशयति द्योतयति, तदा शब्दस्य कीदृशो व्यापारः, अर्थस्यैवार्थान्तरप्रकाशकत्वादिति पूर्वपक्षाशयः। समाधत्ते—उच्यत इति। लक्ष्यार्थतात्पर्यग्राहकं प्रमाणं मुख्यार्थबाधकादिकम्। व्यङ्ग्यार्थतात्पर्यग्राहकं तु प्रकरणादिकमिति लक्षकत्वव्यञ्जकत्वयोर्भेदः। तत्रापि व्यञ्जकत्वं शब्दार्थोभयाश्रितमित्युक्तम्। तथा च यदा शब्दोऽर्थान्तरं व्यनक्ति तदा तस्यार्थस्य सहकारित्वं, यदार्थोऽर्थान्तरं बोधयति तदा शब्दस्य सहकारित्वं च निश्चितम्। अर्थस्य वाच्यार्थस्य तथाविधं व्यञ्जकत्वं प्रकरणाद्यवच्छिन्नशब्दवशेनैव शब्दार्थस्यानन्यलभ्यत्वात् शब्दस्य तत्रोपयोगः अर्थान्तरव्यञ्जने उपयोगः, कथमपह्नूयते अपह्नोतुं न शक्यत इत्यर्थः। एतेन लक्षकत्वव्यञ्जकत्वयोः स्वरूपभेदः प्रदर्शितः।

विषयभेदमाह—विषयेति। गुणवृत्तिव्यञ्जकत्वयोः गुणवृत्तेर्लक्षणायाः, व्यञ्जकत्वस्य व्यञ्जनायाश्च विषयभेदोऽपि स्पष्ट एव। स्पष्टतामेवाह—यत इति। यतः यस्माद् व्यञ्जकत्वस्य व्यञ्जनाव्यापारस्य, रसादयो रसभावादयः, अलङ्कारविशेषाः, व्यङ्ग्यरूपावच्छिन्नं व्यङ्ग्येन स्वरूपेण विशिष्टं वस्तु चेति त्रयं विषयः। तेषु एकैकस्यापि गुणवृत्तिविषयत्वं नास्ति। रसादिप्रतीतिः रसभावादीनामभिव्यक्तिः गुणवृत्तिरिति लक्षणा बोध्येति केनचिदपि

---

१. यत्र अस्खलद्गतित्वं, समयानुपयोगित्वं पृथगवभासित्वं चेति त्रयं तत्र' च

स्वशब्दानभिधेयत्वेन यत् प्रतिपादयितुमिष्यते तद् व्यङ्ग्यम्। तच्च न सर्वं गुणवृत्तेर्विषयः प्रसिद्ध्यनुरोधाभ्यामपि गौणानां शब्दानां प्रयोगदर्शनात्।

तथोक्तं प्राक्। यदपि च गुणवृत्तेः विषयस्तदपि च व्यञ्जकत्वानुप्रवेशेन। तस्माद् गुणवृत्तेरपि व्यञ्जकत्वस्यात्यन्तविलक्षणत्वम्। वाचकत्वगुणवृत्ति-विलक्षणस्यापि च तस्य तदुभयाश्रयत्वेन व्यवस्थानम्।

व्यञ्जकत्वं हि क्वचिद्वाचकत्वाश्रयेण व्यवतिष्ठते। यथा विवक्षितान्यपरवाच्ये ध्वनौ। क्वचित्तु गुणवृत्त्याश्रयेण। यथा—अविवक्षितान्यपरवाच्यो ध्वनौ। तदुभयाश्रयत्वप्रतिपादनायैव ध्वनेः प्रथमतरं द्वौ प्रभेदावुपन्यस्तौ। तदुभया-

उज्जीवनी।

नोच्यते तथा वक्तुं न शक्यते च। व्यङ्ग्यालङ्कारप्रतीतिरपि तथैव, लक्षणा-जन्यप्रतीतिविषया न भवत्येव। वस्तुचारुत्वप्रतीतये वस्तुनः चारुत्वावगमन य स्वशब्दानभिधेयत्वेन स्वशब्दे। वाचकशब्दे। अभिधानं विना यत् प्रतिपाद-यितुमिष्यते तद् वस्तु च व्यङ्ग्यमित्येव चोच्यते। तत् सर्वं च वस्तु गुणवृत्तः लक्षणाया विषयो न भवति। एतेन क्वचिल्लक्षणाबोध्यत्वमपि दृश्यत इति सिद्धं भवति। यथा—निःश्वासान्ध इवादर्श इत्यादिस्थले अन्धशब्दस्य मालिन्ये लक्षणा। यतः प्रसिद्धानुरोधाभ्यामपि प्रसिद्धेः रूढितः, अनुरोधात् प्रयोजनानु-सारतः, गौणशब्दाः प्रयुज्यमाना दृश्यन्ते। यथा लावण्यादयः, 'वदति बिसि-नीपत्रशयन'मित्यादयः। इदं पूर्वमेवोक्तं द्वितीयोद्योते। अपि च गुणवृत्तेर्विषय इति यदुच्यते तदपि व्यञ्जकत्वस्य व्यञ्जनयानुप्रवेशेनैव। प्रयोजनवत्या लक्षणायाः शैत्यपावनत्वादिकं तु व्यञ्जनामात्रव्यापारगम्यमेव [प्रयोजना-त्मकव्यङ्ग्यार्थप्रतिपिपादयिषयैव लाक्षणिकशब्दप्रयोगे नैर्भर्यं कवीनाम्] यस्मादेवं विषयभेदस्तस्मात्, गुणवृत्तेर्लक्षणाया अपि, व्यञ्जकत्वस्य व्यञ्जनायाः, अत्यन्तविलक्षणत्वं अत्यन्तभेदः। तथापि तस्य व्यञ्जकत्वस्य वाचकत्वगुणवृत्ति-विलक्षणस्यापि वाचकत्वादभिधाया, गुणवृत्तेर्लक्षणाया अपि वैलक्षण्यसत्त्वेऽपि तदुभयाश्रयत्वेन वाचकत्वलक्षकत्वात्मकमुभयमाश्रित्यैव व्यवस्थितिर्दृश्यत इत्यर्थः।

तदेवोपपादयति—व्यञ्जकत्वमिति। एवं व्यञ्जकत्वस्य सिद्धौ तत् क्वचिद्वाचकत्वं शब्दनिष्ठमभिधायकत्वरूपमाश्रित्य व्यवतिष्ठते। यथा—विवक्षितान्यपरे वाच्ये ध्वनौ। तत्र वाच्यस्य विवक्षितत्वात्। क्वचित्तु

श्रितत्वाच्च तदेकरूपत्वं तस्य न शक्यते वक्तुम् । यस्मान्न तद्वाचकत्वेनैकरूपमेव, क्वचिल्लक्षणाश्रयेण वृत्तेः । न च लक्षणैकरूपमेवान्यत्र वाचकत्वाश्रयेण व्यवस्थानात् ।

न चोभयधर्मत्वेनैव तदेकरूपं न भवति । यावद्वाचकत्वलक्षणादिरूप-रहितशब्दधर्मत्वेनापि ; तथाहि—गीतध्वनीनामपि व्यञ्जकत्वमस्ति रसादिविषयम् । न च तेषां वाचकत्वं लक्षणा वा कथञ्चिल्लक्ष्यते । शब्दादन्य-त्रापि विषये व्यञ्जकत्वस्य दर्शनाद् वाचकत्वादिशब्दधर्मप्रकारत्वमयुक्तं वक्तुम् । यदि च वाचकत्वलक्षणादीनां शब्दप्रकाराणां प्रसिद्धप्रकारविलक्षण-त्वेऽपि व्यञ्जकत्वं प्रकारत्वेन परिकल्प्यते, तच्छब्दस्यैव प्रकारत्वेन कस्मान्न

---

उज्जीवनी ।

गुणवृत्तिमाश्रित्यावतिष्ठते व्यञ्जकत्वम् । यथा अविवक्षितवाच्ये ध्वनौ । एवं ध्वनेः तदुभयाश्रयत्वप्रतिपादनाय व्यञ्जकत्वस्य, वाचकत्वलक्षकत्वरूपो-भयाश्रयत्वप्रदर्शनायैव च, प्रथमतरमादावेव, द्वौ भेदौ, विवक्षितान्यपरवाच्या-विवक्षितान्यवाच्याख्यौ भेदौ उपन्यस्तौ । तदुभयाश्रितत्वाच्च व्यञ्जकत्वं यतो वाचकत्वं, गुणवृत्तिं चाश्रित्य वर्तते । तस्मात् तदेकरूपत्व वाचकत्वैक-रूपत्वं, लक्षकत्वैकरूपत्वं वा वक्तुं न शक्यते । हेतुमाह—यस्मादिति । यस्माद् यतः, तद् व्यञ्जकत्वं, न वाचकत्वैकरूपमेव, क्वचिद् स्थलान्तरे लक्षणाश्रयेण वृत्तेः लक्षणामाश्रित्य वर्तनात् । न च लक्षणैकरूपमेव गुणवृत्त्येकरूपमेव, अन्यत्र स्थलान्तरे वाचकत्वमाश्रित्य व्यवस्थानात् एवं च स्थलभेदेन शब्दस्य वाचकत्वलक्षकत्वरूपधर्मद्वयसम्भवादेव तदेकैकरूपं वाचकत्वैकरूपं वा, लक्षकत्वैकरूपं वा न भवति इत्यपि वक्तुं न युक्तम् । वाचकत्वलाक्षणिक-त्वादि यद्रूपं धर्मः, तद्रहितो यः शब्दो ध्वन्यात्मकः, तद्धर्मत्वेनापि तदाश्रयत्वे-नापि व्यञ्जकत्वस्य व्यवस्थितेः व्यवस्थानात् । तदेवोपपादयति—तथाहीति । गीतध्वनीनामपि रसादिविषयं रसभावादिविषयं व्यञ्जकत्वं रसभावादि-व्यञ्जकत्वमिति यावत् । तेषां गीतध्वनीनां वाचकत्वमभिधायकत्वं, लक्षणा लक्षकत्वं वा कथञ्चिदपि न लक्ष्यते न दृश्यते । किञ्च शब्दादन्यत्रापि ध्वन्यात्मकात् वर्णात्मकाच्च शब्दादन्यत्र, चेष्टादावपि विषये व्यञ्जकत्वस्य व्यङ्ग्यार्थबोधनस्य दर्शनात् वाचकत्वलक्षकत्वरूपधर्मवैशिष्ट्यं वक्तुमयुक्तं न

परिकल्प्यते। तदेवं शाब्दे व्यवहारे त्रयः प्रकारा—वाचकत्वं गुणवृत्तिर्व्यञ्जकत्वं च। तत्र व्यञ्जकत्वे यदा प्राधान्यं तदा ध्वनिः, तस्य चाविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्वौ प्रभेदावनुक्रान्तौ प्रथमतरं तौ सविस्तरं निर्णीतौ॥

अन्यो ब्रूयात्—ननु विवक्षितान्यपरवाच्ये ध्वनौ गुणवृत्तिता नास्तीति यदुच्यते तद् युक्तम्। यस्माद् वाच्यवाचकप्रतीतिपूर्विका यत्रार्थान्तरप्रतीतिस्तत्र कथं गुणवृत्तिव्यवहारः, न हि गुणवृत्तौ यदा निमित्तेन केनचिद् विषयान्तरे

---

उज्जीवनी।

वक्तुं युक्तमित्यर्थः। प्रसिद्धप्रकारविलक्षणत्वेऽपि प्रसिद्धो यः प्रकारः शब्दधर्मत्वरूपः, तस्माद् विलक्षणत्वेऽपि भिन्नत्वेऽपि अवाचकध्वनिधर्मत्वसम्भवेऽपि, वाचकत्वलक्षणादीनां वाचकत्वलाक्षणिकत्वव्यञ्जकत्वादीनां शब्दप्रकाराणां शब्दधर्माणां मध्ये, व्यञ्जकत्वमपि। यदि प्रकारत्वेन परिकल्प्यते तर्हि तद् व्यञ्जकत्वमपि। शब्दस्यैव प्रकारत्वेन शब्दधर्मत्वेन, कस्मान्न परिकल्प्यते तस्यापि शब्दव्यापारत्वेन परिकल्पनं युक्तमेवेत्यर्थः। उपसंहरति—तदिति। तत् तस्मात्, एवं पूर्वोपदर्शितप्रकारेण, शाब्दे व्यवहारे शाब्दव्यवहारविषये। त्रयः प्रकाराः—वाचकत्वं, गुणवृत्तिः (लक्षकत्वम्) व्यञ्जकत्वं चेति। तत्र तेषां मध्ये, व्यञ्जकत्वे, व्यञ्जनाव्यापारविषये, यदा व्यङ्ग्यस्यार्थस्य व्यञ्जनाव्यापारगम्यस्यार्थस्य प्राधान्यं तदा ध्वनिः, तस्य च ध्वनेः, अविवक्षितवाच्यो (लक्षणामूलः) विवक्षितान्यपरवाच्य; (अभिधामूलः) इति द्वौ प्रभेदौ प्रथममनुक्रान्तौ, प्रथमतरमादावेव, तौ प्रभेदौ सविस्तरं निर्णीतौ समर्थितावित्यर्थः।

एतावता प्रबन्धेन वाचकत्वव्यञ्जकत्वयोः, गुणवृत्ति (लक्षकत्वं) व्यञ्जकत्वयोश्च भेदे प्रतिपादितेऽपि, तत्रापरितुष्यतः अन्यस्य कस्यचिन्मतं तन्निवारणायोपन्यस्यति। अन्यो ब्रूयादिति। नन्विति। विवक्षितान्यपरवाच्ये ध्वनौ, गुणवृत्तिता लाक्षणिकत्वं नास्तीति यदुच्यते तद् युक्तमेव। नानार्थस्थले अभिधेयस्यार्थस्य विवक्षितत्वात्, तस्य वाचको यः शब्दः, तस्यावृत्त्या प्रतीतिपूर्वकं (पदज्ञानपूर्वकं) यत्रार्थान्तरस्य ज्ञानं तत्र गुणवृत्तिव्यवहारस्य प्रसक्तेर-

शब्द आरोप्यते अत्यन्ततिरस्कृतस्वार्थः यथा 'अग्निर्माणवक इत्यादौ, यदा वा स्वार्थमंशं परित्यजंस्तत्सम्बन्धद्वारेण विषयान्तरमाक्रामति' यथा "गङ्गायां घोष" इत्यादौ। तदाविवक्षितवाच्यत्वमुपपद्यते। अत एव च विवक्षितान्यपरो वाच्ये ध्वनौ वाच्यवाचकयोर्द्वयोरपि स्वरूपप्रतीतिरर्थावगमनं दृश्यत इति व्यञ्जकत्वव्यवहारो युक्त्यनुरोधी। स्वरूपं प्रकाशयन्नेव परावभासको व्यञ्जक इत्युच्यते, तथाविधे विषये वाचकत्वस्यैव व्यञ्जकत्वमिति गुणवृत्तिव्यवहार-नियमेनैव न शक्यते कर्तुम्।

---

उज्जीवनी।

भावात्। तद्युक्तमिति पूर्वेणान्वयः। गुणवृत्तौ लक्षणायां, गुणेन केनचित् सादृश्यादिना निमित्तेन, यदा शब्दस्यार्थान्तरे वृत्तिः, तदा विषयान्तरे अर्थान्तरे शब्द आरोप्यते, वाच्यस्यार्थस्यात्यन्तं तिरस्कारश्च भवति। स चाविवक्षित-वाच्यध्वनिरित्युच्यते। यथेति—'अग्निर्माणवक' इत्यादौ। तत्र अग्निशब्द-मुख्यार्थस्य माणवकपदार्थेनान्वयस्य बाधितत्वात्, तेजस्विरूपेऽर्थान्तरे लक्षणाङ्गीक्रियते। [माणवके तेजोऽतिशयस्य प्रतीतिः प्रयोजनम्] एवं चात्रास्ति गुणवृत्तिः। वाच्यार्थस्यात्यन्तं तिरस्कारेण तन्निरूपितं वाचकत्वमप्यपेतम्। अतः तत्र वाच्यस्य विवक्षितत्वं न हि उपपद्येत। तथा अर्थान्तरसंक्रमितेऽपि स्वार्थं स्वस्य शब्दस्य, वाच्यमर्थं अंशेन भागेन, परित्यजन् तत्सम्बन्धद्वारेण मुख्यार्थसम्बन्धेन विषयान्तरं अर्थान्तरमाक्रामति, यथा—'गङ्गायां घोष' इत्यादौ। अत्र गङ्गाशब्दमुख्यार्थो गङ्गास्रोतः, तत्र च पदार्थान्तरान्वयस्य बाधितत्वात् गङ्गाशब्दः प्रवाहरूपमंशं परित्यज्य गङ्गासम्बन्धविशिष्टे तीररूपेऽर्थान्तरे सङ्क्रमितः। अत्रापि गुणवृत्तिरस्त्येव। गुणेन सामीप्यादिना गङ्गाशब्दस्य गङ्गातीरे वर्तनात्। अत्र च गङ्गाशब्दमुख्यो योऽर्थः यः प्रवाह-रूपस्तस्य घोषपदार्थेऽन्वयो न सम्भवतीति वाच्यस्य मुख्यस्यार्थस्य पदार्थान्तरा-न्वयविवक्षा नास्ति। अत एवेति। अत एव च अविवक्षितवाच्ये ध्वनौ, वाच्य-वाचकयोर्द्वयोः वाच्यस्यार्थस्य, वाचकस्य शब्दस्य चेत्युभयोरपि, स्वरूपप्रतीतिः स्वरूपज्ञानं अर्थावगमोऽर्थान्तरज्ञानं च दृश्यत इति तस्य शब्दस्य व्यञ्जकत्वव्यव-हारो युक्त्यनुरोधी युक्तिमनुसृत्यैव व्यञ्जक इति व्यवहारो वर्तत इति यावत्।

अविवक्षितवाच्यस्तु ध्वनिर्गुणवृत्तेः कथं भिद्यते। तस्य प्रभेदद्वये गुणवृत्ति-प्रभेदद्वयरूपता लक्ष्यत एव यतः। अयमपि न दोषः। यस्मादविवक्षितवाच्यो-ध्वनिर्गुणवृत्तिमार्गाश्रयोऽपि भवति, न तु गुणवृत्तिरूप एव। गुणवृत्तिर्हि व्यञ्जकत्वशून्यापि दृश्यते। व्यञ्जकत्वं च यथोक्तचारुत्वहेतुं व्यङ्ग्यं विना न व्यवतिष्ठते। गुणवृत्तिस्तु वाच्यधर्माश्रयेणैव व्यङ्ग्यमात्राश्रयेण चाभेदो-पचाररूपा सम्भवति यथा—तीक्ष्णत्वादग्निर्माणवकः, आह्लादकत्वाच्चन्द्र

---

उज्जीवनी।

तथा च घटप्रदीपन्यायेन स्वरूपं स्वं रूपं वाच्यमर्थं प्रकाशयन्नेव, परावभासकः परस्य व्यङ्ग्यस्यार्थस्य प्रकाशकः यः स एव व्यञ्जक इत्युच्यते। तथाविधे तादृशे विषये, वाचकत्वस्यैव व्यञ्जकत्वमिति वाच्यार्थबोधनदशायां तादृश वाच्यार्थनिरूपितं शब्दनिष्ठं यत् वाचकत्वं तदेवार्थान्तरबोधनदशायां तन्निरू-पितं तादृशशब्दनिष्ठ व्यञ्जकत्वमिति हेतोः विवक्षितान्यपरवाच्ये ध्वनौ गुणवृत्तिव्यवहारः लाक्षणिकत्वव्यवहारः, कर्तुं न शक्यते।

यतो यस्मात्, अविवक्षितवाच्यो ध्वनिस्तु, तस्य ध्वनेः प्रभेदद्वये अत्यन्त-तिरस्कृतवाच्यार्थान्तरसङ्क्रमितवाच्याख्ये, गुणवृत्तिप्रभेदद्वयरूपता गुणवृत्तः लक्षणायाः, यद् प्रभेदद्वयं गौणत्वलाक्षणिकत्वादिकं तद्रूपत्वं लक्ष्यते ततः अयं ध्वनिः गुणवृत्तेः कथं भिद्यत इत्याशङ्का। समाधत्ते—अयमपि न दोषः इति। हेतुमाह—यस्मादिति। अविवक्षितवाच्यो ध्वनिः, गुणवृत्तिमार्गाश्रयोऽपि गुणवृत्तेर्मार्गमाश्रित्यापि वर्तत इत्येव ब्रूमः। न तु गुणवृत्तिरूप एव गुणवृत्ति-मात्राश्रयः। हि यतः गुणवृत्तिः व्यञ्जकत्वशून्यापि दृश्यते। निरूढलक्षण-स्थले शब्दस्य व्यञ्जकत्वं नास्ति। व्यञ्जकत्वं च यथोक्तचारुत्वहेतुं सहृदयाह्लाद-कारि यच्चारुत्वं तस्य हेतुं व्यङ्ग्यमर्थं विना, न व्यवतिष्ठते न व्यवस्थितं भवति। गुणवृत्तिस्तु गौणी लक्षणा तु वाच्यधर्माश्रयेणैव वाच्यविषयो वाच्यार्थबोधजनकः, शब्दनिष्ठो यो व्यापारो वाचकत्वमभिधारूपं तदाश्रयेण प्रवर्तते, तादृशी अव्यङ्ग्या व्यङ्ग्यमात्राश्रयेण व्यङ्ग्यमात्रमाश्रित्य च प्रवर्तमाना सव्यङ्ग्या चेति, अभेदोपचाररूपा तादात्म्यारोपात्मिका सम्भवति। उदाहरति—यथेति। तीक्ष्णत्वादिति। अग्निमाणवकयोस्तीक्ष्णत्वेन,

एवास्या मुखमित्यादौ। यथा च 'प्रिये जने नास्ति पुनरुक्तम्' इत्यादौ। यापि लक्षणारूपा गुणवृत्तिः, सापि उपलक्षणीयार्थसम्बन्धमात्राश्रयेण चारुरूपव्यङ्ग्यप्रतीतिं विनापि सम्भवत्येव। यथा 'मञ्चाः क्रोशन्ती'त्यादौ विषये॥

यत्र तु सा चारुरूपव्यङ्ग्यप्रतीतिहेतुस्तत्रापि व्यञ्जकत्वानुप्रवेशेनैव वाचकत्ववत्। असम्भविना चार्थेन यत्र व्यवहारः यथा—'सुवर्णपुष्पां पृथिवीं' इत्यादौ तत्र चारुरूपव्यङ्ग्यप्रतीतिरेव प्रयोजिकेति तथाविधेऽपि विषये गुणवृत्तौ सत्यामपि ध्वनिव्यवहार एव युक्त्यनुरोधी। तस्मादविवक्षितवाच्येध्वनौ

---

उज्जीवनी

मुखचन्द्रयोराह्लादकत्वेन च सादृश्येन तादात्म्यं व्यज्यत इति सव्यङ्ग्येयम्। यथा चेति। प्रिये जन इति। रूढिपूर्विकाया अव्यङ्ग्याया गुणवृत्तेरुदाहरणम्।

> चुम्बिज्जइ असहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि।
> विरमिअ पुणो रमिज्जइ पिअ जणो णात्थि पुनरुत्यम्॥

प्रथमोद्द्योते प्रदर्शितम्। अत्र पुनरुक्तमित्यनेन अनुपादेयता लक्ष्यते। उक्तं च प्रथमोद्द्योते—

> रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
> लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥ इति।

यापि लक्षणारूपा गुणवृत्तिः या शुद्धा लक्षणेत्युच्यते, सापि उपलक्षणीयार्थसम्बन्धमात्राश्रयेण उपलक्षणीयस्य उपलक्षणविधया लक्षणया बोधविषयस्यार्थस्य लक्ष्यार्थस्य सम्बन्धम् तमाश्रित्य, चारुरूपव्यङ्ग्यप्रतीतिं चारु सुन्दरं, रूपं यस्य तादृशस्य व्यङ्ग्यस्य प्रतीतिं विनापि सम्भवत्येव। अत्र मञ्चशब्दमुख्यार्थस्य क्रोशनक्रियया अन्वयस्यानुपपत्त्या रूढ्या प्रसिद्ध्यनुरोधेन मञ्चस्थपुरुषे लक्षणा कल्प्यते। न ह्यत्र चारुरूपं किमपि व्यङ्ग्य वर्तते।

यत्रेति। यत्र तु सा लक्षणा, चारुरूपव्यङ्ग्यप्रतीतिहेतुः, चारुरूपस्य सहृदयहृदयाह्लादकस्य व्यङ्ग्यार्थकस्य प्रतीतिहेतुर्भवति तत्रापि व्यञ्जकत्वानुप्रवेशेनैव व्यञ्जकत्वस्य व्यञ्जनाव्यापारस्य अनुप्रवेशादेव। वाचकत्ववत् यदा वाचकत्वमभिधाव्यापारः चारुरूपमर्थान्तरं व्यञ्जनाया अनुप्रवेशेन बोधयति,

द्वयोरपि प्रभेदयोर्व्यञ्जकत्वविशेषाविशिष्टा गुणवृत्तिर्न तु तदेकरूपा सहृदयहृदयाह्लादिनी प्रतीयमाना प्रतीतिहेतुत्वात् विषयान्तरे तद्रूपशून्यायाः दर्शनात्। एतच्च सर्वं प्राक् सूचितमपि स्फुटतरप्रतीतये पुनरुक्तम्॥

अपि च व्यञ्जकत्वलक्षणो यः शब्दार्थयोर्धर्मः स प्रसिद्धसम्बन्धानुरोधी न कस्यचिद् विगतिविषयतामर्हति।

---

उज्जीवनी।

तथा लक्षणापि चारुरूपं व्यङ्ग्यमर्थं व्यञ्जनायाः साहाय्येनैव बोधयतीति ज्ञेयम्। असम्भविना अनुपपद्यमानतया बोधितेन, अर्थेन, यत्र व्यवहारः शब्दप्रयोगः, यथा "सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥" इत्यादौ। इदं पद्यं प्रथमोद्योते, अविवक्षितवाच्यध्वनेरुदाहरणत्वेन प्रदर्शितम्। अत्र शूरादयस्त्रयः सुवर्णपुष्पां पृथिवीं चिन्वन्ति इति वाक्येनाभिधया बोध्यमानस्यार्थस्यासम्भव तु, शूरादीनां सर्वत्र सुलभा विभूतय इत्यर्थो व्यञ्जनाव्यापारजन्यश्चमत्कारकारीति गुणवृत्तौ सत्यामपि ध्वनिव्यवहार एव युक्त्यनुरोधीति युक्त इत्यर्थः। एवं च यथा वाचकत्वव्यञ्जकत्वयोर्भेदस्तथा लक्षकव्यञ्जकत्वयोरपि भेदः सम्यक् प्रदर्शितः। उपसंहरन्नाह—तस्मादिति। तस्मादेतावतोक्तेन कारणेन, अविवक्षितवाच्ये ध्वनौ, अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यरूपयोर्द्वयोरपि प्रभेदयोः लक्षणामूलध्वनेरवान्तरभेदयोः। व्यञ्जकत्वविशेषाविशिष्टा व्यञ्जकत्वात्मको यो विशेषः (गुणवृत्तौ) तेन यद् वैशिष्ट्यं तद्रहिता गुणवृत्तिरेव व्यापारः। तु किन्तु, सा गुणवृत्तिः, तदेकरूपा तद् व्यञ्जकत्वमेव एकं रूपं (धर्मः) यस्याः तादृशी न भवति, यतः सा गुणवृत्तिः, प्रतीयमाना व्यञ्जनागम्या सहृदयहृदयाह्लादकारिणी च न वर्तते। तत्र च हेतुः, प्रतीतिहेतुत्वादिति। लक्षणायाः प्रयोजनवत्याः व्यञ्जनाव्यापारेण या चारुत्वप्रतीतिः, तद्धेतुत्वादित्यर्थः। विषयान्तरे निरूढलक्षणायां, तद्रूपशून्यायाः चारुत्वहेतुत्वरूपं यत् प्रयोजनं तद्रहितायाः दर्शनादनुभवात्। सर्वमेतच्च प्राक् सूचितम्। तथापि स्फुटतरप्रतीत्यर्थं पृथगुक्त वेदितव्यम्।

अथ वाचकत्वव्यञ्जकत्वयोरपि प्रकारान्तरेण भेदं प्रदर्शयितुमाह—अपि चेति। अपि च किञ्च, शब्दार्थयोः शब्दस्यार्थस्य च व्यञ्जकत्वलक्षणः व्यञ्जकत्व-

शब्दार्थयोर्हि प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुसन्धान एव व्यञ्जकत्वलक्षणो व्यापारः सामग्र्यन्तरसम्बन्धादौपाधिकः प्रवर्तते। अत एव वाचकत्वात्तस्य विशेषः। वाचकत्वं हि शब्दविशेषस्य नियत आत्मा, व्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात्। स त्वनियतः। औपाधिकत्वात्। प्रकरणाद्यवच्छेदेन तस्य प्रतीतेरितरथात्वप्रतीतेः।

ननु यद्यनियतस्तत् किं तस्य स्वरूपपरीक्षया। नैष दोषः, यतः शब्दात्मनि तस्यानियतत्वात्। न तु स्वे विषये व्यङ्ग्यलक्षणे। लिङ्गत्वन्यायश्चास्य व्यञ्जकभावस्य लक्ष्यते, यथा लिङ्गत्वमाश्रयेष्वनियतावभासं, इच्छाधीनत्वात् स्वविषयाव्यभिचारि च। तथैवेदं दर्शितं व्यञ्जकत्वम्। शब्दात्म-

---

उज्जीवनी।

रूपो यो धर्मः व्यङ्ग्यव्यञ्जकभावरूपः सम्बन्धः, सः प्रसिद्धसम्बन्धानुरोधी शब्दार्थयोः प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यः (वाचकत्वात्मकः) तदनुरोधी तदनुसारेण प्रवर्तमान इति कस्यचिदपि विमतिविषयतां नार्हति कस्यचिदपि विमतिविषयो न भवतीत्यर्थः।

तदेवाह—शब्दार्थयोरिति। हि यतः शब्दार्थयोः शब्दस्यार्थस्य च प्रसिद्धः वाच्यवाचकभावाख्यः यः सम्बन्धः, तमनुरुन्धान एव तदनुसारेणैव, व्यञ्जकत्वलक्षणः व्यञ्जनारूपो व्यापारः सामग्र्यन्तरसम्बन्धात् प्रकरणादि-सामग्र्यन्तरवैशिष्ट्यरूपात् सम्बन्धात्। औपाधिकः उपाधिभेदनिबन्धनः प्रवर्तते व्यङ्ग्यमर्थं बोधयति। अत एव औपाधिकत्वादेव तस्य व्यञ्जकत्वस्य, वाचकत्वाद् भेदः। वाचकत्वं हि शब्दविशेषस्य नियत आत्मा नियतं स्वरूपम्। व्युत्पत्तिकालादारभ्य शब्दस्य सङ्केतितो योऽर्थः तज्ज्ञानसमयादारभ्य तदविनाभावेन तत्सहचरितत्वेन, तस्य शब्दविशेषस्य प्रसिद्धत्वात् प्रयोग-प्रसिद्धः, स तु व्यञ्जकत्वरूपस्तु अनियतः, न नियतसाहचर्यवान् औपाधिकत्वात् उपाधिनिबन्धनत्वात्। तस्य शब्दनिष्ठ यद् व्यञ्जकत्वं तस्य प्रकरणाद्यवच्छेदेन प्रकरणवैशिष्ट्ये सति प्रतीतेर्बोधात्। इतरथा प्रकरणादिवैशिष्ट्यरूपाभावे अप्रतीतेः प्रतीत्यभावात्। व्यञ्जकत्वस्य स्वरूपं परिचिक्षिपुराह—नन्विति। व्यञ्जकत्वरूपो धर्मो यद्यनियतः, तत् तर्हि तस्य व्यञ्जकत्वस्य स्वरूपपरीक्षया किम्, स्वरूपं न परीक्षणीयमित्याशङ्का। नैष दोषः, अपरीक्षणीयतादोषो

न्यनियतत्वादेव च तस्य वाचकत्वप्रकारता न शक्या कल्पयितुम्। यदि हि वाचकत्वप्रकारता तस्य भवेत् तच्छब्दात्मनि नियतताऽपि स्याद्, वाचकत्ववत्। स च तथाविध औपाधिको धर्मः शब्दानामौत्पत्तिकशब्दार्थसम्बन्धवादिना वाक्यतत्त्वविदा पौरुषापौरुषेययोर्वाक्ययोर्विशेषमभिदधता नियमेनाभ्यु-

---

उज्जीवनी।

नास्तीत्यर्थः। हेतुमाह—यत इति। यतः यस्मात् शब्दात्मनि शब्दस्वरूपे तस्य व्यञ्जकत्वस्य, अनियतत्वं प्रकरणादिभेदेन भिन्नभिन्नार्थव्यञ्जनान्नियतत्वाभावः। व्यङ्ग्यलक्षणे व्यङ्ग्यरूपे, स्वे विषये तत्तत्सामग्रीजन्यप्रतीतिविषये तत्तदर्थे तु नानियतत्वम्। एवं चास्य व्यञ्जकभावस्य व्यञ्जकत्वस्य, लिङ्गत्वन्यायः लिङ्गत्वतुल्यता, लक्ष्यते दृश्यते। यथा लिङ्गे लिङ्गत्वम्; अनुमितिहेतुत्वम्। तथा व्यञ्जके व्यञ्जकत्व; व्यङ्ग्यार्थप्रतीतिहेतुत्वमिति व्यञ्जकत्वस्य लिङ्गत्वसाम्यम्। समर्थयति—यथेति। लिङ्गत्वं हेतुत्वं; आश्रयेषु धूमत्वाद्याश्रयेषु धूमादिषु, इच्छाधीनत्वादनुमितेरधीनत्वात्। पर्वते वह्नेरपि दर्शने सिद्धौ सत्यां साध्यसन्देहरूपपक्षताविरहात् सिषाधयिषायां पर्वते वह्निमनुमिनुयामित्याकारिकायां सत्यामनुमितिर्भवति, अन्यथा न भवतीति धूमत्वस्य लिङ्गत्वं नियमेन न भासते, तस्य धूमत्वस्य (लिङ्गत्वस्य) यो विषयः वह्निनिष्ठा साध्यता तत्राव्यभिचारि नियतं व्याप्तिमच्चेत्यर्थः। इदं व्यञ्जकत्वमपि तथैव। शब्दात्मनि शब्दरूपे, तस्य व्यञ्जकत्वस्य, अनियतत्वादेव सर्वेषामपि वाचकशब्दानां व्यञ्जकत्वस्याभावादेव वाचकत्वप्रकारता, व्यञ्जनाया अभिधाविशेषत्वं कल्पयितुं न शक्यते। तस्य व्यञ्जकत्वस्य वाचकत्वप्रकारता अभिधाविशेषत्वं यदि भवेत् यदि स्यात्, तदा शब्दात्मनि वाचकशब्दे वाचकत्वं यथा नियतं तथा व्यञ्जकत्वस्यापि नियतता नियतत्वं स्यात्॥

अथ मीमांसकसम्मतिमाह—स चेति। स च व्यञ्जकत्वरूपः, तथाविधः पूर्वाभिहितरूपः, शब्दानामौपाधिकः उपाधिनिबन्धनो धर्मः, अस्य नियमेनाभ्युपगन्तव्यः इत्यनेन सम्बन्धः। औत्पत्तिकशब्दार्थसम्बन्धवादिना—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति जैमिनिसूत्रम्। तन्मते औत्पत्तिकत्वं

पगन्तव्यः; तदनभ्युपगमे हि तस्य शब्दार्थसम्बन्धनित्यत्वे सत्यपौरुषेय पौरुषेययोर्वाक्ययोरर्थप्रतिपादने निर्विशेषत्वं स्यात् ।

तदभ्युपगमे तु पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितौ-

---

उज्जीवनी ।

नित्यत्वं; उत्पत्तिक्षणादारभ्य वस्तुनि विद्यमानत्वात् । यथा—गोत्वं गोव्यक्ते-रुत्पत्तिकालादारभ्य वर्तते, न तु गोरुत्पत्त्यनन्तरं तेन सम्बद्ध्यते, तथा शब्दार्थयोः सम्बन्धोऽपि तत्र सर्वदा विद्यमानत्वान्नित्यः। जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति इति षड् भावविकाराः। सूत्रे औत्पत्तिकत्वस्य उत्पत्तिमत्त्वरूपानित्यत्वार्थकत्वे तस्य सम्बन्धशब्दार्थेनान्वयस्य तन्मते शब्दार्थसम्बन्धस्य नित्यत्वेन बाधितत्वात् तदनुरोधेन उत्पत्तिशब्देन द्वितीयो भावाख्यः सामीप्येन लक्ष्यते । नश्यत एव खलु वस्तुन उत्पत्तिरस्ति । अयं च शब्दार्थसम्बन्धः शब्दे चार्थे च सर्वदा वर्तत एव । यतोऽयं नोत्पद्यते, अतो नाशोऽपि नास्तीति नित्यत्वं ते मन्यन्ते । अथवा, उत्पत्तिशब्दस्यानुत्पादे विपरीतलक्षणा । एवं शब्दस्यार्थेन सह सम्बन्धः नित्य इति सूत्रार्थस्तद-भिमतः। तथा मीमांसकः, वाक्यस्यैव वाचकत्वं वदति । तच्च वाक्यं द्विविधं—पौरुषेयमपौरुषेयं च । पौरुषेयं लौकिकं वाक्यम् । अपौरुषेयं तु, वैदिकं वाक्यम् । तयोश्च मिथो भेदो वर्तत एव । पौरुषेयस्य वाक्यस्य प्रयोक्तृ-पुरुषाधीनतया तद्घटकानां शब्दानां नित्यत्वेऽङ्गीक्रियमाणेऽपि तत्समुदायरूपस्य वाक्यस्यानित्यत्वं स्वीकृतवान् । एवं शब्दार्थसम्बन्धस्य नित्यत्वं वदता मीमांसकेनापि शब्दस्यौपाधिको व्यञ्जकत्वरूपो धर्मो नियमेनाभ्युपगन्तव्यः अवश्यमङ्गीकरणीय इत्यर्थः ।

तदनभ्युपगमे हि तस्य व्यञ्जकत्वाख्यस्य धर्मस्यानङ्गीकारे तु, तस्य मीमांसकस्य, शब्दार्थसम्बन्धनित्यत्वे शब्दस्यार्थेन यः सम्बन्धस्तस्य नित्यत्वे सत्यपि, अपौरुषेयपौरुषेयवाक्ययोः अपौरुषेयस्य वेदस्य, पौरुषेयस्य च वाक्यस्यार्थप्रतिपादने अर्थबोधने निर्विशेषत्वं स्याद् भेदो न । तदभ्युपगमे तु तस्य धर्मस्य व्यञ्जकत्वस्य, अभ्युपगमे अङ्गीक्रियमाणतायां तु पुरुषेच्छानुविधानसमारोपितौपाधिकव्यापारान्तराणां शब्दप्रयोक्तुः पुरुषस्य, इच्छानुविधानेन इच्छानुसारेण समारोपितानि

पाधिकव्यापारान्तराणां सत्यपि स्वाभिधेयसम्बन्धापरित्यागे मिथ्यार्थतापि भवेत् ।

दृश्यते हि भावानामपरित्यक्तस्वस्वभावानामपि सामग्रयन्तरसम्पादितौ-पाधिकव्यापारान्तराणां विरुद्धक्रियात्वम् ॥

तथाहि—हिममयूखप्रभृतीनां निर्वापितसकलजीवलोकं शीतलत्वमुद्वहतामेव प्रियाविरहदहनदह्यमानमानसैर्जनैरालोक्यमानानां सतां सन्तापकारित्वं प्रसिद्धमेव । तस्मात् पौरुषेयाणां वाक्यानां सत्यपि नैसर्गिकेऽर्थसम्बन्धे मिथ्यार्थत्वं समर्थयितुमिच्छता वाचकत्वव्यतिरिक्तं किञ्चिद्रूपमौपाधिकं व्यक्तमेवाभिधानीयम् । तच्च व्यञ्जकत्वादृते नान्यत् ।

---

### उज्जीवनी ।

औपाधिकानि उपाधिभेदानुविहितानि व्यापारान्तराणि येषां तादृशानां पौरुषेयाणां लौकिकानां वाक्यानां स्वाभिधेयसम्बन्धापरित्यागे सत्यपि स्वस्य शब्दस्य योऽभिधेयोऽर्थस्तत्सम्बन्धापरित्यागेऽपि परित्यागाभावेऽपि, मिथ्यार्थता असत्यभूतार्थत्वमपि भवेत् ॥

लौकिकवाक्यस्य मिथ्यार्थतां प्रदर्शयति—दृश्यत इति । अपरित्यक्तस्वस्वभावानां न परित्यक्तः स्वस्यात्मनःस्वभावः, येषां तादृशानामपि, भावानां पदार्थानां सामग्रयन्तरसम्पातसम्पादितौपाधिकव्यापारान्तराणां सामग्रयन्तरस्य इतरसामग्र्याः सम्पातेन सम्बन्धेन, सम्पादितानि औपाधिकानि व्यापारान्तराणि येषां तादृशानां सताम् । विरुद्धक्रियात्वं विरुद्धव्यापारवत्त्वं दृश्यत इति पूर्वेण संबन्धः । तदेवोपपादयति—तथाहीति । निर्वापितसकलजीवलोकं निर्वाणं परमं सुखं प्रापितो जीवलोको येन तादृशम् । शीतलत्वं शैत्यम्, उद्वहतां एव वहतामेव, हिममयूखप्रभृतीनां चन्द्रादीनां प्रियाविरहदहनदह्यमानमानसैः प्रियाविरहरूपेण प्रियावियोगरूपेण दहनेनाग्निना दह्यमानानि दाहं प्राप्नुवन्ति मानसानि मनांसि येषां तादृशैर्जनैः, आलोक्यमानानां दृश्यमानानां दर्शनविषयीभूतानां सतां, सन्तापकारित्वं प्रसिद्धमेव । इत्थं च यथा चन्द्रमाः स्वं शीतकिरणत्वस्वभावमपरित्यजन्नेव विरहिजनानां सन्तापं करोति, तथा पौरुषेयं वाक्यं स्वकीयं वाचकत्वस्वभावमविहाय वाच्यादतिरिक्तमर्थं बोधयतीति विरुद्धक्रियावत्त्वं विरुद्धार्थबोधवत्त्वं अनुभवसिद्धमित्यर्थः ।

व्यङ्ग्यप्रकाशनं हि व्यञ्जकत्वम् । पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति । स च व्यङ्ग्य एव न त्वभिधेयः । तेन सहाभिधानस्य वाच्यवाचकभावलक्षणसंबन्धाभावात् । नन्वनेन न्यायेन सर्वेषामेव लौकिकानां वाक्यानां ध्वनिव्यवहारः प्रसक्तः । सर्वेषामप्यनेन न्यायेन व्यञ्जकत्वात् । सत्यमेवैतत्; वक्त्रभिप्रायप्रकाशनेन यद् व्यञ्जकत्वं तत् सर्वेषामेव । लौकिकानां वाक्यानाम् अविशिष्टम् । तत्तु वाचकत्वान्न भिद्यते, व्यङ्ग्यं हि तत्र नान्तरीयकतया व्यवस्थितम् । न तु विवक्षितमेव । यस्य तु विवक्षितत्वेन व्यङ्ग्यस्य स्थितिः तद्व्यञ्जकत्वं ध्वनिव्यवहारस्य प्रयोजकम् ।

---

उज्जीवनी ।

तस्मात् ततः, पौरुषेयाणां वाक्यानां नैसर्गिके स्वाभाविके अर्थसम्बन्धे अर्थेन संबन्धे सत्यपि, मिथ्यार्थत्वं मिथ्याभूतार्थान्तरबोधकत्वं समर्थयितुं स्थापयितुमिच्छता मीमांसकेन वाचकत्वव्यतिरिक्तं वाचकत्वाद् भिन्नं औपाधिकं किञ्चिद्रूपं व्यक्तमेवाभिधानीयं वक्तव्यमेव । तच्च रूपं धर्मः, व्यञ्जकत्वादन्ते, नान्यद्, व्यञ्जकत्वमेव भवितुमर्हति. नान्यत् व्यञ्जकत्वं नाम व्यङ्ग्यप्रकाशनं-व्यङ्ग्यस्यार्थान्तरबोधनात्मको व्यापारः । पौरुषेयाणि पुरुषप्रयुक्तानि वाक्यानि प्राधान्येन मुख्यतया पुरुषस्य प्रयोक्तुः अभिप्रायमाशयमेव प्रकाशयन्ति प्रतिपादयन्ति । स चाभिप्रायरूपः व्यङ्ग्य एव । तु किन्तु नाभिधेयः, तेनाभिप्रायेण सह, अभिधानस्य शब्दस्य वाच्यवाचकभावलक्षणसंबन्धाभावाद् वाच्यवाचकभावलक्षणः वाचकत्वरूपो यः संबन्धः, तदभावात् । नन्विति । अनेन न्यायेन वाक्यप्रतिपाद्यस्य प्रयोक्तृपुरुषाभिप्रायरूपस्यार्थस्य व्यङ्ग्यत्वाङ्गीकारानुसारेण, सर्वेषां लौकिकानां पौरुषेयाणां वाक्यानां ध्वनिव्यवहारः प्रसक्तो भवति । तस्यार्थस्याशयरूपस्य व्यङ्ग्यत्वे तद्बोधकस्य वाक्यस्य व्यञ्जकत्वं नानुपपन्नम् । सत्यमेवैतत् । युक्तमिदमभ्युपेयत एव । किन्तु वक्त्रभिप्रायप्रकाशनेन वक्तुरभिप्रायस्य प्रकाशनेन वाक्यस्य यद् व्यञ्जकत्वं तादृशं सर्वेषामपि वाक्यानाम् । अविशिष्ट तुल्यमेव । तच्च व्यञ्जकत्वं वाचकत्वात्मकमेव, अतो वाचकत्वान्नास्य भेदः । हि व्यङ्ग्यं तत्र वाक्ये नान्तरीयकतया अविनाभावेन व्यवस्थितम् । न तु विवक्षितत्वेन । यस्य तु व्यङ्ग्यस्य व्यङ्ग्यार्थस्य

यस्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाशते तद् भवति विवक्षितं तात्पर्येण प्रकाश्यमानं सत्। किन्तु तदेव केवलमपरिमितविषयस्य ध्वनि-व्यवहारस्य न प्रयोजकमव्यापकत्वात्। तथा दर्शितभेदत्रयरूपं तात्पर्येण द्योत्यमानमभिप्रायरूपमनभिप्रायरूपं च सर्वमेव ध्वनिव्यवहारस्य प्रयोजकमिति यथोक्तव्यञ्जकत्वविशेषे ध्वनिलक्षणे नातिव्याप्तिर्नाव्याप्तिः। तस्माद् वाक्य-तत्त्वविदां मतेन तावद् व्यञ्जकत्वलक्षणः शाब्दो व्यापारो न विरोधी, प्रत्युतानुगुण एव लक्ष्यते। परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मत माश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहार इति तैः सह किं विरोधा-विरोधौ चिन्त्येते

---

उज्जीवनी।

स्थितिरवस्थानम्। विवक्षितत्वेन तत्परत्वेन विवक्षया प्राधान्येन, तद्व्यञ्जकत्वं वाक्यस्य यत् तदेव ध्वनिव्यवहारे प्रयोजकम्॥

विवक्षितत्वनिर्वचनपुरःसरं वक्त्रभिप्रायविशेषरूपस्य वस्त्वलङ्कार-रसादिरूपव्यङ्ग्यस्य च भेदं प्रदर्शयितुमाह—यत् त्विति। तु किन्तु यत् शब्दार्थाभ्यां शब्देनार्थेन वा अभिप्रायविशेषरूपं शब्दप्रयोक्तृपुरुष-स्याभिप्रायविशेषात्मकं व्यङ्ग्यं प्रकाशते, तत् तात्पर्येण तत्प्रतीती-च्छयोच्चारितत्वेन प्रकाश्यमानं सद् विवक्षितं भवति। किन्तु तदेव पुरुषाभिप्रायविशेषात्मकत्वमेव व्यङ्ग्यस्य ध्वनिव्यवहारे ध्वनिव्यपदेशे प्रयोजकं न भवति। ध्वनेर्महाविषयत्वाद् वस्त्वलङ्कारसादिरूपे व्यङ्ग्ये अव्याप्तिः। तथा दर्शितभेदत्रयरूपं वस्त्वलङ्काररसादिरूपेण यद् व्यङ्ग्यस्य भेदत्रयं प्रतिपादितं तत् तात्पर्येण तत्प्रतीतीच्छया द्योत्यमानं प्रकाश्यमानम्। अभिप्रायरूपं वक्तृविवक्षाधीनम्। अनभिप्रायरूपं विवक्षानधीनम् च सर्वमेव व्यङ्ग्यं ध्वनिव्यवहारस्य प्रयोजकमिति हेतोः, यथोक्तव्यञ्जकत्वविशेषे तदात्मके ध्वनिलक्षणे, यत्रार्थः शब्दो वा इति लक्षणे, अतिव्याप्तिरव्याप्तिश्च न स्तः। तस्मात् वाक्यतत्त्वविदां वाक्यस्यैव वाक्यार्थबोधकत्वं वदतां मीमांस-कानां मतेन मतानुसारेण, तावद् व्यञ्जकत्वलक्षणः वक्त्रभिप्रायरूपस्यार्थस्य, व्यङ्ग्यत्वे तद्बोधकस्य शब्दस्य व्यञ्जकत्वलक्षणः, व्यञ्जकत्वरूपः, शाब्दो

कृत्रिमशब्दार्थसम्बन्धवादिनां तु युक्तिविदामनुभवसिद्ध एवायं व्यञ्जकभावः शब्दानामर्थान्तराणामिवाविरोधश्चेति न प्रतिक्षेप्यपदवीमवतरति ।

वाचकत्वे हि तार्किकाणां विप्रतिपत्तयः प्रवर्तन्तां; किमिदं स्वाभाविकं शब्दानामाहोस्वित् सामयिकमित्याद्याः । व्यञ्जकत्वे तु तत्पृष्ठभाविनि भावान्तरसाधारणे लोकप्रसिद्ध एवानुगम्यमाने को विमतीनामवसरः ।

---

उज्जीवनी

व्यापारः शब्दनिष्ठो व्यापारः, न विरोधो न विरुद्धयते । एवं च शब्दस्य व्यञ्जकत्वविषये मीमांसकानां विप्रतिपत्तिर्नास्तीति सिद्धम् ॥

अथ वैयाकरणानां मतानुसारेणापि शब्दस्य व्यञ्जकत्वं दर्शयति—परिनिश्चितेति । परिनिश्चितं प्रमाणैर्निर्णयविषयीकृतं शब्दात्मकं ब्रह्म यैस्तादृशानां विपश्चितां विदुषां वैयाकरणानां मतमाश्रित्यैव वैयाकरणमतमवलम्ब्यैव अयं ध्वनिव्यवहारः प्रवृत्तः । वैयाकरणमते प्रधानभूतस्फोटरूपस्य व्यङ्ग्यस्य प्रकाशको यः शब्दः तस्य व्यञ्जकत्वमङ्गीकृतम् । तस्य ध्वनिव्यपदेशश्च कृतः । ततस्तन्मतानुसारिभिरस्माभिरपि चमत्कृतिजनकार्थं (व्यङ्ग्यार्थं) प्रतिपादकस्य शब्दस्य व्यञ्जकत्वेन ध्वनिव्यवहारो विहित इति हेतोः यैर्वैयाकरणैः सह विरोधाविरोधौ विरोधोऽविरोधो वा किं चिन्त्यैते चिन्ताविषयौ न भवत इत्यर्थः ।

तार्किकमतं प्रदर्शयति—कृत्रिमेति । युक्तिं विदतां कृत्रिमशब्दार्थसम्बन्धवादिनां कृत्रिमं कल्पितं शब्दस्यार्थस्य च सम्बन्धं वदतां तार्किकाणां मते तु अर्थान्तराणामिव अन्धकारस्थितपदार्थाभिव्यञ्जकानां प्रदीपादिपदार्थानामिव शब्दानामपि अर्थप्रकाशकानां अर्थव्यञ्जकानां शब्दानां अयं व्यञ्जकभावः व्यञ्जकत्वरूपः, अनुभवसिद्ध एव । अविरोधश्च अविरुद्धश्चायं प्रतिक्षेप्यपदवीं प्रतिषेध्यविषयतां नावतरति न प्राप्नोति । शब्दनिष्ठमर्थव्यञ्जकत्वं तार्किकाणामभिमतमित्याशयः ॥

तदेवाह—वाचकत्व इति । तार्किकाणां हि वाचकत्वे अभिधाव्यापारविषयतायां, विप्रतिपत्तयः विरुद्धार्थप्रतिपत्तयः प्रवर्तन्तां वर्तन्तामित्यर्थः । विप्रतिपत्तिस्वरूपमाह —किमिदमिति । शब्दानां शब्दनिष्ठं, इदं वाचकत्व-

अलौकिके ह्यर्थे तार्किकाणां[1] विमतयो निखिलाः प्रवर्तन्ते न तु लौकिके। न हि नीलमधुरादिष्वशेषलोकेन्द्रियगोचरे बाधारहिते तत्त्वे परस्परं विप्रतिपन्ना दृश्यन्ते। न हि बाधारहितं नीलं नीलमिति ब्रुवन्, अपरेण प्रतिषिध्यते नैतन्नीलं पीतमेतदिति। तथैव व्यञ्जकत्वं वाचकानां शब्दानामवाचकानां च गीतध्वनीनामशब्दरूपाणां च चेष्टादीनां यत् सर्वेषा-

---

उज्जीवनी।

मभिधायकत्वम्। किं स्वाभाविकं अविनाभूतम्। आहोस्वित् अथवा, सामयिकं समयात्, सङ्केतात् जायमानम्। इत्याद्याः विप्रतिपत्तयः प्रवर्तन्तामिति पूर्वेणान्वयः। तत्पृष्ठभाविनि वाचकत्वादनन्तरं भवति व्यञ्जकत्वे तु भावान्तरसाधारणे भावान्तरेण प्रदीपादिना पदार्थान्तरेण तुल्ये, लोकप्रसिद्ध एव अनुगम्यमाने अनुस्रियमाणे व्यञ्जकत्वे तु व्यञ्जकत्वं यद् शब्दनिष्ठं प्रसिद्धं तत्र विषये, विमतीनां विरुद्धमतीनां कोऽवसरः अवसरो नास्तीत्यर्थः। तदेवोपपादयति—अलौकिक इति। अलौकिके अप्रत्यक्षे इन्द्रियाविषय इति यावत्। अर्थे पदार्थे, निखिलाः सर्वाः, विमतयः विरुद्धमतयः, प्रवर्तन्ते सञ्जायन्ते। लौकिके इन्द्रियजन्यस्य प्रत्यक्षविषये त्वर्थे विमतयो न प्रवर्तन्त इत्यर्थः। तदेवोपपादयति—नीलमधुरादिषु नीलादिषु रूपेषु मधुरादिषु रसेषु च अशेषलोकेन्द्रियगोचरे अशेषाणां सर्वेषां, लोकानां इन्द्रियविषये प्रत्यक्षप्रमाण-विषये बाधारहिते भ्रमशून्ये, तत्त्वे याथार्थ्ये प्रमात्वे, परस्परं विप्रतिपन्ना न दृश्यन्ते मिथो न विप्रतिपद्यन्त इत्यर्थः। किञ्च बाधारहितं भ्रमाविषयं नीलं नीलरूपवद् वस्तु, नीलमिति नीलरूपवदिदमिति, ब्रुवन् वदन्, अपरेण अन्येन केनापि, एतत् न नीलं न नीलवत्, किन्तु एतत् पीतं पीतरूपवत्, इति न हि प्रतिषिध्यते न निषिध्यते। प्रकृते योजयन्नाह—तथैवेति। वाचकानामभिधेया-र्थप्रतिपादकानां, शब्दानां नानार्थकशब्दानाम्, अवाचकानामभिधाव्यापारा-विषयाणां, गीतध्वनीनां षड्जर्षभादिस्वरस्थानीयध्वनीनां, अशब्दरूपाणां शब्दात्मकस्वरूपरहितानां, चेष्टादीनामभिनयादीनां च सर्वानुभवसिद्धमेव सर्वेषामनुभववेद्यमेव, यद् व्यञ्जकत्वं व्यञ्जनया अर्थबोधकत्वं, तत् केनापह्नूयते

---

१. 'णामाभिनिवेशाः प्र०' च

मनुभवसिद्धमेव तत् केनापह्नूयते। अशब्दमर्थं रमणीयं हि सूचयन्तो व्याहारास्तथा व्यापारा निबद्धाश्चानिबद्धाश्च विदग्धपरिषत्सु विविधा विभाव्यन्ते। तानुपहास्यतां आत्मनः परिहरन् कोऽतिसन्दधीत सचेताः। ब्रूयात्, अस्त्यतिसन्धानावसरः व्यञ्जकत्वं शब्दानां गमकत्वं, तच्च लिङ्गत्वं, अतश्च व्यङ्ग्यप्रतीतिलिङ्गिप्रतीतिरेवेति लिङ्गिलिङ्गभाव एव तेषां, व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्। अतश्चैतदवश्यमेव बोद्धव्यं, यस्माद् वक्त्रभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव त्वया प्रतिपादितं, वक्त्रभिप्रायश्चानुमेयरूप एव।

अत्रोच्यते—नन्वेवमपि यदि नाम स्यात् तत् किं नश्छिन्नम्। वाचकत्व-

---

उज्जीवनी।

को वापह्नोतुं प्रभवति। अशब्दमभिधाव्यापारजन्यप्रतीत्यविषयं, रमणीयं चमत्कृतिजनकं, अर्थं सूचयन्तो द्योतयन्तः, व्याहाराः सूक्तयः, तथा निबद्धाः पद्यरूपाः, अनिबद्धा गद्यरूपाश्च, व्यापाराः कविव्यापाराः, विदग्धपरिषत्सु पण्डितगोष्ठीषु विविधा नैकप्रकाराः, दृश्यन्ते। तान् व्याहारान् व्यापारांश्च, आत्मनः स्वस्य, अपहास्यतां परिहासपात्रतां परिहरन् अनिच्छन् सचेताः सहृदयः कः अतिसदधीत न बहुमन्येत, तान् व्याहारान् व्यापारांश्च रमणीयार्थ-व्यञ्जकान् अबहुमन्यमानः कश्चित् परिहासभाजनमेव भवेदित्यर्थः॥

तार्किकमतानुरोधेन पूर्वपक्षमाह—ब्रूयादिति। तार्किकेणैवमुक्तं स्यादित्याशङ्क्यत इत्यर्थः। अतिसन्धानावसरः अतिसन्धानस्य अनादरस्य अवसरः अस्त्येव। शब्दानां गमकत्वं व्यङ्ग्यार्थबोधजनकत्वरूपं व्यञ्जकत्वमस्ति, तत्र न विप्रतिपत्तिः। किन्तु तच्च व्यञ्जकत्वं च लिङ्गत्वमेव अर्थावबोधहेतुत्वमेव। अतः व्यङ्ग्यप्रतीतिः व्यङ्ग्यस्यार्थस्य प्रतीतिः, लिङ्गिप्रतीतिरेव साध्य-प्रतीतिरेव। शब्दस्य हेतुत्वेऽर्थस्य साध्यत्वमित्यतः तयोः लिङ्गिलिङ्ग-भावः साध्यसाधनभावरूप एव भवति, अतः व्यङ्ग्यव्यञ्जकभावो नाम अपरः कश्चित् व्यापारो नास्त्येव। अतश्च इदमपि अवश्यमेव बोद्धव्यं ज्ञातव्यम्। यस्मात् यतः त्वया युक्तिवादिना इदानीमेव मीमांसकमतविचारावसरे वक्त्रभिप्रायापेक्षया लौकिकस्य वाक्यस्य वक्त्रभिप्रायप्रकाशनापेक्षया व्यञ्जकत्वं प्रतिपादितम्; तत्र वक्त्रभिप्रायः अनुमेयरूप एव न तु व्यङ्ग्यः॥

समाधत्ते—अत्रोच्यत इति। ननु यदि नाम एवमपि स्यात् शब्दानां

गुणवृत्तिव्यतिरिक्तो व्यञ्जकत्वलक्षणः शब्दव्यापारोऽस्तीत्यस्माभिरभ्युपगतम् । तस्य चैवमपि न काचित् क्षतिः । तद्धि व्यञ्जकत्वं लिङ्गत्वमस्तु अन्यद्वा । सर्वथा प्रसिद्धशाब्दप्रकारविलक्षणत्वं शब्दव्यापारविषयत्वं च तस्यास्तीति नास्त्येवावयोर्विवादः । न पुनरयं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेव सर्वत्र व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति ॥

यदपि स्वपक्षसिद्धयेऽस्मदुक्तमनूदितं त्वया वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमाद् तत्प्रकाशने शब्दानां लिङ्गत्वमेवेति तदेतद् यथास्माभिरभिहितं तद्विभज्य प्रतिपाद्यते श्रूयताम्—द्विविधः विषयः शब्दानाम्—अनुमेयः, प्रतिपाद्यश्च । अनुमेयो विवक्षालक्षणः । विवक्षा च शब्दस्वरूपप्रकाशनेच्छा-

---

उज्जीवनी ।

व्यञ्जकत्वं लिङ्गत्वात्मकमेव यदि भवेत् तेन किं नः छिन्नम् अस्माकं न किमपि हीयत इत्यर्थः । वाचकत्वगुणवृत्तिव्यतिरिक्तः वाचकत्वाद् गुणवृत्तेश्च भिन्नः, व्यञ्जकत्वात्मकः शब्दस्य कश्चिदतिरिक्तो व्यापारोऽस्तीत्यस्माभिरभ्युपगतमङ्गीकृतम् । तस्य च शब्दव्यापारस्य व्यञ्जकत्वात्मकस्य एवमपि लिङ्गत्वरूपत्वेऽपि न क्षतिर्न दोषः । हि यतः तद् व्यञ्जकत्वं लिङ्गत्वमस्तु अन्यद् वा अस्तु । सर्वथा सर्वप्रकारेणापि तस्य व्यङ्ग्यत्वेनाभिमतस्यार्थस्य, प्रसिद्धशाब्दप्रकारविलक्षणत्वं प्रसिद्धो यः शाब्दबोधप्रकारः वाच्यलक्ष्यत्वात्मकः तद्विलक्षणत्वं तद्व्यतिरिक्तत्व शब्दव्यापारविषयत्वं शब्दजन्यप्रतीतिविषयत्व चास्तीति हेतोः आवयोर्विवादो नास्त्येव । तथापि सर्वत्र व्यञ्जकत्वं लिङ्गत्वमेवेति व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति च यदुच्यते अयमर्थो न परमार्थः ।

तदेव समर्थयति—यदपीति । "वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमात् तत्प्रकाशने शब्दानां लिङ्गत्वमेव" एवमस्माभिरुक्तम् । त्वया (तार्किकेण) स्वपक्षसिद्धये स्वमतस्थापनानुकूलतया अनूदितं यदपि, तदेतद् यथास्माभिरभिहितं यादृशार्थतात्पर्येणास्माभिरुक्तं तद् वचनं तथा तेन प्रकारेण विभज्य प्रतिपाद्यते । श्रूयतां त्वयेति शेषः । शब्दानां विषयः शब्दप्रयोगाव्यवहितकालिकप्रतिपत्तिविषयो यः स द्विविधः—अनुमेयः, प्रतिपाद्यश्च । तत्र द्विविधविषयमध्ये यः अनुमेयः स विवक्षालक्षणो विवक्षारूपः, वक्तुरिच्छा विवक्षा । सा च द्विप्रकारा द्विविधा । शब्दं प्रयुञ्जीय इत्याकारिका शब्दप्रयोगेच्छा,

शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा। तत्राद्या न शाब्दव्यवहाराङ्गम्। सा हि प्राणित्वमात्रप्रतिपत्तिफला। द्वितीया तु शब्दविशेषावधारणावसितव्यवहिताऽपि शब्दकरणव्यवहारनिबन्धनम्। ते तु द्वे अप्यनुमेयो विषयः शब्दानाम्। प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः

स च द्विविधः—वाच्यो व्यङ्ग्यश्च। प्रयोक्ता हि कदाचित् स्वशब्देनार्थं प्रकाशयितुं समीहते, कदाचित् स्वशब्दानभिधेयत्वेन प्रयोजनापेक्षया कयाचित्। स तु द्विविधोऽपि प्रतिपाद्यो विषयः शब्दानां न लिङ्गितया स्वरूपेण प्रकाशते। अपि तु कृत्रिमाकृत्रिमेण वा सम्बन्धान्तरेण। विवक्षाविषयत्वं हि

---

## उज्जीवनी।

तेन शब्देन अर्थं प्रकाशयेयमित्याकारिका अर्थप्रकाशनेच्छा चेति। तत्राद्या शब्दस्वरूपप्रकाशनेच्छा शब्दव्यवहारस्य शाब्दबोधस्याङ्ग न भवति। सा हि शब्दप्रयोगेच्छा तु प्राणित्वमात्रप्रतिपत्तिफला प्राणित्वमात्रस्य प्रतिपत्तिरनुमितिः फलं यस्यास्तादृशी॥

शब्दप्रयोगेच्छारूपं कारणं विना शब्दप्रयोगानुकूलकृतिरूप कार्यस्याभावात् प्रयुज्यमानस्य शब्दस्य श्रवणे सति तत्कारणीभूता सा प्रयुयुक्षा तया तस्य प्राणित्वमात्रमनुमीयत इत्यर्थः। न तया शाब्दज्ञानं भवति। द्वितीया तु अर्थप्रतिपिपादयिषा। शब्दविशेषावधारणावसितव्यवहितापि शब्दविशेषस्य विवक्षितार्थबोधनसमर्थस्य यदवधारणं निर्धारणं तदवसितेन तदवसानेन व्यवहिता अन्तरितापि, शब्दकरणव्यवहारनिबन्धनं शब्दस्य करणभूतः प्रयोगसाधनीभूतः यो व्यवहारः शब्दजनकसामग्री तन्निबन्धनं भवति तदाश्रित्यावतिष्ठत इति यावत्। ते तु द्वे अपि शब्दप्रयुयुक्षा, अर्थप्रचिकाशयिषा चेति द्विविधः शब्दानां विषयोऽपि अनुमेय एव। प्रतिपाद्यस्तु प्रतिपादनविषयीभूतस्तु प्रयोक्तुः अर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः अर्थस्य अन्यं प्रति बुबोधयिषितस्य समीहाया इच्छाया विषयीकृतः अर्थः।

स इति। स च प्रतिपाद्यश्च द्विविधः द्विप्रकारः। वाच्यो व्यङ्ग्यश्च। प्रयोक्ता तु कदाचित् स्वशब्देन वाचकशब्देन अर्थं प्रकाशयितुं समीहते चेष्टते, सोऽर्थो वाच्यः। कदाचिच्च स्वशब्दानभिधेयत्वेन वाचकशब्देनाभिधानं विना,

तस्यार्थस्य शब्दैर्लिङ्गितया प्रतीयते न तु स्वरूपम्। यदि हि लिङ्गितया तत्र शब्दानां व्यापारः स्यात् तच्छब्दार्थे सम्यङ्मिथ्यात्वादिविवादा एव न प्रवर्तेरन् धूमादिलिङ्गानुमितानुमेयान्तरवत्। व्यङ्ग्यश्चार्थो वाच्यसामर्थ्याक्षिप्ततया वाच्यवच्छब्दस्य सम्बन्धी भवत्येव। साक्षादसाक्षाद्भावो हि सम्बन्धस्याप्रयोजकः। वाच्यवाचकभावाश्रयत्वं च व्यञ्जकत्वस्य प्रागेव दर्शितम्। तस्माद् वक्त्रभिप्रायरूप एव व्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः। तद्विषयो-

---

उज्जीवनी।

कयाचित् प्रयोजनापेक्षया रमणीयार्थान्तरप्रतीतिरूपं किमपि प्रयोजनमुद्दिश्यार्थं प्रकाशयितुं ईहते। सोऽर्थो व्यङ्ग्य इति। अर्थो द्विविधः प्रतिपाद्यः। एवं द्विविधोऽपि प्रतिपाद्यो विषयः शब्दानां लिङ्गितया स्वरूपेण साध्यत्वेन रूपेण न प्रकाशते। अपि तु किन्तु, कृत्रिमेण (तार्किकमते) अकृत्रिमेण (मीमांसकमते) वा सम्बन्धान्तरेण अभिधा व्यञ्जनात्मकेन प्रकाशत इति शेषः। तस्यार्थस्य विवक्षाविषयार्थस्य यदविवक्षाविषयत्वं तत् शब्दैर्हेतुभिः लिङ्गितया साध्यत्वेन प्रतीयते। अर्थस्य स्वरूपं तु साध्यत्वेन न प्रतीयते। अर्थस्य स्वरूपं तु साध्यत्वेन न प्रतीयत नानुमीयते। प्रयुक्तस्य शब्दस्य श्रवणे तादृशशब्दप्रयोगेण हेतुना तत्प्रतिपाद्यस्यार्थस्य वक्तृविवक्षितत्वमनुमीयत इत्यर्थः। तत्र शब्दानां व्यापारः शब्दार्थयोः सम्बन्धः। यदि च लिङ्गतया लिङ्गत्वेन स्यात्, भवेत्, तत् तर्हि शब्दार्थे शब्दस्यार्थे साध्यरूपे सम्यङ्मिथ्यात्वादिविवादाः सम्यक्त्वमिथ्यात्वादयः विवादा एव। न प्रवर्तेरन् धूमादिलिङ्गकानुमेयान्तरवत्। धूमादीनि यानि लिङ्गानि तैरनुमितेषु अनुमेयेषु वह्न्यादिरूपेषु साध्येषु यथा सम्यङ्मिथ्यात्वादयो विवादा न प्रवर्तन्ते। तथात्रापीत्यर्थः। व्यङ्ग्यः व्यञ्जनाव्यापारविषयः, अर्थश्च, वाच्यसामर्थ्याक्षिप्ततया वाच्यस्याभिधेयस्यार्थस्य सामर्थ्येनार्थान्तरबोधजनकत्वशक्त्या आक्षिप्तत्वात्, वाच्यवद् वाच्यो यथा शब्दस्य सम्बन्धी भवति तथा शब्दस्य सम्बन्धो भवत्येव। हि यतः, साक्षादसाक्षाद्भावः साक्षात्त्वमसाक्षात्त्वं वा शब्दार्थयोः सम्बन्धस्य अप्रयोजकमित्यर्थः। व्यञ्जकत्वस्य व्यङ्ग्यव्यञ्जकभावस्य वाच्यवाचकभावाश्रयत्वं वाच्यवाचकभाव-

कृते तु प्रतिपाद्यतया। प्रतीयमाने तस्मिन् अभिप्रायरूपेऽनभिप्रायरूपे च वाचकत्वे नैव व्यापारः सम्बन्धान्तरेण वा। न तावद्वाचकत्वेन यथोक्तं प्राक्। सम्बन्धान्तरेण व्यञ्जकत्वमेव। न च व्यञ्जकत्वं लिङ्गत्वरूपमेव आलोकादिष्वन्यथा दृष्टत्वात्। तस्मात् प्रतिपाद्यो विषयः शब्दानां न लिङ्गत्वेन सम्बन्धी वाच्यवत्। यो हि लिङ्गित्वेन तेषां सम्बन्धी यथा दर्शितो विषयः स न वाच्यत्वेन प्रतीयते; अपि तूपाधित्वेन।

---

उज्जीवनी।

माश्रित्यैवावस्थानं, प्रागेव पूर्वमेव, दर्शितं प्रतिपादितमित्यर्थः। व्यञ्जकत्वस्य व्यङ्ग्यव्यञ्जकभावस्य वाच्यवाचकभावाश्रयत्वं वाच्यवाचकभावमाश्रित्यैवावस्थानं प्रागेव पूर्वमेव दर्शितं प्रतिपादितमित्यर्थः। तस्माद् ततः, वक्त्रभिप्रायरूपे व्यङ्ग्ये शब्दानां लिङ्गभावेन व्यापारः बोधकत्वम्। तद्विषयीकृते विवक्षाविषयीकृतेऽर्थे तु प्रतिपाद्यत्वं व्यापारः। शब्दस्य लिङ्गत्वात्; वक्त्रभिप्रायरूपस्यार्थस्यानुमेयत्वं, अर्थप्रतिपिपादयिषयोच्चरितस्य शब्दस्य तु प्रतिपादकत्वमर्थस्य च प्रतिपाद्यत्वं, स चार्थो वाच्यो व्यङ्ग्यश्चेति द्विविधः। अभिप्रायरूपे वक्तृविवक्षाधीने, अनभिप्रायरूपे च वक्तृविवक्षानधीने च प्रतीयमाने व्यङ्ग्येऽर्थे, तस्मिन्नर्थे शब्दस्य व्यापारः प्रतिपादकत्वं किं वाचकत्वेनाभिधया उत सम्बन्धान्तरेणान्येन केनचिद् व्यापारेण इति प्रश्नः॥ समाधत्ते— वाचकत्वेन तावद् व्यापारेण व्यङ्ग्यस्य बोधो न भवतीति प्रागेवोक्तम्। अतः सम्बन्धान्तरेण बोधकत्व व्यञ्जकत्वात्मकमेव व्यापारो भवति। तद् व्यञ्जकत्वं च लिङ्गत्वरूपं लिङ्गत्वात्मकमेव भवति। हेतुमाह—आलोकादिष्विति। यथा शरावाद्यपिहितो दीपः तन्निवृत्तौ सन्निहितान् पदार्थान् प्रकाशयति, स्वयं च प्रकाशते तथा व्यङ्ग्यस्यार्थस्य प्रकाशोऽभ्युपगम्यते। तथा चालोकस्यार्थप्रकाशकत्वमेव न तु लिङ्गत्वं दृष्टम्। तस्मात् शब्दानां प्रतिपाद्यो विषयः व्यङ्ग्यः अर्थः, वाच्यवद् यथा वाच्योऽर्थः लिङ्गित्वेनानुमेयत्वेन सम्बन्धी न भवतीत्यर्थः। यो हि तेषां शब्दानां लिङ्गित्वेन अनुमेयत्वेन (साध्यत्वेन) सम्बन्धी, यथा दर्शितो विषयः शब्दप्रयुयुक्षा, अर्थप्रकाशयिषा चेति द्विप्रकारो विषयः अनुमेयरूपः स विषयो वाच्यत्वेन न प्रतीयते। अपि तु किन्तु, उपाधित्वेन वाच्यविशेषणत्वेन प्रतीयत इत्यर्थः।

प्रतिपाद्यस्य च विषयस्य लिङ्गित्वे तद्विषयाणां विप्रतिपत्तीनां लौकिकैरेव क्रियमाणानां अभावः प्रसज्येतेति । एतच्चोक्तमेव ।

यथा च वाच्यविषये प्रमाणान्तरानुगमेन सम्यक्त्वप्रतीतौ क्वचित् क्रियमाणायां तस्य प्रमाणान्तरविषयत्वे सत्यपि न शब्दव्यापारविषयताहानि-स्तद्वद्व्यङ्ग्यस्यापि । काव्यविषये च व्यङ्ग्यप्रतीतीनां सत्यासत्यनिरूपणस्या-प्रयोजकत्वमेवेति तत्र प्रमाणान्तरपरीक्षोपहासायैव सम्पद्यते । तस्माल्लिङ्गि-प्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शक्यते वक्तुम् ।

यत्त्वनुमेयरूपव्यङ्ग्यविषयं शब्दानां व्यञ्जकत्वं तद् ध्वनिव्यवहारस्या-प्रयोजकम् । अपि तु व्यञ्जकत्वलक्षणः शब्दानां व्यापारः औत्पत्तिकशब्दार्थ-

---

## उज्जीवनी

प्रतिपाद्यस्य च विषयस्य अर्थात्मकस्य, लिङ्गित्वे अनुमेयत्वेऽङ्गीक्रियमाणे, तद्विषयाणामर्थविषयाणां, विप्रतिपत्तीनां विवादानां, लौकिकैरेव क्रियमाणानां, अभावः प्रसज्येत, यथा धूमात्मकेन लिङ्गेन, अनुमीयमाने वह्नौ विप्रतिपत्ती-नामवकाशो न विद्यते, तथा शब्दप्रतिपाद्यमानानामर्थानामपि लिङ्गित्वा-भ्युपगमे तत्रापि विप्रतिपत्तयो न भवेयुरित्यर्थः । एतदपि प्रागुक्तमेव ॥

वाच्यविषये, वाच्यार्थविषये सत्यत्व सत्यत्वरूपविप्रतिप्रत्तौ सत्यां क्वचित् स्थलविषये, प्रमाणान्तरानुगमेनाप्रोच्चारितशब्दरूपस्य प्रमाणान्तरस्यानुगमेन साम्येन सम्यक्त्वप्रतीतौ सत्यत्वप्रतीतौ क्रियमाणायां अनुमीयमानायामपि तस्य वाच्यस्य, प्रमाणान्तरविषयत्वे अनुमितिविषयत्वे सत्यपि शब्दव्यापारविषय-ताहानिः शब्दस्य अर्थप्रत्यायने यो व्यापारः अभिधारूपः, तद्विषयत्वहानिः यथा न भवति तथा व्यङ्ग्यस्याप्यर्थस्य शब्दव्यापारविषयत्वमक्षतमेव । काव्यविषये च, व्यङ्ग्यप्रतीतीनां सत्यासत्यत्वरूपविप्रतिपत्तेः निरूपणमप्रयोजकमेव । इति अतो हेतोः प्रमाणान्तरपरीक्षा सत्यनिर्णय उपहासाय परिहासायैव सम्पद्यते परिहास्यतां प्राप्नोतीत्यर्थः । तस्मात् सर्वत्र सर्वेषु स्थलेषु, व्यङ्ग्यप्रतीतिः व्यङ्ग्य स्यार्थस्य प्रतीतिः, लिङ्गिप्रतीतिरेव अनुमेयविषयकप्रतीतिरेवेति वक्तुं न शक्यते । तु किन्तु, यत् शब्दानां क्वचित् अनुमेयरूपव्यङ्ग्यविषयं अनुमेयरूपं

सम्बन्धवादिनाप्यभ्युपगन्तव्य इति प्रदर्शनार्थमुपन्यस्तम्। तद्धि व्यञ्जकत्वं कदाचिल्लिङ्गत्वेन, कदाचिद्रूपान्तरेण शब्दानां वाचकानामवाचकानां च सर्ववादिभिर प्रतिक्षेप्यमित्ययमस्माभिर्यत्न आरब्धः। तदेवं गुणवृत्तिवाचकत्वादिभ्यः शब्दप्रकारेभ्यो नियमेनैव तावद्विलक्षणं व्यञ्जकत्वं, तदन्तःपातित्वेऽपि तस्य हठादभिधीयमाने तद्विशेषस्य ध्वनेर्यत् प्रकाशनं विप्रतिपत्तिनिरासाय सहृदयव्युत्पत्तये वा तत् क्रियमाणमनतिसन्धेयमेव। नहि सामान्यमात्र-

---

## उज्जीवनी।

अनुमानप्रमाणगम्यो योऽर्थस्तद्रूपं व्यङ्ग्यं विषयो यस्य तादृशं व्यञ्जकत्वं, तद् ध्वनिव्यवहारस्य व्यञ्जकस्य शब्दस्य ध्वनिव्यपदेशस्य प्रयोजकं न भवति। अनुमेयार्थव्यञ्जकस्य शब्दस्य ध्वनिव्यवहारो नेति यावत्। अभिप्रायरूपस्यार्थस्यानुमेयत्वाङ्गीकारे (व्यङ्ग्यत्वानङ्गीकारे) तद्बोधकशब्दस्य ध्वनिव्यपदेशाभावे च तस्य व्यञ्जकत्वं कथमुपपद्यते, किमर्थं च तदङ्गीकृतं इत्याशङ्कायामाह—अपित्विति। व्यञ्जकत्वलक्षणः, व्यञ्जकत्वरूपः शब्दानां शब्दसम्बन्धी व्यापारः, औत्पत्तिकशब्दार्थसम्बन्धवादिना औत्पत्तिको नित्यः, शब्दार्थयोः सम्बन्धः, इति वदता मीमांसकेनापि अभ्युपगन्तव्योऽङ्गीकरणीय इति प्रदर्शनार्थमुपन्यस्तम्। हि यतः तद् व्यञ्जकत्वं, कदाचिद् वक्त्रभिप्रायव्यञ्जनायां लिङ्गत्वेन, कदाचिदालोकसमवधाने पदार्थस्य प्रकाशन व्यञ्जनं यदा तदा प्रदीपादेः प्रत्यक्षप्रमाकरणत्वेन व्यञ्जकत्वम्। वाचकानां शब्दानां, विवक्षितान्यपरवाच्ये (नानार्थस्थले) अभिधयार्थान्तरव्यञ्जकत्वम्। अविवक्षितवाच्ये गुणवृत्त्या, अवाचकानां गीतादिध्वनीनां रसव्यञ्जकत्वमित्येवमादिकं, सर्ववादिभिरपि अप्रतिक्षेप्यं निराकरणानर्हमित्यतः अस्माभिः व्यञ्जकत्वस्थापने व्यञ्जकत्वं स्थापयितुं यत्न आरब्धः। तत् तस्मात्, एवमुक्तरीत्या गुणवृत्तिवाचकत्वादिभ्यः शब्दप्रकारेभ्यः वाचकत्वलक्षकत्वादिभ्यः शब्दव्यापारेभ्यो विलक्षणं भिन्नं व्यञ्जकत्वम्। तदिति। तस्य व्यञ्जकत्वस्य, तदन्तःपातित्वे व्यापारसामान्यान्तर्गतत्वे, अभिधीयमाने कथ्यमाने सति तद्विशेषस्य ध्वनेः, व्यापारविशेषतां प्राप्तस्य व्यञ्जकत्वस्य, हठाद् निर्बन्धेन यत् प्रकाशनं निरूपणं, विप्रतिपत्तिनिरासाय विप्रतिपत्तीनां विमतीनां निरासार्थं, सहृदय-

लक्षणेनोपयोगिविशेषलक्षणानां प्रतिक्षेपः शक्यः कर्तुम्। एवं हि सति सत्तामात्रलक्षणे कृते सकलसद्वस्तुलक्षणानां पौनरुक्त्यप्रसङ्गः।

तदेवम्—

विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः।
ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम्॥

**प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।**
**यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत्॥ ३४॥**

व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्युक्तम्। तस्य तु वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः प्रकल्प्यते। तत्र

---

उज्जीवनी।

व्युत्पत्तये च सहृदयानां व्युत्पत्तिसिद्ध्यर्थं, च क्रियमाणं तत् व्यञ्जकत्वनिरूपणं, अनतिसन्धेयमेवाप्रतिषेध्यमव। सामान्यलक्षणेन व्यापारसामान्यलक्षणकथनेन उपयोगिविशेषलक्षणानां परपक्षप्रतिक्षेपः सहृदयव्युत्पत्त्यादिरूपोपयोगयोग्यानां विशेषलक्षणानां प्रतिक्षेपो निरासः न हि कर्तुं शक्यः न कर्तुं युज्यत इति यावत्। एवं हि सति विशेषलक्षणे प्रतिक्षिप्यमाणे सति सत्तामात्रलक्षणे कृते 'सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' इत्यनेन तेषां त्रयाणामपि सत्तात्त्वरूपे सामान्यलक्षणे कथिते सति सकलसद्वस्तुलक्षणानां द्रव्यगुणकर्मणां पृथक्तया विशेषलक्षणे पौनरुक्त्यं स्यात्।

**उक्तमुपसंहरति—तदेवमिति। विमतीति। मनीषिणां विदुषां, विमतिविषयः विमतीनां विप्रतिपत्तीनां विषयः, सततं सर्वदा, अविदितसतत्त्वः अविदितं अविज्ञातं सतत्त्वं समानं यस्य (ध्वनेः) तादृशः, ध्वनिसंज्ञितः ध्वनिनामा काव्यस्य प्रकारः काव्यभेदः यः, सोऽयं एतावता प्रबन्धेन प्रकाशित इत्यर्थः**

इति ध्वनिनिरूपणम्।

**अथ गुणीभूतव्यङ्ग्याख्यं द्वितीयं काव्यप्रकारमाह—प्रकार इति। यत्र यस्मिन् काव्ये, व्यङ्ग्यस्य व्यङ्ग्यार्थस्य, अन्वये योगे सति, वाच्यचारुत्वं वाच्यस्य वाच्यार्थस्य चारुत्वं चमत्कृतिजनकत्वं प्रकर्षवत् प्रकृष्टं स्याद् भवेत्,**

वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमानस्य कदाचिद् वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता। यथा—

लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह सम्प्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः।

---

उज्जीवनी।

सोऽयं गुणीभूतव्यङ्ग्याख्यः अन्यः अपरः (द्वितीयः) काव्यस्य प्रकारः काव्यभेदः, दृश्यते। तदेवाह व्यङ्ग्य इति। ललनालावण्यप्रख्यः ललनासु लावण्यमिव, व्यङ्ग्यः प्रतीयमानोऽर्थः यः सः प्रतिपादितः प्रथमोद्द्योते तस्य वस्त्वलङ्कार-रूपतया त्रिविधस्य व्यङ्ग्यस्य प्राधान्यं यत्र तद् ध्वनिकाव्यमित्युक्तम्। तु किन्तु वाच्यचारुत्वप्रकर्षे वाच्यस्य यच्चारुत्वं तस्य प्रकृष्टतायां तस्य व्यङ्ग्यस्य गुणीभावेन अप्रधानतया, गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः गुणीभूतव्यङ्ग्य-संज्ञितः काव्यप्रकारः प्रकल्प्यते कल्प्यते। कदाचित् तिरस्कृतवाच्येभ्यः वाच्यस्यार्थस्यात्यन्ततिरस्कारेणार्थान्तरप्रतिपादकेभ्यः शब्देभ्यः प्रतीयमानस्य प्रतीतिविषयस्य वस्तुमात्रस्य व्यङ्ग्यस्य व्यङ्ग्यवस्तुरूपस्यार्थस्य वाच्यरूप-वाक्यार्थापेक्षया वाच्यरूपः वाच्यात्मकः यो वाक्यार्थो वाक्यतात्पर्यविषयीभूतो-ऽर्थस्तदपेक्षया गुणीभावे सति अप्राधान्ये सति गुणीभूतव्यङ्ग्यता गुणीभूतव्यङ्ग्य-व्यपदेशविषयत्वं भवतीत्यर्थः। उदाहरति—यथेति। लावण्येति। नदीतीरे लावण्यवतीं कामपि ललनां विलोक्याङ्कुरस्तिमितस्य कस्यचिद्यूनो वचन-मिदम्। यत्र यस्यां लावण्यसिन्धौ, शशिना चन्द्रेण सह उत्पलानि सम्प्लवन्ते प्लवन्ते। यत्र च द्विरदकुम्भतटी द्विरदस्य गजस्य कुम्भतटी कुम्भस्थली, उन्मज्जति, यत्र अपरे अन्ये, कदलिकाण्डमृणालदण्डाः कदल्याः काण्डौ, मृणालस्य दण्डौ च विद्यन्ते, सा अपरैव अन्य दृशो लावण्यसिन्धुः लावण्यनदी। अत्र नदी-तीरे दृश्यमाना केयमिति प्रश्नः। अत्र सिन्धूत्पलशशिद्विरदकुम्भतटी कदलीकाण्डदण्डशब्दानां, नदी, कुवलय, गजकुम्भ, कदलीकाण्डमृणालदण्डरूपा ये वाच्यार्थास्तेषामनुपपद्यमानतयात्यन्ततिरस्कारेण, ललनानयनयुग्मवदनस्तन-युगजङ्घायुगलबाहुद्वन्द्वरूपाणि वस्तूनि व्यञ्जनया, बोधयन्ति। अपरैव हि

अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद् वाच्यप्राधान्येन काव्यचारुत्वापेक्षया गुणीभावे सति गुणीभावव्यङ्ग्यता, यथोदाहृतम्—'अनुरागवती सन्ध्या' इत्येवमादि। तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणीभावः, यथोदाहृतम्—'सङ्केतकालमनसम्' इत्यादि। रसादिरूपव्यङ्ग्यस्य गुणीभावे रसवदलङ्कारो दर्शितः, तत्र च तेषामाधिकारिक वाक्यापेक्षया गुणीभावो विवहनप्रवृत्तभृत्यानुयायिराजवत्। व्यङ्ग्यालङ्कारस्य गुणीभावे दीपकादिविषयः। तथा—

---

उज्जीवनी

केयमिति वाक्यजन्यवाक्यार्थस्य प्राधान्यात् व्यङ्ग्यस्य गुणीभूतत्वाच्च गुणीभूतव्यङ्ग्यात्मकः काव्यप्रकारोऽयम्॥

अतिरस्कृतवाच्येभ्यः अतिरस्कृतः वाच्यो येषां तादृशेभ्यः शब्देभ्यः अपि, प्रतीयमानस्य प्रतीतिविषयस्य व्यङ्ग्यस्यार्थस्य, काव्यचारुत्वापेक्षया, काव्यगतं यच्चारुत्वं तदपेक्षया वाच्यप्राधान्येन वाच्यस्यार्थस्य प्रधानतया, गुणीभावे सति अप्रधानतायां सत्यां गुणीभूतव्यङ्ग्यत्वमेव। यथोदाहृतमिति। 'अनुरागवती सन्ध्ये'ति। अत्र सन्ध्यादिशब्दानां वाच्यस्यार्थस्य तिरस्कारं विना अर्थान्तरस्य प्रतीयमानस्य वाच्यार्थापेक्षया गुणीभावेन गुणीभूतव्यङ्ग्यता। इदं प्रथमोद्द्योते प्रदर्शितम्। तस्यैव व्यङ्ग्यस्य स्वयमुक्त्या वचनेन प्रकाशीकृतत्वेन प्रकाशनेन, गुणीभावः, यत्र भवति तदपि काव्यं गुणीभूतव्यङ्ग्यात्ममेव। यथोदाहृतमिति। सङ्केतेति। इदमपि द्वितीयोद्द्योते उक्तम्। व्यङ्ग्यस्यापि वस्तुनः आकूतशब्दनिवेदितत्वेन गुणीभावः। रसभावादिरूपस्य व्यङ्ग्यस्य गुणीभावे यो विशेषस्तमाह रसादीति। रसादिरूपव्यङ्ग्यस्य रसभावादिरूपस्य व्यङ्ग्यार्थस्य गुणीभावः, रसवदलङ्कारे रसवदलङ्कारनिरूपणावसरे दर्शितः।

द्वितीयोद्द्योते—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥ इत्यनेन,

तत्रेति। तत्र च रसवदाद्यलङ्कारेषु च, तेषां रसभावादीनां, आधिकारिकवाक्यापेक्षया प्रधानवाक्यार्थापेक्षया, गुणीभावः अप्रधानता, विवहनप्रवृत्त-

**प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः ।**
**ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा ॥ ३५ ॥**

ये चैतेऽपरिमितस्वरूपा अपि प्रकाशमानास्तथाविधार्थरमणीयाः सन्तो विवेकिनां सुखावहाः काव्यबन्धास्तेषु सर्वेष्वेवायं प्रकारो गुणीभूतव्यङ्ग्यो नाम योजनीयः । यथा—

लच्छी दुहिदा जामाउओ हरी तं स घरिणिआ गङ्गा ।
अमिअमिअङ्का अ सुआ अहो कुटुम्बं महोअहिणो ॥

लक्ष्मीर्दुहिता जामाता हरिस्तस्य गृहिणी गङ्गा ।
अमृतमृगाङ्कौ च सुतावहो कुटुम्बं महोदधेः ।

**वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।**
**प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥ ३६ ॥**

---

उज्जीवनी ।

भृत्यानुयायिराजवद् भृत्यस्य विवाहे प्रवृत्ते तमनुगच्छतो राज्ञो यथाप्रधानता तथा रसादीनामपीत्यर्थः । तथा व्यङ्ग्यालङ्कारस्य व्यञ्जनागम्यस्यालङ्कारस्य यदा प्रधानवाक्यार्थापेक्षया गुणीभावः, तदा, तद्विषयो दीपकादिरलङ्कारवर्गः !

गुणीभूतव्यङ्ग्यस्य सर्वादरणीयतां दर्शयति - तथेति । प्रसन्नेति । प्रसन्नगम्भीरपदाः प्रसन्नानि प्रसादगुणयुक्तानि, गम्भीराणि व्यङ्ग्यार्थप्रकाशनाद् गाम्भीर्ययुक्तानि च पदानि येषु तादृशाः सुखावहाः सहृदयाह्लादजनकाः, ये काव्यबन्धाः, रमणीयार्थप्रतिपादकशब्दसन्दर्भाः, तेषु काव्येषु, अयमेव प्रकारो गुणीभूतव्यङ्ग्याख्यः सुमेधसा सुधिया कविना, योज्य आयोजनीयः, ये चेति । अपरिमितस्वरूपा अपरिमितं स्वरूपं शब्दात्मकं येषां तादृशाः, प्रकाशमानाः शोभमानाः, तथाविधार्थरमणीया अपि तथाविधेनार्थेन रमणीयाश्च सन्तः, विवेकिनां सहृदयानां, सुखावहाः आह्लादजनकाः ये च एते काव्यबन्धाः काव्यप्रबन्धाः तेषु सर्वेषु काव्यबन्धेषु गुणीभूतव्यङ्ग्यो नाम अयं प्रकारः भेदः योजनीयः । उदाहरति—यथेति । "लच्छी" इति ।

वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशस्यालङ्कारस्य वस्तुमात्रस्य वा यथायोगमनुगमे सति च्छायातिशयं बिभ्रत् लक्षणकारैरेकदेशेन दर्शितः। स तु तथारूपः प्रायेण सर्व एव परीक्ष्यमाणो लक्ष्ये निरीक्ष्यते ।

तथाहि—दीपकसमासोक्त्यादिवदन्येऽप्यलङ्काराः प्रायेण व्यङ्ग्यालङ्कारवस्त्वन्तरसंस्पर्शिन्यो दृश्यन्ते । यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया । कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यति

---

उज्जीवनी ।

समुद्रवर्णनमिदम् । लक्ष्मीः रमा, दुहिता पुत्री, हरिः विष्णुः, जामाता दुहितुः पतिः, तस्य समुद्रस्य, गङ्गा जाह्नवी, गृहिणी पत्नी, अमृतं सुधा, मृगाङ्कश्चन्द्रश्च, सुतौ तनयौ, अहो आश्चर्यम्! महोदधेः समुद्रस्य, कुटुम्बम् । अत्र लक्ष्म्या दुहितृत्वेन, हरेर्जामातृत्वेन, गङ्गायाः पत्नीत्वेन, अमृतचन्द्रयोश्च पुत्रत्वेन च समुद्रस्य सर्वलोकातिशायि सौभाग्यं प्रतीयमानमपि अहो कुटुम्बं महोदधेरित्यहो शब्देन गुणभावं प्राप्नोति । एवमस्य गुणभूतव्यङ्ग्यत्वम् ।

वाच्येषु अलङ्कारेषु व्यङ्ग्यस्य गुणीभूतत्वेन चारुत्वं दर्शयति—वाच्येति । अयं वाच्यालङ्कारवर्गः वाच्यानामलङ्काराणां उपमादीनां वर्गः, व्यङ्ग्यांशानुगमे सति व्यङ्ग्यस्य प्रतीयमानार्थस्य अनुगमे सम्बन्धे सति, परामुत्कृष्टां च्छायां चारुतां, बिभ्रद् दधानः, प्रायेण भूम्ना, लक्ष्ये निरीक्ष्यत एव दृश्यत एव ।

तदेवाह—वाच्यालङ्कारेति । अयं वाच्यालङ्कारसमुदायः अलंकारस्य वस्तुमात्रस्य वा व्यङ्ग्यांशस्य, यथायोगं यथासम्भवमनुगमे अनुगतत्वे सति, शोभातिशयशाली, लक्षणकारैः अलङ्कारलक्षणकृद्भिः एकदेशेन प्रदर्शितः । तु किन्तु स सर्व एवालङ्काराणां वर्गः परीक्ष्यमाणः लक्ष्ये तथाविधः चारुत्वातिशयवान् निरीक्ष्यते दृश्यते । समर्थयति—तथाहीति । दीपकेति । दीपकसमासोक्त्यादिवद् यथा दीपके व्यङ्ग्योपमालङ्कारस्य, समासोक्तौ अप्रस्तुतस्य वस्तुनः, प्रथमोद्द्योतप्रदर्शितेषु आक्षेपादिषु केषुचिद्, वस्तुनोऽलङ्कारान्तरस्य वा व्यङ्ग्यस्य संस्पर्शः, तथा अन्येऽपि अलङ्काराः प्रायेण व्यङ्ग्यालङ्कारान्तरवस्त्वन्तरसंस्पर्शवन्तो बाहुल्येन दृश्यन्ते । हेतुमाह—यत इति । यतः यस्मात् प्रथमं तावत् सर्वेषु अलङ्कारेषु वाच्यालङ्कारेषु सर्वत्र, अतिशयोक्तिरूपस्यालङ्कारस्यान्तर्भावरूपा । शक्यक्रिया शक्या क्रिया अतिशयोक्त्यन्तर्भावना

इति कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत् ।

भामहेनापि अतिशयोक्तिलक्षणे यदुक्तम् —

> सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
> यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥ इति

तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात्, तस्य चारुत्वातिशययोगोऽन्यस्य त्वलङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेनाभेदोपचारात् सैव सर्वालङ्कारूपेत्ययमेवार्थोऽवगन्तव्यः ।—

तस्याश्चालङ्कारान्तरसङ्कीर्णत्वं कदाचिद् वाच्यत्वेन, कदाचिद् व्यङ्ग्यत्वेन । व्यङ्ग्यत्वमपि कदाचिद् प्राधान्येन, कदाचिद् गुणभावेन । तत्राद्ये पक्षे वाच्यालङ्कारमार्गः । द्वितीये तु ध्वनावन्तर्भावः । तृतीये तु गुणीभूतव्यङ्ग्यरूपता ।

---

उज्जीवनी ।

यस्यास्तादृशी भवतीत्यर्थः । महाकविभिः कृतैव सा अतिशयोक्तिगर्भता । कामपि अतिशयितां, काव्यच्छविं काव्यस्य शोभां पुष्यति पोषयति । हि यतः अतिशययोगिता अतिशयविशेषसंसर्गिता स्वविषयौचित्येन स्वस्वविषयस्य उचितताममनुसृत्य क्रियमाणा सती, काव्ये उत्कर्षं कथं नावहेत् । औचित्येन क्रियमाणोऽतिशयः काव्ये उत्कर्षमावहत्येवेति यावत् । अतिशयोक्तिलक्षणे अतिशयोक्तिलक्षणकथनावसरे भामहेनोक्तमनुवदति—यदुक्तमिति । सैषेति । या एतावता प्रतिपादिता अतिशयोक्तिः सैषा वक्रोक्तिरुक्तिवैचित्र्यमतिशयोक्त्यात्मिका । अनया अतिशयोक्त्या, अर्थो विभाव्यते विचित्रतया अनुभूयते । अतः कविना, अस्यामतिशयोक्तौ यत्नः प्रयत्नः कार्यः करणीयः । अनया विना अतिशयोक्त्या विना कोऽलङ्कारः अलङ्कारशब्दव्यपदेशविषयः अलङ्कारो न स्तीत्यर्थः तत्रेति । कविप्रतिभावशात् कवेः प्रतिभाया आनुगुण्येन, अतिशयोक्तिर्यमलङ्कारमधितिष्ठति, यस्मिन्नलङ्कारेऽन्तर्भावं भजते, तस्यालङ्कारस्य चारुत्वातिशययोगः अतिशयितचारुतासंसर्गः, अन्यस्य तु अतिशयोक्त्यन्तर्भावरहितस्य तु, अलङ्कारमात्रत्वम् । इति एवं, सर्वालङ्कारशरीर-

अयं च प्रकारोऽन्येषामप्यलङ्काराणामस्ति, तेषां तु न सर्वविषयः। अतिशयोक्तेस्तु सर्वालङ्कारविषयोऽपि सम्भवतीत्ययं विशेषः। येषु चालङ्कारेषु सादृश्यमुखेन तत्त्वप्रतिलम्भः, यथा रूपकोपमातुल्ययोगितानिदर्शनादिषु तेषु गम्यमानधर्ममुखेनैव यत् सादृश्यं तदेव शोभातिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तः गुणीभूतव्यङ्ग्यस्यैव विषयाः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानात् गुणीभूत-

---

उज्जीवनी।

स्वीकरणयोग्यत्वेन सर्वेषामलङ्काराणां शरीरस्य स्वीकरणयोग्यतया, अभेदोपचारात् अभेदलक्षणात्। सैव अतिशयोक्तिरेव सर्वालङ्काररूपा इत्ययमेवार्थोऽवगन्तव्यो ज्ञातव्यः। तस्याश्च अतिशयोक्तेश्च अलङ्कारान्तरसङ्कीर्णत्वं अलङ्कारान्तरमिश्रितत्वं च, कदाचिद् वाच्यत्वेन, कदाचिद् व्यङ्ग्यत्वेन च भवति। व्यङ्ग्यत्वमपि कदाचित् प्राधान्येन, कदाचिच्च गुणीभावेन। तत्राद्ये पक्षे अतिशयोक्तेर्वाच्यत्वे वाच्यालङ्कारमार्गः। द्वितीये व्यङ्ग्यत्वे प्राधान्य ध्वनावन्तर्भावोऽतिशयोक्तेः। तृतीये व्यङ्ग्याया अतिशयोक्तेर्गुणभावे गुणीभूतव्यङ्ग्यत्वमिति विवेकः।

अयं चेति। अयं च प्रकारः अलङ्कारान्तरेऽनुप्रवेशरूपः अलङ्कारान्तराणां अन्येषामलङ्काराणां अस्ति, तु किन्तु तेषामन्यालङ्काराणां, अयं प्रकारः सर्वविषयः सर्वो विषयो यस्य तादृशः, न भवति सर्वेषामप्यलङ्काराणां अलङ्कारान्तरेष्वनुप्रवेशो नास्तीत्यर्थः। अतिशयोक्तेस्तु अतिशयोक्त्यलङ्कारस्य केवलं, अलङ्कारान्तरेऽनुप्रवेशः सर्वालङ्कारविषयः सर्वोऽलङ्कारो विषयो यस्य तादृशी भवति इत्ययं विशेषः वैलक्षण्यम्। येषु अलङ्कारेषु यथा दीपकोपमातुल्ययोगितानिदर्शनादिषु दीपके, उपमायां, तुल्ययोगितायां, निदर्शनादौ इव सादृश्यमुखेन सादृश्यद्वारा तत्त्वप्रतिलम्भः अलङ्कारत्वव्याप्तिः तेषु अलङ्कारेषु। गम्यमानधर्ममुखेनैव व्यज्यमानसाधारणधर्मपुरस्कारेण-यत् सादृश्यं तदेव, शोभातिशयशालि शोभातिशयमावत्त इति ते सर्वेऽपि तथाविधाः सर्वेऽपि अलङ्काराः चारुत्वातिशययोगिनः अतिशयितमाह्लादं जनयन्तः सन्तः गुणीभूतव्यङ्ग्यस्यैव विषया भवन्ति।

व्यङ्ग्यता निर्विवादैव। तत्र च गुणीभूतव्यङ्ग्यतायां अलङ्काराणां केषाञ्चि-दलङ्कारविशेषगर्भतायां नियमः। यथा व्याजस्तुतेः प्रेयोऽलङ्कारगर्भत्वे। केषाञ्चिदलङ्कारमात्रगर्भतायां नियमः, यथा सन्देहादीनामुपमागर्भत्वे, केषाञ्चिदलङ्काराणां परस्परगर्भतापि सम्भवति। यथा दीपकोपमयोः। तत्र दीपकमुपमागर्भत्वेन प्रसिद्धम्। उपमापि कदाचित् दीपकच्छायानुयायिनी: यथा मालोपमा। तथा हि—'प्रभामहत्या शिखयेव दीपः' इत्यादौ स्फुटैव दीपकच्छाया लक्ष्यते॥ तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्व एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वं

---

## उज्जीवनी।

समासोक्त्याक्षेपपर्यायोक्तादिषु तु अलङ्कारेषु गम्यमानांशाविनाभावेनैव गम्यमानांशस्य व्यङ्ग्यांशस्य, अविनाभावेन नियतत्वेन तत्त्वव्यवस्थानाद् अलङ्कारत्वव्यवस्थानाद् गुणीभूतव्यङ्ग्यता निर्विवादैव, तेषां समासोक्त्या-दीनां गुणीभूतव्यङ्ग्यत्वे विवादो नास्ति। तत्र च केषाञ्चिदलङ्काराणां गुणीभूतव्यङ्ग्यत्वे, अलङ्कारविशेषगर्भतायां अलङ्कारविशेषस्यान्तर्भावे नियमः। यथेति। सन्देहादीनामलङ्काराणां उपमागर्भत्वे नियमः। केषाञ्चिदलङ्काराणां परस्परगर्भता परस्परस्यान्तर्भावोऽपि सम्भवति। यथा दीपकोपमयोः तत्र दीपकं दीपकालङ्कारः, उपमागर्भत्वे प्रसिद्धम्। कदाचिद् उपमापि दीपकच्छायानुयायिनी दीपकच्छायामनुगच्छति। यथेति। मालोपमेति। प्रभेति—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी, तया स पूतश्च विभूषितश्च॥

कुमारसम्भवे प्रथमसर्गस्थितमेतत् पद्यम्। पूतत्वविभूषितत्वात्मको धर्मः प्रस्तुतस्य हिमवतः, अप्रस्तुतानां दीपादीनां च साधारणतां प्राप्तः दीपकस्यो-पमायामन्तर्गतत्वं प्रकाशयति। तत् तस्मात्, एवं पूर्वोक्तप्रकारेण, व्यङ्ग्यांश-संस्पर्शे सति व्यङ्ग्यस्यांशस्य संसर्गे सति, चारुत्वातिशययोगिनः अतिशयित-चारुत्वयुक्ताः, रूपकादयः सर्वे एवालङ्काराः गुणीभूतव्यङ्ग्यस्य मार्गः गुणीभूतव्यङ्ग्यत्वेनाङ्गीक्रियते। तेषां रूपकादीनां, तथाविधानां तत्सदृशानां,

च तेषां तथाजातीयानां सर्वेषामेवोक्तानुक्तानां सामान्यम्। तल्लक्षणे सर्व एवैते सुलक्षिता भवन्ति। एकैकस्य स्वरूपविशेषकथनेन तु सामान्यलक्षणरहितेन प्रतिपदपाठेनैव शब्दा न शक्यन्ते तत्त्वतो निर्ज्ञातुम्; आनन्त्यात्। अनन्ता हि वाग्विकल्पास्तत्प्रकारा एव चालङ्काराः। गुणीभूतव्यङ्ग्यस्य च प्रकारान्तरेणापि व्यङ्ग्यार्थानुगमलक्षणेन विषयत्वमस्त्येव। तदयं ध्वनिनिष्यन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः। सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारो यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यम्। तदिदं काव्यरहस्यं परमिति सूरिभिर्भावनीयम्।

**मुख्या महाकविगिरामलङ्कृतिभृतामपि।**
**प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥ ३७॥**

---

उज्जीवनी।

उक्तानां दीपकादीनां, अनुक्तानां सन्देहादीनां चालङ्काराणां गुणीभूतव्यङ्ग्यत्वं सामान्यं तुल्यम्। तल्लक्षणे, गुणीभूतव्यङ्ग्यस्य लक्षणे कृते सति, सर्वे एवैते सुलक्षिता सम्यग् लक्षिता भवन्ति। सर्वेषामलङ्काराणां लक्षणं सुष्ठूक्तं भवति। आनन्त्यात् शब्दाः यथा प्रतिपदपाठेन तत्त्वतो निर्ज्ञातुं न शक्यन्ते। तथा सामान्यलक्षणरहितेन सामान्यलक्षणं विना, एकैकस्यापि अलङ्कारस्य स्वरूपविशेषकथनेन प्रातिस्विकलक्षणकथनेन तत्त्वतो ज्ञातुं न शक्यत इत्यर्थः। वाग्विकल्पाः वाचो विकल्पाः, अनन्ताः, अलङ्काराश्च तत्प्रकारा एव वचनभेदा एव। व्यङ्ग्यार्थानुगमलक्षणेन व्यङ्ग्यार्थानुगतत्वं गुणीभूतव्यङ्ग्यस्य लक्षणमिति प्रकारान्तरेणापि गुणीभूतव्यङ्ग्यस्य विषयत्वं लक्षितत्वमस्त्येव। तत् तस्मात्, ध्वनिनिष्यन्दरूपः ध्वनेर्निष्यन्दात्मकः, अयं द्वितीयोऽपि गुणीभूतव्यङ्ग्याख्यो भेदः, महाकविविषयः महाकवीनामुक्तिविषयः, अतिरमणीयः सहृदयैः लक्षणीयो द्रष्टव्यः। यत्र काव्ये, प्रतीयमानार्थसंस्पर्शेन व्यङ्ग्यार्थसंसर्गेण सौभाग्यं नास्ति, सहृदयहृदयहारिणः सहृदयहृदयाह्लादकस्य काव्यस्य, स तादृशः प्रकारो नास्त्येव। तदिदं परमुत्कृष्टं काव्यरहस्यमिति सूरिभिर्विद्वद्भिः भावनीयं विभावनीयम्।

मुख्येति। अलङ्कृतिभृतामपि सालङ्काराणामपि, महाकविगिरां

अनया सुप्रसिद्धोऽप्यर्थः किमपि कामनीयकमानीयते ।

तद्यथा—

विस्रम्भोत्था मन्मथाज्ञाविधाने, ये मुग्धाक्ष्याः केऽपि लीलाविशेषाः ।
अक्षुण्णास्ते चेतसा केवलेन, स्थित्वैकान्ते सन्ततं भावनीयाः ॥

इत्यत्र केऽपीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानं वस्त्वक्लिष्टमनन्तमर्पयता का छाया नोपपादिता ।

**अर्थान्तरगतिः काक्वा, या चैषा परिदृश्यते ।**
**सा व्यङ्ग्यस्य गुणीभावे, प्रकारमिममाश्रिता ॥ ३८ ॥**

या चैषा काक्वा क्वचिदर्थान्तरप्रतीतिर्दृश्यते सा व्यङ्ग्यस्यार्थस्य गुणीभावे सति गुणीभावव्यङ्ग्यलक्षणं काव्यभेदमाश्रयते । यथा—'स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः' । यद्वा वा—

---

उज्जीवनी ।

महाकविवचनानां एषानन्तरोक्ता, प्रतीयमानच्छाया व्यङ्ग्यार्थसंस्पर्शेन या कान्तिः सा योषितामङ्गनानां, लज्जेव त्रपेव, मुख्या प्रधानभूता भूषा भूषणं भवति । अनया प्रतीयमानच्छायया, सुप्रसिद्धोऽपि अत्यन्तं प्रसिद्धोऽप्यर्थः किमपि अनिर्वचनीयं रामणीयकं आनीयते प्राप्यते । उदाहरति—तद्यथेति । विस्रम्भोत्था इति । मन्मथाज्ञाविधाने मन्मथस्यालङ्घनीयशासनस्य कामस्य, आज्ञाया विधानेऽनुष्ठाने, मुग्धाक्ष्याः सुन्दर्याः, विस्रम्भोत्थाः लज्जादिपरित्यागोपस्कृतात् विश्वासात् उत्पन्नाः, केऽपि अनिर्वचनीयाः, अक्षुण्णाः अपरिचिताः, ये लीलाविलासाः विभ्रमाः, ते एकान्ते विजने, स्थित्वा केवलेन व्यापारान्तररहितेन, चेतसा मनसा सन्ततं भावनीयाः भावयितुमुचिता भवन्ति । इत्यत्र इत्यस्मिन् पद्ये, केऽपि इत्यनेन शब्देन लीलानां पृथग्वचनेन अस्पष्टमभिदधता स्फुटतयानभिदधता कविना, प्रतीयमानं वस्तु व्यङ्ग्यं, अक्लिष्टं क्लेशं विना, अनन्तं बहुरूपं, अर्पयता प्रकाशयता का छाया शोभा, नोपपादिता न सम्पादिता अतिशयिता कान्तिः प्रतिपादितेत्यर्थः ॥

काकाक्षिप्तं प्रतीयमानप्रकारं दर्शयति—अर्थेति । काकाध्वनेर्विकारेण, या चैषा अर्थान्तरगतिः अर्थान्तरस्य व्यङ्ग्यस्यावगतिः परिदृश्यते सा अर्थान्तर-

आम असइओं ओरम पइव्वए ण तु ए मलिणि अं सीलम् ।
किं उण जणस्स जा अ व्व चन्दिल तं ण कामेमो ॥

शब्दशक्तिरेव हि स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सती अर्थविशेष-प्रतिपत्तिहेतुर्न काकुमात्रम् । विषयान्तरे स्वेच्छाकृतात् काकुमात्रात् तथा-

उज्जीवनी

गतिः व्यङ्ग्यस्य गुणीभावे सति, प्रतीयमानार्थस्याप्राधान्ये सति इमं प्रकारं गुणीभूतव्यङ्ग्याख्यं काव्यप्रकारं आश्रिता आश्रित्य वर्तत इत्यर्थः । तदेवाह— येति । या चैषा क्वचित् स्थले, अर्थान्तरस्य व्यङ्ग्यस्य प्रतीतिर्दृश्यते, सा व्यङ्ग्यस्य गुणीभावे सति, गुणीभूतव्यङ्ग्यलक्षणं काव्यप्रभेदं काव्यभेदमाश्रयते इति । उदाहरति—यथेति । स्वस्था इति ।

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ इति पद्यम् ।

वेणीसंहारे प्रथमाङ्के भीमसेनस्योक्तिरियम् । अत्र 'स्वस्था भवन्ति' इति काका भीमे जीवति कथञ्चिदपि धार्तराष्ट्राः स्वस्था न भवेयुरिति धार्तराष्ट्राणां स्वास्थ्यासम्भाव्यता व्यज्यते । तस्य च वाच्यार्थोपस्कारकतया गुणीभावाद् गुणीभूतव्यङ्ग्यमिदं काव्यम् ॥

उदाहरणान्तरमाह—यथा वेति । आमिति । स्वमपहसन्तीमसतीं परिहसन्त्याः कस्याश्चिदुक्तिरियम् । आम् सत्यम् । असत्यो भवामः । त्वं उपरम परिहासवचनात् । परिहासो माभूदित्यर्थः । हे ! पतिव्रते ! त्वया शीलं चारित्रं न मलिनितम् मलिनं न कृतम् । किं पुनः किन्तु, जनस्य परकीयस्य, जायेव पत्नीव, नापितं क्षुरकं न कामयामहे । असत्यो भवाम इति काकुः । अविनयातिशयो व्यङ्ग्यः । अत्र हि स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया स्वस्य वाचकशब्दस्य अभिधेयोऽभिधाव्यापारविषयो योऽर्थः तस्य सामर्थ्येनाक्षिप्ता काकुः सहायो यस्यास्तादृशी सती शब्दशक्तिरेव शब्दव्यापार एव अर्थविशेष-प्रतिपत्तिहेतुः अर्थविशेषस्य प्रतिपत्तिरवगमस्य हेतुः कारणं, न काकुमात्रम् ।

विधार्थप्रतिपत्त्यसंभवात्। स चार्थः काकुविशेषसहायशब्दव्यापारोपारूढोऽप्यर्थसामर्थ्यलभ्य इति व्यङ्ग्यरूप एव। वाचकत्वानुगमेनैव तु यदा तद्विशिष्टवाच्यप्रतीतिस्तदा गुणीभूतव्यङ्ग्यतया तथाविधार्थद्योतिनः काव्यस्य-व्यपदेशः व्यङ्ग्यविशिष्टवाच्याभिधायिनो हि गुणीभूतव्यङ्ग्यत्वम्॥

**प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।**
**विधातव्या सहृदयैर्न तत्र ध्वनियोजना॥ ३९॥**

सङ्कीर्णो हि कश्चिद् ध्वनेर्गुणीभूतव्यङ्ग्यस्य च लक्ष्ये दृश्यते मार्गः तत्र यस्य युक्तिसहायता तत्र तेन व्यपदेशः कर्तव्यः। न सर्वत्र ध्वनिरागिणा भवितव्यम्॥ यथा—

---

उज्जीवनी।

विषयान्तरे अन्यविषये, स्वेच्छाकृतात् अर्थान्तराभिसन्धिरहितात् काकुमात्रात्, तथाविधस्य चमत्कृतिजनकस्यार्थविशेषस्य प्रतिपत्तेरसंभवात्। स चार्थः अर्थविशेषः काकुविशेषसहायशब्दव्यापारोपारूढोऽपि काकुविशेषः सहायः यस्य तादृशस्य, शब्दस्य व्यापारेण, समारूढोऽपि अर्थसामर्थ्यलभ्य इति हेतोः व्यङ्ग्यरूप एव व्यङ्ग्यात्मक एव। वाचकत्वानुगमेनैव वाच्यवाचकभावरूपशब्दव्यापारपश्चाद्भावेनैव, तद्विशिष्टवाच्यप्रतीतिः व्यङ्ग्यविशिष्टस्य वाच्यस्य प्रतीतिः यदा भवति तदा, तथाविधार्थद्योतिनः तादृशार्थप्रकाशकस्य काव्यस्य गुणीभूतव्यङ्ग्यतया व्यपदेशः। हि यतः, व्यङ्ग्यविशिष्टवाच्याभिधायिनः व्यङ्ग्यविशिष्टं यद् वाच्यं तदभिधायिनः तदभिधायकस्य काव्यस्य गुणीभूतव्यङ्ग्यत्वम्॥

ध्वनेर्गुणीभूतव्यङ्ग्यस्य च विषयविभागमाह—प्रभेदस्येति। यश्च व्यङ्ग्योऽर्थः, युक्त्या चारुत्वप्रतीतितारतम्यपर्यालोचनया, अस्य गुणीभूत-व्यङ्ग्यात्मकस्य प्रभेदस्य काव्यप्रकारस्य, विषयः प्रतीयते विषयत्वेनावगम्यते। तत्र सहृदयैर्ध्वनियोजना ध्वनिसंज्ञाया आयोजनं, न विधातव्या न कर्तव्य-मित्यर्थः। हि यस्मात्, ध्वनेः गुणीभूतव्यङ्ग्यस्य च लक्ष्ये मार्गः सङ्कीर्णः दृश्यते, मार्गस्य सङ्कीर्णतायां तत्र ध्वनित्वगुणीभूतव्यङ्ग्यत्वयोर्मध्ये यस्य युक्तिसहायता ध्वनित्वस्य वा गुणीभूतव्यङ्ग्यत्वस्य वा युक्तिसहायता युक्तिः

पत्युः शिरश्चन्द्रकलामनेन, स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

यथा च

प्रयच्छतोच्चैः कुसुमानि मानिनी, विपक्षगोत्रं दयितेन लम्भिता
न किञ्चिदूचे चरणेन केवलं, लिलेख बाष्पाकुललोचना भुवम् ॥

इत्यत्र 'निर्वचनं जघान' 'न किञ्चिदूचे' इति प्रतिषेधमुखेन व्यङ्ग्यस्यार्थस्योक्त्या किञ्चिद्विषयीकृतत्वाद् गुणीभाव एव शोभते । यदा वक्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रतीयते तदा तस्य प्राधान्यम् । यथा 'एवंवादिनि

---

उज्जीवनी ।

सहाया भवति तत्र तादृशस्थले तेन ध्वनित्वेन, गुणीभूतव्यङ्ग्यत्वेन वा व्यपदेशः कर्तव्यः । कर्तव्यतयावगन्तव्यः । अतः सर्वत्रापि ध्वनिरागिणा ध्वनिव्यपदेशकरणे सहृदयेन रागवता न भवितव्यम् । उदाहरति— यथेति । पत्युरिति । कुमारसम्भवे सप्तमसर्गे पार्वतीवर्णनपरं पद्यमिदम् । सख्या वयस्यया, चरणौ पादौ, रञ्जयित्वा लाक्षारसेन रञ्जितौ कृत्वा, अनेन पादेन, पत्युः भर्तुः परमेश्वरस्य, शिरश्चन्द्रकलां शिरसि स्थितां चन्द्रकलां, स्पृशेति परिहासपूर्वं सोपहासं कृताशीः कृतः दत्तः आशीर्यस्यै तादृशी, सा पार्वती, माल्येन मालया, तां सखीं, निर्वचनं न किञ्चिदपि ब्रुवाणा जघान ताडितवती ।

उदाहरणान्तरमाह—प्रयच्छतेति । किरातार्जुनीये अष्टमसर्गे स्थितमिदं पद्यम् । उच्चैः उन्नतशाखायां स्थितानि कुसुमानि पुष्पाणि (अवचित्य) प्रयच्छता ददता, दयितेन पत्या, विपक्षगोत्रं विपक्षस्य सपत्न्या गोत्रं नामधेयं लम्भिता प्रापिता (काचिदप्सराः) मानिनी मानवती सती, न किञ्चिदूचे न किमप्यवदत् । किन्तु केवलं, चरणेन पादेन, बाष्पाकुललोचना बाष्पेण आकुले लोचने यस्यास्तादृशी सती भुवं भूमिं लिलेख । इत्यत्र प्रथमश्लोके 'निर्वचनं जघाने'ति वचनप्रतिषेधमुखेन व्यङ्ग्यस्यार्थस्येर्ष्यादेः उक्त्या, किञ्चिदल्पत्वेन विषयीकृतत्वात् गुणीभाव एव, वाच्यापेक्षया अप्राधान्यमेव शोभते । तथा द्वितीयश्लोकेऽपि 'न किञ्चिदूचे' इति कोपस्य व्यङ्ग्यस्यापि वचनप्रतिषेधमुखेन उक्त्या किञ्चिद् विषयीकरणाद् गुणीभाव एव । यदा वक्रोक्तिं विना उक्तिवैचित्र्यं विना, भङ्ग्यन्तरेणाभिधानं विना, व्यङ्ग्योऽर्थः

देवर्षौ' इत्यादौ । इह पुनरुक्तिर्भङ्ग्यास्तीति वाच्यस्यापि प्राधान्यम् । तस्मान्नात्रानुरणनरूपव्यङ्ग्यध्वनिव्यपदेशो विधेयः ।

**प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् ।**
**धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥ ४० ॥**

गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारः, रसभावादितात्पर्यालोचने पुनर्ध्वनिरेव सम्पद्यते । यथात्रैवानन्तरोदाहृते श्लोकद्वये । यथा च—

दुराराधा राधा सुभग यदनेनापि मृजत—
स्तवैतत् प्राणेशाजघनवसनेनाश्रु पतितम् ।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे
क्रियात् कल्याणं वो हरिरनुनयेष्वेवमुदितः ॥

---

उज्जीवनी ।

प्रतीयमानोऽर्थः, तात्पर्येण वक्तृविवक्षाधीनतया प्रतीयते व्यज्यते तदा, तस्य व्यङ्ग्यस्य प्राधान्यम् : यथा 'एवंवादिनि देवर्षौ' इत्यादौ । तत्र लज्जाया भावस्य व्यङ्ग्यत्वाद् प्राधान्याच्च ध्वनित्वम् । इह पुनः 'निर्वचनमिति', 'न किञ्चिदूचे' इति च उभयत्रापि भङ्ग्या वैचित्र्येणोक्तिः व्यङ्ग्यस्योक्तिः अभिधीयमानत्वमस्तीति वाच्यस्यापि प्राधान्यम् । तस्मादत्र, अनुरणनरूप-व्यङ्ग्यध्वनिव्यपदेशः विवक्षितान्यपरवाच्यध्वनिव्यपदेशः, न विधेयः न कर्तव्यः ॥

कश्चिद् गुणीभूतव्यङ्ग्यस्यापि काव्यप्रकारस्यध्वनित्वमाह—प्रकारोऽयमिति । गुणीभूतव्यङ्ग्योऽपि, अयं काव्यस्य प्रकारः, रसादितात्पर्यपर्यालोचनया पुनः, रसादीनां रसभावादीनां, तात्पर्यस्य वक्तृविवक्षितत्वस्य पर्यालोचनायां तु, ध्वनिरूपत्वं धत्ते भजते ध्वनिव्यपदेशविषयो भवति । तदेवाह—गुणीभूतेति । गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारः रसभावादिपर्यालोचने पुनः ध्वनिरेव सम्पद्यते । ध्वन्यात्मक एव प्रकारो भवतीत्यर्थः । उदाहर्तुमाह—यथेति । अत्रैवोदाहृते, अनन्तरश्लोकद्वये अव्यवहितपूर्वतयोक्ते, पत्युरिति, प्रयच्छेति च पद्यद्वये । रसस्य प्रधानतया व्यङ्ग्यस्य, तात्पर्यपर्यालोचनायां रसापेक्षया उभयत्रापि ध्वनित्वं निर्विवादम् । उदाहरणान्तरमप्याह—दुराराधेति ।

एवं स्थिते च 'न्यक्कारो ह्ययमेव' इत्यादिश्लोकनिर्दिष्टानां पदानां व्यङ्ग्य-विशिष्टवाच्यप्रतिपादनेऽप्येतद्वाक्यार्थीभूतरसापेक्षया व्यञ्जकत्वमुक्तम्। न तेषां पदानामर्थान्तरसङ्क्रमितवाच्यध्वनिभ्रमो विधातव्यः, विवक्षितवाच्यत्वात् तेषाम्। तेषु हि—व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते न तु व्यङ्ग्यरूपपरिणतत्वम्। तस्माद् वाक्यं तत्र ध्वनिः, पदानि तु गुणीभूतव्यङ्ग्यानि। न च केवलं गुणीभूतव्यङ्ग्यान्येव पदान्यलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकानि, यावदर्था-

---

उज्जीवनी।

कुपिता राधा कृष्णमाह हे सुभग! सुन्दर! यद् यस्मात्, अनेन तव प्राणेशाजघनवसनेन प्राणेशायाः प्रियतमाभूतायाः अन्यस्याः जघनवसनेन परिधानीयेन वस्त्रेण, एतत् पतितं ममाश्रु बाष्पं, मृजता अपनयता, त्वया, राधा अहं दुराराधा सान्त्वयितुमशक्या। स्त्रीचेतः स्त्रीणां चित्तं, कठोरं कठिनं, च। तत् तस्मात् उपचारैः कृत्रिमैः सान्त्वनैः अलम्। हे अये विरम सान्त्वनाद् विरतो भव। एवंप्रकारेण अनुनयेषु सान्त्वनावसरेषु (राधाया) एवं उदितः उक्तः, हरिः कृष्णः, वो युष्माकं कल्याणं मङ्गलं क्रियात् विदधीत। अत्र सुभगादिपदैः विरहासहिष्णुत्वादिकं यद् व्यङ्ग्यं तेन वाच्योऽर्थ उपस्क्रियते इत्यंशमादाय गुणीभूतव्यङ्ग्यत्वं, प्रबन्धव्यङ्ग्यस्येर्ष्याविप्रलम्भशृङ्गारस्य प्राधान्यापेक्षया ध्वनित्वं चास्तीति वेदितव्यम्। अन्यदप्युदाहरणं प्रदर्शयन्नाह—एवं स्थिते चेति। ध्वनेर्गुणीभूतव्यङ्ग्यस्य च उक्तप्रकारेण, विषयविभागे क्रियमाणे सति 'न्यक्कारोह्ययमेवे'ति श्लोके निर्दिष्टानां 'असौ', 'तापस' इत्यादिपदानां असौ मनुष्य इत्यनेन राक्षसभक्ष्यत्वं, तापस इत्यनेन शास्त्रानभिज्ञत्वमित्यादिकं यद् व्यङ्ग्यं तद्, वाच्योपस्कारकत्वेन व्यङ्ग्य विशिष्टवाच्यप्रतिपादकत्वेन गुणीभूत सद् एतद्वाक्यार्थीभूतो एतद्वाक्य-तात्पर्यविषयीभूतो य प्राधान्येन प्रतीयमानो वीरो रसः तदपेक्षया व्यञ्जकत्वं च प्राप्य काव्यस्यार्थस्य ध्वनिव्यपदेश्यत्वं च सम्पादयति। तेषां न्यक्कार इत्यादिपद्यस्थितानां व्यञ्जकानां पदानां वाच्यस्याभिधाव्यापारबोध्यस्यार्थस्य विवक्षितत्वात्। तेषां पदानामर्थान्तरसङ्क्रमितवाच्यध्वनिभ्रमो न विधातव्यः न कर्तव्यः। तेषु पदेषु, वाच्यस्य व्यङ्ग्यविशिष्टत्वं वाच्यांशे प्रतीयते, व्यङ्ग्यस्य विशेषणत्वेनावस्थानमेवास्तीत्यर्थः। व्यङ्ग्यरूपेण परिणतत्वं

न्तरसङ्क्रमितवाच्यानि ध्वनिप्रभेदरूपाण्यपि। यथात्रैव श्लोके 'रावण' इत्यस्य प्रभेदान्तररूपव्यञ्जकत्वम्। यत्र तु वाक्ये रसादितात्पर्यं नास्ति, गुणीभूतव्यङ्ग्यैः पदैः उद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः। यथा—

> राजानमपि सेवन्ते विषमप्युप[1]भुञ्जते।
> रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः॥

इत्यादौ। वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविवेके परः प्रयत्नो विधातव्यः,

---

उज्जीवनी।

परिणामो नास्ति। तस्मात् तत्र तादृशस्थले वाक्यध्वनिः पदानि तु गुणीभूतव्यङ्ग्यानि। तथापि असंलक्ष्यक्रमव्यङ्ग्यध्वनेः केवलं गुणीभूतव्यङ्ग्यानि पदान्येव व्यञ्जकानीति नियमो नास्ति। किन्तु अर्थान्तरसङ्क्रमितवाच्यान्यपि ध्वनिप्रभेदरूपाणि पदान्यपि व्यञ्जकानि दृश्यन्ते। यथा अत्रैव 'न्यक्कारो ह्ययमेवे'त्यादिपद्य एव 'जीवत्यहो रावण' इत्यत्र 'रावण' शब्दस्य अर्थान्तरसङ्क्रमितवाच्यत्वेनैव व्यञ्जकत्वम्। तु किन्तु यत्र वाक्ये, रसादितात्पर्यं नास्ति, रसभावादिकं वक्तृतात्पर्यविषयीभूतं न भवति, गुणीभूतव्यङ्ग्यैः वाच्यविशेषणतया प्रतीतैः व्यङ्ग्यैः उद्भासितेऽपि, प्रकाशितेऽपि, तत्र काव्ये, गुणीभूतव्यङ्ग्यत्वमेव समुदायधर्मः। उदाहरति—यथेति। राजानमिति। कुशला लोकवृत्तान्तनिष्णाताः खलु मानवाः नराः राजानमपि सेवन्ते, राजसेवामपि कुर्वन्ति। विषमप्युपभुञ्जते विषभक्षणमपि कुर्वन्ति। स्त्रीभिः सह नारीभिस्साकं, रमन्ते विहरन्ति च। अत्र राजसेवायाः, विषभक्षणस्य, स्त्रीभिः सह विहरणस्य च अतिक्लेशसाध्यत्वरूपं यद् व्यङ्ग्यं तद्विशिष्टस्य वाच्यस्यैवात्र चारुतेति गुणीभूतमिति गुणीभूतव्यङ्ग्यत्वमस्येति भावः।

योऽयं व्यङ्ग्यस्य विषयविभाग उक्तस्तस्यावश्यकतां प्रदर्शयतिवाच्येति। वाच्यव्यङ्ग्ययोः वाच्यस्य व्यङ्ग्यस्य च प्राधान्याप्राधान्यविवेचने प्राधान्ये व्यङ्ग्यस्य ध्वनिरिति, अप्राधान्ये गुणीभूतव्यङ्ग्यमिति अविवक्षितत्वे अलङ्कार इति च विवेकं ज्ञातुं परः उत्कृष्टः, प्रयत्नः यत्नः, विधातव्यः, कर्तव्यः। येन ध्वनेः, गुणीभूतव्यङ्ग्यस्य, अलङ्काराणां च, असङ्कीर्णः सङ्कीर्णतारहितः

---

१. 'भु' च

येन ध्वनिगुणीभूतव्यङ्ग्ययोरलङ्काराणां चासङ्कीर्णो विषयः सुज्ञातो भवति। अन्यथा तु प्रसिद्धालङ्कारविषय एव व्यामोहः प्रवर्तते। यथा—

> लावण्यद्रविणव्ययो न गणितः क्लेशो महान्[1] स्वीकृतः
> स्वच्छन्दस्य[2] सुखं जनस्य वसतश्चिन्तानलो दीपितः।
> एषापि स्वयमेव तुल्यरमणाभावात् वराकी हता
> कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता॥

इत्यत्र व्याजस्तुतिरलङ्कार इति व्याख्यायि केनचित्, तन्न, चतुरस्रम्। यतोऽस्याभिधेयस्यैतदलङ्कारस्वरूपमात्रपर्यवसायित्वे न सुश्लिष्टता। यतो न तावदयं रागिणः कस्यचिद् विकल्पः।

---

उज्जीवनी।

विषयः विषयस्यासाङ्कर्यमिति यावत् सुज्ञातो भवति। अन्यथा एवं विषयविभागस्याज्ञातत्वे, प्रसिद्धालङ्कारविषयः प्रसिद्धेष्वलङ्कारेष्वेव, व्यामोहः भ्रमः प्रवर्तते उदाहरति—यथेति। लावण्येति। लावण्यद्रविणव्ययः लावण्यरूपस्य द्रविणस्य वित्तस्य व्ययो न गणितः। महान् क्लेशश्च स्वीकृतः विहितः। स्वच्छन्दस्य स्वेच्छया, सुखं वसतो जनस्य, चिन्तानलश्चिन्तारूपोऽग्निः दीपित उद्दीपितः, एषापि एवं निर्मितापि वराकी, तुल्यरमणाभावात् तुल्यस्यात्मनोऽनुरूपस्य रमणस्य वरस्याभावात् स्वयमेव हता नष्टप्राया। एवं तन्व्यास्तनुं तरुण्या देहं, तन्वता सृजता, वेधसा ब्रह्मणा चेतसि हृदये, कोऽर्थः विनिहितः स्यात् किं प्रयोजनमुद्दिष्टं स्यादित्यर्थः। इत्यत्र इत्यस्मिन् पद्ये, व्याजस्तुतिरलङ्कार इति केनचिद् व्याख्यातम्। निन्दया स्तुतिः, स्तुत्या निन्दा च यत्राभिधीयते तत्र व्याजस्तुतिरलङ्कार इति लक्षणानुसारेण अस्मिन् पद्ये तरुण्याः सृष्टेर्निन्दया तस्याः सौन्दर्यातिशयस्य स्तुतिरवगम्यत इति व्याजस्तुतिरलङ्कारोऽत्रेति केनचिदभिहितम्। न चतुरस्रं न युक्तमित्यर्थः। तस्य कारणमाह—यत इति। यतः यस्मात् अस्याभिधेयस्य एतत्पद्यस्य, यो वाच्योऽर्थस्तस्य एतदलङ्काररूपमात्रपर्यवसायित्वे व्याजस्तुत्यलङ्कारमात्रे पर्यवसाने तन्मात्रविश्रान्तौ, सुश्लिष्टता न सम्भवति। अयं विकल्पस्तर्कः,

---

१. 'नार्जितः' च २. 'न्दं चरतो ज०' च

तस्य 'एषापि स्वयमेव तुल्यरमणाभावात् वराकी हता' इत्येवंविधो-क्त्यनुपपत्तेः। नापि नीरागस्य तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात्। न चायं श्लोकः क्वचित् प्रबन्ध इति श्रूयते, येन तत्प्रकरणानुगतार्थतास्य परिकल्प्यते। तस्मादप्रस्तुतप्रशंसेयम्। यस्मादनेन वाच्येन गुणीभूतात्मना निःसामान्यगुणावलेपाध्मातस्य निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न कञ्चिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते। तथा चायं धर्मकीर्तेः श्लोकः इति प्रसिद्धः सम्भाव्यते च तस्यैव। यस्मात्—

---

## उज्जीवनी।

कस्यचिद् रागिणस्तावद् न सम्भवति। अयं विकल्पस्तर्कः, कस्यचिद् रागिणस्तावद् न सम्भवति। तस्य रागिणः, एषापि, स्वयमेव तुल्यरमणाभावात् वराकी हतेति अमङ्गलोक्तेरनुपपत्तेः। नापि नीरागस्य विरक्तस्यापीयमुक्तिरिति वक्तुं न युक्तम्। तस्य नीरागस्य, एवंविधानां वितर्काणां परिहार एवैको व्यापारो यस्य तादृशस्य भावस्तत्त्वं तस्मादित्यर्थः। अयं च श्लोकः कचिदपि प्रबन्धे वर्तत इति न ज्ञायते। येनास्य पद्यस्य तत्प्रकरणेनानुगतः अर्थः यस्य तादृशस्य भावः परिकल्प्यते परिकल्पयितुं शक्यत इत्यर्थः। तस्मादप्रस्तुतप्रशंसेयम्। इयमप्रस्तुतप्रशंसालङ्कृतिरिति वक्तव्यम्। यस्माद् यतः गुणीभूतात्मना अनेन वाच्येनार्थेन निःसामान्य-गुणावलेपाध्मातस्य निःसामान्यस्य असदृशस्य, गुणस्यावलेपेन अभिमानेन आध्मातस्य उद्भूतस्य, निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य निजस्य स्वस्य यो महिम्न उत्कर्षो महिमातिशयः तेन जनितस्य समत्सरजनस्य मात्सर्यवतो जनस्य यो ज्वरः येन तादृशस्य, आत्मनोऽपरं स्वेतरं विशेषज्ञं कञ्चिदेव एकमपि न पश्यतोऽनवलोकयतः, एतत् परिदेवितं परिदेवनमेतदिति प्रकाश्यते। यस्मादेवं तस्मादप्रस्तुतप्रशंसेयमिति पूर्वेणान्वयः। तथा चायं श्लोकः धर्म-कीर्तेरिति प्रसिद्धिर्वर्तते। तस्यैवायं श्लोक इति च सम्भवदुक्तिकमित्यर्थः। सम्भवदुक्तिकतामेवाह—यस्मादिति। अनध्यवसितेति। अनल्पधीशक्तिनापि अनल्पा बह्वी, धियो बुद्धेः, शक्तिः पदार्थग्रहणसामर्थ्यं यस्य तादृशेनापि,

अनध्यवसितावगाहनमनल्पधीशक्तिना-
प्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि ।
मतं मम जगत्यलब्धसदृशप्रतिग्राहकं
प्रयास्यसि पयोनिधेः पय इव स्वदेहे जराम् ॥

इत्यनेनापि श्लोकेनैवंविधोऽभिप्रायः प्रकाशित एव । अप्रस्तुतप्रशंसायां च यद्वाच्यं तस्य कदाचिद् विवक्षितत्वं, कदाचिदविवक्षितत्वं, कदाचिद् विवक्षिताविवक्षितत्वं इति त्रयी बन्धच्छाया । तत्र विवक्षितत्वं यथा—

---

उज्जीवनी ।

अनध्यवसितावगाहनं अनध्यवसितं अनिश्चितमवगाहनमवगमनं यस्य तादृशम् । पयः पक्षे—अनध्यवसितमकृतं, अवगाहनमालोडनं यस्य तादृशम् । अधिकाभियोगैरपि अधिकैर्भूयोभिरभियोगैरपि प्रयत्नैरपि । अदृष्टपरमार्थतत्त्वं अदृष्ट-मज्ञातं, परममुत्कृष्ट अर्थतत्त्वं यस्य तादृशम् । पयः पक्षे—अदृष्टमनवलोकितं, अर्थतत्त्वं कौस्तुभरत्नादिधनवत्त्वं यस्य तादृशम् । जगति लोके, अलब्धसदृश-प्रतिग्राहकं न लब्धः प्राप्तः सदृशः प्रतिग्राहकः प्रतिगृहीता यस्य तादृशम् । पयः पक्षे—अलब्धः अप्राप्तः, सदृशस्य पूर्वलब्धैरावतादितुल्यस्य वस्तुनः प्रतिग्राहकः स्वीकर्ता यस्य तादृशम् । पयोनिधेः समुद्रस्य, पय इव जलमिव, स्वदेहे स्वाङ्गे, जरां प्रयास्यति जीर्णं भविष्यतीत्यर्थः । इत्यनेन श्लोकेनापि, एवंविधः पूर्वोक्ताभिप्रायतुल्यः, अभिप्रायः प्रकाशित इति । वाच्यस्यार्थस्या-सम्भाव्यतायामपि अप्रस्तुतस्य व्यङ्ग्यस्य प्रकाशनं दृश्यत इति, स्वपाण्डित्य-प्रकर्षस्य प्रतिगृहीतृपुरुषालाभेन परिदेवनं कविना प्रकाश्यत इति अस्य पद्यस्य, लावण्येत्यादिपद्यस्य च एककर्तृकत्वं वक्तुं शक्यमित्याशयः ।

प्रसङ्गात् अप्रस्तुतप्रशंसायां वाच्यस्यार्थस्य प्रकारान् दर्शयति—अप्रस्तुतेति । अप्रस्तुतप्रशंसायामलङ्कृतौ यद् वाच्यं वाच्योऽर्थः, तस्य कदाचिद् विवक्षितत्वं वस्तुतात्पर्यविषयत्वं, कदाचिद् अविवक्षितत्वं विवक्षाभावः, कदाचिच्च विवक्षिताविवक्षितत्वं केनचिदंशेन तात्पर्यविषयत्वं, अन्यांशेन तद-विषयत्वमिति च त्रयी बन्धच्छाया त्रिविधा प्रबन्धस्य शोभा भवतीत्यर्थः । उदाहरति—तत्र विवक्षितत्वं यथेति । परार्थेति । पद्यमिदं प्रथमोद्योते व्याख्यातम् । अत्र वाच्यस्येक्षुविषयकस्यार्थस्य विवक्षितत्वम् । स्वकीय-

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

यथा ममैव—

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम् ।
निरालोके लोके कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः ॥

अनयोर्हि द्वयोः श्लोकयोरिक्षुचक्षुषी विवक्षितस्वरूपे एव, न च प्रस्तुते। महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य कस्यचित् स्वरूपमुपवर्णयितुं द्वयोरपि श्लोकयोस्तात्पर्येण प्रस्तुतत्वात् ।

---

उज्जीवनी ।

मुदाहरणान्तरमाह—यथा वा ममैवेति । अमी इति । अमी सुभगरूपाः सुभगं सुन्दरं रूपं स्वरूपं येषां तादृशाः ये पदार्था दृश्यन्ते दृष्टिविषयत्वं भजन्ते एषां पदार्थानां, यस्य चक्षुरिन्द्रियस्य, क्षणं क्षणमात्रं, विषयतामुपगतानां चक्षुरिन्द्रियजन्यप्रत्यक्षविषयतां प्राप्तानां, सुभगता साफल्यं भवति । लोके भुवने जने च । निरालोके आलोकरहिते विवेकशून्ये सति, कथमिदं प्रत्यक्षं प्रत्यालोकस्य कारणत्वात्, तदभावे लौकिकानां वस्तूनां कथं चाक्षुषप्रत्यक्षविषयत्वं, सम्पद्यते । अहो आश्चर्यम् । अधुना निरालोके सति लोके चक्षुः सर्वैरवयवैस्तुल्यं जातम् । अथवा अन्यैरवयवैस्तुल्यं न जातम् । सत्यालोके पदार्थान्तरदर्शनशक्तिमतश्चक्षुषः सत्यप्यालोके दर्शनशक्तिरहितैरवयवैः साम्यं वक्तुं न युक्तमित्यर्थः । अनयोरुक्तयोर्द्वयोः श्लोकयोः 'परार्थे' इत्यादौ, 'अमी य' इत्यादौ च इक्षुचक्षुषी, प्रथमे इक्षुः, द्वितीये चक्षुश्च विवक्षितस्वरूपे विवक्षितं तात्पर्यविषयीभूतं स्वरूपं ययोस्तादृशे भवत एव । तथापि न च ते प्रस्तुते, अप्रस्तुतप्रशंसायामप्रस्तुतस्यैव वाच्यत्वात् । महागुणस्य लोकोत्तरमहिमातिशयवतः अविषयपतितत्वात् उचितविषयज्ञानाभावात् । अप्राप्तपरभागस्य अप्राप्तः परभागो गुणोत्कर्षः येन तादृशस्य कस्यचित्

अविवक्षिततत्वं यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि, साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे ॥

न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते ॥

विवक्षिताविवक्षिततत्वं यथा—

उत्पहजाआएँ असोहिणीएँ फलकुसुमपत्तरहिआए ।
वेरीएँ वइं देन्तो पामर हो ओहसिज्जिहसि ॥

---

उज्जीवनी ।

स्वरूपमुपवर्णयितुमुपपादयितुं द्वयोरपि श्लोकयोः, तात्पर्येण तत्प्रतीतीच्छयोच्चारितत्वेन प्रस्तुतत्वात् प्रकृतत्वात् । अविवक्षिततत्वमुदाहरति—यथेति । कस्त्वमिति । प्रश्नोत्तररूपं पद्यमिदम् । कस्त्वं भोः, वृक्षं प्रति कस्यचित् प्रश्नः । कथयामि ब्रवीमि । दैवहतकं मन्दभाग्यं मां, शाखोटकं श्मशाने जातं वृक्षं विद्धि जानीहि इति वृक्षस्योत्तरम् । पान्थः—वैराग्यादिव वक्षि ब्रूषे । वृक्षः—साधु सम्यग् विदितं ज्ञातं त्वया पान्थेनेति शेषः । पान्थः—इदमेवं कस्मात् कथ्यते उच्यते । वृक्षः—अत्र श्मशाने, वामेन मार्गाद् वामभागेन, वटः कश्चिदस्ति । तं अध्वगजनः पथिकजनः, सर्वात्मना सर्वप्रकारेणापि सेवते आश्रयते । मे मम मार्गस्थितस्यापि मार्गे पथि स्थितस्यापि, छायापि अनातपोऽपि परोपकारकरणी परेषामन्येषां उपकारं कर्तुं शीलमस्येति तादृशी भवति । अत्र वाच्याप्रस्तुतस्य अविवक्षिततत्वं प्रदर्शयति—न हीति । पुरुषस्य कस्यचिद् वृक्षविशेषेण शाखोटकाख्येन सह उक्तिप्रत्युक्ती उक्तिः प्रतिवचनं च नहि सम्भवतः । वृक्षस्याचेतनत्वात् ॥ इति एवं, अविवक्षिताभिधेयेन अविवक्षितस्तात्पर्यविषयताशून्यः, अभिधेयो वाच्योऽर्थः यस्य तादृशेन । अनेन श्लोकेन कस्त्वमिति पद्येन, समृद्धासत्पुरुषसमीपवर्तिनः समृद्धस्य सम्पन्नस्य,

अत्र हि वाच्यार्थो नात्यन्तं सम्भवी, न वासम्भवी; तस्माद् वाच्य-व्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये ॥

**प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।**
**काव्ये उभे ततोऽन्यद् यद् चित्रमित्यभिधीयते ॥ ४१ ॥**

---

उज्जीवनी ।

असत्पुरुषस्य समीपे वर्तमानस्य, निर्धनस्य निःस्वस्य, मनस्विनः उदारस्य कस्यचित् परिदेवितं परिदेवनं तात्पर्येण वाक्यार्थीकृतं वाक्यतात्पर्यविषयीकृतं इति प्रतीयते अवगम्यते ।

तृतीयप्रकारमुदाहरति—विवक्षिताविवक्षितत्वं यथेति । उप्पहेति ।

उत्पथजाताया अशोभनायाः
फलकुसुमपत्ररहितायाः ।
बदर्या वृतिं ददत् पामर भो
अवहसिष्यसे ॥ इति च्छाया ॥

भो पामर मूढ ! उत्पथजाताया उत्पथे कुमार्गे अपरिशुद्धे वंशे जाताया उत्पन्नायाः । अशोभनायाः शोभारहितायाः सौन्दर्यरहितायाश्च । फलकुसुम-पत्ररहितायाः फलैः पुष्पैः, पर्णैश्च विरहितायाः अपत्यहीनायाश्च, बदर्याः बदरीलतायाः, स्त्रीलिङ्गनिर्देशेन नार्याः । वृतिमावरणं, वस्त्रादिकं च, ददत् विदधत् त्वं अपहसिष्यसे परिहासपात्रं भविष्यसि ।

अत्र हि अस्मिन् पद्ये हि, वाच्यार्थः अत्यन्तं न सम्भवी । न चात्यन्तं असम्भवी । तस्माद् अप्रस्तुतप्रशंसायां वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविषये व्यामोहसम्भवात् व्यङ्ग्यस्य वा वाच्यस्य वा प्राधान्यमिति यत्नतः निरूपणीयम् ॥

इति गुणीभूतव्यङ्ग्यप्रकरणम्

अथ चित्रकाव्यं निरूप्यते—प्रधानेति । एवमुक्तप्रकारेण व्यङ्ग्यस्य प्रतीयमानार्थस्य प्रधानगुणभावाभ्यां प्राधान्येन गुणीभूतत्वेन च, उभे काव्ये

चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥ ४२ ॥

व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसंज्ञितः काव्यप्रकारः, गुणभावे तु गुणीभूतव्यङ्ग्यता । ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम् । न तन्मुख्यं काव्यम् । काव्यानुकारो ह्यसौ । तत्र किञ्चिच्छब्दचित्रं यथा दुष्करयमकादि । वाच्यचित्रं ततः शब्दचित्रादन्यत् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादि

---

उज्जीवनी ।

व्यङ्ग्यस्य प्राधान्ये ध्वनिरिति, गुणभावे गुणीभूतव्यङ्ग्यमिति च, द्वे कविकर्मणी व्यवस्थिते । ततस्ताभ्यामन्यद् यत् काव्यं तच्चित्रमित्यभिधीयते उच्यते । चित्रं च शब्दार्थभेदेन द्विविधं—शब्दचित्रं अर्थचित्रं चेति द्विप्रकारं व्यवस्थितम् । तत्र शब्दचित्रार्थचित्रयोः मध्ये किञ्चित् शब्दचित्रं, अतः परं अन्यत् वाच्यचित्रं च भवति ।

तदेवाह—व्यङ्ग्यस्येति । व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसंज्ञितः काव्यप्रकारः । गुणभावे तु गुणीभूतव्यङ्ग्यरूपः । ततः अन्यद् ताभ्यां भिन्नं, रसभावादि तात्पर्यरहितं रसस्य भावादेर्वा तात्पर्येण विवक्षया शून्यम् । व्यङ्ग्यार्थप्रकाशनशक्तिशून्यं व्यङ्ग्यस्यार्थस्य प्रकाशने शक्तिरहितं च काव्यं वाच्यस्यार्थस्य वाचकस्य शब्दस्य च केवलं वैचित्र्यमात्रमाश्रित्य उपनिबद्धं निबद्धं, आलेख्यप्रख्यं आलेख्यं रूपं यदाभासते प्रकाशते तत् चित्रं काव्यमित्यर्थः । तच्च काव्यं न मुख्यम् । असौ काव्यप्रकारः काव्यानुकारः काव्यस्यानुकरणात्मकः । तत्र किञ्चिच्छब्दचित्रं, यथा—दुष्करयमकादि । वाच्यचित्रं तु ततः शब्दचित्रादन्यत्, व्यङ्ग्यस्यार्थस्य संस्पर्शेन रहितं, प्राधान्येन वाक्यार्थतया वाक्यतात्पर्यविषयीभूतार्थात्मना स्थितं रसादिविवक्षाशून्यं उत्प्रेक्षादिकम् । चित्रकाव्यं निरूपयति—अथेति । चित्रमिति यदुच्यते, तत् किं नामेति प्रश्नः । उत्तरमाह—यत्रेति । यत्र यस्मिन् शब्दसन्दर्भात्मके काव्ये प्रतीयमानस्य व्यङ्ग्यस्यार्थस्य संस्पर्शः सम्यक् स्पर्शः नास्ति । हि यतः

तात्पर्यरहितमुत्प्रेक्षादि । अथ किमिदं चित्रं नाम? यत्र न प्रतीयमानार्थसंस्पर्शः। प्रतीयमानो ह्यर्थस्त्रिभेदः प्राक् प्रदर्शितः । तत्र यत्र वस्त्वलङ्कारान्तरं वा व्यङ्ग्यं नास्ति, स नाम चित्रस्य कल्प्यतां विषयः । यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव । यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते । वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्य वाङ्गत्वं प्रतिपद्यतेऽन्ततो विभावत्वेन । चित्तवृत्तिविशेषा हि रसादयः, न च तदस्ति वस्तु किञ्चित्; यन्न चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा कविविषयतैव तस्य न स्यात् कविविषयश्च चित्रतया कश्चिन्निरूप्यते ।

अत्रोच्यते— सत्यं न तादृक् काव्यप्रकारोऽस्ति, यत्र रसादीनामप्रतीतिः । किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोप- निबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते । विवक्षो- पारूढ एव हि काव्ये शब्दानामर्थः । वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि

---

उज्जीवनी ।

प्राक् पूर्वं प्रतीयमानो व्यङ्ग्योऽर्थः, त्रिभेदस्त्रिविधः प्रदर्शितः । तत्र वस्त्व- लङ्काररसात्मना त्रिविधेषु प्रतीयमानेषु सत्सु, यत्र यस्मिन् काव्ये, वस्तु अलङ्कारान्तरं वा व्यङ्ग्यं प्रतीयमानं नास्ति, स काव्यप्रकारः, चित्रस्य चित्र- काव्यस्य विषयः विषयत्वेन कल्प्यतां नाम । तु किन्तु, यत्र काव्ये, रसादीनां रसभावादीनां, अविषयत्वं संस्पर्शाभावः, स तादृशः काव्यस्य प्रकारो न सम्भव- त्यैव । यस्माद् यतः, काव्यस्य अवस्तुसंस्पर्शिता वस्तुनोऽर्थात्मकस्य संस्पर्शा- भावः, नोपपद्यते न युज्यते । जगद्गतं जगन्ति लोके विद्यमानं सर्वमेव च वस्तु पदार्थात्मकं, कस्यचित् यस्य कस्यापि, रसस्य भावस्य वा अङ्गत्वमङ्गभावं प्रतिपद्यते । अन्ततः पर्यन्ते, विभावत्वेन रसभावादेरालम्बनत्वेन वा विषयोभव- न्ति । हि यस्मात्, रसादयः रसभावादयः, चित्तवृत्तिविशेषाः चित्तस्य व्यापार- विशेषाः । यद् वस्तु चित्तवृत्तिविशेषं, नोपजनयति न जनयति, तच्च किञ्चिदपि वस्तु नास्ति । सर्वेषामपि वस्तूनां चित्तवृत्तिविशेषप्रयोजकत्वमस्तीति यावत् । तदनुत्पादने तस्य चित्तवृत्तिविशेषस्य साक्षादजनने, तस्य पदार्थस्य, कविविषयता न स्यात् कविव्यापारगोचरत्वं न भवेत् । चित्रतया चित्रकाव्यत्वेन, कविविषयश्च कविव्यापारविषयश्च कश्चित् काव्यप्रकारश्च निरूप्यते । कथमिदं सङ्गच्छत

तथा विधे विषये रसादिप्रतीतिर्भवन्ती दुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते । तदिदमुक्तम्—

'रसभावादिविषयविवक्षाविरहे सति ।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात् तात्पर्यवती यदा ।
तदा नास्त्येव तत् काव्यं, ध्वनेर्यत्र न गोचरः ॥

एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्ति दर्शनादस्माभिः परिकल्पितम् । इदानीन्तनानां तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः ।

---

इत्याशङ्का, समाधत्ते—अत्रोच्यत इति । सत्यमिति । यत्र काव्ये, रसादीनामप्रतीतिः, तादृक् तथाविधः, काव्यस्य प्रकारो नास्ति इति यदुक्तं, तत् सत्यमेव । किन्तु कविः, यदा रसभावादीनां विवक्षारहितः सन्, शब्दालङ्कारमनुप्रासादिकं, अर्थालङ्कारमुपमादिकं वा निबध्नाति, तदा तस्य कवेर्विवक्षानुसारेण अर्थस्य रसभावादिशून्यत्वं कल्प्यते, कवेः रसभावादितात्पर्यविरहदशायां काव्यस्य रसशून्यत्वं कल्प्यत इत्याशयः ।

तस्य हेतुमाह—विवक्षेति । हि यतः काव्ये कविकर्मणि, शब्दानामर्थः, विवक्षोपारूढ एव विवक्षित एव विषयो भवति । कविविवक्षाविरहेऽपि कवेस्तात्पर्याभावेऽपि, तथाविधे विषये तादृशे काव्ये, वाच्यसामर्थ्यवशेन वाच्यस्यार्थस्यार्थान्तरजननसामर्थ्येन, रसादिप्रतीतिर्भवन्ती यद्यपि प्रतीयते रसादिः तथापि सा दुर्बला भवति, इति अनेन प्रकारेण एवंरीत्या नीरसत्वं रसभावादिशून्यत्वं परिकल्प्य चित्रविषयः चित्रकाव्यविषयो व्यवस्थाप्यते । तदेवाह—तदिदमुक्तमिति । रसेति । रसभावादिविषयकं यत् तात्पर्यं तस्य विरहे सति, यः अलङ्कारनिबन्धः यदलङ्कारस्य निबन्धनम् । स चित्रकाव्यस्य विषय इति सम्मतः । यदा तु रसादिषु तात्पर्यवती विवक्षा तत्परत्वेन विवक्षा स्यात् तदा, यत्र काव्ये, सोऽलङ्कारनिबन्धः ध्वनेर्न गोचरः ध्वनिविषयो न भवति, तत् तादृशं काव्यं, नास्त्येव । एतच्चेति । विशृङ्खलगिरां कवीनां, रसादितात्पर्यराहित्येन काव्ये प्रवृत्तिदर्शनात् काव्यनिर्मितौ प्रवर्तनं दृष्टमित्यतः अस्माभिः एतत् चित्रकाव्यमिति परिकल्पितम्

यत: परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते। रसादितात्पर्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति। अचेतना अपि हि भावा यथायथमुचितरसविभावतया चेतनवृत्तान्तयोजनया च न सन्त्येव ते ये यान्ति न रसाङ्गताम्। तथा चेदमुच्यते—

अपारे काव्यसंसारे कविरेक: प्रजापति:।
यथास्मै रोचते विश्वं तथेदं परिवर्त्तते॥

शृङ्गारी चेत् कवि: काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥

भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेष्टं सुकवि: काव्ये स्वतन्त्रतया॥

---

उज्जीवनी।

इदानीन्तनानामाधुनिकानां कवीनां तु न्याय्ये न्यायादनपेते, काव्यनयस्य व्यवस्थापने क्रियमाणे विधीयमाने सति, ध्वनिव्यतिरिक्त: काव्यप्रकार: नास्त्येव। यतो यस्मात्, परिपाकवतां कवीनां परिपक्वधियां काव्यकर्तॄणां, रसादितात्पर्यविरहे रसादौ तात्पर्यं यदि नास्ति तर्हि, तस्य कवेर्व्यापार: कविनिर्मितिरूप एव न शोभते। रसादितात्पर्ये च सति, यद् वस्तु, अभिमत-रसाङ्गतां नीयमानं न प्रगुणीभवति प्रकृष्टगुणवन्न भवति, तद् वस्तु, नास्त्येव। भावा अचेतना अपि, यथायथमौचित्येन, उचितरसानां विभावत्वेन चेतन-वृत्तान्तयोजनया च ये रसाङ्गतां रसाङ्गत्वं न यान्ति न प्राप्नुवन्ति ते भावा न सन्त्येव। उक्तमेवार्थं विशदीकर्तुमाह—तथा चेदमुच्यत इति।

अपारे इति। अपारे महति, काव्यसंसारे काव्यात्मके प्रपञ्चे प्रजापति: विधाता, कवि: एक: कविरेव इत्यर्थ:। अस्मै कवये, यथा रोचते कविर्येन प्रकारेणेच्छति तेन प्रकारेण इदं विश्वं सर्वं जगत् परिवर्त्तते परिवृत्तिं प्राप्नोति। कवि: शृङ्गारी चेत् शृङ्गाररसानुकूलभावनासम्पन्नो यदि, तर्हि काव्ये तन्निर्मिते जगत् सर्वं रसमयं जातम्। जायत इति यावत्। स एव कवि: वीतरागश्चेत् यदि वैराग्यसंपन्न: सर्वमेव तद् जगत् नीरसमेव रसशून्यमेव स्यात्। सुकवि:, काव्ये स्वतन्त्रतया स्वातन्त्र्येण, अचेतनानपि भावान् चेतनवत्, चेतनान् भावान् अचेतनवच्च यथेष्टं व्यवहारयति। तस्मादिति।

तस्मान्नास्त्येव तद् वस्तु यत् सर्वात्मना रसतात्पर्यवतः कवेस्तदिच्छया तदभिमतरसाङ्गतां न धत्ते । तथोपनिबध्यमानं वा न चारुत्वातिशयं पुष्णाति । सर्वमेतच्च महाकवीनां काव्येषु दृश्यते । अस्माभिरपि स्वेषु काव्य-प्रबन्धेषु यथायथं दर्शितमेव । स्थिते चैवं सर्व एव काव्यप्रकारो न ध्वनि-धर्मतामतिपतति रसाद्यपेक्षायां कवेर्गुणीभूतव्यङ्ग्यलक्षणोऽपि प्रकारस्तदङ्ग-तामवलम्बत इत्युक्तं प्राक् । यदा तु चाटुषु देवतास्तुतिषु वा रसादीना-मङ्गतया व्यवस्थानं हृदयवतीषु सप्रज्ञकगाथासु कासुचिद् व्यङ्ग्यविशिष्टे प्राधान्यं तदपि गुणीभूतव्यङ्ग्यस्य ध्वनि निष्यन्दभूतत्वमेवेत्युक्तं प्राक्—

---

उज्जीवनी ।

तस्मादुक्तरीत्या, यद् वस्तु, सर्वात्मना सर्वप्रकारेणापि, रसतात्पर्यवतः कवेः रसप्रतीतिजननेच्छया काव्यनिर्मातुः, तदिच्छया तस्य कवेरिच्छया, तदभिमत-रसाङ्गतां तस्य कवेरभिमतस्य रसस्याङ्गभावं न धत्ते न प्राप्नोति । तद् वस्तु लोके नास्त्येव । वा अथवा तथा तेन प्रकारेण उपनिबध्यमानं उपवर्ण्यमानं वा चारुत्वातिशयं अतिशयितं सौन्दर्यं न पुष्णाति न पोषयति । तद् वा वस्तु नास्त्येवेति पूर्वेणान्वयः । एतच्च सर्वं महाकवीनां प्रबन्धेषु दृश्यते । अस्माभिरपि स्वेषु काव्यप्रबन्धेषु यथायथं दर्शितमेव । आनन्दवर्धनाचार्य-विरचितेषु काव्यप्रबन्धेषु तैरेवेदं प्रदर्शितमित्यर्थः । एवं स्थिते च, सर्व एव काव्यप्रकारः काव्यभेदः, ध्वनिधर्मतां ध्वनित्वं नातिपतति, गुणीभूतव्यङ्ग्य-लक्षणोऽपि काव्यप्रकारः, मुख्यवाक्यार्थापेक्षया गुणीभूतं व्यङ्ग्यमर्थम् आश्रित्य काव्यस्य गुणीभूतव्यङ्ग्यत्वाऽङ्गीकारेऽपि यत्र मुख्योऽप्यर्थो रसात्मको भवति, तदा तं मुख्यं रसमपेक्ष्य तस्य ध्वनित्वमेवेत्यपि प्रागेव प्रतिपादितम् । तु किन्तु, चाटुषु प्रियवचनेषु, देवतास्तुतिषु वा रसादीनां रसभावादीनां, अङ्गतया अङ्गत्वेन व्यवस्थानम् । हृदयवतीषु प्राकृतकविगाथासु, सप्रज्ञकगाथासु सहृदयानां गाथासु च । कासुचित् व्यङ्ग्यविशिष्टवाच्ये व्यङ्ग्येताङ्गभूतेन विशिष्टं यद् वाच्यं तस्य प्राधान्यं यदा भवति, तदपि गुणीभूतस्य व्यङ्ग्यस्य ध्वनिनिष्यन्दरूपत्वमेव ध्वन्यात्मकमेव इतीदमपि पूर्वमेवोक्तम् । तत् तस्मात्, एवमुक्तरीत्या इदनीन्तनकविकाव्यनयोपदेशे इदानीन्तनानां कवीनां काव्य-नयस्योपदेशे क्रियमाणे विधीयमाने सति प्राथमिकानां काव्यं कर्तुं प्रथमतया

तदेवमिदानीन्तनकविकाव्यनयोपदेशे क्रियमाणे प्राथमिकानामभ्यासार्थिनां यदि परं चित्रेण व्यवहारः प्राप्तपरिणतीनां तु ध्वनिरेव काव्यमिति स्थितमेतत्। तदयमत्र सङ्ग्रहः—

यस्मिन् रसो वा भावो वा तात्पर्येण प्रकाशते।
संवृत्त्याभिहिता वस्तु यत्रालङ्कार एव वा॥
काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः।
सर्वत्र तत्र विषयी ज्ञेयः सहृदयैर्जनैः॥

**सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।**
**सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा॥ ४३॥**

तस्य च ध्वनेः स्वप्रभेदैः, गुणीभूतव्यङ्ग्येन, वाच्यालङ्कारैश्च सङ्करसंसृष्टिव्यवस्थायां क्रियमाणायां बहुप्रभेदता लक्ष्ये दृश्यते। तथाहि स्वप्रभेदसङ्कीर्णः स्वप्रभेदसंसृष्टो, गुणीभूतव्यङ्ग्यसङ्कीर्णो, गुणीभूतव्यङ्ग्यसंसृष्टो, वाच्यालङ्कारान्तरसङ्कीर्णो वाच्यालङ्कारान्तरसंसृष्टः, संसृष्टालङ्कारसङ्कीर्णः, संसृष्टालङ्कारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते।

---

उज्जीवनी।

प्रवृत्तानां काव्यव्युत्पत्तौ प्रवृत्तानां, अभ्यासं चार्थयमानानां यदि चित्रेण चित्रनाम्ना व्यवहारः काव्यस्य। तु किन्तु, प्राप्तपरिणतीनां लब्धव्युत्पत्त्यभ्यासानां प्रौढानां ध्वनिरेव काव्यं, काव्यं सर्वं ध्वनिनाम्नैव व्यवह्रियत इति एतत् स्थितम्। अमुमर्थं सङ्ग्रहेणाह—तदयमत्र सङ्ग्रह इति। यस्मिन्निति। यस्मिन् काव्याध्वनि, रसो रत्यादिः, भावो वा निर्वेदादिर्वा तात्पर्येण वक्तृविवक्षया प्रकाशितौ, वा अथवा, वस्तु अलङ्कारश्च व्यङ्ग्यौ संवृत्याभिहितौ प्रकारान्तरेणाभिहितौ, तस्मिन् काव्याध्वनि, व्यङ्ग्यप्राधान्यैकनिबन्धनः व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य प्राधान्यमेव एकं मुख्यं निबन्धनं यस्य तादृशः ध्वनिः, तत्र सर्वत्र तादृशे सर्वस्मिन्नपि काव्ये सहृदयैर्जनैः, विषयी विषयित्वेन ज्ञेयः अवगन्तव्यः।

अथ ध्वनेः प्रकारान्तरमाह—सगुणीभूतेति। स ध्वनिः सगुणीभूतव्यङ्ग्यैः गुणीभूतव्यङ्ग्यस्य ये प्रकारास्तैः सह वर्तन्त इति तादृशैः, स्वैः, स्वकीयैः अविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वादिभिः प्रभेदैः सह संसृष्टिसङ्कराभ्यां

तत्र स्वप्रभेदसङ्कीर्णत्वं कदाचिदनुग्राह्यानुग्राहकभावेन । यथा 'एवं वादिनि देवर्षौ' इत्यादौ । अत्र हि अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिप्रभेदेनालक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदोऽनुगृह्यमाणः प्रतीयते । एवं कदाचित् प्रभेदद्वयसम्पातसन्देहेन ।

यथा—

खणपाहुणिआ देअर एसा जाआएँ किंपि दे भणिदा ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥
[क्षणप्राघुणिका देवर एषा जायया किमपि ते भणिता ।
रोदिति शून्यवलभीगृहेऽनुनीयतां वराकी ॥] ॥ इति छाया ॥

---

उज्जीवनी ।

संसृष्ट्या एकरूपया, अनुग्राह्यानुग्राहकभावसन्देहैकवाचकानुप्रवेशरूपेण त्रिविधेन सङ्करेण च, पुनरपि बहुधानेकविधः उद्द्योतते प्रकाशते ॥

तदेवाह—तस्येति । तस्य च एतावता प्रबन्धेन निरूपितस्य ध्वनेः ध्वनिकाव्यस्य स्वप्रभेदैः स्वस्यात्मनः, अविवक्षितवाच्यत्वादिभिः प्रकारैः गुणीभूतव्यङ्ग्येन, वाच्यैरलङ्कारैश्च सह सङ्करसंसृष्टिव्यवस्थायां क्रियमाणायां बहुप्रकारता अनेकविधत्वं लक्ष्ये दृश्यते । तथा हि—स्वप्रभेदसङ्कीर्णः स्वप्रभेदैः सङ्करव्यवस्थया भासमानः, गुणीभूतव्यङ्ग्येन सङ्कीर्णः गुणीभूतव्यङ्ग्येन संसृष्टः, वाच्यालङ्कारान्तरसङ्कीर्णः, वाच्यालङ्कारान्तरसंसृष्टः, संसृष्टेनालङ्कारान्तरेण सङ्कीर्णः, संसृष्टालङ्कारान्तरसंसृष्टः चेति बहुधा बहुप्रकारेण ध्वनिः प्रकाशते । उदाहरति—तत्रेति । कदाचित् स्वप्रभेदसङ्कीर्णत्वं स्वप्रभेदेन ध्वनिप्रभेदेन सङ्करः, अनुग्राह्यानुग्राहकभावेन भवति । यथेति । 'एवं वादिनि देवर्षौ' इत्यत्रार्थशक्तिमूलानुरणनध्वनिप्रभेदेन प्रतीयमानेन, लज्जारूपव्यभिचारिणा भावध्वनिरूपतां प्राप्तेन असंलक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदः, आभिलाषिकसम्भोगशृङ्गाररूपः अनुगृह्यमाणः प्रतीयते प्रकाशते । एवं कदाचित् प्रभेदद्वयस्य द्वयोः स्वप्रभेदयोः सम्पातेन सन्देहरूपः सङ्करो दृश्यते । उदाहरति—यथेति । खणेति देवरानुरक्तामुपनायिकां उत्सवागता देवरपत्न्याधिक्कृतामनुनेतुं देवरं प्रति कयाचिदेवमुच्यते । हे सुभग, सुन्दर, देवर, ते तव, क्षणप्राघुणिका,

अत्र ह्यनुनीयतामित्येतत् पदमर्थान्तरसङ्क्रमितवाच्यत्वेन विवक्षितान्यपरवाच्यत्वेन च सम्भाव्यते। न चान्यतरपक्षनिर्णये प्रमाणमस्ति। एकव्यञ्जकानुप्रवेशेन तु व्यङ्ग्यत्वमलक्ष्यक्रमव्यङ्ग्यस्य स्वप्रभेदान्तरापेक्षया बाहुल्येन सम्भवति। यथा—'स्निग्धश्यामल' इत्यादौ। स्वप्रभेदसंसृष्टत्वं च यथा पूर्वोदाहरण एव अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्यस्य च संसर्गः। गुणीभूतव्यङ्ग्यसंङ्कीर्णत्वं यथा—'न्यक्कारो ह्ययमेव मे यदरयः।' इत्यादौ। यथा वा—

---

उज्जीवनी

क्षणे उत्सवेऽभ्यागता, ते तव जायया पत्न्या, किमपि अवाच्यं भणिता। उक्ता, गृहस्य पश्चाद्भागे यद् वलभीगृहं उपरितनभवनं, तत्र रोदिति अतः वराकी दीना, सा त्वया अनुनीयताम्। अत्र अस्मिन् पद्ये, 'अनुनीयतामि'त्येतत् पदं' अर्थान्तरसङ्क्रमितवाच्यत्वेन अर्थान्तरे, उपभोगलक्षणे सङ्क्रमितत्वेन, विवक्षितान्यपरवाच्यत्वेन अनुरणनन्यायेन वा उपभोगरूपमर्थान्तरं व्यनक्तीति सन्देहः। अत्रान्यतरपक्षनिर्णये अन्यतरस्य द्वयोरेकस्य पक्षस्य निर्णये निश्चये, प्रमाणं च नास्ति। अलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः तु एकव्यञ्जकानुप्रवेशेन एकेनैव व्यञ्जकेन द्वयोर्व्यङ्ग्यत्वं स्वप्रभेदान्तरापेक्षया स्वस्यान्यं प्रभेदमपेक्ष्य, बाहुल्येन अधिकतया सम्भवति। उदाहरति—यथेति। स्निग्धेति। व्याख्यातमिदं प्राग् द्वितीयोद्द्योते। अत्र व्यञ्जकेनैकेन रामपदेन, व्यङ्ग्यस्य स्वावधीरणस्य विप्रलम्भरसस्य च व्यङ्ग्यमिति, एकव्यञ्जकानुप्रवेशरूपसङ्करस्योदाहरणमिदम्। स्वप्रभेदसंसृष्टत्वं स्वप्रभेदेन ध्वनेः संसृष्टत्वं च पूर्वोदाहरण एव 'स्निग्धश्यामले'त्यादिपद्य एव। अर्थान्तरसङ्क्रमितवाच्यस्य रामपदव्यङ्ग्यस्य, अत्यन्ततिरस्कृतवाच्यस्य 'लिप्ते'ति, 'पयोदसुहृदामि'ति च पदाभ्यां व्यङ्ग्यस्य चार्थस्य संसर्गो भवति। गुणीभूतव्यङ्ग्येन ध्वनेः सङ्करमुदाहरति—गुणीभूतसङ्कीर्णत्वं यथेति। 'न्यक्कारो ह्ययमेव मे यदरय' इत्यादाविति। अत्र मे अरयः इत्यादि पृथक् पदैरुपस्थापितानां गुणीभूतव्यङ्ग्यानां, प्रधानव्यङ्ग्यस्य रौद्रस्य चाङ्गाङ्गिभावेन सङ्करः।

उदाहरणान्तरमाह—यथा वेति। कर्त्तेति। वेणीसंहारे पञ्चमाङ्के

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः।

अत्र ह्यलक्ष्यक्रमव्यङ्ग्यस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्याभिधायिभिः पदैः सम्मिश्रता। अत एव च पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य वाक्यार्थाश्रयत्वे च ध्वनेः सङ्कीर्णतायामपि न विरोधः स्वप्रभेदान्तरवत्। यथा हि ध्वनिप्रभेदान्तराणि परस्परं सङ्कीर्यन्ते, पदार्थवाक्यार्थाश्रयत्वेन च न विरुद्धानि।

किञ्चैकव्यङ्ग्याश्रयत्वे तु प्रधानगुणभावो विरुद्ध्यते न तु व्यङ्ग्यभेदापेक्षया, ततोऽप्यस्य न विरोधः। अयं च संकरसंसृष्टिव्यवहारो बहूनामेकत्र वाच्यवाचकभाव इव व्यङ्ग्यव्यञ्जकभावेऽपि निर्विरोध एव मन्तव्यः। यत्र तु

---

उज्जीवनी

क्रुद्धयोर्भीमार्जुनयोर्वचनमिदम्। द्यूतच्छलानां द्यूतस्य व्याजानां, कर्ता प्रयोक्ता जतुमयशरणोद्दीपनः जतुमयस्य जतुनिर्मितस्य, शरणस्य गृहस्य उद्दीपनः दीपकः, अभिमानी गर्विष्ठः, कृष्णाकेशोत्तरीयव्यपनयनपटुः कृष्णाया द्रौपद्याः केशानामुत्तरीयस्य चापनयन आकर्षणे निपुणः, यस्य दासाः पाण्डवा इति वदन्। दुःशासनादेरनुजशतस्य अनुजानामनुजातानां शतस्य गुरुर्ज्येष्ठः अङ्गराजस्य मित्रं स्निग्धः, स तादृशः दुर्योधनोऽसौ, राजा क्व कुत्र आस्ते वर्त्तते। कथयत ब्रूत। आवां रुषा रोषेण तं द्रष्टुं नाभ्यागतौ स्वः नागतौ भवावः। अत्र हि वाक्यार्थीभूतस्य प्रधानवाक्यार्थस्य अलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः, व्यङ्ग्यविशिष्टवाच्याभिधायिभिः व्यङ्ग्यविशिष्टवाच्यमभिदधानैः पदैर्व्यञ्जकैः सम्मिश्रितः सङ्करः वर्तत इति शेषः। अत्रापि गुणीभूतव्यङ्ग्यध्वनेः अङ्गाङ्गिभावेन सङ्करो दृश्यते। अत एव च एवं सम्मिश्रदर्शनादेव च गुणीभूतव्यङ्ग्यस्य पदार्थाश्रयत्वे पृथक्पदस्यार्थमाश्रित्य, ध्वनेर्वाक्यार्थाश्रयत्वे प्रधानवाक्यार्थीभूतत्वेन च सङ्कीर्णतायामपि सङ्करेऽपि स्वप्रभेदान्तरवत् स्वस्य ध्वनेः प्रभेदान्तरेणेव न विरोधः। तदेवाह—यथा हीति। ध्वनिप्रभेदान्तराणि परस्परं ध्वनेः प्रभेदः कोऽपि तस्य प्रभेदान्तरैः सह यथा यथा सङ्कीर्यते पदार्थवाक्यार्थाश्रयत्वेन सङ्कीर्णतायां न विरुद्धानि।

पदानि कानिचिदविवक्षितवाच्यानुरणनरूपव्यङ्ग्यवाच्यानि वा तत्र ध्वनि-गुणीभूतव्यङ्ग्ययोः संसृष्टत्वम् । यथा—'तेषां गोपवधूविलाससुहृदाम्' इत्यादौ । अत्र हि 'विलाससुहृदां' 'राधारहःसाक्षिणां' इत्येते पदे ध्वनिप्रभेदरूपे 'ते' 'जाने' इत्येते च पदे गुणीभूतव्यङ्ग्यरूपे ॥

वाच्यालङ्कारसङ्कीर्णत्वमलक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति सालङ्कारे काव्ये सर्वत्र सुव्यवस्थितम् । प्रभेदान्तराणामपि कदाचित् सङ्कीर्णत्वं भवत्येव । यथा ममैव—

---

## उज्जीवनी

एकव्यञ्जकानुप्रवेशरूपसङ्करविषये यो विशेषस्तमाह—किञ्चेति । व्यञ्जकस्यैकत्वे यदि व्यङ्ग्यस्याप्येकत्वं तर्हि तत्र गुणप्रधानभावो विरुद्धयते । व्यङ्ग्यभेदापेक्षया तु व्यङ्ग्यस्य भेदे तु कस्यचित् प्राधान्यमन्यस्य गुणभाव इति तयोः सङ्करो न विरुध्यत इत्यर्थः । एकत्रैकस्मिन् पद्ये बहूनामर्थानां सङ्करसंसृष्टिव्यवहारः सङ्कर इति वा, संसृष्टिरिति वा व्यवहारः व्यङ्ग्य-वाचकभावे वाच्यालङ्कारेषु इव, व्यङ्ग्यव्यञ्जकभावेऽपि ध्वनावपि निर्विरोध एव विरोधरहित एव मन्तव्यः वेदितव्यः । तु किन्तु, यत्र काव्ये, कानिचित् पदानि अविवक्षितवाच्यानि अविवक्षितं वाच्यं वाच्योऽर्थो येषां तादृशानि, अनुरणनरूपव्यङ्ग्यवाच्यानि अनुरणनरूपं व्यङ्ग्यं येषां तादृशानि वाच्यानि येषां तादृशानि वा कानिचित् पदानि, तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः ध्वनेः गुणीभूतव्यङ्ग्यस्य च संसृष्टत्वं संसृष्टिः भवति । उदाहरति—यथेति । 'तेषां गोपवधूविलाससुहृदां' इत्यादाविति । अत्र हि विलाससुहृदामिति, राधारहःसाक्षिणामिति च पदे लतावेश्मनामचेतनानां विशेषणत्वेनोपात्ते । तत्र चेतनधर्मस्य सौहृदस्य साक्षित्वस्य चाविवक्षितत्वात् ध्वनिप्रभेदरूपे अविवक्षितवाच्यध्वनेः प्रभेदरूपे । ते जाने इत्येते च पदे, अनुरणनरूपव्यङ्ग्य-वाच्ये वाच्यापेक्षया गुणीभूतत्वात् गुणीभूतव्यङ्ग्यात्मके इति ध्वनि गुणीभूतव्यङ्ग्ययोः संसृष्टिः ॥

वाच्येति । अलक्ष्यक्रमव्यङ्ग्यापेक्षया असंलक्ष्यक्रमव्यङ्ग्यत्वमाश्रित्य रसवति, सालङ्कारे वाच्यालङ्कारवति च सर्वत्र काव्ये वाच्यालङ्कार-सङ्कीर्णत्वं सुव्यवस्थितं सम्यग् व्यवस्थितम् । कदाचित् प्रभेदान्तराणामपि

या व्यापारवती रसान् रसयितुं काचित् कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।
ते द्वेऽप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन ! त्वद्भक्तितुल्यं सुखम् ॥

इत्यत्र विरोधालङ्कारेणार्थान्तरसङ्क्रमितवाच्यस्य ध्वनिप्रभेदस्य सङ्कीर्णत्वम् ।

वाच्यालङ्कारसंसृष्टत्वं च पदापेक्षयैव । यत्र हि कानिचित् पदानि वाच्यालङ्कारभाञ्जि, कानिचिच्च ध्वनिप्रभेदयुक्तानि । यथा—

---

## उज्जीवनी

वस्त्वलङ्कारध्वनिरूपाणामन्येषां ध्वनिप्रभेदानामपि सङ्कीर्णत्वं सङ्करः भवत्येव स्वकीयमुदाहरणं दर्शयति—यथा ममैवेति । येति । कवीनां लोकोत्तरवर्णननिपुणानां रसान् रत्यादीन् स्थायिभावान्, रसयितुं सहृदयहृदयगोचरीकर्तुं, व्यापारवती तदनुकूलशब्दप्रयोगात्मकव्यापारवती या काचित्, नवा नवनवोन्मेषशालिप्रज्ञारूपा दृष्टिः प्रतिभारूपा एका दृष्टिरित्यर्थः । या चान्या, परिनिष्ठितार्थविषयोन्मेषा परिनिष्ठितार्थरूपे विषये उन्मेषः प्रकाशो यस्यास्तादृशी, वैपश्चिती विद्वत्सम्बन्धिनी दृष्टिः । ते द्वे अपि दृष्टी अवलम्ब्य, विश्वं सर्वं, निर्णयन्तो वर्णयन्तः, श्रान्ताः क्षीणाः, हे ! अब्धिशयन ! विष्णो ! त्वद्भक्तितुल्यं तव भजनतुल्यं, यद्वा त्वयि या भक्तिः भगवद्विषयकरत्याख्यो भावः तेन सदृश यत् सुखं, तत्तु न लब्धमित्यर्थः । अत्रास्मिन् पद्ये, विरोधालङ्कारेण, प्रतिभावैदुष्यरूपाभ्यां दृष्टिभ्यां निर्वर्णनं चाक्षुषप्रत्यक्षं न सम्भवतीति मानसज्ञानार्थकत्वे पर्यवसानात् तत्परिहारश्च भवतीति यो विरोधाभासालङ्कारः तेन सह निवर्णनशब्दवाच्यार्थस्य चाक्षुषप्रत्यक्षस्याविवक्षितत्वेन ज्ञानरूपे अर्थान्तरे सङ्क्रमणाद् अर्थान्तरसङ्क्रमितवाच्यस्यास्य ध्वनेश्च सङ्कीर्णत्वम् ॥

ध्वन्यलङ्कारसंसृष्टिमुदाहर्तुमाह—वाच्येति । वाच्यालङ्कारसंसृष्टत्वं वाच्येनालङ्कारेण सह ध्वनेः प्रभेदस्य संसृष्टत्वं संसृष्टिश्च, पदापेक्षयैव, न तु वाक्यरूपवाचकापेक्षया । यत्र हि संसृष्टे कानिचित् पदानि, वाच्यालङ्कार-

> दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां
> प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
> यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
> शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥

अत्र हि मैत्रीपदमविवक्षितवाच्यो ध्वनिः । पदान्तरेष्वलङ्कारान्तराणि ।

संसृष्टालङ्कारान्तरसङ्कीर्णो यथा—

> दन्तक्षतानि करजैश्च विपाटितानि
> प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
> दत्तानि रक्तमनसा मृगराजवध्वा
> जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

---

### उज्जीवनी

भाञ्जि वाच्यालङ्कारं भजन्ते, कानिचित् पदानि ध्वनिप्रभेदयुक्तानि । उदाहरन्ति यथेति । दीर्घीकुर्वन्निति । मेघदूतस्थितं पद्यमिदम् । यत्र विशालानगर्यां, शिप्रावातः शिप्राया नद्या मारुतः, सारसानां पटु स्फुटं, मदेन कलमव्यक्तमधुरं, कूजनं दीर्घीकुर्वन् वर्धयन् प्रत्यूषेषु अहर्मुखेषु, स्फुटितकमलामोदमैत्रीकषायः स्फुटितानां विकसितानां, कमलानां पद्मानां, आमोदस्य सौरभस्य, मैत्र्या मित्रभावेन योगेन, कषायः सुरभिलः, अङ्गानुकूलः अङ्गानां श्रमक्षीणानां, अवयवानां श्रमापनयनानुकूलः सन्, प्रार्थनाचाटुकारः प्रार्थनायां प्रियवचनं कुर्वन् । प्रियतम इव स्त्रीणां सुरतग्लानिं सुरतजनितां क्लान्तिं हरति अपनयति । अत्र हि अस्मिन् पद्ये हि, मैत्रीपदं अचेतनेनामोदेन अचेतनस्य मैत्र्या असम्भवात् बाधितमुख्यार्थं सम्बन्धित्वरूपं अर्थं लक्षयन् सौरभस्यातिशयितत्वं व्यनक्ति इति अविवक्षितवाच्यध्वनिरूपम् । पदान्तरेषु प्रियतम इवेत्यादिषु, उपमादिरूपाणि अलङ्कारान्तराणि च वर्तन्त इति वाच्यालङ्कारध्वन्योः संसृष्टिः ।

अथालङ्कारेण केनचिद् संसृष्टेनालङ्कारान्तरेण ध्वनेः सङ्करमुदाहरति—यथेति । दन्तेति । स्वापत्यभक्षणप्रवृत्तायै सिंह्यै निजशरीरं दत्तवन्तं बोधिसत्त्वं दृष्ट्वा कस्यचिदुक्तिरियम् । प्रोद्भिन्नसान्द्रपुलके प्रोद्भिन्न उद्भूतः, सान्द्रो निबिडः, पुलको रोमाञ्चो यस्मिंस्तादृशे, भवतः शरीरे देहे । रक्तमनसा

अत्र हि समासोक्तिसंसृष्टेन विरोधालङ्कारेण सङ्कीर्णस्यालक्ष्यक्रम-व्यङ्ग्यस्य ध्वनेः प्रकाशनं; दयावीरस्य परमार्थतो वाक्यार्थीभूतत्वात् ॥

संसृष्टालङ्कारसंसृष्टत्वं ध्वनेर्यथा—

> अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु ।
> सोहइ पसारिअगिआणं णच्चिअं मोरवन्दाणम् ॥

अत्र ह्युपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य ध्वनेः संसृष्टत्वम् ।

---

उज्जीवनी

रक्ते शोणिते, मनो यस्यास्तादृश्या, रक्तमनुरक्तं मनो यस्यास्तादृश्या च मृगराजवध्वा सिंह्या, दत्तानि कृतानि. दन्तक्षतानि दन्तैः क्षतानि, करजैः नखैः विपाटितानि विपाटनानि च, जातस्पृहैः सञ्जाताभिलाषैः मुनिभिरपि अवलोकितानि दृष्टानि ॥

अत्राप्रकृतनायिकावृत्तान्तपरिस्फूर्त्या समासोक्तिः । मुनिभिः रक्तमनसावलोकितानीत्यनेन मुनीनामनुरागस्य विरुद्धत्वात् विरोधः । तस्य च अपि नाम वयमपि, बोधिसत्त्व इव जीवकारुण्यप्रदर्शनायावसरं लभेमहि इति अभिलाषो मुनीनामित्यर्थेन परिहारः । एवं समासोक्तिसंसृष्टेन विरोधालङ्कारेण दयावीरस्य वाक्यार्थीभूतत्वात् । संसृष्टेनालङ्कारेण ध्वनेः संसृष्टिमुदाहरति यथेति । अहिण इति ।

> अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु ।
> शोभते प्रसारितग्रीवाणां नृत्तं मयूरवृन्दानाम् ॥ इति छाया ।

अभिनवानां नूतनानां पयोदानां मेघानां रसितं येषु तादृशेषु, पथिकश्यामायितेषु पथिकानां रात्रिरूपतां प्राप्तेषु । दिवसेषु दिनेषु, प्रसारितग्रीवाणां प्रसारिता ग्रीवा येषां तादृशानाम् । मयूरवृन्दानां मयूरसमूहानाम् । नृत्तं शोभते । अत्र पहिअसामाइएसु इति प्राकृतपदस्य पथिकश्यामायितेषु इति, पथिकसामाजिकेषु इति च छाया । श्यामा रात्रिरिवाचरन्तीति श्यामायिता इति क्यच् प्रत्ययेन लुप्तोपमा, पथिका एव सामाजिका इति रूपकं च । एवं संसृष्टाभ्यामुपमारूपकाभ्यां शब्दशक्तिमूलानुरणनध्वनेः संसृष्टिः । उपसंहरति:

एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते ।
सङ्ख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभिः ॥ ४४ ॥

अनन्ता हि ध्वनेः प्रकाराः, सहृदयानां व्युत्पत्तये तेषां दिङ्मात्रं कथितम् ।

इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः ।
सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः ॥ ४५ ॥

उक्तस्वरूपध्वनिनिरूपणनिपुणा हि सत्कवयः सहृदयाश्च नियतमेव काव्यविषये परां प्रकर्षपदवीमासादयन्ति ॥

अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम् ।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः ॥ ४६ ॥

---

उज्जीवनी ।

—एवमिति । एवमुक्तप्रकारेण ध्वनेः प्रभेदाः प्रभेदभेदाश्च अवान्तरभेदाश्च, संख्यातुं गणयितुं केन शक्यन्ते । न कश्चिदपि शक्नोति इत्यर्थः । अतः अस्माभिः दिङ्मात्रं मार्गप्रदर्शनमात्रमिदमुक्तम् । तदेवाह—अनन्ता हीति ध्वनेः प्रभेदा अनन्ता एव । सहृदयानां व्युत्पत्तये व्युत्पत्तिसम्पादनाय तेषां ध्वनिप्रकाराणां दिङ्मात्रमुपदर्शितम् ॥

इति एवं । उक्तलक्षणः उक्तं लक्षणं यस्य तादृशः, यो ध्वनिः स सत्काव्यं उत्तमं काव्यं, कर्तुं वा ज्ञातुं वा, अभियुक्तैरुद्युक्तैः कविभिः सहृदयैश्च, प्रयत्नतः सम्यग् विवेच्यः विविच्य ज्ञातव्यः ।

तदेवाह—उक्तेति । उक्तरूपस्य प्रदर्शितस्वरूपस्य ध्वनेः निरूपणे निपुणाः समर्थाः सत्कवयः सहृदयाश्च, नियतमेव काव्यविषये, परां प्रकर्षपदवीं परमोत्कृष्टं स्थानं आसादयन्ति प्राप्नुवन्ति

ध्वनिमुपवर्ण्य तस्य मुख्यत्वं प्रदर्शयति—अस्फुटेति । यथोदितं एतावता प्रबन्धेन, उक्तमभिहितम् । एतत् काव्यतत्त्वं काव्यस्य काव्यपदव्यपदेशविषयत्वं, अस्फुटस्फुरितं अस्फुटं स्पष्टं यथा न स्यात् तथा स्फुरितं स्फुरणं यस्य तादृशं

एतत् ध्वनि प्रवर्तनेन निर्णीतं काव्यतत्त्वमस्फुटस्फुरितं सदशक्नुवद्भिः प्रतिपादयितुं वैदर्भी गौडी, पाञ्चाली चेति रीतयः प्रवर्तिताः। रीतिलक्षणविधायिनां हि काव्यतत्त्वमेतत् अस्फुटतया मनाक् स्फुरितमासीदिति लक्ष्यते तदत्र स्फुटतया सम्प्रदर्शितेनान्येन रीतिलक्षणेन न किञ्चित्।

शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥ ४७ ॥

अस्मिन् व्यङ्ग्यव्यञ्जकभावविवेचनमये काव्यलक्षणे ज्ञाते सति, याः काश्चित् प्रसिद्धाः उपनागरिकाद्याः शब्दतत्त्वाश्रयाः वृत्तयो याश्चार्थतत्त्वसम्बन्धाः कैशिक्यादयस्ताः सम्यग् रीतिपदवीमवतरन्ति। अन्यथा तु तासामदृष्टार्थानामिव वृत्तीनामश्रद्धेयत्वमेव स्यात् नानुभवसिद्धत्वम्।

---

उज्जीवनी।

व्याकर्तुं व्याख्यातुं अशक्नुवद्भिः अशक्तैः कैश्चित्, रीतयः विशिष्टा पदरचना रीतिरिति लक्षणलक्षिताः सम्प्रवर्तिताः। तदेवाह—एतदिति। एतद्ध्वनिप्रवर्तनेन एतस्य पूर्वोक्तस्य ध्वनेः प्रवर्तनेन प्रतिपादनेन निर्णीतं काव्यतत्त्वं, अस्फुटतया स्फुरितं सत् स्वयं प्रतिपादयितुमशक्नुवद्भिः कविभिः वैदर्भी, गौडी, पाञ्चाली चेति तिस्रः रीतयः प्रवर्तिताः। हि यतः, रीतिलक्षणविधायिनां रीतिं काव्यात्मत्वेनाङ्गीकृत्य तल्लक्षयतां, एतत् काव्यतत्त्वमस्फुटतया मनागीषदिव स्फुरितमासीदिति लक्ष्यते ज्ञायते। तत् तस्मात्, अत्र स्फुटतया सम्प्रदर्शिते काव्यतत्त्वे, अन्येन तद्भिन्नया रीतेः, लक्षणेन लक्षणकरणेन न किञ्चिदपि प्रयोजनमित्यर्थः। किं च, शब्दतत्त्वाश्रयाः, शब्दधर्ममाश्रित्य वर्तमानाः काश्चित्, अपरा अन्याः, अर्थतत्त्वयुजः अर्थधर्ममाश्रिताश्च वृत्तयः अस्मिन् काव्यलक्षणे ज्ञाते सति प्रकाशन्ते।

तदेवाह—अस्मिन्निति। व्यङ्ग्यव्यञ्जकभावविवेचनमये व्यङ्ग्यव्यञ्जकभावस्य विवेचनात्मके, काव्यस्य ध्वनिकाव्यस्य, लक्षणे ज्ञाते सति, याः काश्चित् शब्दतत्त्वाश्रयाः, उपनागरिका,परुषा,ग्राम्याख्यास्तिस्रो वृत्तयः, याश्च अर्थतत्त्वसम्बन्धिन्यः कैशिक्याद्यास्ताः, रीतिपदवीमवतरन्ति रीत्यात्मकत्वं भजन्ते। अन्यथा तु रीतिपदमनुपगतानां तु तासां वृत्तीनामदृष्टार्थानामिव, अश्रद्धेयत्वं

एवं स्फुटतयैव लक्षणीयं स्वरूपमस्य ध्वनेः। यत्र शब्दानामर्थानां च केषाञ्चित् प्रतिपत्तृविशेषसंवेद्यं जात्यत्वमिव रत्नविशेषाणां चारुत्वमनाख्येयमवभासते, काव्ये तत्र ध्वनिव्यवहार इति यल्लक्षणं ध्वनेरुच्यते केनचित्तदयुक्तमिति नाभिधेयतामर्हति। यतः शब्दानां स्वरूपाश्रयस्तावद् अक्लिष्टत्वे सत्यप्रयुक्तप्रयोगः। वाचकाश्रयस्तु प्रसादो व्यञ्जकत्वं चेति विशेषः। अर्थानां च स्फुटत्वेनावभासनं व्यङ्ग्यपरत्वं व्यङ्ग्यांशविशिष्टत्वं चेति विशेषः।

तौ च विशेषौ व्याख्यातुमशक्यौ व्याख्यातौ च बहुप्रकारम्। तद्व्यतिरिक्तानाख्येयविशेषसम्भावना तु विवेकावसादभावमूलैव यस्मादनाख्ये-

---

उज्जीवनी

स्यात्। अनुभवसिद्धत्वं तु वक्तुं न शक्यते। एवं ध्वनेः स्वरूपं स्फुटतयैव लक्षणीयम्। एवं च वृत्तिरीत्योरङ्गीकारेण ध्वनेरभावं वदन्तो निराकृताः। अनाख्येयतावादमपि निराकरोति—यत्रेति। यत्र काव्य, केषाञ्चित् व्यञ्जकानां शब्दानामर्थानां च चारुत्वं प्रतिपत्तृविशेषेणैव संवेद्यं प्रतिपत्यर्हम्। रत्नविशेषाणां जात्यत्वं कैश्चिदेव यथा संवेद्यते तथा, अनाख्येयमनिर्वचनीयं, अवभासते प्रकाशते। तत्र काव्ये ध्वनिव्यवहार इति यल्लक्षणमनाख्येयत्वरूपं ध्वनेर्यदुच्यते केनचित् तदयुक्तमित्यतः तल्लक्षणमनभिधेयतामर्हति। तत् काव्यलक्षणमिति न वक्तव्यमित्यर्थः। कारणमाह—यत इति। शब्दानां स्वरूपाश्रयः स्वरूपमाश्रयो यस्य (धर्मस्य) तादृशो धर्मस्तावच्छब्दनिष्ठः, अक्लिष्टत्वं-श्रुतिकटुत्वरूपदोषशून्यत्वं, अप्रयुक्तप्रयोगः प्रयुक्तस्य पुनः प्रयोगाभावत्वं, अपौनरुक्त्यमित्यर्थः। एवं वाचकाश्रयो वाचकशब्दाश्रयस्तु, प्रसादः प्रसादगुणवत्त्वं, व्यञ्जकत्वं व्यङ्ग्यार्थबोधकत्वं चेति विशेषः। अर्थानां च स्फुटत्वेन स्पष्टतया, अवभासनं प्रतिपत्तिः, व्यङ्ग्यपरत्वं व्यङ्ग्यार्थतात्पर्यवत्त्वं व्यङ्ग्यांशेन युक्तत्वं चेति विशेषः।

ताविति। तौ च शब्दाश्रितावर्थाश्रितौ च विशेषौ व्याख्यातुमनुवर्णयितुं शक्यते, बहुप्रकारं बहुधा प्रकारेण व्याख्यातौ प्रतिपादितौ च। एवं स्थितेऽपि तव्द्यतिरिक्तस्य तद्भिन्नस्य अनाख्ययस्य आख्यातुमशक्यस्य विशषस्य सम्भावना संशयस्तु, विवेकावसादभावमूलैव विवेकस्य योऽवसादो नाशः, अविवेकः तस्य भाव उत्पत्तिः मूलं कारणं यस्यास्तादृशी भवतीत्यर्थः। ध्वनेरनाख्येयत्वं वदतो

यत्व सर्वशब्दागोचरत्वेन न कस्यचित् सम्भवति। अन्ततोऽनाख्येयशब्देन तस्याभिधानसम्भवात्। सामान्यसंस्पर्शि विकल्पशब्दगोचरत्वे सति, प्रकाशमानत्वं तु यदनाख्येयत्वमुच्यते क्वचित् तदपि काव्यविशेषाणां रत्नविशेषाणामिव न सम्भवति। तेषां लक्षणकारैर्व्याकृतरूपत्वात्। रत्नविशेषाणां च सामान्यसम्भावनयैव मूल्यस्थितिपरिकल्पनादर्शनाच्च। उभयेषामपि तेषां प्रतिपत्तृविशेषसंवेद्यत्वमस्त्येव। वैकटिका एव रत्नतत्त्वविदः, सहृदया एव हि काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्तिः।

यत्त्वनिर्देश्यत्वं सर्वलक्षणविषयं बौद्धानां प्रसिद्धं तत्तन्मतपरीक्षायां ग्रन्थान्तरे निरूपयिष्यामः। इह तु ग्रन्थान्तरश्रवणलवप्रकाशनं सहृदयवैमनस्यप्रदायीति न प्रक्रियते॥ बौद्धमते वा यथा प्रत्यक्षादिलक्षणं तथास्माकं

---

उज्जीवनी।

विवेकशून्यत्वमेव हेतुरिति यावत्। यस्मात् यतः, अनाख्येयत्वं सर्वशब्दागोचरत्वं सर्वेषामपि शब्दानां अविषयत्वरूपं तेन कस्यचिदपि अर्थस्य तल्लक्षणं न सम्भवति। अन्ततः अनाख्येयस्यार्थस्य अनाख्येयशब्देनैवाभिधानं सम्भवेत्। परैर्नियुक्तमनाख्येयत्वं निर्दिश्य दूषयति—सामान्येति। सामान्यसंस्पर्शिविकल्पशब्दागोचरत्वे सति प्रकाशमानत्वमनाख्येयत्वमिति तेषां निरुक्तिः। सामान्यं जातिः, तत्संस्पर्शी यो विकल्पः विशेषणविशेष्यसंसर्गावगाहि ज्ञानं (सविकल्पकज्ञानं) तज्जनको यः शब्दस्तदविषयत्वं प्रसिद्धविषयत्वं चेत्यर्थः। ईदृशमनाख्येयत्वं यत् तैरनाख्येयतावादिभिः क्वचिदुच्यते तदपि काव्यविशेषाणां न सम्भवितुमर्हतीति रत्नविशेषस्यानाख्येयत्वं वक्तुं न युक्तम्। तेषाँ काव्यविशेषाणां लक्षणकारैः लक्षणकर्तृभिः, व्याकृतरूपत्वात् व्याख्यातरूपत्वात्। रत्नविशेषाणां च सामान्यसम्भावनयैव सामान्यरूपेणैव, मूल्यस्य स्थितेः व्यवस्थायाः परिकल्पनाया दर्शनात्। उभयेषामपि तेषाँ काव्यविशेषाणां रत्नविशेषाणां च, प्रतिपत्तृविशेषसंवेद्यत्वं प्रतिपत्तृविशेषेण विशिष्टेन प्रतिपत्त्रा संवेद्यत्वं ज्ञेयत्वमस्त्येव। हि यतः वैकटिका एव रत्नपरीक्षका एव, रत्नतत्त्वविदः रत्नानां जात्यत्वं जानन्ति। तथा काव्यानां रसज्ञाः सहृदया एवेति कस्यात्र विप्रतिपत्तिः कस्यापि विप्रतिपत्तिर्नास्तीत्यर्थः।

ध्वनिलक्षण भविष्यति । तस्माल्लक्षणान्तरस्याघटनादशब्दार्थत्वाच्च तस्योक्तमेव ध्वनिलक्षणं साधीयः । तदिदमुक्तम् —

अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः ।
न लक्षणं, लक्षणं तु साधीयोऽस्य यथोदितम् ॥

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
तृतीय उद्द्योतः ।

---

उज्जीवनी

क्षणिकवादिबौद्धमते सर्वेषामपि पदार्थानामनिर्वचनीयतया ध्वनेरपि तत्त्वं कुतो न भवतीत्याशङ्क्य समाधत्ते - यत्त्विति । यत्तु, बौद्धानां क्षणिकवादिनां मते, सर्वलक्षणविषयं सर्वेषामपि पदार्थानां लक्षणविषयीभूतं अनिर्देश्यत्वं प्रसिद्धम् । तत् तन्मतपरीक्षायां बौद्धमतपरीक्षावसरे, ग्रन्थान्तरे विनिश्चयनामकबौद्धग्रन्थस्य, आनन्दवर्धनाचार्यविरचितायां विवृतौ धर्मोत्तमानाम्न्यां निरूपयिष्यामः । अत्र तु तन्न प्रस्तुतमित्यर्थः । इह तु ध्वन्यालोके तु, ग्रन्थान्तरश्रवणलवप्रकाशनं ग्रन्थान्तरे प्रकाशितस्यार्थस्य लवस्य अल्पस्यापि श्रवण सहृदयानां वैमनस्यं वैरस्यं प्रददातीति न क्रियते । वा अथवा बौद्धमते सर्वेषां क्षणिकत्वेऽपि यथा प्रत्यक्षादिलक्षणं, तथास्माकं ध्वनिलक्षणमपि भविष्यति । तस्मात् तस्य ध्वनेः लक्षणान्तरस्याघटनात् अशब्दार्थत्वाच्च शब्दवाच्यत्वस्याभावाच्च, उक्तमेवास्मदुक्तमेव, ध्वनिलक्षणं ध्वनेर्लक्षणं, यत्रार्थः शब्दो वेत्यनेन कृतं, साधीयः साधुतरम् । उक्तमुपसहरति— तदिदमुक्तमिति । अनाख्येति । ध्वनेर्निर्वाच्यतया निर्वाच्यः निर्वक्तुं शक्यः अर्थः यस्य तादृशस्य भावस्तत्ता तया । अनाख्येयांशभासित्वं अनाख्येयस्यानिर्वचनीयस्यांशस्यावभासनात्मकं अनिर्वचनीयत्वं न लक्षणं भवति । तु किन्तु- अस्य ध्वनेः, यथोदितं यथास्माभिरुक्तं तदेव साधीयः ॥

इति ध्वन्यालोकोज्जीवन्यां उज्जीवन्याख्यायां
तृतीय उद्द्योतः ।

## चतुर्थ उद्द्योतः

एवं ध्वनिं सप्रपञ्चं विप्रतिपत्तिनिरासार्थं व्युत्पाद्य तद्व्युत्पादने प्रयोजनान्तरमुच्यते ।

**ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रकाशितः ।**
**अनेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥ १ ॥**

---

उज्जीवनी ।

एवं त्रिभिरुद्द्योतैः ध्वनिः सप्रपञ्चं व्युत्पादितः । आद्य उद्द्योते प्रथमतः 'तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्' इत्यत्र सहृदयमनःप्रीतये इति चतुर्थ्यन्तेन स्वचिकीर्षितस्य अविद्यमानत्वभाक्तत्वानाख्येयत्वरूपविप्रतिपत्तिनिरसनपूर्वकं, ध्वनिनिरूपणस्य सहृदयहृदयाह्लादनं, तृतीयोद्द्योतान्ते च 'इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः । सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः" ॥ इति निरूपितस्य ध्वनेः तत्त्वविवेकपुरःसरं ध्वनिकाव्यं कर्तुं निपुणता (व्युत्पत्तिः)च प्रयोजनं च प्रदर्शितम् । काव्यस्य कारणं प्रतिभा, सैव शक्तिरित्युच्यते । तस्याश्च कारणं व्युत्पत्त्यभ्यासौ । तथा च ध्वनेस्तत्त्वज्ञानेन ध्वनिकाव्यकरणनिपुणतां (व्युत्पत्ति) सम्पाद्य अभ्यासेन च प्रतिभां नवनवोन्मेषशालिनीं प्रज्ञामधिगतः कश्चित् सुकविर्भवति । तत्कृतेन च काव्येन सहृदयानां मानसं समुल्लसति । एवं च काव्यस्य मुख्यं कारणं प्रतिभा, फलं च परनिर्वृतिरिति च सिद्धम् ।

ध्वनितत्त्वज्ञानेन कवीनां न केवलं निपुणता किन्तु प्रतिभासमुल्लासरूपमन्यदपि प्रयोजनं भवतीति प्रतिपादयितुं चतुर्थोद्द्योतमारभते—एवमिति । एवं उद्द्योतत्रयोक्तप्रकारेण । ध्वनिं प्रतीयमानमर्थं, सविस्तरं, विप्रतिपत्तिनिरासार्थं विप्रतिपत्तिनिरसनपूर्वकं, व्युत्पाद्य निरूप्य, तद्व्युत्पादने तस्य ध्वनेर्निरूपणे प्रयोजनान्तरमन्यत् प्रयोजनम् । उच्यते कथ्यते । ध्वनेरिति । सगुणीभूतव्यङ्ग्यस्य गुणीभूतव्यङ्ग्येन सहितस्य ध्वनेः ध्वनिगुणीभूतव्यङ्ग्य-

य एव ध्वनेर्गुणीभूतव्यङ्ग्यस्य च मार्गः प्रकाशितस्तस्य फलान्तरं कवि-प्रतिभानन्त्यम् । कथमिति चेत्—

**अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।**
**वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि ॥ २ ॥**

अतो ध्वनेरुक्तप्रभेदमध्यादन्यतमेनापि प्रकारेण विभूषिता सती वाणी पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि नवत्वमायाति । तथा ह्यविवक्षितवाच्यस्य ध्वनेः प्रकारद्वयसमाश्रयणेन नवत्वं पूर्वार्थानुगमेऽपि । यथा—

---

उज्जीवनी ।

योः । यः अन्या मार्गः प्रदर्शितः निरूपणेन प्रकाशितः, अनेन ज्ञायमानेन (ज्ञानविषयेण) ध्वनिना । यद्वा ध्वनितत्त्वज्ञानेन, कवीनां प्रतिभागुणः शक्त्यात्मकः, आनन्त्यमनश्वरतां आयाति प्राप्नोति । तदेवाह—य इति । ध्वने गुणीभूतव्यङ्ग्यस्य च मार्गः य एष प्रकाशितः तस्य कविप्रतिभानन्त्यात्मक-मन्यदपि फलमस्ति ।

प्रतिभानन्त्यप्राप्तिप्रकारं तत्फलं च प्रतिपादयितुमाह—कथमिति । अत इति । यतः अनेन ग्रन्थेन व्युत्पादितं ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदप्रभेदजातं व्युत्पाद्य प्रतिभानन्त्यं प्रपद्यते कविः, अतः हि अत एव हि, एवं व्युत्पत्त्या अभ्यासेन च काव्यकरणे प्रवृत्तस्य कवेः मुखान्निस्सरन्ती काव्यरूपा वाणी अन्य-तमेनापि ध्वनेः अनन्तेषु प्रकारेषु एकेनापि प्रकारेण भेदेन, विभूषितालङ्कृता, पूर्वार्थान्वयवत्यपि पुराणकविप्रतिपादितेनार्थेन संस्पर्शं प्राप्नुवत्यपि नवत्वं नवीनतामायाति प्राप्नोति । तदेवाह—अत इति । अतः प्रतिभानन्त्यसम्पादनात् ध्वनेः उक्तप्रभेदमध्याद् उक्ता ये प्रभेदास्तेषां मध्याद् अन्यतमेनापि एकेनापि, विभूषिता सती, भूषिता सती कवेः काव्यरूपा वाणी, पुरातनकविनिबद्धार्थ-संस्पर्शवत्यपि पुरातनैः पुराणैः, वाल्मीकिप्रभृतिभिः कविभिः निबद्धेन प्रति-पादितेनार्थेन सह संस्पर्शं प्राप्तापि, नवत्वं नूतनतामायाति । उदाहरति—तथा हीति । अविवक्षितवाच्यध्वनेः लक्षणामूलध्वनेः, प्रकारद्वयसमाश्रयणेन अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यात्मकभेदद्वयसमाश्रयणेन तादृश-प्रकारद्वयेऽपि, पूर्वार्थानुगमेऽपि पूर्वार्थान्वयवत्यपि नवत्वमाह—यथेति ।

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोर्मिसरसः।
गतानामारम्भः किसलयितलीला[1]परिमलः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः॥

इत्यस्य

सविभ्रमस्मितोद्भेदा लोलाक्ष्यः प्रस्खलद्गिरः।
नितम्बालसगामिन्यः कामिन्यः कस्य न प्रियाः॥

इत्येवमादिषु श्लोकेषु सत्स्वपि तिरस्कृतवाच्यध्वनिसमाश्रयेणापूर्वत्वमेव, प्रतिभासते। तथा यः प्रथमः प्रथमः स तु तथाहि हतहसितबहलपललाशी।

---

### उज्जीवनी

मृगाक्ष्याः कस्याश्चित् तारुण्यारम्भं वर्णयति—स्मितमिति। किञ्चित् स्मितं मन्दस्मितं, मुग्धं सुन्दरम्। दृष्टिविभवः दृष्टेरीक्षणस्य विभवो वैदग्ध्यं, तरलमधुरः तरलश्चलः, मधुरः स्निग्धः च। वाचां, वचनानां, परिस्पन्दः परिस्फुरणम्। अभिनवविलासोर्मिसरसः अभिनवा, नवनवानां, विलासानां विभ्रमाणां ऊर्मिभिः परम्पराभिः सरसः सारस्ययुक्तः। गतानां गतीनां, आरम्भः उपक्रमः, किसलयितलीलापरिमलः किसलयितानां सञ्जातकिसलयानां आविर्भूतानामिति यावत्। लीलानां विलासानां, परिमलः सौरभ्यं यत्र तादृशः, भवतीति शेषः। मृगाक्ष्याः हरिणनयनायाः तारुण्य स्पृशन्त्याः तारुण्यारम्भदशां प्राप्नुवत्याः, किमिव हि रम्यं न भवति सर्वमपि रमणीयमेव भवतीति यावत्॥

एतदर्थावबोधकं प्राचीनपद्यमाह—सविभ्रमेति। सविभ्रमो विभ्रमेण विलासेन सहितः स्मितस्य उद्भेद आविर्भावो यासां तादृश्यः। लोलाक्ष्यः लोले तरले अक्षिणी यासां ताः, प्रस्खलद्गिरः प्रस्खलन्त्यः प्रकर्षेण स्खलन्त्यः गिरो वाचो यासां ताः, नितम्बालसगामिन्यः नितम्बगौरवेणालसं यथा तथा गमनशीलाः कामिन्यः कस्य प्रिया न स्युर्न भवेयुः। पुरातनकविवर्णितोऽयमेवार्थः पूर्वपद्येनापि वर्ण्यते। अयमत्र विशेषः। स्मितेत्यादिपद्ये मुग्ध-मधुर-

---

१. "परिकरः" च

श्वापदगणेषु सिंहः सिंहः केनाधरीक्रियते ॥

इत्यस्य,

स्वतेजः क्रीतमहिमा केनान्येनातिशय्यते
महद्भिरपि मातङ्गैः सिंहः किमभिभूयते ॥

---

उज्जीवनी

विभव-सरस-किसलयित-परिमलस्पर्शनादिपदानि तत्तन्मुख्यार्थानां समभिव्याहृततत्तत्पदार्थैः साकमन्वयतात्पर्यानुपपत्त्या, अत्यन्ततिरस्कृतवाच्यानि नैसर्गिकसौन्दर्यं, सर्वजनमनोहारित्वं, अप्रतिहतप्रसरत्वं, सन्तापोपशमनपाटवं, अतिशयितसौकुमार्यं सार्वकालिकसंस्कारानुवर्तनं, अभिलषणीयत्वं च व्यञ्जनया बोधयन्ति । अतः पूर्वार्थान्वयवत्यपि कवेरियं वाणी अत्यन्ततिरस्कृतवाच्यात्मकेन ध्वनिप्रभेदेन भूषिता नवत्वमायाता । तदेवाह—इत्येवमादिष्विति । सत्स्वपि सविभ्रमस्मितोद्भेदा इत्येवमादिषु श्लोकेषु, स्मितमित्यादिश्लोकस्य तिरस्कृतवाच्यध्वनिसमाश्रयणेन अत्यन्ततिरस्कृतवाच्यध्वन्यात्मकलक्षणामूलध्वनियोगेन, अपूर्वत्वं नवत्वं, प्रतिभासते प्रकाशते ।

अर्थान्तरसङ्क्रमितवाच्यध्वनिना भूषिताया वाण्या नवत्वं प्रदर्शयति—तयेति । य इति । यः प्रथम उत्कृष्टः, स तु प्रथमः उत्कृष्टपदवाच्यः भवति । उपपादयति—तथाहीति । हतहस्तिबहुलपललाशी स्वयमेव हतानां हस्तिनां गजानां, बहुलं बहुलं, पललं मांसमशितुं शीलमस्येति तादृशः सिंहो मृगराजः, श्वापदगणेषु श्वापदानां हिंस्राणां मृगाणां समूहेषु, सिंहः हिंस्रतमः, केनान्येन श्वापदेन, अधरीक्रियते अपकर्षं प्राप्यते । अत्र द्वितीयः प्रथमशब्दवाच्योऽर्थोऽसाधारण्यादिरूपेऽर्थान्तरे, तथा द्वितीयः सिंहशब्दवाच्योऽर्थः, वीरत्वादिरूपार्थान्तरे सङ्क्रमितः ।

प्राचीनपद्यमाह—स्वेति । स्वतेजः क्रीतमहिमा स्वस्यात्मन एव तेजसा प्रतापेन क्रीतः महिमा माहात्म्यं येन तादृशः कश्चित्, अन्येन केन अतिशय्यते अतिशयितेन भूयते । समर्थयति—महद्भिरिति । महद्भिः महाकायैरपि, मातङ्गैः गजैः, सिंहो मृगेन्द्रः, किमभिभूयते किमु परिभूयते । न केनचिदपि परिभूयत इत्यर्थः । यः प्रथम इत्यस्य पद्यस्य स्वतेजः क्रीतमहिमेत्यादिषु

इत्येवमादिषु श्लोकेषु सत्स्वप्यर्थान्तरसङ्क्रमितवाच्यध्वनिसमाश्रयेण नवत्वम् । विवक्षितान्यपरवाच्यस्यापि उक्तप्रकारसमाश्रयेण नवत्वम् । यथा—

> निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधू-
> र्बोधत्रासनिरुद्धचुम्बनरसाप्याभोगलोलं स्थिता ।
> वैलक्ष्याद् विमुखीभवेदिति पुनस्तस्याप्यनारम्भिणः
> साकाङ्क्षप्रतिपत्तिनाम हृदयं यातं तु पारं रतेः ॥

इत्यादेः श्लोकस्य,

> शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
> र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।

---

उज्जीवनी

श्लोकेषु सत्सु विद्यमानेषु प्राचीनकविनिबद्धार्थबोधकस्यापि यः प्रथम इत्यादि श्लोकस्य अर्थान्तरसङ्क्रमितवाच्यध्वनिसमाश्रयणेन, कविवाणी नवत्वमाप्नोति । तेन कवेः प्रतिभानन्त्यमवगम्यते ।

विवक्षितान्यपरवाच्यध्वनिविभूषिताया वाण्या नवत्वं प्रदर्शयति—यथेति । निद्रेति । वधूर्नवोढा, निद्राकैतविनः व्याजनिद्रावतः, प्रियस्य दयितस्य, वदने आनने । वक्त्रं वदनम् । विन्यस्य निधाय । बोधत्रासनिरुद्धचुम्बनरसापि बोधात् प्रियस्य प्रबोधात् यस्त्रासो भयं तेन निरुद्धः चुम्बनरसो यस्यास्तादृशी सत्यपि, आभोगलोलं आभोगेन निद्रायाः परीक्षणे यः प्रयत्नः तेन लोलं चञ्चलं यथा भवति तथा, स्थिता अभूदिति शेषः । वधूः पुनः चुम्बने कृते, वैलक्ष्याद् लज्जया, विमुखी पराङ्मुखी भवेदिति विचिन्त्य, अनारम्भिणः चुम्बनायारम्भमकुर्वाणस्य साकाङ्क्षप्रतिपत्ति साकाङ्क्षा सतृष्णा प्रतिपत्तिः अवस्थितिः यस्य तादृशं हृदयं मनस्तु, रतेः प्रीतेः, पारं संपूर्णास्वाद्यतां न यातं न प्राप्तं नाम ध्रुवम् ।

शून्यमिति । अमरुकशतके मुग्धावर्णनपरं पद्यमिदम् । वासगृहं शय्यागृहं, शून्यं निर्जनम् । विलोक्य विशेषेण दृष्ट्वा शयनात् शयनीयात्, किञ्चिदिव शनैर्मन्दमुत्थाय, निद्राव्याजं नायिकाया अनुरागजिज्ञासयेव निद्राया व्याजं

विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

इत्यादिषु श्लोकेषु सत्स्वपि नवत्वम्। यथा वा—"तरङ्गभ्रूभङ्गा" इत्यादिश्लोकस्य "नानाभङ्गिभ्रमद्भ्रूः" इत्यादिश्लोकापेक्षयान्यत्वम्।

**[1]युक्त्यानयानुसर्तव्यो रसादिर्बहुविस्तरः।**
**मिथोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात् ॥ ३ ॥**

बहुविस्तारोऽयं रसभावतदाभासतत्प्रशमनलक्षणो मार्गो यथास्वं विभावानुभावप्रभेदकलनया यथोक्तं प्राक्। स सर्व एवानया [2]युक्त्यानुसर्तव्यः।

---

उज्जीवनी।

व्याजनिद्राम्। उपागतस्य प्राप्तवतः पत्युः प्रियस्य, मुखं वदनं, सुचिरं चिराय, निर्वर्ण्य निकामं दृष्ट्वा, विस्रब्धं यथा तथा चुम्बितवत्यां सत्यां गण्डस्थली पुलकिता जाता। तां गण्डस्थलीं, आलोक्य दृष्ट्वा, बाला सा, लज्जानम्रमुखी लज्जया नम्रं मुखं यस्यास्तादृशी, हसता प्रियेण सहासेन प्रियेण, चिरं यावत् लज्जापगमः सम्भोगोन्मुख्यं च तावत् चुम्बिता॥ इत्यादिषु प्राचीनकविनिबद्धार्थवत्स्वपि पद्येषु सत्सु निद्राकैतविन इत्यादिपद्यस्य विवक्षितान्यपरवाच्यध्वनिप्रभेदात्मकस्य अलक्ष्यक्रमव्यङ्ग्यस्य शृङ्गाररसध्वनिसमाश्रयणेन नवत्वम्॥

उदाहरणान्तरमाह—यथावेति। तरङ्गभ्रूभङ्गेति। पद्यमिदं द्वितीयोद्द्योते व्याख्यातम्। तत्राचेतननदीवृत्तान्ते चेतनमानिनीवृत्तान्तसमारोपणेन चमत्कृतिजनकत्वाद् रसवत्त्वम्। तस्य च 'नानाभङ्गिभ्रमद्भूरि'त्यादिश्लोकापेक्षया नवत्वमित्यर्थः।

युक्त्येति। यदाश्रयात् यस्य रसादेराश्रितत्वेन, बहुविस्तरः बहुप्रकारः काव्यमार्गः ध्वनिमार्गः, मिथः परस्परमपि, अनन्ततामानन्त्यं प्राप्तः, स रसादिः रसभावादिः, अनया युक्त्या, एतावतोक्तप्रकारेण, अनुसर्तव्यः कविवाण्या नवत्वप्रतिपत्त्यर्थं अन्यतमस्यापि ध्वनिभेदस्य, निबन्धनं करणीयमिति

---

१. "दिशान०" छ. २. "दिशानु०"

यस्य रसादेराश्रयादयं काव्यमार्गः पुरातनैः कविभिः सहस्रसङ्ख्यैरसङ्ख्यैर्वा बहुप्रकारं क्षुण्णत्वान्मिथोऽप्यनन्ततामेति । रसभावादीनां हि प्रत्येकं विभावानुभावव्यभिचारिसमाश्रयादपरिमितत्वम् । तेषां चैकैकप्रभेदापेक्षयापि तावद् वृत्तमुपनिबध्यमानं सुकविभिस्तदिच्छावशादन्यथा स्थितमन्यथैव विवर्तते । प्रतिपादितं चैतच्चित्रविचारावसरे ।

गाथा चात्र कृतैव महाकविना—

अतहट्ठिए वि तहसण्ठिए व्व हिअअंमि जा णिवेसेइ ।
अत्थविसेसे सा जअइ विकडकइगोअरा वाणी ॥
[अतथास्थितानपि तथासंस्थितानिव हृदये या निवेशयति ।
अर्थविशेषान् सा जयति विकटकविगोचरा वाणी ॥ इति च्छाया]

---

उज्जीवनी ।

यावत् । तदेवाह—बहुविस्तर इति । रसभावतदाभासतत्प्रशमनलक्षणः अयं मार्गः, यथास्वं विभावानुभावव्यभिचारिभावादिप्रभेदानां कल्पनया बहुविस्तर इति प्रागेवोक्तम् । स सर्व एव रसादिः अनया युक्त्या उक्तयैव युक्त्या अनुसर्तव्यः अनुसरणीयः । यस्य च उद्द्योतत्रयेण सुनिपुणं सुनिरूपितस्य, रसादेः आश्रयादायोगेन, अयं काव्यमार्गः, पुरातनैः प्राचीनैः, सहस्रसङ्ख्यैः असंख्यैर्वा कविभिः बहुप्रकारं बहुधा, क्षुण्णत्वाद् मिथः अपि आनन्त्यमेति प्राप्नोति । हि यतः, रसभावादीनां, प्रत्येकं पृथग्, विभावानुभावादीनां समाश्रयणेन, अपरिमितत्वं असङ्ख्येयत्वम् । तेषां च रसादीनां, एकैकप्रभेदापेक्षयापि एकमेकं प्रभेदमाश्रित्यापि, उपनिबध्यमानं उपनिबन्धनविषयीभूतं अन्यथा अन्यप्रकारेण, स्थितं विद्यमानं जगद् लौकिकवस्तुजातं, सुकविभिः, तदिच्छावशादिच्छानुसारेण, अन्यथैव अनन्यसाधारणेनैव विवर्तते परिणमति । एतत् चित्रकाव्यनिरूपणावसरे प्रतिपादितम् । अत्र विषये महाकविना गाथां कृतामाह—अतहट्ठिए इति । अतथास्थितानपि अन्यस्य कस्यचिद् रूपेण अविद्यमानानपि अर्थविशेषान् वस्तुविशेषान्, वस्तुतः मुखादेरर्थस्य उपमेयस्य चन्द्रत्वेन स्थित्यभावेऽपि आह्लादकत्वादिधर्मेण, तथासंस्थितानिव चन्द्रत्वेन रूपेण विद्यमानानिव, हृदये सहृदयहृदये निवेशयति आरोपयति । सा विकटकविगोचरा उत्कृष्टकविनिबद्धार्थविषया वाणी, जयति सर्वोत्कर्षेण

तदित्थं रसभावाद्याश्रयेण काव्यार्थानामानन्त्यं सुप्रतिपादितम्। एतदेवोपपादयितुमुच्यते—

**दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥ ४ ॥**

तथाहि विवक्षितान्यपरस्यैव शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यप्रकारसमाश्रयेण नवत्वम्। यथा—धरणीधारणायाधुनात्वं शेषः—इत्यादेः।

शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः।
यदलङ्घितमर्यादाश्चलन्तीं बिभ्रते भुवम् ॥

---

उज्जीवनी।

वर्तते। एवं रसभावादिसमाश्रयणेन काव्यार्थानामानन्त्यं सम्यक् प्रतिपादितम्। एतदेवोपपादयितुं पुनरप्याह—दृष्टेति। काव्ये कविप्रयुक्तशब्दसन्दर्भात्मके, दृष्टपूर्वाः पूर्वं ज्ञाताः, पुरातनकविवर्णितत्वेन ज्ञानविषयीभूताः, सर्वेऽपि अर्थाः अभिधेयाः, रसपरिग्रहात् रसादीनां व्यङ्ग्यानां व्यञ्जनाद् मधुमासे वसन्तकाले दृष्टपूर्वाः पूर्वं वसन्तादवलोकिताः द्रुमा वृक्षा इव नवत्वं नवीनतां प्राप्ता इति आभान्ति शोभन्ते।

तदेवोपपादयितुमाह—तथा हीति। विवक्षितान्यपरवाच्यस्य ध्वनेः शब्दशक्त्युद्भवः यः अनुरणनरूपव्यङ्ग्यस्य प्रकारः तदाश्रयणेन नवत्वं भासते। उदाहरति—यथेति। धरणीति। बाणभट्टविरचिते हर्षचरिते स्थितं वाक्यमिदम्। तृतीयोद्द्योते व्याख्यातमिदम्। अत्र नानार्थस्य शेषशब्दस्य प्रकृतार्थबोधानन्तरं शब्दशक्तिमूलेनानुरणनेन वासुकिहर्षयोः सादृश्यरूप उपमालङ्कारो व्यज्यते। एतदर्थकं प्राचीनपद्यमाह—शेष इति। कश्चित् राजानं स्तौति। शेषः आदिशेषः, हिमगिरिः हिमालयः, त्वं राजा च, एते महान्तः महिताः, गुरवः, स्थिराः अचलस्थितयश्च, यद् यस्मात्, अलङ्घितमर्यादा अनतिक्रान्तमर्यादाः, चलन्तीं चञ्चलां, भुवं भूमिं बिभ्रते बिभ्रति। अत्र भूमेर्भरणाय शेषः, हिमाचलः, राजा चेति त्रयः समर्था इति पूर्वोपवर्णितोऽर्थः, धरणीधारणायेत्यत्र शब्दशक्तिमूलानुरणनध्वनिसमाश्रयणेन कविनोपनिबध्यमानो नवत्वमायाति।

इत्यादिषु सत्स्वपि । तस्यैवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वम् । यथा—'एवं वादिनि देवर्षौ' इत्यादिश्लोकस्य ।

कृते वरकथालापे कुमार्यः पुलकोद्गमैः ।
सूचयन्ति स्पृहामन्तर्लज्जयावनताननाः ॥

इत्यादिषु सत्सु अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिनिष्पन्नशरीरत्वेन नवत्वम् । यथा—'सज्जेइ सुरहिमासो' इत्यादेः ।

सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः ।
रागवतामुत्कलिकाः सहैव सहकारकलिकाभिः ॥

इत्यादिषु सत्स्वप्यपूर्वत्वमेव । अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य

---

उज्जीवनी

तस्यैव (विवक्षितान्यपरवाच्यस्यैव) अर्थशक्तिमूलानुरणनव्यङ्ग्यसमाश्रयणेन नवत्वमाह—यथेति । एवंवादिनीति । व्याख्यातमिदं द्वितीयोद्द्योते । अत्र अर्थशक्तिमूलानुरणनव्यङ्ग्यस्य लज्जाख्यव्यभिचारिभावस्य समाश्रयणेन नवत्वम् । प्राचीनपद्यमाह—कृत इति । वरकथालापे वरस्य कथाया आलापे भाषणे कृते सति, लज्जया भावेन, अवनतं नम्रमाननं यस्याः तादृश्यः कुमार्यः पुलकस्योद्गमैराविर्भावैः अन्तर्हृदि, स्थितां स्पृहामभिलाषं सूचयन्ति । अत्र लज्जाख्यो भावो वाचकशब्देनाभिधीयते । इत्यादिषु सत्स्वपि 'एवंवादिनि' इत्यादिपद्यस्य अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यस्य नवत्वम् ।

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिनिर्मितशरीरत्वेन नवत्वमुदाहरति—यथेति । सज्जेइ इति । द्वितीयोद्द्योते व्याख्यातमिदम् । अत्राचेतनस्य वसन्तस्य मदनबाणसज्जीकरणात्मको वस्तुरूपो व्यञ्जकोऽर्थः कविप्रौढोक्तिमात्रनिष्पन्नशरीरः । तेन वस्तुना वसन्तस्य मन्मथोन्माथकारित्वारम्भरूपं वस्तु व्यज्यते ।

नवीनपद्यमाह—सुरभिसमय इति । सुरभिसमये वसन्तकाले, प्रवृत्ते सति, सहकारकलिकाभिः सहकाराम्रशाणकलिकाभिः मुकुलैः सहैव, रागवतामनुरागवतां, रमणीयाः कमनीयाः, उत्कलिकाः उत्कण्ठा जायन्ते । अत्र सहकारकलिकानां रागवतामुत्कलिकानां सहभावात्मकः सहोक्त्यलङ्कारो

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्न-शरीरत्वेन नवत्वम्* । यथा—'वाणिअअ हत्थिदन्ता' इत्यादिगाथार्थस्य ।

करिणीवेहव्वअरो मह पुत्तो एक्ककंडविणिवाइ ।
हअसोण्हाए तह कहो जह कांडकरंडअं वहइ ॥
(करिणीवैधव्यकरो मम पुत्र एककाण्डविनिपाती ।
हतस्नुषया तथा कृतो यथा काण्डकरण्डकं वहति ॥ इति छाया)

एवमादिष्वर्थेषु सत्स्वपि अनालीढतैव । यथा व्यङ्ग्यभेदसमाश्रयणेन ध्वनेः काव्यार्थानां नवत्वमुत्पद्यते, तथा व्यञ्जकभेदसमाश्रयेणापि । तत्तु

---

## उज्जीवनी

वाच्य एव । सज्जेइ इति पद्येन तु अस्यैवार्थस्य व्यङ्ग्यसमाश्रयणेन नवीनत्वम् । अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्न-शरीरत्वेन नवत्वं प्रदर्शयति—यथेति । वाणिअअ इति । व्याख्यातमिदं तृतीयोद्द्योते । अत्र कविनिबद्धस्य वक्तुः वृद्धव्याधस्य प्रौढोक्तिनिष्पन्न-शरीरस्य, व्याधपुत्रस्य सततसम्भोगक्षामतारूपस्य व्यङ्ग्यार्थस्य समाश्रयणेन नवत्वम् । प्राचीनपद्यमाह—करिणीति । एककाण्डविनिपाती एकस्यैव काण्डस्य बाणस्य विनिपातेन पातनेन । करिणीवैधव्यकरः करिण्या वैधव्यं विधवात्वं करोतीति तादृशः, मम पुत्रः मम तनयः हतस्नुषया हतया दुष्टया स्नुषया पुत्रवध्वा, यथा काण्डकरण्डकं काण्डानां बाणानां, करण्डकं भाजनं तूणीरं वहति वहन् भ्रमति तथा कृतः । एवमादिषु प्राचीनकविनिबद्धार्थवत्यां वाण्यां सत्यामपि वाणिजकेत्यादिपद्यस्य ध्वनिसमाश्रयणेन नवत्वम् ॥ यथेति । ध्वनेः काव्यस्य व्यङ्ग्यभेदसमाश्रयणेन व्यङ्ग्यस्यार्थस्य भेदास्तत्समाश्रयणेन काव्यार्थानां काव्यप्रतिपाद्यानां अर्थानां नवत्वं यथा उत्पद्यते, तथा

---

* "यथा—साअरविइण्णजोव्वणहत्थालंबं समुण्णमन्तेहिं । अब्भुट्ठाणमिव-मम्महस्स दिण्णं तुह थणेहिं ॥ अस्य हि गाथार्थस्य उदिअ......क आभोआ जह जह थणआ विणंति बालाणं । तह तह लद्धावासो व्व मम्महो हिअअमाविसइ ॥ एतद्गाथार्थेन न पौनरुक्त्यम् । यथा वा" (इति भागोऽधिकतया दृश्यते ।) च

ग्रन्थविस्तरभयान्न लिख्यते । स्वयमेव सहृदयैरभ्यूह्यम् । अत्र च पुनः पुनरुक्तमपि सारतयेदमुच्यते—

**व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे सम्भवत्यपि ।**
**रसादिमय एकस्मिन् कविः स्यादवधानवान् ॥ ५ ॥**

अस्मिन्नर्थानन्त्यहेतौ व्यङ्ग्यव्यञ्जकभावे विचित्रे शब्दानां सम्भवत्यपि कविरपूर्वार्थलाभार्थी रसादिमय एकस्मिन् व्यङ्ग्यव्यञ्जकभावे यत्नादवदधीत । रसभावतदाभासरूपे हि व्यङ्ग्ये व्यञ्जकेषु च यथानिर्दिष्टेषु वर्णपदवाक्यरचनाप्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं काव्यं सम्पद्यते । तथा च रामायणमहाभारतादिषु सङ्ग्रामादयः पुनःपुनरभिहिता अपि नवनवाः प्रकाशन्ते—

---

उज्जीवनी

व्यञ्जकानां शब्दानामर्थानां भेदमाश्रित्यापि कविवाण्या नवत्वं सम्पद्यते । तत्तु ग्रन्थविस्तरभयात् ग्रन्थकारेण नोच्यते । स्वयमेव सहृदयैरूह्यम् । पुनःपुनरभिहितस्यापि ध्वनिप्रयोजनस्य सारांशं प्रतिपादयन्नाह—अत्र च पुनः पुनरुक्तमपि सारतयेदमुच्यत इति । व्यङ्ग्येति अस्मिन् पूर्वोक्ते, व्यङ्ग्यव्यञ्जकभावे व्यञ्जकत्वात्मके व्यापारे, विचित्रे वैचित्र्ययुक्ते, सम्भवत्यपि यद्यपि सम्भवति तथापि रसादिमये रसभावादिमये अर्थे एकस्मिन् कविः अवधानवान् स्यात् कविनावहितेन भाव्यमित्यर्थः ॥ तदेवाह—अस्मिन्निति । अस्मिन् एतावता निरूपिते, शब्दानां अर्थानन्त्यहेतौ अर्थानामानन्त्यस्य कारणे, व्यङ्ग्यव्यञ्जकभावे व्यञ्जकतात्मके व्यञ्जनाव्यापारे विचित्रे सम्भवत्यपि, वस्त्वलङ्काररसात्मना वैचित्र्यं प्राप्तवत्यपि, अपूर्वार्थलाभार्थी अपूर्वस्य नूतनस्य, अर्थस्य लाभं अर्थयमानः कविः, रसादिमये रसभावादिरूपे, एकस्मिन् व्यङ्ग्यव्यञ्जकभावे, यत्नाद् यत्नेन । अवदधीत अवधानं कुर्वीत । हि यतः, रसभावतदाभासादिरूपे व्यङ्ग्ये तद्व्यञ्जकेषु व्यञ्जनयार्थंप्रतिपादनेन व्यञ्जकत्वं प्राप्तेषु, यथानिर्दिष्टेषु वर्णपदवाक्यरचनाप्रबन्धेषु कवेः काव्यकर्तुः काव्यं सर्वं अपूर्वं नूतनं सम्पद्यते । तदेवोपपादयति—तथाचेति । रामायणमहाभारतादिषु, सङ्ग्रामादयः युद्धादयः, पुनः पुनरभिहिता अपि असकृत् प्रतिपाद्यमाना अपि, नवनवाः प्रत्येकमभिनवा एव प्रकाशन्ते शोभन्ते ॥

प्रबन्धे चाङ्गी रस एक एवोपनिबध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति । कस्मिन्निवेति चेत्——यथा रामायणे यथा वा महाभारते । रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः शोकः श्लोकत्वमागत इत्येवंवादिना । निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता । महाभारतेऽपि शास्त्ररूपकाव्यच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः । एतच्चांशेन विवृतमेवान्यैर्व्याख्याविधायिभिः । स्वयमेव

---

उज्जीवनी ।

प्रबन्धे च एक एव रसः शृङ्गारादिः अङ्गी अङ्गित्वेनोपनिबध्यमान एव अर्थविशेषस्य विशिष्टार्थस्य लाभं छायातिशयं शोभातिशयं च पुष्णाति पोषयति । दृष्टान्तमुपदर्शयन्नाह—कस्मिन्निवेति । रामायणे वा महाभारते वा । एक एव रसः प्राधान्येनोपनिबद्धः । हि यतः रामायणे आदिकविना वाल्मीकिमहर्षिणा करुणः रसः शोकस्थायिभावकः स्वयमासूत्रितः । एतेन तमसातीरे व्याधशरेणानुविद्धं क्रौञ्चमिथुनादेकं पुमांसं दृष्ट्वा समुपजातकारुण्यस्य महर्षेः वदनारविन्दादाविर्भूतः "मा निषादे"त्यादिश्लोकः । तन्निशमनमनु प्रादुर्भूतेन परमेष्ठिना रामायणप्रबन्धमुपनिबन्धुं अज्ञपितः स महर्षिः करुणरसस्योपनिबन्धनादारभ्य सीताया अत्यन्तवियोगपर्यन्तं स्वस्य रामायणाख्यं प्रबन्धं उपरचयता स एव करुणो रसः निर्व्यूढ इति एकस्य रसस्य प्रबन्धे प्राधान्येनोपनिबन्धने काव्यस्य शोभातिशयः सञ्जात इत्यस्य दृष्टान्तः प्रदर्शितो वेदितव्यः । तथा महाभारतेऽपि शास्त्ररूपकाव्यच्छायान्वयिनि शास्त्रत्वेन काव्यत्वेन च शोभामावहति । वृष्णीनां यादवानां पाण्डवानां च विरसावसानेन वैमनस्यं बोधयन्तीं समाप्तिं निबध्नता महामुनिना व्यासेन स्वप्रबन्धस्य महाभारताख्यस्य प्राधान्येन वैराग्यजननतात्पर्यं परमपुरुषार्थस्य मोक्षस्य साधनं यद् वैराग्यं निर्वेदाख्यः स्थायीभावः तदुत्पादनतत्परत्वं दर्शयता, मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया प्राधान्येन विवक्षाविषयत्वेन विवक्षितत्वेन सूचितः । एतच्च महाभारतस्य प्राधान्येन शान्तरसप्रतिपादनेन काव्यविशेषभूतध्वनित्वं, परमपुरुषार्थस्य मोक्षस्य

चैतदुद्गीर्णं तेनोदीर्णमहामोहमग्नमुज्जिहीर्षता लोकमतिविमलज्ञानालोक-दायिना लोकनाथेन—

यथा यथा विपर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥

इत्यादि बहुशः कथयता । ततश्च शान्तो रसो रसान्तरैर्मोक्षलक्षणः पुरुषार्थः पुरुषार्थान्तरैस्तदुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते । अङ्गाङ्गिभावश्च यथा रसानां तथा प्रतिपादितमेव पारमार्थिकान्तस्तत्त्वानपेक्षया शरीरस्येवाङ्गभूतस्य रसस्य पुरुषार्थस्य च स्वप्राधान्येन चारुत्वमप्यविरुद्धम् । ननु महाभारते यावान्

---

उज्जीवनी

मुख्यतयोपनिबन्धनेन शास्त्रत्वं च, अन्यैरपरैः, व्याख्याविधायिभिः व्याख्या-कारैः अंशेन विवृतं पूर्णत्वेन न व्याख्यातम् । अत्र प्रामाण्यं प्रदर्शयति स्वय-मिति । उदीर्णमहामोहमग्नं उदीर्णे उद्भूते महामोहे महति मिथ्याज्ञाने मग्नं निमग्नं, लोकं भुवनगतान् जनान् उज्जिहीर्षता उद्धर्तुमिच्छता, अतिविमल-ज्ञानालोकदायिना अतिविमलस्य अत्यन्तनिर्मलस्य ज्ञानालोकस्य ज्ञानप्रकाशस्य प्रदात्रा, लोकनाथेन, व्यासमहर्षिणा बहुशो बहुवारं, यथा यथा इत्यादि कथयता वदता, एतद् अयं विषयः, स्वयमेव उदीर्णमुक्तं च । कथितेष्वेक-माह—यथा यथेति । यथा यथा येन येन प्रकारेण लोकतन्त्रं धर्मार्थकामाख्यं पुरुषार्थत्रयं, तदुपायभूतं लौकिकं कार्यजातं विद्यमानत्वेन भासमानमपि, असारं निःसारं विपर्येति विपर्ययं अविद्यमानतां प्राप्नोति । तथा तथा तेन तेन प्रकारेण, अत्र लोकतन्त्रे, विरागो वैराग्यं जायते, अत्र संशयो नास्ति । फलितमाह—ततश्चेति । शान्तो रसः, आस्वाद्यमानो निर्वेदाख्यः स्थायी, रसान्तरैः वीरशृङ्गारादिभिः, तदुपसर्जनत्वेन वीरादीनामङ्गत्वेन तथा मोक्षलक्षणः मोक्षरूपः पुरुषार्थः पुरुषार्थान्तरैः धर्मार्थकामाख्यैस्त्रिभिः, तदुपसर्जनत्वेन मोक्षाङ्गत्वेन, अनुगम्यमानः अनुस्त्रियमाणश्च (शान्तो मोक्षश्च) अङ्गित्वेन प्राधान्येन, विवक्षाविषयो विवक्षित इति महाभारतस्य तात्पर्यं, सुव्यक्तमेव स्पष्टमेवावभासते । रसानां शृङ्गारादीनां अङ्गाङ्गिभावप्रकारश्च पूर्वं प्रतिपादित एव ॥

विवक्षाविषय: सोऽनुक्रमण्यां सर्व एवानुक्रान्तो न चैतत्तत्र दृश्यते, प्रत्युत सर्वपुरुषार्थप्रबोधहेतुत्वं सर्वरसगर्भत्वं च महाभारतस्य, तस्मिन्नुद्देशे स्वशब्दनिवेदितत्वेन प्रतीयते। अत्रोच्यते--सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्य: प्राधान्यमित्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्यां दर्शितम्। दर्शितं तु व्यङ्ग्यत्वेन—

'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातन:'

इत्यस्मिन् वाक्ये। अनेन ह्ययमर्थो व्यङ्ग्यत्वेन विवक्षितो यदत्र महाभारते पाण्डवादिचरितं यत् कीर्त्यते तत् सर्वमवसानविरसमविद्याप्रपञ्चरूपं

---

## उज्जीवनी

महाभारते शृङ्गारादीनां धर्मादीनां च प्रतिपादनं कथमित्याशङ्कायामाह—पारमार्थिकेति। पारमार्थिकं वास्तवं यदन्तस्तत्त्वं प्रधानीभूतार्थतत्त्वं तस्यानपेक्षया अविषयीकरणेन, शरीरस्येव अङ्गिनं देहिनमपेक्ष्य, अङ्गभूतस्य शरीरस्येव रसादे: अङ्गी य: शान्तो रसस्तदपेक्षया अङ्गभूतस्य शृङ्गारवीरादे:, तथा अङ्गिरूपं मोक्षाख्यं पुरुषार्थमपेक्ष्य अङ्गभूतानां धर्मार्थकामानां च, स्वप्राधान्येन अङ्गस्य रसादे: धर्मादेश्च चारुत्वं चमत्कृतिजनकत्वमपि अविरुद्धं न विरुध्यत इत्यर्थ:। आशङ्कते—नन्विति। महाभारते विवक्षाविषय: विवक्षित:—प्रतिपिपादयिषित:, स तावानर्थ:, सर्व एव सर्वोऽपि अनुक्रमण्यां अनुक्रान्त: अनुक्रमेण प्रदर्शित:। एतच्च यदुक्तं शान्तरसस्य प्राधान्यमितरेषां रसानामङ्गत्वं, मोक्षस्य प्राधान्यम्, इतरेषामप्राधान्यं च, तत् तत्र अनुक्रमण्यां न दृश्यते, प्रत्युत वक्ष्यमाणरीत्येन। तस्मिन्नुद्देशे अनुक्रमण्यात्मक उद्देशग्रन्थे, महाभारतस्य सर्वपुरुषार्थप्रबोधहेतुत्वं सर्वेषामपि पुरुषार्थानां प्रबोधनं, सर्वरसगर्भत्वं सर्वेषां रसानां प्रतिपादनं च, स्वशब्दनिवेदितत्वेन वाचकशब्दैरभिधीयमानमेव प्रतीयते ज्ञायते। समाधत्त - अत्रोच्यत इति। सत्यमेवेति। उक्तमिदं तथ्यमेव, यद् अनुक्रमण्यां शान्तस्याङ्गित्वमितरेषां अङ्गत्वं, तथा मोक्षस्याङ्गित्वमन्येषां अङ्गत्वं च स्वशब्दनिवेदितं, तथापि तदिदं व्यङ्ग्यत्वेन प्रतिपादितमेव। भगवान् इति। अत्र महाभारते, भगवान् वासुदेव: वसुदेवात्मज: श्रीकृष्ण: कीर्त्यते स्तूयते। इत्यनेन वाक्येनायं विषयो व्यङ्ग्यत्वेन प्रतिपादित:। प्रतिपादनप्रकारमाह—अनेनेति। अनेन भगवान्

च, परमार्थसत्यस्वरूपस्तु भगवान् वासुदेवोऽत्र कीर्त्यते। तस्मात् तस्मिन्नेव परमेश्वरे भगवति भवत भावितचेतसो, मा भूत विभूतिषु निःसारासु रागिणो गुणेषु वा नयविनयपराक्रमादिष्वमीषु केवलेषु केषुचित् सर्वात्मना प्रतिनिविष्टधियः। तथाचाग्रे—पश्यत, निःसारतां संसारस्येत्यमुमेवार्थं द्योतयन् स्फुटमेवावभासते व्यञ्जकशक्त्यनुगृहीतश्च शब्दः। एवंविधमेवार्थं गर्भीकृतं सन्दर्शयन्तोऽनन्तरश्लोका लक्ष्यन्ते 'स हि सत्यम्' इत्यादयः—अयं च निगूढरमणीयोऽर्थो महाभारतावसाने हरिवंशवर्णनेन समाप्तिं विदधता तेनैव कविवेधसा कृष्णद्वैपायनेन सम्यक् स्फुटीकृतः। अनेन चार्थेन संसारातीते तत्त्वान्तरे भक्त्यतिशयं प्रवर्तयता सकल एव सांसारिको

---

उज्जीवनी

वासुदेवश्चेत्यादिवचनेन। अत्र अस्मिन् महाभारते, यत् कीर्त्यते वर्ण्यते पाण्डवादीनां चरितं, तत् सर्वमवसाने विरसं रसशून्यं, अविद्याप्रपञ्चरूपं च मिथ्यारूपं च, तु किन्तु, परमार्थसत्यस्वरूपः यथार्थसत्यात्मकः भगवान् वासुदेवः श्रीकृष्णः अत्र महाभारते कीर्त्यते स्तूयते। इत्ययमर्थः व्यङ्ग्यत्वेन विवक्षाविषय एव। तस्मादिति। तस्मिन्नेव परमेश्वरे परमैश्वर्ययुक्ते, भगवति वासुदेवे, भावितचेतसः भावितं चेतो यैस्तादृशा भवत स्यात। निःसारासु, असारासु विभूतिषु ऐश्वर्येषु, रागिणः अनुरक्ताः, मा भूत मा भवत। अथवा नयविनयपराक्रमादिषु गुणेषु केवलेषु निकृष्टेषु गुणेषु, सर्वात्मना सर्वप्रकारेणापि, प्रतिनिविष्टधियः प्रतिनिविष्टा अभिनिवेशवती, धीः बुद्धिर्येषां तादृशाः, मा भूत। तथा अग्रे उत्तरग्रन्थे च 'संसारस्य निःसारतां पश्यत' इत्यमुमेवार्थं द्योतयन् प्रकाशयन्, व्यञ्जकशक्त्या व्यञ्जकत्वेन (व्यञ्जनया) अनुगृहीतश्च शब्दः श्रूयते। अनन्तरश्लोकाश्च एवंविधमेवार्थं गर्भीकृतं अन्तःकृतं सन्दर्शयन्तः प्रतिपादयन्तश्च लक्ष्यन्ते दृश्यन्ते। ते च शब्दाः स हि सत्यमित्यादयः॥ अस्मिन् विषये प्रामाण्यं दर्शयितुमाह—अयमिति। निगूढरमणीयः निगूढो रमणीयश्चायमर्थः, महाभारते मुख्यो रसः शान्तः, मोक्षश्च परमः पुरुषार्थ इत्ययमर्थः, महाभारतावसाने हरिवंशवर्णनेन हरेर्विष्णोः वंशस्योपाख्यानेन समाप्तिं समापनं विदधता कुर्वता, तेनैव कविवेधसा कृष्णद्वैपायनेन

व्यवहार: पूर्वपक्षीकृतो न्यक्षेण प्रकाशते । देवतातीर्थतपःप्रभृतीनां च प्रभावातिशयवर्णनं तस्यैव परब्रह्मणः प्राप्त्युपायत्वेन तद्विभूतित्वेनैव देवताविशेषाणाम् अन्येषां च । पाण्डवादिचरितवर्णनस्यापि वैराग्यजननतात्पर्याद्, वैराग्यस्य च मोक्षमूलत्वान्मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्यतया गीतादिषु प्रदर्शितत्वात् परब्रह्मप्राप्त्युपायत्वमेव । परम्परया वासुदेवादिसंज्ञाभिधेयत्वेन चापरिमितशक्त्यास्पदं परं ब्रह्म गीतादिप्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धिमाथुरप्रादुर्भावानुकृतसकलस्वरूपं विवक्षितं न तु माथुरप्रादुर्भावांश एव, सनातनशब्दविशेषितत्वात् रामायणादिषु चानया संज्ञया भगवन्मूर्त्यन्तरे व्यवहारदर्शनात् निर्णीतश्चायमर्थः शब्दतत्त्वविद्भिरेव ॥

---

## उज्जीवनी ।

न्यक्षेण, सम्यक् स्फुटीकृतः प्रकाशितः । संसारातीते तत्त्वान्तरे परब्रह्मतत्त्वे भक्त्यतिशयं प्रवर्तयता निर्वर्तयता, अनेन अर्थेन पूर्वोक्तेनार्थेन, सांसारिकः संसारसम्बन्धी सकलः सर्व एव व्यवहारः न्यक्षेण साकल्येन पूर्वपक्षत्वेन कृत इति प्रकाशते । देवतानां तीर्थानां तपसामेवमादीनामन्येषां च, प्रभावातिशयस्य वर्णनं, तस्यैव परब्रह्मणः प्राप्त्युपायतया भवति । अन्येषां देवतादीनां वर्णनमपि तद्विभूतित्वेन भगवदंशात्मकत्वेन च प्रभावातिशयवर्णनं परिणतं भवति ॥ पाण्डवादीनां धर्मपुत्रादीनां च यच्चरितं वर्णितं तस्य वैराग्यजननतात्पर्यात् वैराग्योत्पादनतत्परतया, वैराग्यस्य मोक्षमूलत्वात् मोक्षहेतुत्वात्, मोक्षस्य, च भगवत्प्राप्त्युपायत्वेन गीतादिषु मुख्यतया प्रधानत्वेन, प्रदर्शितत्वाच्च परब्रह्मप्राप्त्युपायत्व अस्त्येव । वासुदेवादिशब्दानां परब्रह्मवाचकत्वं प्रदर्शयति— परम्परया । गीतादिषु प्रयुक्ता वासुदेवादिशब्दाश्च न लौकिकनामधेयतुल्याः । तेषां लौकिकानां तत्तद्व्यक्तिषु वक्तृयदृच्छासन्निवेशितत्वात् । पितुः वसुदेवसंज्ञाभावेऽपि पुत्रस्य वासुदेवसंज्ञादर्शनात् । गीतादिषु प्रयुक्तो वासुदेवशब्दश्च परब्रह्मपरः । वसुदेवस्यापत्यं पुमानिति मुख्यार्थस्य बाधे परम्परया अनादिप्रयोगप्रवाहेण 'कर्मणि कुशल' इत्यादाविव निरूढलक्षणया ब्रह्मबोधकत्वमस्तीत्यभिप्रायः । अतो गीतादिषु श्रुतो वासुदेवादिशब्दः वासुदेवसंज्ञाभिधेयत्वेन वासुदेवादिसंज्ञाभिः अभिधाविषयत्वेन, अपरिमितशक्त्यास्पदं अपरिमितायाः अप्रमेयायाः शक्तेः आस्पदं आस्थानं, गीतादिप्रदेशान्तरेषु

तदेवमनुक्रमणीनिर्दिष्टेन वाक्येन भगवद्व्यतिरेकिण: सर्वस्यान्यस्यानित्यतां प्रकाशयतः मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये, काव्यनये च तृष्णाक्षय[1] परिपोषलक्षणः शान्तो रसो महाभारतस्याङ्गित्वेन विवक्षित इति सुप्रतिपादितम् । अत्यन्तसारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु

उज्जीवनी ।

गीतादिषु स्थलान्तरेषु । तदभिधानत्वे परब्रह्मसंज्ञात्वेन लब्धप्रसिद्धिः लब्धा प्रसिद्धिर्येन तादृशं, माथुरप्रादुर्भावानुकृतसकलस्वरूपं माथुरेण मथुरायां भवेन, प्रादुर्भावेन अवतारेण, अनुकृतं सकलं सर्वं स्वरूपं येन तादृशम् । परं ब्रह्म विवक्षितम् । न तु माथुरप्रादुर्भावांश एव विवक्षितः । 'भगवान् वासुदेवश्च, कीर्त्यतेऽत्र सनातन' इति सनातनशब्देन विशेषितत्वात् भगवतः । रामायणादौ च, अनया संज्ञया वासुदेवसंज्ञया, भगवन्मूर्त्यन्तरे कपिलवासुदेवादौ व्यवहारदर्शनात् । अयमर्थः शब्दतत्त्वविद्भिः वैयाकरणैः निर्णीतः निश्चितः ।

महाभारतस्य काव्यात्मकत्वं शास्त्रात्मकत्वं च पूर्वमुक्तं स्फुरयति—तदेवमिति । तत् तस्मात्, एवं उक्तप्रकारेण, अनुक्रमणीनिर्दिष्टेन, वाक्येन—

भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥
असत् यत् सदसच्चैव यस्माद् देवाद् प्रवर्तते ।
सन्ततिश्च प्रवृत्तिश्च जन्म मृत्युः पुनर्भवः ॥
अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम् ।
अव्यक्तादि परं यच्च स एव परिगीयते ॥
यत् तद्यतिवरा युक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥
श्रद्दधानः सदोद्युक्तः सत्यधर्मपरायणः ।
आसेवन्निममध्यायं नरः पापात् प्रमुच्यते ॥

---

१. "यसुखप०" च

वाच्यत्वेन । सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति । प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते, न तु साक्षाच्छब्दवाच्यत्वेन । तस्मात् स्थितं एतत्— अङ्गिभूतरसाश्रयेण काव्ये क्रियमाणे नवार्थलाभो भवति, बन्धच्छाया च महती सम्पद्यत इति । अत एव च रसानुगुणार्थविशेषोपनिबन्धनमलङ्कारान्तरविरहेऽपि छायातिशययोगि लक्ष्ये दृश्यते । यथा—

---

## उज्जीवनी

> अनुक्रमणिकाध्यायं भारतस्येममादितः ।
> आस्तिकः सततं शृण्वन् न कृच्छ्रेष्ववसीदति ॥ इत्यादिना

भगवद्व्यतिरेकिणः भगवदतिरिक्तस्य, सर्वस्यापि जगतः अनित्यतां अनित्यत्वं प्रकाशयता (भगवान् वासुदेवश्च इत्यादिवाक्येन) शास्त्रनये, मोक्षलक्षणः मोक्षरूप एव परः पुरुषार्थः, परमपुरुषार्थः एकः मुख्यः प्रधानभूतः, काव्यनये च महाभारतस्य काव्यात्मकत्वे च तृष्णाक्षयपरिपोषलक्षणः तृष्णायाः क्षयस्य वैराग्यस्य यः परिपोषः पोषणं, तल्लक्षणः तद्रूपः शान्तो रसः, अङ्गित्वेन प्रधानतया विवक्षितः वक्तृतात्पर्यविषयीभूत इति । सुप्रतिपादितं सुष्ठु प्रतिपादितम् । अत्यन्तसारभूतश्च अतिप्रधानभूतश्च, अयमर्थः पूर्वोक्तः व्यङ्ग्यत्वेनैव व्यञ्जनाव्यापारगम्यत्वेनैव, दर्शितः, तु किन्तु, वाच्यत्वेन अभिधाव्यापारविषयत्वेन, न दर्शितः । युक्तिमाह—सारभूत इति । हि यतः, सारभूतः अतिशयितचमत्कृत्याधायकः अर्थः, स्वशब्दानभिधेयत्वेन स्वशब्देन वाचकशब्देन यदभिधेयत्वं अभिधानं तदविषयत्वेन प्रकाशितः प्रकाशमुपगतः, सुतरामेव अत्यन्तमेव शोभाम् आवहति । विदग्धविद्वत्परिषत्सु विदग्धानां विदुषां परिषत्सु सभासु, इयं एवम्भूता, प्रसिद्धिः प्रख्यातिः, अस्त्येव विद्यत एव । यद् अभिमततरं अतिशयेन अभिमतं वस्तु व्यङ्ग्यत्वेन व्यञ्जनव्यापारगम्यत्वेन प्रकाश्यते प्रकाशं नीयते । तु किन्तु, साक्षात् शब्दवाच्यत्वेन अभिधाविषयत्वेन न प्रकाश्यते । उपसंहरति—तस्मादिति । अङ्गिभूतरसाश्रयेण अङ्गिभूतं रसमाश्रित्य, काव्ये कविकर्मणि, क्रियमाणे विधीयमाने, नवार्थलाभः नवस्यापूर्वस्य अर्थस्य रसात्मनो लाभः, भवति । बन्धच्छाया बन्धस्य

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ तौ दिव्यौ मत्स्यकच्छपौ ।। इत्यादौ ।

अत्र ह्यद्भुतरसानुगुणमेकचुलुके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति । तत्र ह्येकचुलुके सकलजलधिसन्निधानादपि दिव्यमत्स्यकच्छपदर्शनमक्षुण्णत्वादद्भुतरसानुगुणम् । क्षुण्णं हि वस्तु लोकप्रसिद्ध्याद्भुतमपि नाश्चर्यकारि भवति । न चाक्षुण्णं वस्तूपनिबध्यमानमद्भुतरसस्यैवानुगुणं यावद्रसान्तरस्यापि । तद्यथा—

सिज्जइ रोमञ्चिज्जइ वेवइ रत्थातुलग्गपडिलग्गो ।
सोपासो अज्ज वि सुहअ जेणासि वोलीणो ।।

---

उज्जीवनी ।

प्रबन्धस्य, छाया शोभा च महती सम्पद्यत इति । अत एव हेतोः, अलङ्कारान्तरविरहेऽपि, लक्ष्ये काव्ये रसानुगुणार्थविशेषोपनिबन्धनं रसानुगुणस्यार्थविशेषस्य निबन्धनं, छायातिशययोगि भवति शोभातिशयं पुष्णाति । उदाहरति—यथेति । मुनिरिति । येन अगस्त्येन, एकचुलुके एकस्मिन् चुलुके, दिव्यौ देवतात्मानौ, तौ मत्स्यकच्छपौ मत्स्यः कूर्मश्च, दृष्टौ अवलोकितौ, स योगीन्द्रः योगिवर्यः महात्मा महामहिमशाली, कुम्भसम्भवः तदाख्यो मुनिः महर्षिः, जयति सर्वोत्कर्षेण वर्तते । इत्यादौ काव्ये अत्र एकचुलुके मत्स्यकच्छपदर्शनरूपं यद् वाच्यं तद् अद्भुतरसस्यानुगुणं सत् छायातिशयं शोभातिशयं पुष्णाति वर्धयति । यदि तु एकचुलुके सकलजलधिसन्निधानं अद्भुतरसानुगुणं, तथापि तस्य बहुभिर्वर्णितपूर्वं इति तस्मादपि पूर्वमवर्णितं दिव्यमत्स्यकच्छपदर्शनं, अद्भुतरसस्य सुतरामनुगुणम् । हि यतः, क्षुण्णं वस्तु अद्भुतमपि लोकप्रसिद्ध्या आश्चर्यं न जनयति । अक्षुण्णं हि वस्तु उपनिबध्यमानं वर्ण्यमानं, न केवलमद्भुतरसस्यैवानुगुणं किन्तु रसान्तरस्यापि अनुगुणमेवेत्याशयः । उदाहरति—तद्यथेति । सिज्जइ इति । "स्विद्यति रोमाञ्चति वेपते रथ्यातुलाग्रप्रतिपन्नः । स पार्श्वोऽद्यापि सुभग ! तस्या येनास्याधिगतः " इति च्छाया । हे सुभग ! तस्या नायिकायाः येन पार्श्वेन येन भागेन, रथ्यातुलाग्रप्रतिलग्नः रथ्यायां विशिखायां तुलाग्रेण काकतालीयेन प्रतिलग्नः संस्पृष्टः, त्वमति-

एतद्गाथार्थाद् भाव्यमानाद् या रसप्रतीतिर्भवति सा त्वां स्पृष्ट्वा स्विद्यति रोमाञ्चते वेपते इत्येवंविधादर्थाद् प्रतीयमानात् मनागपि नो जायते।

तदेवं ध्वनिप्रभेदसमाश्रयेण यथा काव्यार्थानां नवत्वं जायते तथा तथा प्रतिपादितम्। गुणीभूतव्यङ्ग्यस्यापि त्रिभेदव्यङ्ग्यापेक्षया ये प्रकारास्तत्समाश्रयेणापि काव्यवस्तूनां नवत्वं भवत्येव। तत्तु विस्तरकारीति नोदाहृतं; सहृदयैः स्वयमुत्प्रेक्षणीयम्।

**ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।**
**न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः॥ ६ ॥**

सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात् प्रतिभागुणः तस्मिंस्त्वसति न किञ्चिदेव कवेर्वस्त्वस्ति। बन्धच्छायाऽपि अर्थद्वयानुरूपशब्दसन्निवेशोऽर्थप्रति-

---

उज्जीवनी

गतोऽसि अतिक्रान्तोऽसि, स पार्श्वः अद्यापि इदानीमपि बहोः कालादनन्तरमपि, स्विद्यति स्विन्नं वर्तते, रोमाञ्चति रोमाञ्चमाप्नोति, वेपते कम्पते च, भाव्यमानात् भावनाविषयीभूतात् एतद्गाथार्थाद् एतस्या गाथाया अर्थात् प्रतिपाद्यात्, या शृङ्गारस्य प्रतीतिः भवति, सा, त्वां दृष्ट्वा स्विद्यति, रोमाञ्चति, वेपते इत्येवंरूपादर्थात्, प्रतीयमानात्मना प्रकाशरूपेण नो जायते न सम्भवति॥

तदिति। एवं पूर्वोक्तप्रकारेण काव्यार्थानां काव्यरूपशब्दसन्दर्भविशेषप्रतिपाद्यानाम्। ध्वनिप्रभेदसमाश्रयेण ध्वनेः यं कमपि भेदं समाश्रित्य नवत्वं नूतनत्वं यथा जायते, तथा प्रतिपादितम्। त्रिभेदव्यङ्ग्यापेक्षया, एवं त्रिभेदव्यङ्ग्यापेक्षया वस्त्वलङ्काररसादिरूपभेदत्रयात्मकं यद् व्यङ्ग्यं प्रतीयमानं वस्तु तदपेक्षया तदनुसारेण ये प्रकारा भेदाः, गुणीभूतव्यङ्ग्यस्यापि तत्समाश्रयणेनापि, तान् भेदान् आश्रित्यापि, काव्यवस्तूनां काव्यप्रतिपाद्यानाम्। नवत्वं भवत्येव। तत् तु अतिविस्तारकरीति ग्रन्थेऽस्मिन् नोदाहृतम्। तथापि सहृदयैः स्वयमुत्प्रेक्षणीयं स्वयमेव सम्भवनीयम्।

प्रतिभायाः काव्यहेतुत्वं निगमयति—ध्वनेरिति। इत्थं एवंप्रकारेण ध्वनेः गुणीभूतव्यङ्ग्यस्य च समाश्रयात् समाश्रयणेन, प्रतिभागुणः कवेः प्रति-

भानाभावे कथमुपपद्यते। अनपेक्षितार्थविशेषाक्षररचनैव बन्धच्छायेति नेदं नेदीयः सहृदयानाम्। एवं हि सत्यर्थनिरपेक्षचतुरमधुरवचनरचनायामपि काव्यव्यपदेशः प्रवर्त्तेत। शब्दार्थयोः साहित्येन काव्यत्वे कथं तथविधे विषये काव्यव्यवस्थेति चेत् परोपनिबद्धार्थरचने यथा तत्काव्यत्वव्यवहारस्तथा तथाविधानां काव्यसन्दर्भाणाम्।

न चार्थानन्त्यं व्यङ्ग्यार्थापेक्षयैव यावद् वाच्यार्थापेक्षयापि इति प्रतिपादयितुमुच्यते—

---

### उज्जीवनी

भारूपो गुणः यदि स्याद् वर्तेत चेत्, काव्यार्थविरामः काव्यार्थानां काव्यस्य शब्दसन्दर्भरूपस्य, अर्थानां आकाङ्क्षायोग्यतादिभिः प्रतिपाद्यानां, अङ्गनाङ्गलावण्यवत् प्रतीयमानानां च, विरामोऽवसानं, न भवेदित्यर्थः। तदेवाह—सत्स्वपीति। पुरातनकवीनां वाल्मीकिप्रभृतीनां, प्रबन्धेषु सत्स्वपि, प्रतिभागुणः आधुनिककवेर्यद्यस्ति, तर्हि, तस्य वाणी नवत्वमायात्येव। तस्मिन् प्रतिभागुणे असति अविद्यमाने, तस्य कवेर्वर्णनीयं किञ्चिदपि वस्तु नास्ति। अर्थप्रतिभानाभावे काव्यार्थस्य प्रतिभानं कवेर्यदि नास्ति, तर्हि, अर्थद्वयानुरूपशब्दसन्निवेशः ध्वनेः गुणीभूतव्यङ्ग्यस्य वाच्यस्य चेत्यर्थद्वयस्यानुरूपाणां शब्दानां सन्निवेशो निबन्धनं, बन्धच्छाया काव्यस्य शोभारूपः भवति। अर्थस्य कस्यचिदपि प्रतिभानाभावे बन्धस्य प्रबन्धस्य छाया कथमुपपद्यते नोपपद्यत इत्यर्थः। अर्थविशेषमनपेक्ष्यैव क्रियमाणा अक्षररचना बन्धच्छायेति तु नेदं सहृदयानां नेदीयः अनभिमतमित्यर्थः। एवं हि तथा सति अर्थापेक्षारहितायां चतुरायां मधुरायां च वचनरचनायां काव्यव्यपदेशः प्रवर्तेत। तस्या अपि काव्यत्वं वक्तव्यं स्यादित्याक्षेपः। समाधत्ते—शब्दार्थयोरिति। नखलु शब्दस्य अर्थस्य वा केवलं काव्यत्वं किन्तु अर्थसाहित्येनैव अर्थविशिष्टत्वेनैव शब्दस्य काव्यत्वमिति अर्थानपेक्षशब्दरचनायां काव्यत्वं नास्ति। तत्रापि काव्यत्वमङ्गीकुर्वतां मते तु तथाविधे विषये काव्यव्यवस्था काव्यव्यपदेशः कथमुपपद्यत इति चेत् परोपनिबद्धस्यार्थस्य विरचने निबन्धने तत्काव्यत्वव्यवहारः न मुख्यः, तथा तथाविधानां काव्यसन्दर्भाणामपि मुख्यत्वं नाङ्गीक्रियत इत्यर्थः।

**अवस्थादेशकालादिविशेषैरपि जायते ।**
**आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः ॥ ७ ॥**

शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्यानन्त्यमेव जायते स्वभावतः । स्वभावो ह्ययं वाच्यानां चेतनानामचेतनानां च यदवस्थाभेदाद् देशभेदात् कालभेदात् स्वालक्षण्यभेदाच्चानन्तता भवति । तैश्च तथा व्यवस्थितैः सद्भिः प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्यापि तावदुपनिबध्यमानैर्निरवधिः काव्यार्थः सम्पद्यते । तथा ह्यवस्थाभेदान्नवत्वं यथा—

भगवती पार्वती कुमारसम्भवे 'सर्वोपमाद्रव्यसमुच्चयेन' इत्यादिभिरुक्तिभिः प्रथममेव परिसमापितरूपवर्णनापि, पुनर्भगवतः शम्भोर्लोचनगोचरमायान्ती

---

## उज्जीवनी

एवं व्यङ्ग्यार्थापेक्षया अर्थानामानन्त्यमुपदर्शितम् । तथापि न व्यङ्ग्यार्थापेक्षयैव तेषामानन्त्यं किन्तु वाच्यार्थापेक्षयापि अर्थानन्त्यं, तेन कविवाण्या वाच्यार्थविषयाया अपि सहृदयश्लाघ्यत्वं सारभूतत्वं च भवतीति ग्रन्थकृदाशयः स्फुट एवावगम्यते । तत्प्रतिपादनायोच्यते—अवस्थेति । शुद्धस्यापि व्यङ्ग्यार्थापेक्षाविरहितस्यापि वाच्यस्य केवलस्य अवस्थादेशकालादिविशेषैरपि अवस्थाविशेषेण, देशविशेषेण, कालविशेषेण, आदिपदात् स्वरूपविशेषेणापि, स्वभावतः आनन्त्यमेव जायते । तदेवाह—शुद्धस्येति । अनपेक्षितव्यङ्ग्यस्य शुद्धस्य वाच्यस्यापि स्वभावत आनन्त्यं जायत एवेत्यर्थः । हि यस्मात् अयं वाच्यानां स्वभावः, चेतनानामचेतनानां च, अवस्थाभेदाद्, देशभेदात्, कालभेदात् स्वालक्षण्य (स्वरूप) भेदाच्च अनन्तता अर्थानन्त्यं भवति । तथा व्यवस्थितैः अवस्थादिभेदेन भिन्नरूपैः सद्भिः तैः वाच्यैः, प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्यापि प्रसिद्धस्य अनेकस्य स्वभावस्य वर्णनरूपया स्वभावोक्त्यापि स्वभाववर्णनेन अलङ्कारात्मना उपनिबध्यमानैः काव्यार्थः निरवधिः सम्पद्यते । तेन च वाणी नवतां याति । उदाहरति—तथाहीति । अवस्थाभेदान्नवत्वं यथेति ।

कुमारसम्भवे काव्ये भगवती पार्वती 'सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन । सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव' ।

'वसन्तपुष्पाभरणं वहन्ती' मन्मथोपकरणभूतेन भङ्ग्यन्तरेणोपवर्णिता। सैव च पुनर्नवोढोद्वाहसमये प्रसाध्यमाना 'तां प्राङ्मुखीं तत्र निवेशयन्ती' इत्याद्युक्तिभिर्नवेनैव प्रकारेण निरूपितरूपसौष्ठवा। न च ते तस्य कवेरेकत्रैवासकृत् कृता वर्णप्रकारा अपुनरुक्तत्वेन वा नवनवार्थनिर्भरत्वेन वा प्रतिभासन्ते। दर्शितमेव चैतद् विषमबाणलीलायाम्—

> ण अ ताण घडइ ओही ण अ ते दीसन्ति कह वि पुणरुत्ता।
> जे बिब्भमा पिआण अत्था वा सुकविवाणीणं॥

अयमपरश्चावस्थाभेदप्रकारो यदचेतनानां सर्वेषां चेतनं द्वितीयं रूपमभिमानित्वप्रसिद्धं हिमवद्गङ्गादीनाम्। तच्चोचितचेतनविषयस्वरूपयोजनयोपनिबध्यमानमन्यदेव सम्पद्यते। यथा कुमारसम्भव एव पर्वतस्वरूपस्य हिमवतो

---

### उज्जीवनी

[कुमारसम्भव: I. 49] इत्यादिभिः वचनैः प्रथममेव वर्णिता। तत्र परिसमापितमपि तद्वर्णनं पुनः भगवतः शिवस्य लोचनगोचरमायान्ती तपस्यतः शिवस्य पुरोभुवि प्रत्यक्षीभवन्ती देवी तदवस्थायां "अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युति कर्णिकारम्। मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती" [कुमारसम्भव: III. 59] शिवस्य कामोद्दीपनसामग्रीरूपेण भङ्ग्यन्तरेणोपवर्णिता। सैव पार्वती नवोद्वाहसमये प्रसाध्यमाना अलङ्क्रियमाणा "तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः। भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने सन्निहितेऽपि नार्यः॥" [कुमारसम्भव:—VII. 13.] इत्यादिभिरुक्तिभिः नवेनैव नूतनेनैव प्रकारेण निरूपितरूपसौष्ठवा निरूपितं वर्णितं रूपस्य सौष्ठवं यस्यास्तादृशी। ते च वर्णनप्रकाराः एकत्रैव एकस्यामेवावस्थायां असकृत् न कृताः। अतः अपुनरुक्तत्वेन, किन्तु अवस्थाभेदेनैव वर्णिताः प्रतिभासन्ते पुनरुक्तत्वेन न प्रतिभासन्ते। नवनवार्थपूर्णत्वेन प्रतिभासन्ते च दर्शितमिदं विषमबाणलीलायाम्। णेति। "न च तेषां घटतेऽवधिः न च ते दृश्यन्ते कथमपि पुनरुक्ताः। ये विभ्रमाः प्रियाणां अर्था वा सुकविवाणीनाम्" इति च्छाया। प्रियाणां कामिनीनां विभ्रमा विलासाः, सुकविवाणीनां अर्था वा ये तेषामुभयेषामपि अवधिः सीमा न विद्यते। ते पुनरुक्ताश्च पुनर्विहिताश्च न दृश्यन्ते। अपरः अन्यश्च, अयमवस्था-

वर्णनं पुनः सप्तर्षिप्रियोक्तिषु चेतनतत्त्वरूपापेक्षया प्रदर्शितं तदपूर्वमेव प्रतिभाति, प्रसिद्धश्चायं सत्कवीनां मार्गः। इदं च प्रस्थानं कविव्युत्पत्तये विषमबाणलीलायां सप्रपञ्चं दर्शितम्। चेतनानां च बाल्याद्यवस्थाभिरन्यत्वं सत्कवीनां प्रसिद्धमेव। चेतनानामवस्थाभेदेऽपि अवान्तरावस्थाभेदान्नानात्वम्। यथा कुमारीणां कुसुमशरभिन्नहृदयानामन्यासां च। तत्रापि विनीतानामविनीतानां च। अचेतनानां च भावानामारम्भाद्यवस्थाभेदभिन्नानामेकैकशः स्वरूपमुपनिबध्यमानमानन्त्यमेवोपयाति। यथा—

हंसानां नि[1]नदेषु यैः कवलितैरासज्यते कूजता—
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः।

---

## उज्जीवनी

भेदप्रकारः वर्तते। यत् सर्वेषां अचेतनानां हिमवद्गङ्गादीनां अभिमानित्व प्रसिद्ध आभिमानिकं द्वितीयं रूपं वर्तते। तच्च आभिमानिकं रूपं च। उचित चेतनविषयकं च यत् स्वरूपं तस्य योजनया तदायोजनेन उपनिबध्यमानं वर्ण्यमानं सद् अन्यदेव अन्यत्वेनैव सम्पद्यते। उदाहरणमाह— यथेति। कुमारसम्भवे पर्वतस्वरूपस्य हिमवतः वर्णनं, पुनः पश्चात् सप्तर्षीणां प्रियवचनावसरे चेतनतत्त्वरूपापेक्षया आभिमानिकरूपवत्त्वेन प्रदर्शितं वर्णितं यत् तदपूर्वत्वेन प्रतिभाति। अयं च मार्गः सत्कवीनां प्रसिद्ध एव। इदं च प्रस्थानं कविव्युत्पत्तये कवीनां व्युत्पत्तिसिद्ध्यर्थं विषमबाणलीलायां सप्रपञ्चं प्रदर्शितम्। बाल्यादिभिरवस्थाभिः चेतनानां वर्ण्यमानानां स्वरूपस्यापि अन्यत्वं नूतनत्वं सत्कवीनां प्रसिद्धमेव। चेतनानां तु अवस्थाभेदानामप्यवान्तरभेदाः वर्तन्त इति नानात्वं चावस्थानाम्। यथेति। कुमारीणां कुसुमशरभिन्नहृदयत्वं कासाञ्चिदन्यासां च न तथाविधत्वम्। तत्रापि काश्चन विनीताः काश्चनाविनीताः अचेतनानां भावानां वस्तूनामारम्भादयो या अवस्थास्तासां भेदेन भिन्नस्वरूपाणां एकैकशः एकैकावस्थाक्रमेण स्वरूपं वर्ण्यं, मानमानन्त्यमेवोपयाति प्राप्नोति। उदाहरति यथेति। हंसानामिति। कवलितैः भक्षितैः यैः (बिसैः) कूजतां शब्दायमानानां हंसानां निनदेषु निना-

---

१. "सरसीषु" च

तें सम्प्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः ।

एवमन्यत्रापि दिशयानयानुसर्तव्यम् ॥

देशभेदान्नानात्वं अचेतनानां तावत् । यथा वायूनां नानादिग्देशचारिणा-मन्येषामपि सलिलकुसुमादीनां प्रसिद्धमेव । चेतनानामपि मानुषपशुपक्षि-प्रभृतीनां ग्रामारण्यसलिलादिसमेधितानां परस्परं महान् विशेषः समुपलक्ष्यत एव । स च विविच्य यथायथमुपनिबध्यमानस्तथैवानन्त्यमायाति । तथाहि—मानुषाणामेव तावत् दिग्देशादिभिन्नानां ये व्यवहारव्यापारादिषु विचित्रा विशेषास्तेषां केनान्तः शक्यते गन्तुम् ; विशेषतो योषिताम् । उपनिबध्यते च तत् सर्वमेव सुकविभिर्यथाप्रतिभम् ।

---

उज्जीवनी

देषु, कषायकण्ठलुठनात् कषाये मधुरस्वरे कण्ठे लुठनात् परिवर्तनात् । अन्यः नूतनः कोऽपि अनिर्वचनीयः विभ्रमो विलासः, आसज्यते आयोज्यते । ते (बिसाः) सम्प्रति वसन्तारम्भे, अकठोरवारणवधूदन्ताङ्कुरस्पर्धिनः अकठोरः मृदुः, वारणवध्वाः करिण्याः, यो दन्ताङ्कुरः सद्यःप्रादुर्भवद्दन्तः तत्स्पर्धिनः तत्तुल्याः । कमलाकरेषु कमलसरःसु, बिसिनीकन्दाग्रिमग्रन्थयः बिसिन्याः पद्मिन्याः कन्दस्याग्रिमाः अग्रे भवाः ग्रन्थाः निर्याताः, नवीनप्ररोहत्वेना-विर्भूता इत्यर्थः ॥ अत्राचेतनस्य बिसस्यावस्थाभेदेन स्वरूपभेदवर्णनेनान-न्त्यम् । अनया अन्यत्रापि अनुसर्तव्यम् ।

अचेतनानां देशभेदान्नानात्वमुदाहरति—यथेति । नानादिक्षु देशेषु च सञ्चरतां वायूनां, अन्येषां सलिलकुसुमादीनां च नानात्वं प्रसिद्धमेव । तथा चेतनानामपि मनुष्य,पशु,पक्षिप्रभृतीनां ग्रामे, अरण्ये, सलिले तथाविधेऽन्यत्र च संवर्धितानां परस्परं महान् विशेषः भेदः समुपलक्ष्यत एव दृश्यत एव । तदेवो-पपादयति—तथाहीति । दिग्देशादिभिन्नानां दिग्भेदजन्मना देशभेदजन्मना च भिन्नानां मानुषाणां, एव ये विशेषा भेदाः तेषामन्तः केन गन्तुं शक्यते, न कोऽपि तेषामन्तर्गन्तुं समर्थः । तत् सर्वमेव च सुकविभिः यथाप्रतिभं स्वस्वप्रतिभानुसारेण उपनिबध्यते वर्ण्यते ॥

कालभेदाच्च नानात्वम् । यथर्तुभेदात् दिग्व्योमसलिलादीनामचेतनानाम् । चेतनानां चौत्सुक्यादयः कालविशेषाश्रयिणः प्रसिद्धा एव । स्वालक्षण्यप्रभेदाच्च सकलजगद्गतानां वस्तूनां विनिबन्धनं[1] प्रसिद्धमेव । तच्च यथावस्थितमपि तावदुपनिबध्यमानमनन्ततामेव काव्यार्थस्यापादयति ।

अत्र केचिदाचक्षीरन्—यथा सामान्यात्मना वस्तूनि वाच्यतां प्रतिपद्यन्ते, न विशेषात्मना । तानि हि स्वयमनुभूतानां सुखादीनां तन्निमित्तानां स्वरूपमन्यत्रारोपयद्भिः स्वपरानुभूतरूपसामान्यमात्राश्रयेणोपनिबध्यन्ते कविभिः । न हि तैरतीतमनागतं वर्तमानं च परचित्तादिस्वलक्षणं योगिभिरिव प्रत्यक्षीक्रियते । तच्चानुभाव्यानुभवसामान्यं सर्वप्रतिपत्तृसाधारणं परिमितत्वात् पुरातनानामेव गोचरीभूतं तथास्य विषयत्वानुपपत्तेः । अत एव स प्रकारविशेषो

---

## उज्जीवनी

कालभेदादपि नानात्वं वर्तते । यथा—अचेतनानां दिशां, व्योम्नः, सलिलादीनां च ऋतुभेदमाश्रित्य वर्णनेन आनन्त्यम् । तथा चेतनानां कालविशेषाश्रयिणः कालविशेषमाश्रित्य प्रवर्तमानाः औत्सुक्यादयः प्रसिद्धा एव ! स्वालक्षण्यभेदात् स्वरूपभेदाच्च, सकलजगद्गतानां वस्तूनां विनिबन्धनं निबन्धनमपि प्रसिद्धम् । तच्च स्वरूपं च यथास्थितमपि तत्तद्रूपमनतिक्रम्य स्वरूपावस्थितमपि, तावद्, उपनिबध्यमानं काव्यार्थस्यानन्ततां आपादयत्येव ।

केषाञ्चित् पक्षं प्रदर्शयति—अत्रेति । अत्र अस्मिन् विषये । केचिदाचक्षीरन् ब्रूयुः । वस्तूनि पदार्थरूपाणि, सामान्यात्मना सामान्यरूपेण, यथा प्रतिपाद्यन्ते प्रतिपादनविषयीभवन्ति, तथा विशेषात्मना विशेषरूपेण तत्तत्स्वरूपविशेषेण न प्रतिपाद्यन्ते । तानि हि वस्तूनि, स्वयमात्मना, अनुभूतानां स्वज्ञानविषयीभूतानां स्रक्चन्दनादीनां स्वरूपम् । अन्यत्र सुखादिषु तन्निमित्तभूतेषु, आरोपयद्भिः कविभिः स्वेन परैश्च, अनुभूतमनुभवविषयीभूतं यद् रूपसामान्यं तदाश्रयेण तदाश्रित्य उपनिबध्यते वर्ण्यते । तैः कविभिः अतीतं भूतं, अनागतं भविष्यत्, वर्तमानं च परचित्तादिस्वलक्षणं परचित्तादिस्वरूपं योगिभिरिव योगिभिर्यथा योगाभ्यासजनितशक्तिविशेषेण अतीतानागतादिकं प्रत्यक्षीक्रियते, तथा-

---

1. "नमविगतीमे"० च.

यैरद्यतनैरभिनवत्वेन प्रतीयते, तेषां[1]मभिमानमात्रमेव भणितिकृतं वैचित्र्य मात्रमत्रास्तीति ।

*तत्रोच्यते—यत्तूक्तं सामान्यमात्राश्रयेण काव्यप्रवृत्तिस्तस्य च परिमितत्वेन प्रागेव गोचरीकृतत्वान्नास्ति नवत्वं काव्यवस्तूनामिति, तदयुक्तम् । यतो यदि सामान्यमात्रमाश्रित्य काव्यं प्रवर्तते, किंकृतस्तर्हि महाकविनिबध्यमानानां काव्यार्थानामतिशयः । वाल्मीकिव्यतिरिक्तस्यान्यस्य काव्यार्थस्याभावात् ।

उज्जीवनी

न्यैर्न प्रत्यक्षीकर्तुं शक्यते । तच्चानुभाव्यानुभावकसामान्यं सुखाद्यनुभवविषयसामान्यं अनुभवजनकस्रक्चन्दनादिसामान्यं च सर्वप्रतिपत्तृसाधारणं सर्वेषां प्रतिपत्तॄणां ज्ञातॄणां समानं परिमितत्वात् परिच्छिन्नत्वात्, पुरातनानामेव गोचरीभूतं प्राचामेव ज्ञानविषयीभूतम् । तथा तेनैव प्रकारेण अस्य विशेषस्य योगिभिन्नजनसामान्यानुभवविषयत्वाभावादेव । स प्रकारविशेषः वस्तुविशेषरूपः प्रकारः, अद्यतनैः आधुनिकैः, अभिनवत्वेन प्रतीयते नूतनत्वेन ज्ञायते, तेषां अत्रविषये, भणितिकृतं वैचित्र्यं उक्तिवैचित्र्यमात्रमेवेति यदुच्यते तदभिमानमात्रमेव भ्रम एवेत्यर्थः ।

तद् दूषयति—तत्रोच्यत इति । सामान्यमात्राश्रयेण सामान्यमात्रमाश्रित्य काव्यप्रवृत्तिः काव्यस्य कविकर्मणः प्रवर्तनं, तस्य च परिमितत्वेन परिच्छिन्नत्वेन, प्रागेव पूर्वमेव, गोचरीकृतत्वात्, काव्यवस्तूनां काव्यप्रतिपाद्यानां वस्तूनां, नवत्वं नूतनत्वं नास्ति इति यत्तु उक्तं तदयुक्तम् । अयुक्ततामेवाह—यत इति, यतः यस्मात् कारणात् । सामान्यमात्रमाश्रित्य पदार्थान् सामान्यरूपेण यद्वर्णनं तदात्मना, काव्यं कविकर्म, यदि प्रवर्तते महाकविभिः निबध्यमानानां कोऽतिशयः किंकृतश्चातिशयः । अतिशयो नूतनत्वं न भवेदेवेत्यर्थः । सामान्यस्य सामान्यरूपेण चादिकविना वाल्मीकिनैव प्रदर्शितत्वात् वर्णितत्वात् । सामान्यव्यतिरिक्तस्य अन्यस्य काव्यार्थस्याभावात् । वाल्मीकिव्यतिरिक्तस्य वाल्मीकि-

१. "षां भ्रममा०" च

* तत्रोच्यते—यदि सामान्याश्रयेण काव्यप्रवृत्तिः तत्प्रदर्शितप्रकारं काव्यवैचित्र्यमवस्थाविशेषात् किं पुनरुक्तमेवास्तु । न चेत् तत् तथा तत् कथं न काव्यानन्त्यम् ।" (इत्यधिकतया पाठो दृश्यते ।) च

सामान्यस्य चादिकविनैव प्रदर्शितत्वात्। उक्तिवैचित्र्यान्नैव दोष इति चेत्—किमिदमुक्तिवैचित्र्यम्। उक्तिर्हि वाच्यविशेषप्रतिपादितवचनम्। तद्वैचित्र्ये कथं न वाच्यवैचित्र्यम्। वाच्यवाचकयोरविनाभावेन प्रवृत्तेः। वाच्यानां च काव्ये प्रतिभासमानानां यद् रूपं तत् तु ग्राह्यविशेषाभेदेनैव प्रतीयते। तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताप्यवश्यमेवाभ्युपगन्तव्यम्। तदयमत्र संक्षेपः—

> वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित्।
> इष्यते प्रतिभार्थेषु तत्तदानन्त्यमक्षयम्।

किं च उक्तिवैचित्र्यं यत् काव्यनवत्वे निबन्धनमुच्यते तदस्मत्पक्षानुगुणमेव। यतो यावानयं काव्यार्थानन्त्यभेदहेतुः प्रकारः प्राग् दर्शितः, स सर्व एव पुनरुक्तिवैचित्र्याद् द्विगुणतामापद्यते। यश्चायमुपमाश्लेषादिरलङ्कारवर्गः प्रसिद्धः

---

उज्जीवनी।

भिन्नस्य अन्यस्य कस्यचिदपि कवित्वव्यपदेश एव वा न स्यात्। गोत्वादिना सकलगवादिव्यक्तीनां वर्णनविषयीभूतत्वात् गोत्वादिशून्यस्य कस्याश्चिदपि गवादिव्यक्तेरसम्भवात्। वर्णनीयत्वेन व्यक्तीनामप्रसिद्धिः सामान्यद्वारेण सर्वासां व्यक्तीनां वर्णितपूर्वत्वात्।

न च सामान्यरूपेण वर्णितस्यापि विशेषरूपेण वर्णनेनोक्तिवैचित्र्यमेवेति नायं दोष इति वाच्यम्। उक्तिवैचित्र्यस्य वाच्यविशेषप्रतिपादकवचनात्मकत्वे तस्यैव वाच्यवैचित्र्यात्मकत्वात्। वाच्यवाचकयोरविनाभावेन तादात्म्येन प्रवृत्तेः। काव्ये प्रतिभासमानानां वाच्यानां वस्तूनां, यद् रूपं सामान्यं तत्तु ग्राह्याणां ग्रहविषयाणां विशेषैः सह अभेदेन प्रतीयते। तेन ततः, उक्तिवैचित्र्यमङ्गीकुर्वता वाच्यवैचित्र्यम्। अनिच्छतापि अकामेनापि। अवश्यमभ्युपगन्तव्यमङ्गीकरणीयम्। फलितमाह—अयमत्र संक्षेप इति। वाल्मीकीति। वाल्मीकिव्यतिरिक्तस्य वाल्मीकिभिन्नस्य, कस्यचिदेकस्यापि अर्थेषु विशेषरूपेण प्रतिभा यदि इष्यते यद्यनुमन्यते, तत् तर्हि, तदानन्त्यमर्थानन्त्यं अक्षयमनश्वरम्। किञ्च, काव्यस्य नवत्वे, यदिदमुक्तिवैचित्र्यं निबन्धनमित्युच्यते, तदस्मत्पक्षस्यानुगुणम्, अनुरूपमेव। तस्य हेतुमाह—यत इति। यतः यस्मात्, काव्यार्थानन्त्ये काव्यार्थानामानन्त्ये हेतुः कारणीभूतः, यावान् प्रकारः प्रदर्शितः, स सर्व एव, उक्तेः

स भणितिवैचित्र्यादुपनिबध्यमानः स्वयमेवानवधिर्धत्ते पुनः शतशाखताम् । भणितिश्च [1]स्वभाषाभेदेन व्यवस्थिता सती प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं पुनरपरं काव्यार्थानामानन्त्यमापादयति । यथा ममैव—

> मह मह इत्ति भणंतउ वज्जदि कालो जणस्स ।
> तोइ ण देउ जणद्दण गोअरी भोदि मणसो ॥

इत्थं यथा यथा निरूप्यते तथा तथा न लभ्यतेऽन्तः काव्यार्थानाम् । इदं तूच्यते—

**अवस्थादि[2] विभिन्नानां वाच्यानां विनिबन्धनम् ।**

यत् प्रदर्शितं प्राक् ।

---

### उज्जीवनी

वैचित्र्यात् विचित्रतया पुनरपि, द्विगुणतामनेकगुणतां, आपद्यते प्राप्नोति ; प्रसिद्धः यश्चायमुपमाश्लेषादिरलङ्कारवर्गः, स भणितिवैचित्र्यात् उक्तिवैचित्र्येण, उपनिबध्यमानः पुनः, अनवधिः अवधिरहितः,स्वयमेव शतशाखतां अनन्ततां धत्ते प्राप्नोति । भणितिश्च स्वस्वभाषाभेदेन व्यवस्थिता, प्रतिनियतासु तत्तद्भाषासु, प्रतीतिविषयस्यार्थवैचित्र्यस्य निबन्धनं पुनः काव्यार्थानामपरमन्यदपि आनन्त्यमापादयति । उदाहरति—यथा ममैवेति । मह महेति । "मम मम इति भणतो व्रजति कालो जनस्य । तथापि न देवो जनार्दनो गोचरो भवति मनसः ॥" इति च्छाया । "जनार्दनो मम" "जनार्दनो मम" इति भणतः वदतः, जनस्य कालो व्रजति गच्छति । तथापि देवो जनार्दनः मनसः गोचरो न भवति इत्यर्थः । जनार्दनस्य ज्ञानगोचरत्वं विना मम जनार्दन इति कथं वक्तुं युक्तमिति तथा सर्वदा भणतोऽपि जनार्दनो न बुद्धिविषय इति विरोधाभासालङ्कारः । अत्र मह मह इति सैन्धवभाषामयी उक्तिः, अर्थस्य वैचित्र्यं सम्पादयति । इत्थं एवं, यथा यथा येन येन प्रकारेण निरूप्यते वर्ण्यते, तथा तथा तेन तेन प्रकारेण, काव्यार्थानां काव्यरूपशब्दप्रतिपाद्यानां वस्तूनां, अन्तः अवसितिः, न लभ्यते नास्ति । तु किन्तु, इदमस्माभिरुच्यते । अवस्थेति । अवस्थादिविभिन्नानां अवस्थादेशकालविशेषादिभेदेन भिन्नानां, वाच्यार्थानां निबन्धनम् । यदस्माभिः प्राक्पूर्वं प्रदर्शितं उक्तम् । भूम्ना बाहुल्येन, लक्ष्ये

---

१. "कथाभे०" च          २. "भेदभि०" छ

भूम्नैव दृश्यते लक्ष्ये
न तच्छक्यमपोहितुम्
तत्तु भाति रसाश्रयात् ॥ ८ ॥

तदिदमत्र संक्षेपेणाभिधीयते सत्कवीनामुपदेशाय ॥

रसभावादिसम्बद्धा यद्यौचित्यानुसारिणी ।
अन्वीयते वस्तुगतिर्देशकालादिभेदिनी ॥ ९ ॥

तत् का गणना कवीनामन्येषां परिमितशक्तीनाम् ।

वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः ।
निबद्धा या क्षयं नैति प्रकृतिर्जगतामिव ॥ १० ॥

यथा हि जगत्प्रकृतिरतीतकल्पपरम्पराविर्भूतविचित्रवस्तुप्रपञ्चा सती पुनरिदानीं परिक्षीणा [1]परपदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम् । तद्वदेवेयं काव्यस्थितिरनन्ताभिः कविमतिभिरुपभुक्तापि नेदानीं परिहीयते,

---

उज्जीवनी ।

दृश्यत एव । अतः तत्, अपोहितुं, त्यक्तुं न शक्यम् । किन्तु तत् निबन्धनं, रसाश्रयात् रसादेराश्रयात् भाति प्रकाशते ।

उक्तमुपसंहरन्नाह—तदिदमिति । तदिदं पूर्वोक्तं सत्कवीनामुपदेशाय सत्कवित्वमीप्सत उपदेष्टुं संक्षेपेण अभिधीयते सङ्गृह्य उच्यते ॥

रसेति । औचित्यानुसारिणी औचित्यानुसारेण प्रवर्तमाना, देशकालादिभेदिनी देशविशेषकालविशेषादिभेदवती, रसभावादिसम्बद्धा रसभावादिभिर्युक्ता, वस्तुगतिः यदि अन्वीयते अनुस्रियते, तत् तर्हि परिमितशक्तीनां परिमिता काव्यनिर्माणशक्तिर्येषां तादृशानाम् । अन्येषां कवीनां का गणना तैः कविभिर्वर्णितत्वादिति न ब्रूमः, किन्तु वाचस्पतिसहस्राणां सहस्रैरपि बहुभिर्बृहस्पतिभिरपि, यत्नतः निबद्धा सा वस्तुगतिः जगतां प्रकृतिरिव जगतो मूलकारणीभूता प्रकृतिरिव, क्षयं नैति न प्राप्नोति । तदेवाह—यथाहीति । यथा,

---

1. "पदार्थनि०"च

प्रत्युत नवनवाभिर्व्युत्पत्तिभिः परिवर्धते । इत्थं स्थितेऽपि—

**संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।**

स्थितं ह्येतत् संवादिन्य एव मेधाविनां बुद्धयः । किन्तु

**नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥ ११ ॥**

कथमिति चेत्—

**संवादो ह्यन्यसादृश्यं यत् पुनः प्रतिबिम्बवत् ।**
**आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम् ॥ १२ ॥**

संवादो हि काव्यार्थस्योच्यते, यदन्येन काव्यवस्तुना सादृश्यम् । तत् पुनः शरीरिणां प्रतिबिम्बवदालेख्याकारवत्, तुल्यदेहिवच्च त्रिधा व्यवस्थितम् । किञ्चिद्धि काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बकल्पं, अन्यदालेख्यप्रख्यं, अन्यत् तुल्येन शरीरिणा सदृशम् ।

---

उज्जीवनी ।

हि, जगत्प्रकृतिः जगतो मूलकारणीभूता प्रकृतिः, अतीतासु कल्पपरम्परासु आविर्भूतः, विचित्रवस्तूनां प्रपञ्चः यस्यास्तादृशी सती, पुनः इदानीं परपदार्थनिर्माणशक्तिः परेषामन्येषां पदार्थानां निर्माणे शक्तिः सामर्थ्यं, परिक्षीणेत्यभिधातुं न शक्यम्, तद्वदेव इयं काव्यस्थितिः । अनन्ताभिः कविमतिभिः, उपभुक्तापि इदानीं न परिहीयते, न क्षीणा भवति । प्रत्युत, नवनवाभिः व्युत्पत्तिभिः परिवर्धते, एवं सत्यपि संवादा भवन्त्येवेत्याह—संवादा इति । सुमेधसां धीमतां, बाहुल्येन भूम्ना, संवादाः सादृश्यानि, भवन्त्येव । मेधाविनां बुद्धयः संवादिन्य इति स्थितमेवेदम् । अतः विपश्चिता दोषज्ञेन, ते सर्वे एकरूपतया न मन्तव्याः । उपपादयति कथमिति चेदिति । संवाद इति । संवादो हि, अन्यसादृश्यम् । तत् पुनः सादृश्यं, शरीरिणां देहिनां, प्रतिबिम्बवत्, आलेख्याकारवत्, तुल्यदेहिवच्चेति त्रिविधं भवति ।

तदेवाह—संवाद इति । हि यतः, काव्यार्थस्य अन्येन काव्यवस्तुना यत् सादृश्यं, स एव संवाद इत्युच्यते । तत् पुनः सादृश्यं शरीरिणां प्रतिबिम्बवदालेख्याकारवत्, तुल्यदेहिवच्च त्रिधा व्यवस्थितम् । किञ्चित्

**तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।**
**तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः ॥ १३ ॥**

तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना ।

यतस्तदनन्यात्म तात्त्विकशरीरशून्यम् । तदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि तुच्छात्मत्वेन त्यक्तव्यम् । तृतीयं तु विभिन्नकमनीय शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना । नहि शरीरी शरीरिणान्येन सदृशोऽप्येक एवेति शक्यते वक्तुम् ।

एतदेवोपपादयितुमुच्यते—

**आत्मनोऽन्यस्य[1] सद्भावे पूर्वस्थित्यनुयाय्यपि ।**
**वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥ १४ ॥**

---

उज्जीवनी

**काव्यवस्तु** वस्त्वन्तरस्य शरीरिणः **प्रतिबिम्बात्मकम्** । अन्यद् आलेख्यप्रख्यं, अन्यत् तुल्येन देहिना तुल्यम् । तत्र किं ग्राह्यमित्याह—तत्रेति । तत्र पूर्वं आद्य प्रतिबिम्बरूपम् **अनन्यात्म** अनन्य आत्मा स्वरूपं यस्य तत् ! **तदनन्तरं तुच्छात्म** तुच्छः आत्मा यस्य तादृशम् । **तृतीयं प्रसिद्धात्म** प्रसिद्ध आत्मा—यस्य तत् । अतः सर्वथा **अर्थसाम्यं कविः न त्यजेत्** नोपेक्षेत । तदेवाह—तत्रेति । तत्र त्रिरूपे तस्मिन् सादृश्ये **पूर्वं** प्रथमं प्रतिबिम्बकल्पं काव्यवस्तु, सुमतिना परिहर्तव्यम् । **यतः** यस्मात् कारणात्, **तदनन्यात्म** तात्त्विकशरीरशून्यं, **तदनन्तरं** द्वितीयमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तं अपि तुच्छात्मत्वेन त्यक्तव्यम् । **तृतीयं तु** सादृश्यं विभिन्नस्य कमनीयस्य शरीरस्य सद्भावे सति, ससंवादमपि सदृशमपि काव्यवस्तु कविना न त्यक्तव्यम् । हि यतः, शरीरी देही, अन्येन शरीरिणा देहिना सदृशोऽपि तुल्योऽपि एक एवेति वक्तुं न शक्यते ।

एतदेवोपपादयितुमुच्यत इति—आत्मन इति । शशिच्छायं शशिनश्चन्द्रस्य, छायेव (शोभेव) च्छाया (शोभा) यस्य तादृशं, पूर्वस्थित्यनुयाय्यपि पूर्वमेव

---

1. "तत्त्वस्यान्य०" च

तत्त्वस्य सारभूतस्यात्मनः सद्भावेऽन्यस्य पूर्वस्थित्यनुयाय्यपि वस्तु भातितराम्। पुराणरमणीयच्छायानुगुणं हि वस्तु शरीरवत् परां शोभां पुष्यति। न तु पुनरुक्तत्वेनावभासते। तन्व्याः शशिच्छायमिवाननम्।

एवं तावत् ससंवादानां समुदायरूपाणां वाक्यार्थानां विभक्ताः सीमानः। पदार्थरूपाणां च वस्त्वन्तरसदृशानां काव्यवस्तूनां नास्त्येव दोष इति प्रतिपादयितुमुच्यते—

**अक्षरादिरचनेव योज्यते, यत्र वस्तुरचना पुरातनी।**
**नूतने स्फुरति काव्यवस्तुनि, व्यक्तमेव खलु सा न दुष्यति ॥ १५ ॥**

---

उज्जीवनी।

चन्द्रतुल्यमपि, अन्यस्य अवयवसमुदायादन्यस्य, आत्मनः लावण्यरूपस्य सारभूतस्य वस्तुनः, सद्भावे योगे सति, तन्व्याः कृशाङ्ग्याः आननं वदनमिव, पूर्वस्थित्यनुयाय्यपि पुरातनकविप्रतिपाद्यार्थतुल्यमपि वस्तु प्रतिपाद्यं अन्यस्य वाच्यादतिरिक्तस्य आत्मनः प्रतीयमानार्थतत्त्वस्य, सद्भावे भातितरां अतिशयेन शोभते।

विवृणोति—तत्त्वस्येति। आत्मनः इत्यस्यार्थकथनमिदं सारभूतस्येति पदम्। वाच्यातिशायिचमत्कृतिजनकस्य तत्त्वस्य प्रतीयमानार्थतत्त्वस्य व्यङ्ग्यस्येति यावत्। अन्यस्य वाच्यादन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि पूर्वस्थितेः संवाद्यपि वस्तु भातितराम्। हि यतः पुराणच्छायानुगुणं पुरातन्याः कान्त्याः अनुगुणं अनुरूपं वस्तु अर्थात्मकं, शरीरवत् शरीरमिव, परां शोभां पुष्यति वर्धयति। पुनरुक्तत्वेन तु नावभासते न भासते। शशिच्छायं तन्व्या आननमिव।

एवं तावत् उक्तविधया ससंवादानां पूर्वप्रतिपाद्यार्थसंवादभाजां वाक्यार्थानां सीमानो मर्यादाः, विभक्ताः विभज्य प्रदर्शिताः, एव वस्त्वन्तरसदृशानां वस्त्वन्तरसंवादवतां पदार्थरूपाणां च काव्यवस्तूनां काव्यार्थानामपि दोषो नास्त्येवेति प्रतिपादयितुमुच्यते—अक्षरादीति। नूतने नवीने, काव्यवस्तुनि

न हि वाचस्पतिनाप्यक्षराणि पदानि वा कानिचिदपूर्वाणि घटयितुं शक्यन्ते। तानि तु तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति। तथैव पदार्थरूपाणि श्लेषादिमयान्यर्थतत्त्वानि। तस्मात्—

> यदपि तदपि रम्यं तत्र लोकस्य किञ्चित्
> स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते।
> अनुगतमपि पूर्वच्छायया वस्तु तादृक्
> सुकविरुपनिबध्नन्निन्द्यतां नोपयाति ॥ १६ ॥

स्फुरणेयं काचिदिति सहृदयानां चमत्कृतिरुत्पद्यते। तदनुगतमपि पूर्वच्छायया वस्तु तादृक् तादृशं सुकविभिः विवक्षितव्यङ्ग्यवाच्यार्थसमर्पण-

---

उज्जीवनी

काव्यार्थे, स्फुरति प्रकाशमाने, यस्मिन् काव्ये, अक्षरादिरचनेव अक्षराणां पदानां च रचनेव, पुरातनी वस्तुरचना प्राचीनकविनिबद्धा पदार्थरचना, योज्यते आयोज्यते, सा रचना व्यक्तमेव न दुष्यति खलु। विशदयति नहीति। वाचस्पतिनापि गीष्पतिनापि, अपूर्वाणि पूर्वं अविद्यमानानि, कानिचिदक्षराणि, पदानि वा घटयितुं वाक्ये योजयितुं न शक्यन्ते। तु किन्तु। तानि पदानि, तान्येव तद्रूपेणैव, उपनिबद्धानि, काव्यादिषु, नवतां नूतनत्वं, न विरुध्यन्ति नवत्वस्य विघातकानि न भवन्तीति भावः। तथैव पदार्थरूपाणि श्लेषमयानि अर्थतत्त्वान्यपि न विरोधीनि भवन्ति। तस्माद् इति। यदपीति। तत्र काव्यार्थे लोकस्य सहृदयलोकस्य। स्फुरितं स्फुरणं इदमिति एतदिति, इयमेतादृशी, बुद्धिर्ज्ञानम्, यदपि अभ्युज्जिहीते उदेति, तदपि किञ्चिदपि, रम्यं रमणीयम्, वस्तु अर्थतत्त्वम्, पूर्वच्छायया पुरातनकविनिबद्धार्थसंवादेन, अनुगतमपि युक्तमपि, तादृग् वस्तु, निबध्नन् कविः निन्द्यतां नोपयाति न प्राप्नोति। इयं काचित्, स्फुरणेत्येव, सहृदयानां चमत्कृतिरुत्पद्यते जायते। तदिति। पूर्वच्छाययानुगत-मपि तादृक् तत्सदृशं वस्तु, सुकविः, विवक्षितस्य, तात्पर्यविषयस्य, व्यङ्ग्यस्य वाच्यस्य च अर्थस्य, समर्पणे, समर्थानां शब्दानां, रचनारूपया निबन्धनरूपया,

समर्थशब्दरचनारूपया बन्धच्छाययोपनिबध्नन् निन्द्यतां नैव याति । तदित्थं स्थितम्—

**प्रतायन्तां वाचो निमि[1]तविविधार्थामृतरसा**
**न वादः[2] कर्तव्यः कविभिरनवद्ये स्वविषये ।**
**परस्वादानेच्छाविरतमनसो वस्तु सुकवेः**
**सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥ १७ ॥**

सन्ति नवाः काव्यार्थाः परोपनिबद्धार्थविरचने न कश्चित् कवेर्गुण इति भावयित्वा ।

परस्वादानेच्छाविरतमनसः सुकवेः सरस्वत्येषा भगवती यथेष्टं घटयति वस्तु । येषां सुकवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्रवृत्तिस्तेषां परोपरचितार्थपरिग्रहनिःस्पृहाणां स्वव्यापारो न क्वचिदुपयुज्यते । सैव भगवती

---

उज्जीवनी

बन्धच्छायया प्रबन्धस्य शोभया, उपनिबध्नन् निन्द्यतां नैव याति ।

उपसंहरन्नाह—तदित्थं स्थितमिति । प्रतायन्तामिति । निमितानां पूर्वैः प्रयुक्तानामेव पदानां विविधा येऽर्थाः तेषां अमृतमिव सुधेव रसः यासु तादृश्यः वाचः काव्यरूपाः शब्दसन्दर्भाः प्रतायन्तां विस्तार्यन्ताम् । अनवद्ये निर्दोषे, स्वविषये स्वप्रतिभाविषये । कविभिः वादः विवादः न कर्तव्यः । सन्तीति । नवा नूतनाः, काव्यार्थाः सन्त्येव । एवं स्थिते परोपनिबद्धस्यार्थस्य विरचने कवेः न कश्चित् गुण इति भावयित्वा विचिन्त्य, परस्वादानेच्छाविरतमनसः परकीयस्य स्वस्य, आदानेच्छायां विरतं निःस्पृहं मनो यस्य तादृशस्य, सुकवेः, एषा प्रत्यक्षभूता, भगवती सरस्वत्येव वाग्देवतैव यथेष्टं घटयति सम्पादयति । येषां सुकवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्राक्तनस्य पूर्वार्जितस्य पुण्याभ्यासस्य यः परिपाकः तद्वशेन काव्ये प्रवृत्तिः प्रवर्तनं, तेषां परोपरचितार्थानां परिग्रहे स्वीकारे निःस्पृहाणां क्वचिदपि कर्मणि स्वव्यापारः कवेः प्रयत्नपूर्वको

---

१. 'चि०' च २. "सादः" च

सरस्वती स्वयमभिमतमर्थमाविर्भावयति । एतदेव हि महाकवित्वं महाकवीनामित्योम् ।

> इत्यक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो
> यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते ।
> काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः
> सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम् ॥
> सत्काव्यतत्त्वनयवर्त्म, चिरप्रसुप्त-
> कल्पं मनःसु परिपक्वधियां यदासीत् ।

---

## उज्जीवनी

व्यापारः नोपयुज्यते नापेक्ष्यते । सैव भगवती सरस्वती स्वयं अभिमतमर्थमाविर्भावयति । महाकवीनां महाकवित्वं एतदेव हि इदमेव खलु । ॐ

"तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपं" इत्यारभ्य

"परस्वादानेच्छाविरतमनसो वस्तु सुकवेः

सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥" इत्यन्तेन ग्रन्थेन निरूपिते ध्वनौ विज्ञाते व्युत्पत्त्यभ्यासौ विनापि सरस्वतीप्रसादजन्यया प्रतिभया महाकाव्यनिर्माणनिपुणो महाकविः सम्पद्यत इति ख्यापितं श्रीमदानन्दवर्धनाचार्यैः ॥

ग्रन्थान्ते आशीर्वचनरूपं मङ्गलमुपनिबध्नाति—इतीति । इति उक्तप्रकारेण । अक्लिष्टस्य रसस्य आश्रयो यः शब्दसन्दर्भः तस्योचितानां गुणानामलङ्काराणां च शोभां बिभर्तीति तादृशात् । यस्मात् काव्यात्, सुकृतिभिः पुण्यवद्भिः समीहितमीप्सितं सर्वं वस्तु समासाद्यते । तस्मिन् काव्याख्ये काव्याभिधे, अखिलसौख्यधाम्नि अखिलानां सर्वेषां सौख्यानामाश्रये, विबुधोद्याने नन्दने, ध्वनिर्दर्शितः प्रकाशितः । सोऽयं कल्पतरूपमानमहिमा कल्पतरुः कल्पवृक्षः उपमानं यस्य तादृशो महिमा माहात्म्यं यस्य तादृशः ध्वनिः भव्यात्मनां सुकृतिनां योग्यः आस्वादनविषयः भवतु ॥

स्वनामधेयप्रदर्शनपूर्वकमुपसंहरति—सदिति । यत् सत्काव्यतत्त्वनयवर्त्म सतः काव्यस्य यत् तत्त्वं प्रतीयमानार्थवत्त्वरूपं वस्तु तस्य नयवर्त्म नयनमार्गः,

तद् व्याकरोत् सहृदयोदयलाभहेतो-
रानन्दवर्धन इति प्रथिताभिधानः ॥

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके

चतुर्थ उद्द्योतः ।*

समाप्तोऽयं ग्रन्थः ॥

---

उज्जीवनी

परिपक्वधियां परिणतबुद्धीनां, मनस्सु हृदयेषु, चिरप्रसुप्तकल्पं चिरं चिराय प्रसुप्तमिव, आसीद् अभूत्। तत् सत्काव्यतत्त्वनयवर्त्म, आनन्दवर्धन इति प्रथिताभिधानः प्रथितं अभिधानं यस्य तादृशः। सहृदयोदयलाभहेतोः सहृदयानाम् उदयस्याभ्युदयस्य लाभाय सहृदयमनःप्रीतये व्याकरोत् व्याख्यातवान् ॥

---

* "इति सहृदयालोके चतुर्थ उद्द्योतः ॥" छ

# ध्वन्यालोककारिकार्धानुक्रमणी

## अ



## आ



## इ



## उ

## ए



## औ



## क



## ग



## च



## त



## द



## ध

## न



## प



## ब



## भ



## म



## य

# ध्वन्यालोकपरिकरश्लोकार्धानुक्रमणी

# ध्वन्यालोकोदाहृतगद्यपद्यानुक्रमणिका

# उज्जीवन्युद्धृतपद्यानुक्रमणिका

## य



## र



## ल



## व



## श

# स्मृतग्रन्थानां ग्रन्थकर्तॄणां च परिचयः

PANDITARAJA MAHOPADHYAYA S. NEELAKANTA SASTRY, born in 1904, learned Sanskrit in the traditional way and passed Mahopadhyaya with first rank in 1924. Sri. Sastry was Professor and Head of the Department of Nyaya in the Government Sanskrit College, Trivandrum, from where he retired in 1959. He is the recipient of gold medal from H. H. The Maharaja of Travancore, the title "Panditaraja" from H. H. The Maharaja of Cochin and "certificate of honour" from the President of India.

An eminent scholar in Sahitya, Tarka and Vyakarana, Sri. Sastry has a number of books to his credit. Notable among them are (1) Savitri—A short play in Sanskrit, (2) SriRamacaritam—A translation of 'Kambaramayana', (3) Katyayanivratam — A translation of 'Andal Tiruppavai.'

DHVANYALOKOJJIVANI, the new commentary of Panditaraja, Mahopadhyaya Sri. Neelakanta Sastry is studded with such instances of uninhibited interpretations, and I have no doubt that this work, the fruit of years of systematic study and critical discrimination, merits the respectful attention of impartial scholars. On going through considerable portions of the methodical and original comments offered by Sri. Sastri on the Dhvanyaloka, I was agreeably surprised to note that, despite the ceaseless commentatorial activities of scholars down the centuries, there is yet room for further useful clarifications, amplifications, and even straightforward paraphrases of the pregnant utterances of Anandavardhana.

**Dr. A. G. Krishna Warrier**